सभारशास्त्राणिदृशंद्वयाधिकांनिजत्रिनेत्रावतरत्व बोधिकाम् ॥ ६ ॥

विभूतिरेकादिग्भागैश्वर्यंतस्य । यद्वादिगीशवृन्दमध्येशोयश्चादिग्भागीयस्य विशिष्टाभूतिरणिमाद्यैश्वर्यंन्वयस्यततःकर्मधारयः । यद्वादिगीशाइन्द्राद योष्टौतेषांवृन्दंतस्यांशैर्मात्राभिर्विशिष्टाभूतिर्जन्मयस्य "अष्टाभिश्चसुरेन्द्राणांमात्राभिर्निर्मितोनृप,,इतिमनुः । यद्वादिगीशवृन्दांशश्चासौविशिष्टैश्वर्येश्च । अतएवदिशामीशितेति । एतेषुकतिपयेष्वर्थेषुनलस्यलोकपालत्व प्रतीतेरखिलेत्रावतरत्वस्यगौणत्वप्रतीतेरसामञ्जस्यम् । मुख्यंतुत्रिनेत्रावतारत्वमत्रसंपाद्यम् । सभूभृद्द्यावपिलोकपालाद्यतिलोकपालांशत्वंबस्यति । त्रिनेत्रशब्देनात्रेशानव्यतिरिक्तःसर्वेश्वरउच्यतेइतितात्पर्यम् । शास्त्राणिदृशमितिपदद्वयंलिङ्गवचनभेदेऽपिवेदाः प्रमाणमितिवद्विभक्ति रेकैव । यदुक्तम् । लिङ्गसङ्ख्याविभेदेऽपिह्युपमानोपमेयता । विभक्तिः पुनरेकैवचोपमानोपमेययोरिति । नलपक्षेदिगीशेत्यादौ अधिकरणेपिव हुव्रीहिःसप्तमीविशेषणेबहुव्रीहावितिज्ञापकबलादङ्गीकर्तव्यः । ईशितेतितृच् । प्रसरइतिपुंसिसञ्ज्ञायांघःप्रायेणेतिप्रायवचनाद्धः । प्रसरमलमन्तइतिप्रयोगदर्शनात् । अवरोधिनीतिसुप्युपपदग्रहणादुपसर्गनिवृत्तेस्ताच्छील्यणिनेरयोगाद्भावश्यकेणिनिः । भाष्यकारमतेतुसुब्मात्रत्वात्ताच्छील्येपि भवत्येव । एवंजातीयेऽन्यत्रापिज्ञेयम् । त्रिनेत्रेतिक्षुम्नादित्वाण्णत्वाभावः । अवतरणमवतरइतिभावेऋृदोरवित्यप् । कृत्यल्युटोबहुलमितिसूत्रादुपरिभावेऽवेतृस्त्रोरितिघञिअवतारइतिस्यात् । तस्यसञ्ज्ञायांकरणाधिकरणयोश्चविधानात् । प्रकृतेतदभावादवेव । यद्वा । अवतरतीत्यवतरः । त्रिनेत्रस्यासाअवतरश्चेतिपचाद्यचिज्ञेयम् । अवतरत्वस्यबोधिकेतिशेषषष्ठ्याःसमासःनतुकर्मषष्ठ्याः।तृजकाभ्यांकर्तरीतिनिषेधात् । न चैवंसतिनिषेधवैयर्थ्यंकारकषष्ठ्याः समासेहिकृदुत्तरपदप्रकृतिस्वरप्रसङ्गः शेषषष्ठ्यास्तुसमासान्तोदात्तत्वमितिस्वरेविशेषस्यसत्त्वात् । एतेनजनिकर्तुःप्रकृतिस्तत्प्रयोजकोहेतुश्चेतिनिर्देशोव्याख्यातः । अनित्यःषष्ठीसमासनिषेधइत्यन्ये । यद्वाबोधयतीतिबोधेतिपचाद्यचीतिपूर्वेणषष्ठीसमासास्वार्थिकेकप्रत्ययस्यारब्धात्पूर्वस्यातइद्वित्वे । अवतरत्वंबोधयतीति

कर्मणयपयिटापिकनिकेणञ्चतिङ्स्वत्वनितिवासमर्थनीयम् ॥ ६ ॥

पदैश्चतुर्भिः सुकृते स्थिरीकृते कृतेऽमुनाकेनतपःप्रपेदिरे ॥ भुवंयदेकाङ्घ्रिकनिष्ठयास्पृशन् दधावधर्मोऽपिकृशस्तपस्विताम् ॥ ७ ॥

पदैरिति । अमुनानलेनचतुर्भिःपदैश्चरणैःसत्यास्तेयदमशमरूपैस्तपोदानयज्ञज्ञानरूपैर्वासुकृतेधर्मेस्थिरीकृतेनिश्चलीकृतेसत्ययुगेकेजनास्तपोधर्मंनप्रपेदिरेनप्रापुः । अपितुसर्वेधर्मपराबभूवुः । कृतयुगेधर्मस्यचतुष्पात्त्वेसिद्धेऽधर्मस्याप्येकस्यपादस्यसत्त्वाशङ्कायामनेनाधर्मस्यातितरांकृशीकरणाद्वारास्थिरीकरणाच्चिवप्रत्ययोत्पत्तिः । कुतोवगतमेतदित्यतआह । यद्यस्माद्धर्मविरुद्धोपितपस्वितांधर्मवत्तांदधौदधारअन्येतपश्चक्रुरितिकिमाश्चर्यम् । किंकुर्वन्एकाङ्घ्रिकनिष्ठयाभुवंस्पृशन् । एकोऽङ्घ्रिर्यस्यांसाएकाङ्घ्रिकासाचासौनिष्ठास्थितिश्चतयाएकचरणकनिष्ठयावाभुवंस्पृशन्नलएवकृशोदुर्बलःक्षीणः । धर्माधर्मौचतुष्पादौधर्मस्यज्ञानादयश्चत्वारःपादाअधर्मस्यतद्विपरीतास्तत्रकृतयुगेधर्मश्चतुष्पादधर्मएकपादस्तथाधर्मन्यूनत्वमेवाधर्मस्यकृशत्वमथचदीनत्वमन्योपिमहांस्तपस्वीपूर्वावस्थोभवति । नलःकृतयुगेनाभूदितिकश्चित् । तन्न । सर्वपुराणेषुकृतयुगेएवनलसंभवस्योक्तत्वात् । अवश्यंभाविभावानांप्रतीकारोभवेद्यदि । प्रतिकुर्युर्नकिंनूनंनलरामयुधिष्ठिराइतियुगक्रमनिर्देशाद्विरुद्धमितिज्ञातव्यम् । तन्मतेपिशोभनाकृतिःसुकृतिस्तस्याःसुकृतेर्धर्मस्यचतुर्भिश्चरणैर्नलेनत्रेतायामपिकृतेकृतयुगेस्थिरीकृतेसतिधर्मस्यबाहुल्यात्त्रेतायुगमपिकृतयुगमेवेति „ सविसर्गपाठमङ्गीकृत्यव्याख्येयम् । यद्वाऽनेनत्रेतायांचतुर्भिःपादैर्धर्मेस्थिरीकृतेसतिनलेनचकलौकलियुगेजातेसतिकेनतपःप्रपेदिरेयत्रचतुष्पाद्धर्मस्तदेवकृतयुगम् । तपस्वीचानुकम्पार्हइतिविश्वः । तपस्वीतितपःसहस्राभ्यामितिविनिः ॥ ७ ॥

यदस्ययात्रासुबलोद्धतंरजः स्फुरत्प्रतापानलधूममञ्जिम । तदेवगत्वापतितंसुधाम्बुधौ दधातिपङ्कीभवदङ्कतांविधौ ॥ ८ ॥

यदस्येति । अस्यनलस्ययात्रासुदिग्विजयेषुयद्बलेनसैन्येनोद्धतंरजस्त देवतद्रजएवविधौचन्द्रेऽङ्कतांकलङ्कत्वमधुनापिदधाति । किंभूतंरजःस्फुर त्प्रकाशमानोयः प्रतापःसएवासह्यत्वादनलोग्निस्तस्ययोधूमस्तस्यमञ्जि मेवसौन्दर्यमिवमञ्जिमास्यतथाइतोगत्वासुधाम्बुधौसुधासमुद्रेपतितंसद तएवपङ्कीभवत्कर्दमीभवत्सधाम्बुधेश्चन्द्रउत्पन्नस्तत्संबन्धात्पङ्कश्चन्द्रेपि लग्नःसएवकलङ्कइत्यर्थः । आसमुद्रंयात्रासेनाबाहुल्यंचानेनद्योत्यते । सुधाम्बुधिःक्षीरसमुद्रःसुधाम्बुधावमृतसमुद्रेविधुविशेषणंवा रजसःपङ्कीभ वनयोग्यत्वार्थमुक्तम् । अथचयत्पतितंपातित्यहेतुसदन्यस्यनिर्मलस्या पिस्वसर्गान्मालिन्यंकरोति । तदेवदधाति । काकुर्लुप्तोत्प्रेक्षावा । वर्णं दृढादिभ्यइतिदृढादेराकृतिगणत्वान्मञ्जिमेत्यत्रइमनिच् । द्वितीयाश्रि तेतिपतितदृढशब्दःसाधुः ॥ ८ ॥

स्फुरद्धनुर्निस्वनतद्घनाशुगप्रगल्भवृष्टिव्ययितस्य सङ्गरे। निजस्यतेजःशिखिनःपरश्शता वितेनुरिङ्गालमिवायशःपरे ॥ ९ ॥

स्फुरदिति । परश्शताःशतात्परेदिक्देशकालवाचिनामेवपूर्वादिशब्दानां सर्वनामत्वात्कथंशत्रुवाचिनोःपरापरशब्दयोःसर्वनामसञ्ज्ञेति । अत्रकैय टादयः । देशवाचितयाव्यवस्थाविषययोरेवपरापरशब्दयोरुपचाराच्छत्रौ प्रतिवादिनिप्रयोगमाहुः । वस्तुतस्तुपरापरशब्दयोर्देशान्तरनिष्ठत्वादि कमेवार्थःशत्रुत्वादिकंत्वार्थिकोऽर्थः । अनन्ताःपरेशत्रवःसंगरेसंग्रामेनि जस्यस्वकीयस्यतेजःशिखिनःप्रतापाग्नेरिङ्गालमिवदग्धकाष्ठमिवायशोवि तेनुर्विस्तारयामासुः । इङ्गालोभाषाशब्दःकविभिर्यशोधवलमयशःश्यामंव र्ण्यतेकथंभूतस्यतेजःशिखिनःस्फुरदितिस्फुरत्प्रकाशमानोधनुर्निस्वनःको दण्डशब्दोयस्यएवंविधश्चासौसघनलः स्फुरद्धनुर्निस्वनस्तस्यनलस्यघना निबिडायेआशुगाबाणास्तेषां प्रगल्भाप्रौढायावृष्टिस्तयाव्ययि तस्यमिवो पितस्यस्फुरद्धनुर्निस्वनोयस्यामिति वृष्टिविशेषणंवा । तस्यनलस्यअन्य त्पूर्ववत् । यद्वास्फुरन्तौधनुर्निस्वनौतनोतिविस्तारयतेनयतेप्राप्नोति । धनुर्निस्वनतत्स्फुरन्प्रकाशमानश्चासौधनुर्निस्वनस्तत्प्रकृतत्वादयमेवेति वातस्य । अन्यत्पूर्ववत् । यद्वास्फुरन्तौधनुर्निस्वनौधनुःसिंहनादौयस्य

सचासौसएवघनोमेघस्तस्याशुगाशीघ्रगामिनीप्रौढाच । अन्यत्पूर्ववत् । शिखिपक्षेतु ।यद्वा । स्फुरन्तीइन्द्रधनुर्गर्जितेयेषुतेघतेघनामेघास्तेषामाशु गाशीघ्रगामिनीप्रौढा । आशुगेनवायुनावा । प्रौढायावृष्टिस्तयाव्ययित स्यविनाशंप्रापितस्यनिस्वनंतन्वन्तीतिनिस्वनतन्तःस्फुरद्धनुर्युक्तानिस्वन लतश्चयेघनामेघाइतिवा।तेजःप्रधानस्याग्नेरिङ्गालःश्यामएवभवतिसवैरा जानस्तेनजिताइत्यर्थः । आशुगौवायुविशिखावित्यमरः । निस्वनन्तनो तीतिनिस्वनतदित्यत्रपक्षेक्तौगमःक्वावित्यत्रगमादीनामितिवक्तव्यमितिव चनादनुनासिकलोपेतुक्सज्ञापूर्वकत्वाच्चनह्विवृतीतिदीर्घाभावः । तय तेर्वोक्विपिलोपोव्योर्वलीलियलोपेतुक् । शतात्परइतिविगृह्यपञ्चमीति योगविभागाद्वाहुलकाद्वासमासेराजदन्तेतिपरनिपातेपारस्करादित्वात्सु टिशुत्वेपरशताइतिसिद्धम् ॥ ९ ॥

अनल्पदग्धारिपुरानलोज्वलैर्निजप्रतापैर्वलयं ज्वलद्भुवः ॥ प्रदक्षिणीकृत्यजयायसृष्टया रराज नीराजनयासराजघः ॥ १० ॥

अनल्पेति । सराजघोराज्ञोहन्तीति नत्तुद्रान् राज्ञांहन्तानलोनी राजनयाआर्तिकेयाररराजशुशुभेकिंभूतोनलोजयायविजयायभुवोवलयंमण्ड लंप्रदक्षिणीकृत्यस्थितःकिंभूतयानीराजनयासृष्टयाकृतयापुरलोकैरितिशे षः । किंभूतंवलयंनिजप्रतापैःस्वकीयैस्तेजोभिर्ज्वलत्प्रकाशमानम् । किं भूतैर्निजप्रतापैरनल्पानिबहूनिदग्धानिअरिपुराणिवैरिनगराणियैस्तेअन ल्पदग्धारिपुरास्तेचतेऽनलावन्हयस्तैरुज्ज्वलादीप्यमानास्तैर्भूरितरैरि त्यर्थः । तेजसस्तेजोन्तरसंयोगेभूयस्त्वंभवति।अनलवदुज्ज्वलैरितिवा। य द्वाकिंभूतयानीराजनयाउक्तविशेषणैर्निजप्रतापैरेवसृष्टयानलेनैवकृतया । किंभूतंवलयंज्वलज्ज्वलनेनैवदेदीप्यमानंशोभमानमित्यर्थः । अतएवराज्ञाम भावोनीराजंनीराजकरणम्।नीराजनेत्यत्रअव्ययंविभक्तीत्यभावेऽव्ययीभावो ऽनश्चेतिटजन्तात्तत्करोतीतिणयन्ताद्युच् । प्रचुरज्वालितनगराग्निवद्दीप्तैःस्वी यद्वात्रतेजोभिर्दीप्तंभूमण्डलंजयायजेतुंपरिक्रम्यस्वैरेवप्रतापैःसृष्टयानीरा जनयाराजाभावकरणेनसरेजइतिभावः । जयायभूमण्डलंपरिक्रम्ययद्वा जाभावकरणैर्नेनरेजइतिवा । यद्वा । ज्वलत्प्रकाशमानंभूमण्डलंजयाय

जेतुंप्रदक्षिणीकृत्यस्वीयस्यात्रतेजोभिःकृतयानीराजनयाआर्तिकविधानेन सरेजेप्रतापैर्नीराजनयेतिव्यस्तरूपकंवा । अत्रज्वलद्भूमण्डलंजेतुंप्रदक्षिणीकृत्यसृष्ट्याऽर्थान्नलेनैवेतिव्याख्येयम् । यद्वास्वीयतेजोभिःपुरलोकैर्वा जयस्यायेआगमनेकृतयाजयेसतिअयेनशुभावहविधिनाहेतुनाकृतयेतिवा गमनागमनयोर्नीराजनंक्रियतइतिलोकाचारः । नलस्यजयंप्राप्तुंकृतयेतिवाजयायेजयागमनेसृष्ट्याअस्मिन्पक्षेपुरालोकैःकृतयेतिअन्वयः । विजयायलोकैःसृष्ट्यानीरस्यशान्त्युदकस्यअजनात्क्षेपणातयावा । यद्वा । नलस्योज्ज्वलैःशृङ्गारभूतैर्निजप्रतापैरनल्पानिदग्धानिअरिपुराणियासुताः। अनल्पदग्धारिपुराः । अतएवज्वलन्तोदेदीप्यमानाभुवोवैरिदेशाज्ज्वलयशस्त्वाधीनीकुर्वन् । यद्वा । किंभूतंवलयम् । अनल्पादग्धाअरयोयस्मिंस्तादृऽनल्पदग्धारिअस्मिन्पक्षेपुराकृतयेत्यन्वयः । यद्वा । किंभूतोनलः । अनल्पादग्धारिपुरायोरिपुद्रव्याणियेनसतथा । शृङ्गारःशुचिरुज्ज्वलइत्यमरः । वलयज्ज्वलदित्यत्रपक्षेपरसवर्णःपक्षान्तरेतुशुत्वम् । राजघइत्युपसङ्ख्यानमितिनिपातितः । जयायेतितुमर्थोदितिचतुर्थी । यद्वा । संराज्ञांहन्तानलोऽजयालक्ष्म्याआयविष्णवेसृष्ट्यानीराजनयारेजेराज्ञोविष्णुरूपत्वाल्लक्ष्म्यानीराजनाक्रियतेयतः कारणात्प्रदक्षिणीप्रकृष्टादक्षिणादातृत्वंयेषान्तेप्रदक्षिणावदान्यास्तेसन्तियस्यसप्रदक्षिणी । अतिवदान्याअप्येतस्यानुचराइत्ययंवदान्यतमइत्यर्थः । यद्वाप्रकृष्टंदक्षिणान्योतिष्टोमादयोयस्यसन्तीतिप्रदक्षिणीअतएवकृतीकर्मकुशलः ॥ १० ॥

निवारितास्तेनमहीतलेऽखिले निरीतिभावंगमितेतिवृष्टयः॥ नतत्यजुर्नूनमनन्यविश्रमाः प्रतीपभूपालमृगीदृशांदृशः ॥ ११ ॥

निवारिताइति । अतिवृष्टयईतयःप्रतीपभूपालमृगीदृशांप्रतीपावैरिणोभूपालाराजानस्तेषांमृगीदृशोनायिकास्तासांदृशोनेत्राणिनूनंप्रायेणनतत्यजुर्नमुमुचुर्नूनमुत्प्रेक्षायांवा । ईतयस्तस्यराष्ट्रे नसन्तीत्यर्थः । किंभूताअतिवृष्टयस्तेननलेनअखिलेमहीतलेनिवारिताःप्रतिषिद्धानिष्काशिताइत्यर्थः । किंभूतेमहीतलेनिरीतिभावंनिर्गताईतयोयस्मात्तन्निरीतितस्यभावस्तङ्गमितेप्रापितेअतोऽनन्यविश्रमानविद्यतेऽन्योन्यत्रवाविश्रमोविश्राम

स्यानंयासांताः । अनेनसर्वेपिशत्रवोनिहताइत्युक्तम् । यत्त्रयेणनिकाय्य तेतद्वैरिणामाश्रयतिक्षीणांचक्षियएवशरणमित्युक्तिः । अतिवृष्टिरनावृष्टि मूषकाःशलभाःशुकाः । प्रत्यासन्नाश्चराजानःषडेताईतयःस्मृताः । विश्र मइत्यत्रनोदात्तोपदेशस्येतिवृद्धिनिषेधः ॥ ११ ॥

सितांशुवर्णैर्वयतिस्मतद्गुणैर्महासिवेम्नः सहकृत्वरीबहुम् । दिगङ्गनाङ्गावरणंरणाङ्गणे यशःपटं तद्भटचातुरीतुरी ॥ १२ ॥

सितेति । तद्भटचातुरीतुरीतद्वैरणाङ्गणेयशःपटंवयतिस्मतस्यनल स्यभटाः । यद्वासचासौभटश्चतेषांतस्यवाचातुरीयुद्धनैपुण्यंसैवतुरीमिष्य कवस्त्रवेष्टनदण्डस्तस्यनलस्यगुणास्तैःप्रसिद्धैर्वाशौर्यादिगुणैः । अथचगुणै स्तन्तुभिःसङ्ग्रामाङ्गणेयशोलक्षणपटंविस्तारितवतीनिरमासीदित्यर्थः । किं भूतैर्गुणैःसितांशुश्चन्द्रस्तद्वद्वर्णैःसारूप्यंयेषांतैर्धवलैरित्यर्थः । कीदृशीमहा स्योऽसिःखड्गःसएववेमावयनकाष्ठंसहकृत्वरीसहकारिणी । किंभूतंयशः पटम् । बहुंमहापरिमाणमतएवदिशएवाङ्गनास्तासामङ्गानामावरणमा च्छादकम् । सर्वदिग्व्यापिअस्ययशआसीदित्यर्थः । परपरिभवितेजस्तन्व तामाशुकर्तुं प्रभवतिहिविपक्षोच्छेदमग्रेसरोपीतिन्यायेनभटैरेवनलशौर्यं विनैववैरिणोहतादिग्व्यापियशोनलस्याकारिइतिभावः । तन्तुवायतुर्योः सकाशादियंतुरीअन्यादृशीसाप्रत्येकमावरकमनेकपटंवयतिइयन्तुतद्विप रीतेतिव्यतिरेकः । वेमापुंसि । वयतिस्मेतिलट्स्मेइतिभूतेलट् । सहकृत्व रीतिराजनियुधिकृञइत्यनुवर्तमानेसहेचेतिक्वनिपिवनोरचेतिङीप्रौघात्‍ येनेवचातुरीष्यन्पित्वान्ङीष् ॥ १२ ॥

प्रतीपभूपैरिवकिततोभिया विरुद्धधर्मैरपिभेत्तृतोज्झिता । अमित्रजिन्मित्रजिदोजसासयद्विचा रद्दक्चारदृगप्यवर्त्तत ॥ १३ ॥

प्रतीपेति । विरुद्धधर्मैरपिमिथोविरोधिस्वभावैरपिधर्मःस्वभावस्ततोन लाद्भियाभयेनभेत्तृताविरुद्धत्वमुज्झिता । किंकैरिव । प्रतीपभूपैरिव । प्रती कूलराजभिर्यथाभेत्तृताउपजापकारित्वन्त्यक्ता । उपजापोन्तर्भेदः । कुतएत

उद्यानमतआह । यद्यस्मात्सनलओजसाअमित्रजित् । अमित्रान्वैरिणोज
यतीत्यमित्रजित्तथाओजसातेजसामित्रजित्सूर्यमपिजयतीतिअवर्ततआ
सीत् । सचारदृगपिविचारदृगवर्ततचाराएवदृग्यस्य सचारदृक्विगताचा
राएवदृग्यस्यसविचारदृक्योमित्रजित्समित्रजित्कथंयश्चारदृक्सविचारदृक्
कथमितिविरुद्धधर्मास्तैर्भैत्तृताउज्झिताकथन्तेजसामित्रजित्तेजसामित्रंसू
र्यंजयतीतिमित्रजित्तथाविचारःशास्त्रमेवविवेकोवादृक्यस्यसविचारदृक्
चाराएवदृग्यस्यसचारदृक् । अपिश्चार्थेविरुद्धपक्षेउभयत्रापियोज्यः । अ
थविरुद्धत्वमामित्रजिद्यःसमित्रजित्कथमसुहृदंयोजयतिससुहृदंकथंजयतिअ
थयोऽसूर्यंजयतिससूर्यंकथंजयतिइतिविरोधस्तत्परिहारः । पूर्वव्याख्या
नाद्विचारंपश्यतीतिविचारदृग्वाचारैःपश्यन्तिराजानइतिएतेनशत्रुजि
त्वंशास्त्रमार्गगामित्वंचोररक्षणात्यन्वव्यक्तीकृतम् । एतेनत्रिजिगीषुत्वंन
लस्यद्योतितम् । अरिर्मित्रमरेर्मित्रंमित्रमित्रमतःपरम् । तथारिमित्रमि
त्रञ्चविजिगीषोःपुरःसराः । पार्ष्णिग्राहस्ततःपश्चादाक्रन्दस्तदनन्तर
म् । आसारावनयोश्चैवविजिगीषोश्चपृष्ठतः । अरेश्चविजिगीषोश्चमध्यमो
भूम्यनन्तरः । अनुग्रहेसंहतानांव्यस्तानाञ्चवधेप्रभुरितिद्वादशराजमण्ड
लीततोभीत्रेत्यपादानत्वम् ॥ १३ ॥

तदोजसस्तद्यशसःस्थिताविमौ वृथेतिचित्तेकुरुते
यदायदा । तनोति भानोःपरिवेषकैतवात्तदावि
धिःकुण्डलनांविधोरपि ॥ १४ ॥

तदोजसइति । विधिर्ब्रह्मायदायदाइतिपूर्वोक्तंचित्तेमनसिकुरुतेविचा
रयतीत्यर्थः । तदातदाभानोःसूर्यस्यविधोरपिचन्द्रस्यचपरिवेषकैतवात्परि
वेषव्याजात्कुण्डलनांवैयर्थ्यसूचकरेखामण्डलंकरोतिइतीतिकिंतदोजसो
नलप्रतापस्य तद्यशसोनलयशसश्चस्थितौसत्यामिमौसूर्यचन्द्रौ वृथानि
ष्प्रयोजनावितितदोजसस्तद्यशसश्चहेतोरिमौवृथास्थितौइतिवासूर्यचन्द्रा
भ्यांयत्करणीयंतन्नलतेजोयशोभ्यामेवक्रियतेसूर्यतुल्यंचन्द्रतुल्यंचेत्यस्मिन्
द्वयम् । परिवेषस्यकादाचित्कत्वाद्यदायदेत्युक्तम् । कैतवादितिभावेयुवा
दित्वादण् । वृथालिखितस्यग्रन्थस्यकुण्डलनयालोपःक्रियतेतथेत्यर्थः १४॥

अयंदरिद्रोभवितेतिवैधसीं लिपिंललाटेऽर्थिजन स्यजाग्रतीम् । मृषानचक्रेऽल्पितकल्पपादपः प्र णीयदारिद्र्यदरिद्रतांनलः ॥ १५ ॥

तस्यवदान्यत्वंवर्णयति । अयमिति । सनृपोनलोर्थिजनस्ययाचकजन स्यललाटेजाग्रतींवैधसींब्राह्मीमितिलिपिंमृषामिथ्यानचक्रेकिंतुसत्यांत्र ह्मणालिखितत्वात्सत्यामेवचकार । इतीतिकिम् । अयंयाचकलोको दरिद्रोनिर्धनोभविताभावीतिवैधसीलिपिस्तर्हिंतस्यानौदार्यंत्वप्रतीतेःक थंवदान्यत्वमित्याशङ्क्योक्तिभङ्ग्यासमाधत्ते । किंकृत्वादारिद्र्यदरिद्र तांप्रणीयदारिद्र्यस्यैवदरिद्रताराहित्यमित्यर्थः । प्रणीयनिर्माय वैधसीं लिपिंमृषानचकारेत्यर्थः । यतोऽल्पितकल्पपादपोल्पितोल्पीकृतःकल्प पादपःकल्पवृक्षोयेनकथंकल्पवृक्षोयाचितमेवददातिनलस्त्वयाचितमपि अतोवदान्यत्वमित्यर्थः । नलराज्येकोपिदरिद्रोनाभूदित्यर्थः । यद्वाअक ल्पितंधनंदत्वाब्राह्मींलिपिंमृषानचक्रेअपितुकृतवानेवेतिकाकुः । अल्पि तेतितत्करोतीतिण्यन्तान्निष्ठा ॥ १५ ॥

विभज्यमेरुर्नयदर्थिसात्कृतो नसिन्धुरुत्सर्गजल व्ययैर्मरुः । अमानितत्तेननिजायशोयुगं द्विफा लबद्धाश्चिकुराःशिरःस्थितम् ॥ १६ ॥

प्रकारान्तरेणपुनरपिनितरांवदान्यत्वमाह । विभज्येति । तेननलेनत स्मात्कारणाद्द्वाभ्यांफालाभ्यांबद्धाःसंयमिताश्चिकुराःकेशाएवनिजंस्वी यमयशसोकीर्त्त्युर्युगममानिअमन्यत । शिरसिसीमन्तस्यउभयभागेस्थि ताःकेशानभवन्तिकिंतुअकीर्तिद्वयमेवतद्यतिकंयद्यस्मान्मयानलेनमेरुर्हे माद्रिर्विभज्यखण्डशोविधायअर्थिसाद्याचकायत्तदत्तोर्थ्यधीनंदेयंवाकृ तः । तथासिन्धुःसमुद्रउत्सर्गजलव्ययैर्दानेक्रियमाणेयेजलव्ययाजलदाना निर्तैर्मरुर्निर्जलोदेशोनकृतोदानंहिजलपूर्वकंभवति । यद्वामरुरुत्सर्गजल व्ययैःसिन्धुर्नकृतः । तदकरणलक्षणापयशःस्थानेद्विफालबद्धाःकेशाएव जाताइत्यर्थः । सर्वस्वदानेपियावदेतद्द्वयंनकृतंतावन्नलोनतुतोषेतिभा वः । एतेनास्यअयशोलेशोपिनास्तीतिसूचितम् । लौकिकोक्तिरपिअपकी

र्तिः शिरसिस्थितेति । अर्थिसादित्यत्र तदधीनवचने देयेत्राचइतिसातिः । फालशब्दःपात्रादिः ॥ १६ ॥

अजस्रमभ्याशमुपेयुषा समं तदैव देवःकविना बुधेनच । दधौ पटीयान्समयं नयन्नयं दिनेश्वरश्रीरुदयं दिनेदिने ॥ १७ ॥

अजस्रमिति । अयंदेवोराजानलोदिनेदिनेप्रतिदिनमुदयमधिकामभिवृद्धिंदधौ । किंकुर्वन्कविनाकाव्यकर्त्रावुधेनविदुषावैयाकरणेनचसमंसहमुदेवहर्षेणैवसमयंकालंनयन्गमयन् । किंभूतेनकविनाबुधेनचअजस्रंसर्वदाभ्यासंकाव्यकवनशास्त्रमननव्यसनमुपेयुषाप्राप्तवता । अभ्याशमितिपाठेनसांनिध्यंपटीयान्कवित्वाद्यभ्यासवांश्चआक्षेपादिसमर्थः । पुनःकिंभूतोदिनेश्वरश्रीर्दिनेश्वरःसूर्यस्तद्वच्छ्रीःशोभायस्य । अतएवदिनेश्वरोपिकविनाशुक्रेणबुधेनचन्द्रपुत्रेणसहप्रातरादिसमयंकुर्वन्पटीयान्तेजस्वीतमोनाशेवासमर्थःप्रतिदिनमुदयंधत्तेबुधशुक्रौसदापूर्वोत्तरराशिस्थावितिज्योतिर्विदः । यद्वाताभ्यांसमंसमयंसम्यगयंसमयंशुभावहंविधिंयन्प्राप्नुवन्नयंप्रतिदिनमुदयंनदधौअपितुदधावेव । अभ्याशोव्यसनेन्तिकइतिविश्वः । अजस्रमिति नञ्पूर्वाज्जसेर्नेमिकम्पीतिरः । उपेयुषेति उपेयिवाननाश्वाननूचानइतिसाधुः । उपेयुषेत्यादौसममितिसहार्थयोगेतृतीया ॥ १७ ॥

अधोविधानात्कमलप्रवालयोः शिरस्सु दानादखिलक्ष्माभुजाम् । पुरेदमूर्ध्वंभवतीति वेधसा पदं किमस्याङ्कितमूर्ध्वरेखया ॥ १८ ॥

तस्यसामुद्रिकलक्षणवत्त्वमाह । अधोविधानादिति । किमितिसंभावनायांवेधसाब्रह्मणाऽस्यनलस्यपदंचरणइतिहेतोरूर्ध्वरेखयालक्षणभूतयाऽङ्कितंचिह्नितङ्किम् । इतीतिकिमिदंनलपदंकमलप्रवालयोःपद्मपल्लवयोःकमलविद्रुमयोर्वाअधोविधानाद्अरुणत्वस्निग्धत्वमृदुत्वैरधःकरणादधिकारात्तथाप्रतापेनअखिलक्ष्माभृतांसमस्तभूभृतांशिरस्सुदानात्स्थापनात्क्रमेणऊर्ध्वमुत्कटमुपरिचपुराभवतिभविष्यति । यावत्पुरानिपातयोर्लडितिलट् । राज्ञांशिरःसुदानंनामआक्रम्यवर्तनम् ॥ १८ ॥

जगज्जयन्तेनचकोशमक्षयंप्रणीतवाञ्शैशवशेष वानयम्। सखारतीशस्यऋतुर्यथावनंवपुस्तथा लिङ्गदथास्ययौवनम्॥ १९॥

तस्यवयःसन्धिमाह। जगदिति। अयंनलःशैशवशेषवाञ्शैशवस्यशेषो विद्यतेयस्यएवंभूतः षोडशाब्ददेशीयोजगतःसमग्रस्यभूमण्डलस्यजयंविज यंप्रणीतवानकृतवान्तेनचविजयेनकोशंभाण्डारगृहमक्षयंपरिपूर्णं कृतवा न्तेनचेतिपदेनानुषङ्गिकत्वंलक्षणयाद्योत्यतेदानशूरस्यतस्यपूर्वमेवोक्तत्वा द्भाण्डारगृहस्याक्षयत्वमानुषङ्गिकंनतुमुख्यमितिभावः। एतेनग्रतुरा हित्यंसूचितम्। दमयन्तीलाभस्त्ववशिष्यते। अथजगज्जयानन्तरंयौवनंता रुण्यमस्यवपुःशरीरंनथाआलिङ्गद्यंयौवनंप्राप्येत्यर्थः। शरीरंकर्तृयौवनंक र्मीभूतंप्रापेतिवा। अनेननलवपुर्वैवयौवनमलंकृतंनतुतत्तेनयथारतीशस्य कामस्यसखामित्रमृतुर्वसन्तोवनमाश्लिष्यतियथास्वतएवरमणीयंवनंवसन्त उद्दीपयति। तथायौवनंकर्तृशरीरंकर्मउद्दीपयतिस्म। शरीरमपिसौन्दर्या त्कामस्यमित्रम्। रतीशस्यऋतुरित्यत्र ऋत्यकइति प्रकृतिभावः॥ १९॥

अधारिपद्मेषुतदङ्घ्रिणाघृणाक्वतच्छयच्छायलवोपिपल्लवे। तदास्यदास्येपिगतोधिकारितांनशारदःपार्विकशर्वरीश्वरः॥ २०॥

शरीरवर्णनमेवप्रक्रमते। अधारीति। तदङ्घ्रिणातच्चरणेनपद्मेषुकमले षुघृणाजुगुप्सादयावाऽधारि अकारि। यदोनलचरणाश्चरणास्वभावेनयेषां सामुद्रिकलक्षणत्वेनपद्मानीतिवाक्छोभालाभेनयानिसलक्ष्मीकानिमा माश्रित्यैवयानिवर्त्तन्तेतैःसहस्पर्धामयाकथंकार्याक्रमेणस्वतोनिःशोभत्वा ज्जुगुप्सायाअमितत्वाच्चसकरुणापद्मानांतच्चरणशोभाधिकेत्यर्थः।पल्लवेप्रवा लेतच्छयच्छायलवोपितस्यनलस्यशयोहस्तस्तस्यच्छायाकान्तिस्तच्छयच्छा यंतस्यलवोलेशोऽपिक्वकुतोयतोपदोलवःपल्लवःशरीरनिकृष्टावयवचरणशो भालेशोपियत्रनवर्ततेतत्रशरीरोत्कृष्टावयवपाणिशोभालेशोपिकथंहीनेन सहसाम्यायोगादित्यर्थः। एतेनपल्लवात्तत्करशोभाधिकेत्यर्थः। किंचशा रदःशरदिभवोनिर्मलःपार्वकःपर्वणिपूर्णिमायांभवः। संपूर्णकलःशर्वरीश्व

रोनिशानाथश्चन्द्रस्तस्यनलस्यआस्यंमुखंतस्यदास्येपिसेवकत्वेपिअधिका रितांपात्रत्वंनमतोनप्राप्तःकिंतुतत्साम्यंचन्द्रस्यशरत्पूर्णिमारात्रिसंयोगाद्र मणीयत्वमास्यस्यतुस्वतएवशारदत्वाद्दृष्टत्वाद्ग्रेस्यातुमशक्यत्वात्साम्यं न लेभइतिवा । रमणीयनायकस्यरमणीयेनैवदासेनभाव्यंनचास्यपूर्वोक्त प्रकारेणतुल्यत्वमतोदासत्वमपिनप्रापेतिभावः । निर्मलत्वात्संपूर्णत्वा त्कलंकस्यस्पष्टत्वात्स्त्रीप्रधानत्वाद्वा । अस्यचतुःषष्टिकलत्वात् शारदःपी तमुद्गेस्याच्छालीनेप्रतिमेनवे । तच्छयच्छायेति विभाषावेनेत्यादिनानपुं सकत्वम् । शारदइतिभावार्थेसन्धिवेलेत्यण् । पार्विकइतिभवार्थेकालाद् ठञ् । पार्वणइतिपाठेसंबन्धेअणिअन्नितिप्रकृतिभावः ॥ २० ॥

किमस्यलोम्नांकपटेनकोटिभिर्विधिर्नलेखाभिर जीगणद्गुणान् । नरोमकूपौघमिषाज्जगत्कृताकृ ताश्चकिंदूषणशून्यबिन्दवः ॥ २१ ॥

प्रकारान्तरेणसामुद्रिकलक्षणवत्त्वमाह । किमिति । विधिर्ब्रह्मारोम्णांक पटेनमिषेणसार्धत्रिकोटिभीरेखाभिरस्यनलस्यगुणाञ्छौर्यौदार्यादीन्किं नअजीगणद्ऽपितुगणयामासेतिकाकुः । गुणगणनयागणकेनब्रह्मणाले खाएवलिखितानतुरोमाणिअनेनसर्वगुणत्वंद्योतितम् । दोषराहित्यमा ह । जगत्कृताब्रह्मणारोमकूपौघमिषाद् रोमकूपसमूहव्याजेनदूषणशून्य बिन्दवोदूषणानांशून्यानिअभावास्तज्ज्ञापकाबिन्दवश्चनकृताअपितुकृता एवयत्रकिमपिनतत्रज्योतिर्विद्भिःशून्यसूचकोबिन्दुःक्रियतेतथारोमकूपा अपिवर्तुलाबिन्दुत्वेनोत्प्रेक्ष्यन्तेऽयंरोमकूपसमूहोनकिंतुदोषराहित्यसूच काःशून्यबिन्दवएवलिखिताः । तिस्रःकोट्योर्द्धकोटीचयानिरोमाणिमानु षे,,इतितावन्तः कूपाइतिरोमस्यैकैकंकूपकेपार्थिवानामितिसामुद्रिकलक्षणं सूच्यते । अजीगणदिति ण्यन्ताच्चङिद्वित्वेईचगणः ॥ २१ ॥

अमुष्यदोर्भ्यामरिदुर्गलुण्ठने ध्रुवंगृहीतार्गलदीर्घ पीनता । उरःश्रियातत्रचगोपुरस्फुरत्कपाटदुर्ध र्षतिरःप्रसारिता ॥ २२ ॥

अमुष्येति । अमुष्यनलस्यदोर्भ्यामरिदुर्गलुण्ठनेऽरीणांदुर्गाणिगिरिप्राका

रास्तेषांलुण्ठनेबलाद्ग्रहणेक्रियमाणेसतिअर्गलदीर्घपीनताऽर्गलस्येव दीर्घत्वतत्पीनत्वतस्यभावस्तत्ताकर्मधारयोद्वन्द्वोवासागृहीताग्रु वंगृही तानन्तुग्रु वंप्रायेणवा । तत्रचतत्रैवाऽरिदुर्गलुण्ठनएवाऽमुष्योरःस्थल श्रियावक्षस्थलशोभयागोपुरेस्फुरद्दीप्यमानंयत्कपाटंतस्यदुर्धर्षताकठिन तातिरःप्रसारितावि‌शालताचगृहीताकिम् । अनेनतस्याऽऽजानुबाहुत्वं व्यूढोरस्कत्वमनाकलनीयत्वञ्चध्वनितम् । लुण्ठनेसमर्थएवअग्रणीर्भवति पुरोवर्तिसारंवस्तुगृह्णाति । तद्विष्कंभोर्गलंमनाद्दृत्यमरः । पुरद्वारन्तुगोपुर मितिच । उभयत्रकर्मधारयात्तल् ॥ २२ ॥

स्वकेलिलेशस्मितनिन्दितेन्दुनोनिजांशदृक्तर्जित पद्मसंपदः ॥ अतद्द्वयीजित्वरसुन्दरान्तरेनत न्मुखस्यप्रतिमाचराचरे ॥ २३ ॥

स्वकेलीति ॥ तन्मुखस्यप्रतिमारूपंस्वरूपमुपमानंवाचराचरेस्थावरज ङ्गमात्मकेजगतिनास्तिचन्द्रपद्मेउपमानंचेत्तत्राह । किंभूतस्यतन्मुखस्य स्वेतिस्वास्वकीयायाकेलिःक्रीडातस्यालवभूतंयत्स्मितंतेननिन्दितइन्दुर्ये नतत् । यथानिजःस्वकीयोयोंशोभागस्तद्रूपेयेदृशौनेत्रेताभ्यांतर्जिताऽ धःकृतापद्मानांसंपत्समूहःसौभाग्यंवायेनचन्द्रपद्मातिरिक्तंवस्त्वन्तरंना स्तितद्द्वयमेतन्मुखेनांशभूतेनस्मितेनजितमिति। समग्रस्यतन्मुखस्योपमा नंनास्तीत्यर्थः । चराचरःस्याज्जगतीतिविश्वः । जित्वरमिति इत्वरशीलि क्वरप् । अन्यत्सुन्दरंसुन्दरान्तरमिति मयूरव्यंसकादित्वात्समासः । चरा चरइतिपदेसर्वोद्वन्द्वइतिएकवद्भावः ॥ २३ ॥

सरोरुहंतस्यदृशैवतर्जितंजिताःस्मितेनैवविधो रपिश्रियः । कुतःपरंभव्यमहोमहीयसीतदानन स्योपमितौदरिद्रता ॥ २४ ॥

पूर्वोक्तमर्थंपुनरप्याह । सरोरुहमिति । तस्यमुखावयवभूतयादृशैवस रोरुहंपद्मंनिर्जितंस्मितेनैवविधोरपिचन्द्रस्यापिश्रियोजिताःपरंपद्मचन्द्रा तिरिक्तमन्यद्भव्यंसुन्दरंवस्तुकुतःकुत्रत्यमतएवतदाननस्यनलाननस्योप मितौउपमानेमहीयसीमहतीदरिद्रताअहोमहदाश्चर्यम् । अत्यन्ताभाव

इत्यर्थः । महीयसामितिपाठे महीयसाङ्कवीनांदरिद्रता । भव्यमितिभव्यगे येतिनिपातनात्साधु । योहियस्मान्निकृष्टोभवतिसतेनदृष्टेवभत्स्यतेऽस्मि तेनस्वल्पोपहासेनैवाऽधःक्रियते ॥ २४ ॥

स्वबालभारस्यतदुत्तमाङ्गजैः समञ्चमर्य्यैवतुलाभि लाषिणः । अनागसेशंसतिबालचापलंपुनःपुनः पुच्छविलोलनच्छलात् ॥ २५ ॥

स्ववालेति । एवशब्दोप्यर्थः । चमरीपशुरपिपुनःपुनःपुच्छविलोलन च्छलात् पुच्छस्यविलोलनंचालनंतदेवच्छलंव्याजोमिषंतस्मात्स्ववालभार स्यस्ववालाःकेशास्तेषांभारःसमूहस्तस्यानागसेऽपराधाभावायवालंचापलं वालश्चपलोभवतीतितस्यचापलमपराधायनेतिमातायथाशंसतितद्वच्च मरीलाङ्गूलचलनव्याजेनस्ववालभारस्यापराधोनास्तीतिकथयति । क थमपराधत्वंतस्येत्यतआह । किंभूतस्यस्ववालभारस्यतदुत्तमाङ्गजैःसमंत स्योत्तमाङ्गेशिरसिजाताःकेशास्तैःसहतुलाभिलाषिणस्तुलांसाम्यमभिलष तीत्येवंशीलस्तस्यस्वयंवालःसन्महतांसाम्यमिच्छतितद्यातन्मातावालेना ज्ञानादेवेदंकृतंक्षम्यतामितिवदति तद्वच्चमरीवालभारस्येतिवयोरभेदः । उत्तमाङ्गजैरिति सप्तम्यांजनेर्डः । अमूर्धमस्तकादितिप्राप्तोप्यलुक्वाहुल कान्नभवति । अनागसइतिक्रियार्थेत्यादिनाक्रिययायमभिप्रैतीत्यादिना संप्रदानत्वेवाचतुर्थी । यद्यपिचपलशब्दस्यगुणवाचित्वाच्चापल्यमिति ष्यञाभाव्यंतथापियुवादित्वादणिचापलमितिसाधु ॥ २५ ॥

महीभृतस्तस्यचमन्मथश्रियानिजस्यचित्तस्यचतं प्रतीच्छया । द्विधानृपेतत्रजगत्त्रयीभुवांनतभ्रुवां मन्मथविभ्रमोऽभवत् ॥ २६ ॥

महीति । तत्रनृपेनलेजगत्त्रयीभुवांत्रिलोकीसमुत्पन्नानांनतभ्रुवांसुन्द रीणांपूर्वोर्थोक्तेनप्रकारेणद्विधामन्मथविभ्रमःकामजनितोविभ्रमोऽभव ज्जातोविशिष्टोभ्रमोविभ्रमोविलासश्चकामस्यविशिष्टोभ्रमःकामजनितोवि लासश्चतदुभयंकथमित्यपेक्षायांयथाक्रमेणाह । तस्यमहीभृतोराज्ञोनलस्य मन्मथश्रियाकामश्रीसदृशशोभत्वेनस्वीयान्तःकरणेमदनोयमितिभ्रान्तिः ।

तथानिजस्यस्वस्यचित्तस्यान्तःकरणस्यतंप्रतिनलंप्रतीच्छयाऽत्यभिला षेणकामजनितोविलासःकटाक्षादिरितिकामजनितभ्रूमद्वैविध्यम् । मद्वीभृ तद्वतिसंबन्धषष्ठ्यामन्मथपदेनान्वयान्नृपद्वतिविषयसप्तम्यामन्मथविभ्रम पदेनान्वयान्नात्रपौनरुक्त्यम् । चौपरस्परसमुच्चये । जगत्रयीभुवामिति सामान्येनोक्तेपतिव्रतादिरहितानामितिज्ञेयम् । एवंनकानिशीत्यादाव पिज्ञेम् । यद्वामन्मथश्रियैवेतिचकारमेवकारार्थंव्याख्यायद्वितीयंसमुच्चया र्थंव्याख्यायपतिव्रतानांमन्मथोयमितिनिरभिलाषोविशिष्टोभ्रमोजातः । अन्यासान्तुतंप्रतीच्छयापीतिद्वैविध्यमित्यनौचितीपरिहरणीया । वि भ्रमोभ्रान्तिहावयोरितिविश्वः । मननंमचशास्त्राद्यभ्यासजन्यंज्ञानंमथ्ना तीतिमन्मथः । मूलविभुजादित्वात्कः ॥ २६ ॥

**निमीलनभ्रंशजुषादृशाभृशंनिपीयतंयस्त्रिदशीभि र्जितः॥अमूस्तमभ्यासभरंविवृण्वतेनिमेषनिःस्वै रधुनापिलोचनैः ॥ २७ ॥**

इदानींक्रमेणदेवनागमर्त्याङ्गनानांकामविभ्रमंश्लोकत्रयेणाह । निमीले त्यादिना । त्रिदशीभिर्देवाङ्गनाभिर्योऽभ्यासभरोऽभ्यासातिशयोनिमीलन भ्रंशजुषानिमीलनस्यनेत्रसङ्कोचस्यभ्रंशोऽभावस्तंजुषतीतिनिमीलनभ्रं शजुट्तयादृशातंनलंनिपीयसादरंदृष्ट्वाऽर्जितःकृतः । अमूस्त्रिदश्यस्त मभ्यासभरंनिमेषनिःस्वैर्निमेषदरिद्रैर्लोचनैरधुनाप्यद्यापिविवृण्वतेप्रकटय न्ति । देवाङ्गनानांस्वतएवनिर्निमिषत्वंनलावलोकनेत्रप्रक्षीणमित्युत्प्रेक्षि तम् । यदत्यन्तमभ्यस्तंतत्कदापिनविस्मर्यते । त्रिदशीति पुंयोगलक्षणो जातिलक्षणोवाङीष् ॥ २७ ॥

**अदस्तदाकर्णिफलाढ्यजीवितंदृशोर्द्वयंनस्तदवी क्षिचाफलम् ॥ इतिस्मचक्षुःश्रवसांप्रियानलेस्तुव न्तिनिन्दन्तिहृदातदात्मनः ॥ २८ ॥**

अदइति । चक्षुःश्रवसांनागानांप्रियाःस्त्रियोनलेनलनिमित्तमात्मनस्त द्दृशोर्द्वयमितिपूर्वोक्तप्रकारेणहृदामनसास्तुवन्तिस्मनिन्दन्तिस्मवा।इती तिकिमदइदंनोस्माकंदृशोर्द्वयंतदाकर्णितंनलमाकर्णयतीत्येवंशीलंसत्फ

लाढ्यजीविफलेनाढ्यंजीवितंयस्यफलजीवितमित्यर्थः । तद्वीक्षितं नलंनवीक्षतेएवंभूतंसदफलंनिष्फलमितिपातालेस्थितत्वान्नलाकर्णनंभवतिनतुवीक्षणम् ॥ २८ ॥

विलोकयन्तीभिरजस्रभावनाबलादमुंनेत्रनिमीलनेष्वपि । अलमृभिमर्त्याभिरमुष्यदर्शनेनविश्लेशोपिनिमेषनिर्मितः ॥ २९ ॥

विलोकयन्तीभिरिति । मर्त्याभिर्मानुषीभिरमुष्यदर्शनेऽवलोकनेनिमेषनिर्मितोनेत्रनिमीलनरचितोविश्लेशोपिनालंभिनप्रापि । किंभूताभिर्मानुषीभिरजस्रभावनाबलादजस्रंनिरन्तरंयाभावनावासनाचिन्तनंवातद्वशादमुंनलंनेत्रनिमीलनेष्वपिनेत्रसङ्कोचेष्वपिसत्सुविलोकयन्तीभिःपश्यन्तीभिर्योह्रियंस्मरतिसनेत्रगोचराभावेपितमेवपश्यति । मर्त्याभिरितियोपधत्वान्नङीष् । अलम्भीत्यत्रलभेश्चेत्यनुवृत्तौविभाषाचिण्णमुलोरितिनुम् ॥२९॥

न का निशि स्वप्नगतंददर्शतंजगादगोत्रस्खलितेचकानतम् । तदात्मताध्यातधवारतेचकाचकारवानस्वमनोभवोद्भवम् ॥ ३० ॥

इदानींपतिव्रताव्यतिरिक्तानांसर्वासामपिमुग्धादिक्रमेणनलेऽनुरागमाह । नेति । कास्त्रीनिशिरात्रौस्वप्नगतंस्वप्नप्राप्तंतंनलंनददर्शाऽपितुसर्वापि । काचगोत्रस्खलितेनामव्यत्ययेनामव्यत्ययेनाऽऽत्तौतंनलंनजगादाऽपितुसर्वापि । अपरंरतेसंभोगेतदात्मताध्यातधवातस्यनलस्यात्मास्वरूपंयस्यतस्यभावस्तत्तानलस्वरूपेणध्यातोधवःप्रियोययासाएवंभूतासतीकावास्वमनोभवोद्भवंस्वस्यमदनोद्भूतिंनचकाराऽपितुसर्वापि । स्वप्रियेनलंभावंकृत्वारेमेइत्यर्थः । क्रमेणमुग्धादीनांनलेचित्तासङ्गोदर्शितः । बह्व्योयुवतयोनलमेवस्वप्नगतंददृशुरित्यर्थः । नामगोत्रंकुलंगोत्रंगोत्रस्तुधरणीधरइतियादवप्रकाशः ॥ ३० ॥

प्रियास्ययोग्याहमितिस्वमीक्षितुंकरेतमालोक्यसुरूपयाकृतः । विहायभैमीमपदर्पयाकयानदर्पणःश्वासमलीमसःकृतः ॥ ३१ ॥

इदानीमन्यस्त्रीणांतद्योग्यत्वप्रतिपादनपुरःसरंभैमीप्रसङ्गंकरोति । श्रियेति । कयासुरूपयाश्चान्याभैमीविहायत्यक्त्वादर्पणश्चादर्शःश्वासमलीमसःश्वासेनमुखवायुनामलिनोनकृतोऽपितुभैमीव्यतिरेकेणसर्वाभिरपिकृतोयोग्यत्वात् । किंभूतोदर्पणस्तंनलंचित्रादावालोक्यविचार्यस्वमात्मानमपीतीक्षितुमवलोकयितुंकरेहस्तेधृतः । इतीतिकिंश्रियाशोभयाऽस्यनलस्याहंयोग्यासदृशीस्यामितिकाकुः । किंभूतयाकयाऽपिदर्पयागतगर्वयातमालोक्यगतगर्वयेतिवान्वयःशिष्टप्रयोगात् । ज्योत्स्नातमिस्रेतिमलीमसोनिपातितः ॥ ३१ ॥

यथोह्यमानःखलुभोगभोजिनाप्रसह्यवैरोचनिजस्यपत्तनम् । विदर्भजायामदनस्तथामनोनलावरुद्धंवयसैववेशितः ॥ ३२ ॥

नलेभैमीमनोभिलाषमाह । यथेति । वयसापक्षिणागरुडेनैवोह्यमानःप्राप्यमाणोमदनःप्रद्युम्नःप्रसह्यबलात्कारेणवैरोचनिजस्यपत्तनंबलिपुत्रस्यबाणस्यशोणितपुरंनगरंयथागरुडेनैवप्रवेशितस्तथावयसैवतारुण्येनैवविदर्भजायादमयन्त्यामनःकर्मप्रसह्यशैशवसमयंक्रान्त्वामदनः प्रवेशितः खलुवाक्यालङ्कारेप्रसिद्धौवा । किंभूतेनगरुडेनभोगभोजिनाभोगंसर्पशरीरंभुङ्क्तएवंशीलस्तेनतारुण्यपक्षेभोगंसुखंभुङ्क्तेभोजयतिवातच्छीलेन । किंभूतंपत्तनमनलेनाग्निनाऽवरुद्धंसमंततोव्याप्तंभैमीमनःपक्षेनलेनसंबद्धमाक्रान्तंचित्रादौदृष्टंश्रुतञ्चनलंमनसिनिधायकामपीडिताजातेत्यर्थः । कामःकीदृक्तारुण्यचिन्हैरुह्यमानस्तर्क्यमाणः । प्रसह्येतिहठार्थेऽव्ययम् । पक्षेसहेल्यप् । बाणासुरकन्याविवाहेअनिरुद्धेश्रीकृष्णपुत्रेबाणेनावरुद्धेनारदवचनाद्बलरामसहितःश्रीकृष्णोगरुडमारुह्यानिरुद्धमोचनार्थंशोणितपुरङ्गतइतिविष्णुपुराणम् । भोगीतिपाठेभोगिनःसर्पान्भोगयुक्तान्विलासिनश्चेति । खगवाल्यादिनोर्वयइत्यमरः ॥ ३२ ॥

नृपेनुरूपेनिजरूपसंपदांदिदेशतस्मिन्बहुशः श्रुतिंगते । विशिष्यसाभीमनरेन्द्रनन्दिनीमनोभवाज्ञैकवशंवदंमनः ॥ ३३ ॥

तमेवप्रकारमाह । नृपइति । साभीमनरेन्द्रस्यनन्दिनीदमयन्तीतस्मि न्नृपेनलेमनोविशिश्याम्यस्त्रीन्यःसकाशादतिशयेनान्यनृपेन्यआकृष्यधा दिदेशनिदधौ । किंभूतेनृपेनिजरूपसंपदांस्वकीयसौन्दर्याधिक्यानामनुरूपेयोग्ये तथाबहुशोनेकवारंश्रुतिंश्रवणगोचरंगतेप्राप्ते । किंभूतंमनोमनोभवस्यकामस्याज्ञायाएकंमुख्यंवशंवदंप्रयणंसाज्ञाकारकमित्यर्थः । मदनायत्तत्वान्नलएवसंलग्नमित्यर्थः । रूपञ्चसंपदश्चेतिवा । बहुशइति सङ्ख्यैकवचनादितिशस् । नन्दिनीति नन्द्यादित्वाल्ल्युः । वशंवदमिति प्रियवशेवदःखच् । अरुर्द्विषदजन्तस्येतिमुम् ॥ ३३ ॥

उपासनामेत्यपितुः स्मरज्यतेदिनेदिनेसावसरेषु बन्दिनाम् । पठत्सुतेषुप्रतिभूपतीनलंविनिद्ररो माऽजनिशृण्वतीनलम् ॥ ३४ ॥

उपासनामिति । साभैमीस्वावसरंत्यक्त्वादिनेदिनेप्रतिदिनंपितुरुपासनांसेवामेत्यागत्यबन्दिनामवसरेषुसमयेषुरज्यतेस्माऽनुरक्ताबभूव तेषामवसरेनलाकर्णनसंभवादित्यर्थः । तदेवाह।तेषुबन्दिषुप्रतिभूपतीनन्यान्राज्ञः पठत्सुस्तुतिपूर्वकंवदत्सुसत्सुसाभैमीनलंशृण्वतीसतीअलमत्यर्थंविनिद्ररोमाऽजानिवत्पुलकाजाता । अनेनानुरागःसात्त्विकोभावश्चदर्शितः। उपासनेतिण्यासश्रन्थेतियुच् । रज्यतइतिस्वरितेतोदैवादिकस्यरञ्जेरूपम् । भूपतीन्प्रतीतिलक्षणेकर्मप्रवचनीयत्वाद्द्वितीया । विनिद्ररोमेतिनाऽन्तंछान्दसंवा । अजनीतिदीपजनेतिकर्तरिच्चिण् । जनिवध्योरितिनिषेधाद्वृद्ध्यभावः ॥ ३४ ॥

कथाप्रसङ्गेषुमिथः सखीमुखात्तृणेऽपितन्व्यानलना मनिश्रुते । द्रुतंविधूयान्यदभूयतानयामुदातदाक र्णनसज्जकर्णया ॥ ३५ ॥

कथेति । मिथःपरस्परंकथानुषङ्गेषुसखीमुखात्तृणेपिविषयेनलनाम्नि तन्व्यादमयन्त्याश्रुतेसतिअनयाभैम्यामुदाहर्षेणतस्यनलनाम्नआकर्णनेश्रवणेसज्जीतत्परीकर्णीयस्याएवंविधयाऽभूयतजातंकिंपुनर्वाच्यंनलनृपवर्णनेसज्जाकर्णत्वम् । किंकृत्वाअन्यत्कथान्तरंकार्यान्तरंवाद्रुतंझटितिवि

भूयपरित्यज्यएतामयिस्नेहात्नलराजकथाएवकथयन्तीतिज्ञात्वेत्यर्थः । तस्येतिविरहव्यथयाकृशत्वम् । अभूयतभावेयगात्मनेपदं ॥ ३५ ॥

स्मरात्परासोरनिमेषलोचनाद्बिभेमितद्भिन्नमुदाहरेतिसा । जनेनयूनस्तुदतातदास्पदेनिदर्शनंनैषधमभ्यषेचयत् ॥ ३६ ॥

स्मरादिति ॥ साभैमीइतिपूर्वोक्तेनविन्यासेनयूनस्तरुणान्स्तुवताजनेनसख्यादिनाप्रयोज्येननैषधंनलंतदास्पदेमदनस्थानेनिदर्शनंदृष्टान्तमभ्यषेचयत्स्थापयामास । इतीतिकिंइत्येजन परासोःपरागताअसवःप्राणाःयस्यतस्मान्मृतादतएवानिमेषलोचनान्निमेषरहितनेत्रात्स्मरात्कामादहंबिभेमि । ततस्माद्भिन्नमन्यद्दृष्टान्तमुदाहरणंवदेतितेनजनेनपृष्टे सतिनलंदृष्टान्तेनस्थापयामास । असौराजाकामोपमइतिजनोयंकंचनस्तौतितदाभैम्याशयाकामनुपमामन्त्यक्त्वानलमुपमानंकरोतीत्यर्थः । अन्यस्योपमानस्याभावान्नलमेवदृष्टान्तंजनोददातीत्यर्थः । तस्मात्स्मराद्भिन्नमित्येकंपदंवा । देवत्वादनिमेषत्वंमृतत्वेनोःप्रेक्षितम् । मृतस्यराजादेःस्थानेऽन्योभिषिच्यते । स्मरादिति भीत्रेत्यपादानम् । आस्पदइतिआस्पदंप्रतिष्ठायामितिसाधु । नैषधमिति निषधानामयमितिसंबन्धसात्रेण्प्रकरणादिनाचस्वस्वामिसंबन्धाधिगतिः । निषधानांराजेत्यर्थेतुजनपदलक्षणोजीबाधक्तोनादित्वात्कुरुनादीतिण्येनैषध्यइतिस्यात् । अभ्यषेचयदित्यत्रप्राक्सितेतिषत्वम् ॥ ३६ ॥

नलस्य पृष्टानिषधागतागुणान्मिषेण दूतद्विजवन्दिचारणाः । निपीयतत्कीर्त्तिकथामथानयाचिरायतस्थेविमनायमानया ॥ ३७ ॥

नलस्येति । अनयाभैम्यानिषधागतान्निषधदेशादागतान्दूतद्विजवन्दिचारणान्चारविप्रस्तुतिपाठकादेशान्तरभ्रमणजीविनोनलस्यगुणान्सौन्दर्यादीन्भवतांदेशेकोराजाकीदृग्गुणः कथंप्रजाःपालयतीतिमिषेणव्याजेनपृष्टा अथप्रश्नानन्तरंतत्कीर्त्तिकथांनिपीयनलयशोवर्णनमाकर्ण्यानयाभैम्याचिरायविमनायमानयाअहृष्टचित्तयादुर्मनायमानयातस्थेस्थितम् ।

दृग्गुणोराजामयाकथंलप्स्यतइतिविमनस्कता । प्रकारप्रश्नेथेणाविमना यस्मान्नयाजातंचिरकालमाकर्णयन्त्यैवस्थिरचित्तयाजातमितिवाव्याख्येय म् । तत्कीर्तिंसुधामितिपाठः । चिरायनिपीयेतिवासंबन्धः । अंकथितंचेति द्विकर्मकत्वात्प्रच्छेरप्रधानेकर्मणिनिष्ठातयाअभिहितत्वान्नद्वितीया चार णाइति । गुणानिति नलोकेतिषष्ठीनिषेधाद्द्वितीया । तस्थइतिभावेत क् पक्षेनिपीयतस्थइत्यत्रमुखंव्यादायस्वपितीतिवत्तुल्यकालएवल्यप् । वि मनाइवाचरतीतिकर्तुःक्यङ्सलोपश्चेति सलोपः । अकृत्सार्वधातुकेतिदी र्घः । छित्वाच्छागम् ॥ ३७ ॥

प्रियंप्रियाञ्चत्रिजगज्जयिश्रियौलिखाऽधिलीला
गृहभित्तिकावपि । इतिस्मसाकारुवरेणलेखितं
नलस्यचस्वस्यचसख्यमीक्षते ॥ ३८ ॥

पूर्वंश्लोकपञ्चकेनभैम्यानलश्रवणानुरागंप्रतिपाद्येदानींलिपिस्वप्नादीद र्शनानुरागंप्रतिपादयति । प्रियमिति । साभैमीइतिस्वाज्ञयाकारुव रेणकुशलेनलिपिकर्त्रा प्रयोज्येनलिखितंनलस्यस्वस्यात्मनश्चसख्यंरूपसा म्यमीक्षतेस्मपश्यतिस्म । इतीतिकिंहेकारुवरत्वमधिलीलागृहभित्ति लीलागृहंक्रीडागृहंतस्यभित्तौविभक्त्यर्थेऽव्ययीभावः । प्रियंनायकंप्रियांनायि कांचोभौकावपिअनिर्दिष्टनामानौलिख । किंभूतौत्रिजगज्जयिश्रियौत्रया णांजगतांसमाहारस्त्रिजगत्तज्जयतीत्येवंशीलाश्रीःशोभाययोर्जगत्त्रय्यामा वामेवसुन्दराविति । जगज्जयीत्यत्रजिदृक्षि इतिइनौपुंवद्भावः ॥ ३८ ॥

मनोरथेनस्वपतीकृतंनलंनिशिक्वसानस्वपतीस्म
पश्यति । अदृष्टमप्यर्थमदृष्टवैभवात्करोतिसुप्तिर्ज
नदर्शनातिथिम् ॥ ३९ ॥

मनोरथेति । स्वपतीनिद्राणासाभैमीमनोरथेनवाञ्छयास्वपतीकृतम स्वपतीकृतंस्वप्राणेश्वरीकृतंनलंक्वनिशिकस्यांरात्रौनपश्यतिस्मअपितुसर्व स्यामपि । दिवादृष्टस्यस्वप्नेदर्शनात्कदाप्यदृष्टस्यकथंदर्शनमित्यर्थेहेतुमा ह । अदृष्टमिति । सुप्तिःस्वप्नःकदाचिददृष्टमर्थंवस्तुअदृष्टवैभवाद्धर्माध र्मसामर्थ्याज्जनदर्शनातिथिंजनदर्शनगोचरंकरोतियद्दृष्टंदृश्यतेस्वप्नेऽन

नुभूतंकदापिनेतिन्यायेनजन्मान्तरेस्याभान्तरानुभूतंसमुत्पन्नसंस्कारसाक्षि ज्जन्मलिङ्गदृष्टमप्यर्थंधर्माधर्मावेवदर्शयतइतिभावः । चित्रादौनलदर्शने सत्यपिसाक्षात्तद्दर्शनाभावाददृष्टत्वोक्तिर्युक्ता । साक्षाच्चित्रेतथास्वप्नेतस्य स्याद्दर्शनंत्रिधेति ॥ अत्रतूत्तरंप्रकारद्वयम् ॥ ३९ ॥

निमीलितादक्षियुगाच्चनिद्रयाहृदोपिबाह्येन्द्रिय
मौनमुद्रितात् । अदर्शिसङ्गोप्यकदाप्यवीक्षितोर
हस्यमस्याःसमहन्महीपतिः ॥ ४० ॥

निमीलितादिति । निद्रयैवसुषुप्त्यैवसमहीपतिर्नलोभैम्या महद्रहस्य मदर्शिदर्शितः । किंभूतःकदापिजाग्रत्स्वप्नावस्थयोरपिएवंरूपत्वेनावी क्षितोऽदृष्टः । किंकृत्वानिमीलितान्मुद्रितादक्षियुगान्नेत्रद्वयात्सङ्गो प्यसंयम्यगोपायित्वातथाबाह्येन्द्रियमौनमुद्रिताद्बाह्येन्द्रियस्यैवमौने नस्वविषयग्रहणाभावेनमुद्रिताद्रूपलक्षणस्वविषयग्रहणेशक्ताद्धृदोपिम नसोपिसंगोप्यअक्षियुगमनसोरपिज्ञातुमदत्त्वापीतियावत् । चशब्दाव प्योन्यसमुच्चये । महारहस्यत्वेननिरतिशयानन्दात्मरूपत्वेननिद्रयाभै म्यैसाक्षात्प्रदर्शितइत्यर्थः । ननुसुषुप्तौमनसोप्यव्यापारश्चेत्तर्हिज्ञानंकथम् उच्यते । स्वप्रायोनांबाह्येन्द्रियग्राह्यत्वाभावाद्ग्राह्यत्वाभावेसुखादिप्र त्यक्षाभावाभावादान्यन्तरत्वाभावेपिअदृष्टवशकृतकेवलाविद्यावृत्तिरूपसुषु प्तिविषयत्वस्ययुक्तत्वादात्मनएवतत्रादृष्टत्वाज्ज्ञानरूपेणनित्यस्फुरणोपप त्तेः । यद्वानलएवभैम्याअनुरक्तत्वात्तत्प्राप्तिंविनाविषयमात्रस्यापिवि रागसंभवात्सुखासंभवाद्ध्यानान्तरञ्चसुखमहमस्वाप्संनकिंचिदवेदिषमि त्यनुसन्धानस्यउद्भावानलविषयत्वमन्तरेणैवमनुसन्धानस्याऽयुक्तत्वात्सु षुप्त्यवस्थावशात्सनलएवसमन्निरतिशयानन्दात्मरूपत्वेनस्फुरितइतिबो धानन्तरंतयाज्ञातमितिभावइतियथाकथंचित्सुषुप्त्यवस्थाव्याख्येया । ए वंपद्यत्रयंश्लोकत्रयेणावस्थात्रयेपिनलसाक्षात्कारोवर्णितः । बालत्वा दतिगूढत्वाच्चनविषयस्तदनुरागःकेनापिनज्ञातइति तस्यमहारहस्यत्व म् । व्याख्यानान्तरञ्चपूर्वस्मिन्श्लोकेस्वप्नावस्थोक्तामनोरथेतिश्लोकेनम नोरथेननलःपतिःकृतस्तत्रैवस्वप्नावस्थायांदृष्टंनलंप्रतिस्वयमेवाह । नि मीलितादिति । हेनलसप्रसिद्धस्त्वंपतिःस्याभवइतिप्रार्थनायालिङ् ।

अर्थान्मम प्रसिद्धस्तु पुराणादौ भैमीपतिर्नल एव न त्विन्द्रादय इति इन्द्रादि परित्यागेन तस्यैव प्रार्थनायां संबोधने हेतुमाह । यतोऽक्षियुगाद्वा बिभीतकोनिवासोऽस्यास्तीति अक्षि अक्षि च तद्युग्मं च कलियुगं तस्मादपि बाह्योभिन्नः । दोषोऽर्थः । किंभूतादक्षियुगान्निद्रया निद्राजन्येनाज्ञानेन निमीलितात्तिरोहितादव्यापादित्यर्थः । तथाऽहृदोऽज्ञानि जडान्मूर्खादित्यर्थः । तस्मादपि बाह्योभिन्नः । किंभूतादहृद इन्द्रियस्य वाग्रूपस्य मौनं व्यापाराभावस्तदेव मुद्रा स्वभावो यस्य परस्तुतौ मूकादित्यर्थः । तल्लक्षणं माघे "सहजान्धदृशः स्वदुर्नये परदोषेक्षणदिव्यचक्षुषः ॥ स्वगुणोच्चगिरो मुनिव्रताः परवर्णग्रहणेष्वसाधवः" इति । तथाहेरहस्य च रहस्याऽत्यन्तगोप्यामासन्नीयस्य तथाहेमहन्मानार्हे एतेषु संबोधनेषु पदत्रयं हेतुर्यथायथं योज्यम् । किंभूतस्त्वम् अदर्शिसक्तो विष्णुं पश्यन्तीत्येवंशीला अदर्शिनो विष्णुभक्तास्तैः सह सक्तो मैत्रीयस्य । पुनः किंभूतः । अकदाप्यवीक्षितो न कमकं दुःखं दापयन्तीत्येवंशीला अकदापिनः स्वयं दुःखं ददति दापयन्ति चैवंशीलाः दुष्टास्तैरकदापिभिरवीक्षितो न दृष्टस्तत्संगादिरहित इत्यर्थः । अत एव महीसर्वदोत्सववान्स्याः इति मध्यमपुरुषसामर्थ्यात् सा भैमीति ज्ञातव्यम् । यद्वा कश्चन कस्मैचिदाशिषं ददत् प्रार्थयते सत्वं महीपती राजा स्या भवेति प्रार्थनायां लिङ् । यद्वा राजानं प्रार्थयते महीपतिस्त्वं प्रसिद्धः स्याः । अन्यत्पूर्ववत् । दमयन्तीसंबोधनपदानि विशेषणपदानि समानार्यानि ज्ञातव्यानीत्यलम् ॥ ४० ॥

अहो अहोभिर्महिमा हिमागमेप्यभिप्रपेदे प्रति तां स्मरार्दिताम् । तपर्तुपूर्तावपि मेदसां भरा विभावरीभिर्बिभराम्बभूविरे ॥ ४१ ॥

अहो इति । अहोभिर्दिवसैः कर्तृभिर्हिमागमेपि हेमन्तर्तावपि स्मरार्दितां मदनपीडितां भैमीं प्रति लक्षीकृत्य महिमा दैर्घ्यं प्रपेदे प्राप्तं विभावरीभी रात्रीभिस्तपर्तुपूर्तावपि निदाघर्तुभरेपि मेदसां भरा मज्जा बाहुल्यलक्षणायास्थूलत्वं बिभराम्बभूविरे धृतम् । हेमन्ततौ दिनानि ह्रस्वानि रात्रयो महत्यो ग्रीष्मेपि दिनानि महान्ति रात्रयोल्पा विरहितत्वादतिवाहितुमशक्यत्वात् तां प्रति विपरीता जाता इत्यर्थः । अहो विचित्रमित्यर्थः । अहो इत्योदन्तत्वात् प्रगृह्यम् । बिभरामित्यत्र भीह्रीभृहुवां श्लुवच्च ॥ ४१ ॥

स्वकान्तिकीर्तिव्रजमौक्तिकस्रजः श्रयन्तमन्तर्घटनागुणश्रियम् । कदाचिदस्या युवधैर्यलोपिनं नलोपिलोकादशृणोद्गुणोत्करम् ॥ ४२ ॥

इदानींनलस्यापितस्यामनुरागमाह ॥ स्वकान्तीति । कदाचित्कस्मिंश्चित्समयेनलोपिलोकाल्लोकमुखादस्याभैम्यागुणोत्करंसौन्दर्यादिगुणसमूहमशृणोत्किंभूतंगुणोत्करंयुवधैर्यलोपिनंतरुणधैर्यंलोपनशीलंतथास्वेतिस्वस्याभैम्याःकान्तिकीर्तिव्रजःसौन्दर्यविषयोयोयशःसमूहःसएवशुभ्रत्वान्मौक्तिकस्रङ्मौक्तिकमालातस्याअन्तर्घटनामलमनसियाघटनासंबन्धस्तस्यैगुणश्रियंदोरकशोभांश्रयन्तंकुर्वाणंगुणोत्करणेनलचेतसितत्कान्तिकीर्तिर्गुम्फितेत्यर्थः । मालायाश्चान्तर्घटनार्थंदोरकोभवति । यद्वास्वस्यनलस्यतद्योगेननलरामणीयकानुरूपोभैमीगुणसमूहइतिभावः । मौक्तिकमिति विनयादित्वात्स्वार्थेठक् । लोकादितिहेतौपञ्चमी ॥ ४२ ॥

तमेवलब्ध्वावसरन्ततःस्मरःशरीरशोभाजयजातमत्सरः । अमोघशक्त्यानिजयेवमूर्तयातयाविनिर्जेतुमियेषनैषधम् ॥ ४३ ॥

तमिति ॥ ततोभैमीगुणश्रवणानन्तरंस्मरःकामस्तमेवाऽवसरंप्रस्तावंलब्ध्वातयाभैम्याकृत्वानैषधंनलंविनिर्जेतुंपराभवितुमियेषऐच्छत् । उत्प्रेक्षते । मूर्तयाशरीरिण्यानिजयास्वकीययाऽमोघशक्त्येव । यतःस्वशरीरस्ययाशोभातस्याजयस्तेनजातोमत्सरःक्रोधोयस्येति । पराजयेच्छायाःकारणंजातक्रोधोवैरीकमप्यवसरंप्राप्यशक्त्यायुधःस्ववैरिणंपराजेतुंप्रक्रमते । शोभेति भिदादिगणेनिपातनात्साधु ॥ ४३ ॥

अकारितेनश्रवणातिथिर्गुणः क्षमाभुजाभीमनृपात्मजालयः । तदुच्चधैर्यव्ययसंहितेषुणास्मरेणचस्वात्मशरासनाश्रया ॥ ४४ ॥

अकारीति । तेनक्षमाभुजाराज्ञानलेनभीमनृपात्मजालयोभीमनृपकन्यायाआलयःस्थानमाश्रयोयस्यएवंभूतोगुणःसौन्दर्यादिःश्रवणातिथिःश्रवणगोचरोऽकारिकृतआकर्णितइत्यर्थः । आदरातिशयापूर्वत्वसूचनायाति

यिपदंस्मरेणापिगुणःप्रत्यञ्चांस्वात्मशरासनाश्रयःस्वात्मनोयच्छरासनंधनुस्तदाश्रयआधारःस्थानंयस्यैवंभूतोऽकारि । किंभूतेनतस्यनलस्योच्चमुत्कृष्टंचैवैतस्यश्रयोनाशंतस्मैसंहितोधनुष्यारोपितइषुर्येनयद्वैवभैमीगुणश्रवणंजातंतदैवतस्यमदनपीडाजातेतिभावः । चस्तुल्यकालद्योतनार्थैवा । शोभनंदृढंयदात्मशरासनमितिवा ॥ ४४ ॥

**अमुष्यधीरस्य जयायसाहसीतदाखलुज्यांविशिखैःसनाथयन् । निमज्जयामासयशांसिसंशये स्मरस्त्रिलोकीविजयार्जितान्यपि ॥ ४५ ॥**

अमुष्येति । स्मरस्त्रयाणांलोकानांसमाहारस्त्रिलोकीतस्याविजयेनार्जितानिसंपादितान्यपियशांसिकीर्तीःसंशयेसन्देहेनिमज्जयामासखलुसंभावनायांत्रैलोक्येजितेपियद्येनंजेतुंनशक्ष्यामितर्ह्येकस्याऽजयेनसर्वापिकीर्तिर्गमिष्यतीति शक्ष्यामिनवेतिसन्देहः । किंभूतःस्मरस्तदाधीरस्यामुष्यनलस्यजयायविशिखैर्बाणैर्ज्यांसनाथयन्सनाथांकुर्वन्योजयन्नित्यर्थः । यतःसाहसीहिताहितानपेक्षंयत्कर्मतत्साहसन्तद्वानऽविमृश्यकारीत्यर्थः । विशिखैरितिधीरस्यैकेनजेतुमशक्यत्वाद्बहुत्वम् । त्रैलोक्यापेक्षयाऽस्यअतिधीरत्वमुक्तम् । विजयार्जितानीतिपाठःसाधीयान् । जयायेतितुमर्थादितिचतुर्थी । निमज्जयामासेतिमस्जेःसकारस्यझलांजश्झशीतियोदकारस्तस्यभृज्जतीनामितिनिर्देशाच्छुत्वम् ॥ ४५ ॥

**अनेनभैमींघटयिष्यतस्तथा विधेरवन्ध्येच्छतयाव्यलासितत् । अभेदितत्तादृगनङ्गमार्गणैर्यदस्यपौष्पैरपिधैर्यकञ्चुकम् ॥ ४६ ॥**

अनेनेति ॥ अस्यनलस्यतत्प्रसिद्धंतादृग्दुर्भेद्यमपिधैर्यमेवकञ्चुकंपौष्पैःपुष्परूपैरपिअनङ्गमार्गणैःकामबाणैर्यद्यस्मादभेदिविदारितंतत्तस्मात्तथावस्यमाणभैम्यभिलाषोद्वाहादिपरित्याजनप्रकारेणानेननलेनभैमींघटयिष्यतःसङ्गमयिष्यतोविधेर्ब्रह्मणोऽवन्ध्येच्छतयाअवन्ध्यासफलाइच्छामनोरथोयस्यतस्यभावस्तत्तासफलेच्छतातयाव्यलासिविलसितमितिकवितर्कः । तादृगनङ्गमार्गणैरित्येकंवापदंतैःपञ्चसंख्यतयाप्रसिद्धैरल्पैस्तादृगंम्भशाति

मृदुस्रजोः कामबाणैरिति । अङ्गरहितस्यापि पुष्परूपैर्बाणैर्धैर्यकञ्चुकस्यामूर्तस्यापि वस्तुनो यद्विदारणं तदत्यन्तसफलेच्छतायाः स्वविलासं वदतिमत्तदोः क्रियाविशेषणत्वं वा असंभावितमपि विधीष्टं भवत्येवेति भावः । व्यलासीति भावे चिण् । अभेदीति कर्मणि कर्मकर्तरि वा चिण् । पीप्यैरिति भेदविवक्षायां सम्बन्धेऽण्स्वार्थे वा ॥ ४६ ॥

किमन्यदद्यापि यदस्त्रतापितः पितामहो वारिजमाश्रयत्यहो । स्मरं तनुच्छायतया तमात्मनः शशाक शङ्के स न लङ्घितुं नलः ॥ ४७ ॥

धैर्यभङ्गमेवाह । किमन्यदिति । यस्य कामस्यास्त्रैर्बाणैस्तापितः पितामहो ब्रह्माऽद्यापि वारिजं कमलमाश्रयति । अहो आश्चर्ये । वृद्धोऽपि ब्रह्मा कामसंतप्तः यः स्वपितामहमत्यतिवृद्धमतिपूज्यं च शस्त्रैः पीडयतीति सोऽन्यं पीडयतीति किं वाच्यम् । स्वभावसिद्धं कमलासनत्वं कामसंतप्तत्वेनोत्प्रेक्षितम् । तूत्प्रेक्षा । संतप्ताः शीतलमाश्रयन्ते ऽत एव वारिजपदम् । अन्यत्कामस्य किं वर्णनीयं तत्राह । शङ्के इति । नल आत्मनः स्वस्य तनुच्छायतया शरीरसाम्येनेव । यद्वा तन्वी च्छाया शोभा यस्य तस्य भावस्तत्ता तया विरहव्यथाजनितम्लानशोभतया तं स्मरं लङ्घितुं जेतुं न शशाक । यद्वा आत्मनः सकाशात् कामस्य तनुच्छाया ऽल्पशोभत्वेन जेतुं नाशकद् ऽपि तु शशाकैव तस्याल्पकान्तित्वमात्मनोऽधिककान्तित्वमेव जयहेत्वर्थः । पूर्वं तस्यातिशायितं धैर्यं वर्णयित्वा तन्नाशकथनं विप्रलम्भपोषार्थम् । लङ्घितुमिति शकियोगे तुमुन् ॥ ४७ ॥

उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयस्कृतेन किम् । त्रपासरिद्दुर्गमपि प्रतीर्य सा नलस्य तन्वी हृदयं विवेशयत् ॥ ४८ ॥

उरइति । सा तन्वी कृशाङ्गी स्वस्य त्रपैव सरिन्नदी तस्या दुर्गं प्राकारमपि त्रपासरिदेव दुर्गं वा प्रतीर्य नलस्य हृदयं हृद्देशं प्रविष्टा । यद्वा नलस्यैव त्रपासरिद्दुर्गं तदुरोभुवा वक्षःस्थलजेन कुम्भयुगेन कुचकलशयुगेन जृम्भितं विलसितं किमुत्प्रेक्षायाम् । किंभूतेन नवोपहारेण नवो नूतन उपसमीपगतो हा

रोमुक्ताहारोयस्यनवउपहारउपायनंतद्रूपेणवावयसायौवनेनकलंवयस्कृतं तेनतेनलज्जान्त्यक्तासंपन्नयौवनाभैमीप्यातेत्यर्थः। अन्यापिकुम्भकारकृत मुपढौकितंकुम्भद्वयंवक्षसिनिधायजलदुर्गन्नीत्वाप्रियसङ्केतंगच्छति। यच्छ ब्दोऽप्यर्थः। सातन्वयपितरोभुवाकुम्भयुगेनत्रपासरिद्दुर्गमपिप्रतीर्यनलस्य हृदयमपिविवेशकिमितिविलर्केइतिवाऽन्वयः। किंभूतंदुर्गंमूर्च्छितमत्युच्च मित्यर्थः। अन्यत्पूर्ववत्। उपायनमुपग्राह्यमुपहारस्तथोपदेत्यमरः। तरोभुवेति भावितपुंस्कत्वेनतुमभावः। कुम्भयुगेनेतिकर्तरितृतीया॥४८॥

अपह्नुवानस्यजनाययन्निजामधीरतामस्यकृतं मनोभुवा। अबोधि तज्जागरदुःखसाक्षिणीनिशा चशय्याचशशाङ्ककोमला॥ ४९॥

अपेति। मनोभुवाकामेनास्यनलस्ययदनिर्वाच्यंकृतंतन्निशारात्रिःशय्या स्तरणंचाबोधिजानातिस्म। किंभूतस्यास्यजनायलोकायनिजांस्वकीयाम धीरतामधैर्यमपह्नुवानस्यगोपायतः। किंभूतानिशाशय्याचयतोजागरदुः खसाक्षिणीसाक्षाद्दीक्षतेसाविदुषीत्यर्थः।तज्जागरेत्येकंवापदम्। तथाशशा ङ्ककोमलाचन्द्रेणमनोहरा शशस्यमृगविशेषस्याङ्कउत्सङ्गस्तद्वन्मृद्वीचन्द्रव न्मनोहरावाचन्द्रेणकर्पूरप्रदेपेणमनोहरावाचान्त्रीरात्रिरतिदुःसहत्वाज्जा गरदुः खसाक्षिणीशय्याचात्मनिविलुण्ठनेनरात्रिशय्यातिरेकेणकेनचित्त द्विरहदुःखंनज्ञातमितिभावः। जनायेति श्लाघह्नुङ्स्थेतिसंप्रदानत्वम्। अबोधीति दीपजनेतिकर्तरिचिण्। निशेति कप्रत्ययात्ताइलन्ताट्टाप्। शय्येति संज्ञायांसमजनीतिक्यपिअयङ्यीत्ययङ्॥ ४९॥

स्मरोपतप्तोऽपिभृशं न सप्रभुर्विदर्भराजंतनयामयाचत। त्यजन्त्यसूञ्शर्मच मानिनोऽवरंत्यजन्तिन त्वेकमयाचितव्रतम्॥ ५०॥

स्मरेति। भृशंस्मरोपतप्तोऽपिअतिशयेनकामपीडितोऽपिसनलोविदर्भराजं विदर्भदेशाधिपंभीमंतनयांकन्यांनायाचतयतःप्रभुःसमर्थोऽभिमानीतियाव त्। कामपीडितःसकथंनयाचितवानित्यतआह। मानिनोऽभिमानिनःपु रुषाःशर्मसुखंतथाऽसूंश्चप्राणानऽपित्यजन्ति। एतद्द्वयंतेषांवरमल्पमिष्ट

मेकमद्वितीयंप्रधानमयाचितव्रतमयाचनरूपंव्रतंनैवत्यजन्तीत्यर्थः। एतद वरं नविद्यतेवरंश्रेष्ठंयस्मादतिश्रेष्ठमित्यर्थः। पाठक्रमादर्थक्रमस्यबलीयस्त्वात्कर्मपदस्यपूर्वमन्वयः। थैद्वावचकारस्तुल्यकालतद्योतनार्थः। शर्मयथा भवतितथाऽसूनपित्यजन्तिसुखेनत्यजन्तीत्यर्थः। वरंश्रेष्ठमितिव्रतविशेषणंवा। विदर्भराजेति राजाहस्सखिभ्यष्टच्। याचिर्द्विकर्मकः। देवाद्वृतेवरः श्रेष्ठेत्रिषुक्लीबेमनाक्प्रियमित्यमरः॥ ५०॥

मृषाविषादाभिनयादयंक्वचिज्जुगोपनिःश्वासतर्तिवियोगजाम्। विलेपनस्याधिकचन्द्रभागताविभावनाच्चापललापपाण्डुताम्॥ ५१॥

मृषेति॥ अयंनलःक्वचित्कस्मिंश्चिद्वस्तुनिविषयेमृषाविषादाभिनयात्तद्वस्तुगतमितिमिथ्याखेदप्रकटनाद्वियोगजांविरहजनितांनिःश्वासततिंनिःश्वासपरंपरांजुगोप तिरोधत्तेस्म। तथाविलेपनस्यचन्दनस्याधिकचन्द्रभागःकर्पूरांशोयस्मिंस्तस्यभावस्तत्तातस्याविभावनाज्ज्ञापनात् प्रकटीकरणाद्वियोगजांपाण्डुतांचापललापाच्चन्दनमध्येकर्पूरोधिकोजातस्तेनाङ्गपाण्डुत्वंनत्वन्यत्कारणमिति। विषमत्तीतिविषादः शिवस्तस्याभिनयान्निश्वासानुपदंशिवशिवेतिनामोच्चारणाद्वाजुगोप। घनसारश्चन्द्रसंज्ञःकर्पूरइत्यमरः॥ ५१॥

शशाक निह्नोतुमयेनतत्प्रियामयंबभाषे यदलीकवीक्षिताम्। समाजएवालपितासुवैणिकैर्मुमूर्च्छयत्पञ्चममूर्च्छनासुच॥ ५२॥

शशाकेति। अयंनलोऽलीकावीक्षितांमोहेनमिथ्यैववीक्षितांप्रियांभैमींप्रतियत्किंचिद्बभाषेतदयेनदैवेननिह्नोतुंगोपायितुंशशाक। वैणिकैर्वीणावादनकुशलैः पञ्चमरागस्यमूर्छनासुआलपितासुपुनःपुनर्गीतासुसतीपुसमाजएवसभायामेवयन्मुमूर्छतदयेनरागमूर्छनाजनितसुखानुभवव्याजेननिह्नोतुंशशाक। मूर्छाप्यपलपितेत्यर्थः। सप्तानांस्वराणामारोहावरोहौमूर्छनास्त्वेकविंशतिः। अथवाप्रियांप्रतिअयेभैमीतिसमाजेवभाषेतन्निह्नोतुंनशशाकेतिकाकुःशशाकैव। शब्दान्तरान्तर्भूतत्वाद्वचनम

पलपितम् । यद्वा वैणिकैः पञ्चमरागमूर्छनासु गातुं प्रारब्धासु समाजएवं समै वमुमूर्छ्येन नलकृतभैमीसंबोधनमाकर्ण्य नीयं स समाजएव मूर्छां प्राप । यद्वायं त्किंचिद्वभाषे तदयेकानायनिह्नोतुं न शशाक स लाजायतु अपलपितुं समर्थो भूत् । यतः समाजएवं सुमूर्छे । दुःकामं तस्मा अयेकामाय । क्रोधे विपादे च संभ्रमे स्मरणेपि च । दुःकामे पुरुषो क्रौंचेति विश्वः ॥ अयः शुभावहो विधिः । वीणावादस्तु वैणिक इत्यमरः । रागप्रकरणमालपितुं पशुव्यतिरिक्त समूहवाचित्वात्समाज इत्यत्रघञ् । वैणिकैरिति शिल्पमिति ठक् । मूर्छा न्मादावुक्तौ ॥ ५२ ॥

अत्रापसापत्रपतां स भूपतिर्जितेन्द्रियाणां धुरिकीर्तितस्थितिः । असंवरे शम्बरवैरिविक्रमे क्रमेण तत्र स्फुटतामुपेयुषि ॥ ५३ ॥

अत्रापेति । स भूपतिः सापत्रपतामवापाऽन्यतो लज्जाऽपत्रपा लयासह वर्तमानः सापत्रपस्तस्य भावस्तत्तां प्राप । किंभूतो यतो जितेन्द्रियाणाम ध्ये धुरि अग्रे प्रथमतः कीर्तिता स्तुता स्थितिर्मर्यादा यस्य चिरहव्यथा लोकेना पि ज्ञातेति स लज्जोऽभूदित्यर्थः । कस्मिन्सति अत्र समाजे सभामध्येऽसंवरे निरेद्धुमशक्येऽगोप्ये शम्बरवैरी कामस्तस्य विक्रमे क्रमेण परिपाट्या स्फुटतां प्राकट्यमुपेयुषि प्राप्ते सति । असंवर इत्यत्र यहवृद्धनिश्चीत्यप् ॥ ५३ ॥

अलं नलं रोद्धुममी किलाऽभवन्गुणा विवेकप्रमुखा न चापलम् । स्मरः स रत्यामनिरुद्धमेव यत्सृजत्ययं सर्गनिसर्ग ईदृशः ॥ ५४ ॥

अलमिति । अमी विवेकप्रमुखा विवेकादयो गुणा नलमिदं पूर्वोक्तं चाप लं रोद्धुमावरितुमलं समर्था नाभवन्नलस्य चापलं रोद्धुं न समर्था इत्यर्थः । कि लनिश्चयेन । यद्यतः स प्रसिद्धः स्मरो रत्यामनुरागे सति पुरुषमनिरुद्धमेव च पलमेव सृजति । अयमेतादृक्सर्गनिसर्गः सृष्टिनिर्णयः स्वभावो वा अयमेव निश्चय इत्यर्थः । अनुरागे सति सर्वोपि चञ्चलो भवतीत्यर्थः । विवेकस्यापि किमपि न चलतीत्यर्थः । यद्वा स्मरो रत्यां संभोगेऽनिरुद्धं निवारयितुमशक्यं चापलमित्यर्थः । अयमीदृशः कामेन सृज्यमानस्य वस्तुतत्वाच्चापलस्य स्व

भावः । अथचमदनःप्रद्युम्नाख्योरत्यांस्वप्रियायामनिरुद्धनामानमेवपुत्रं जनयतीतियदयमीदृशोऽनादिःसर्गःस्वभावः। हेयोपादेयविचारोविवेकः। मलमितिषष्ठ्यर्थेवाद्वितीयारुधेर्द्विकर्मकत्वात् । स्वभावश्चनिसर्गश्चेत्यम रः । रोद्धुमिति अलंयोगेपर्याप्तवचनेष्विति तुमुन् ॥ ५४ ॥

अनङ्गचिह्नं सविनाशशाकनोयदासितुंसंसदियत्न वानपि । क्षणंतदारामविहारकैतवान्निषेवितुंदे शमियेषनिर्जनम् ॥ ५५ ॥

अनङ्गेति । सनलोयदायस्मिन्समयेविरहचिह्नापलापविषयेयत्नवा नपिसन्संसदिसभायामनङ्गचिह्नंपाण्डुत्वकृशत्वगोत्रस्खलनादिकामचि ह्नंविनाक्षणमपिआसितुंनोशशाकनसमर्थोभूत्तदातस्मिन्समयआरामेउ पवनेविहारः क्रीडा तस्याःकैतवाद्व्याजेननिर्जनंदेशमुद्यानदेशंनिषेवितु मियेषऐच्छत् । क्षणमुत्सवरूपंनिर्जनत्वाद्देशविशेषणंवा । यद्वादितिका रणार्थेवा । कालविशेषोत्सवयोःक्षणइत्यमरः । चिह्नमितिपृथग्विनेति द्वितीया । क्षणमिति पक्षेकालाध्वनोरितिद्वितीया ॥ ५५ ॥

अथश्रियाभर्त्सितमत्स्यलाञ्छनःसमंवयस्यैःस्वर हस्यवेदिभिः । पुरोपकण्ठोपवनंकिलेक्षितादिदे शयानायनिदेशकारिणः ॥ ५६ ॥

अथेति ।अथानन्तरंसनलोयानायानमानेतुंनिदेशकारिणोभृत्यान्दिदे शआज्ञापयामास । किंभूतोविरहव्यथाव्यथितोपिश्रियाकान्त्यासुरूपत्वा द्भर्त्सितस्तिरस्कृतोमत्स्यलाञ्छनः कामोयेन विरहव्यथागोपनार्थमङ्गीकृ तशोभार्थत्वाद्व्याजितकामस्तथास्वरहस्यवेदिभिः स्वाभिप्रायज्ञैर्वय स्यैःसखिभिःसमंसहपुरोपकण्ठोपवनंनगरनिकटस्थमुद्यानंकिलेत्यलीक मीक्षिताद्रष्टुकामः कामचिह्नापह्नवेतात्पर्येणनतुवनविलोकनेइतिकिले त्युक्तम् । उपकण्ठंसामीप्येऽव्ययीभावः । पूरणगुणेतिअव्ययेनसहसमास निषेधात्पुरमुपकण्ठंयस्येतिबहुव्रीहिः । केचिदस्मिन्सूत्रेपूर्वोत्तरसाहच र्यात्कृदव्ययस्यैवायंनिषेधोनत्वव्ययमात्रस्येत्याहुः । तन्मतेपुरस्योपकण्ठ मितिषष्ठीतत्पुरुषोपि। वनं तृणायोगेपष्ठ्यभावः । यानायेति क्रियार्थोप

पदस्येतिचतुर्थी ॥ ५६ ॥

अमीततस्तस्यविभूषितंसितंजवेपिमानेपिचपौरुषाधिकम्। उपाहरन्नश्वमजस्रचञ्चलैः खुराञ्चलैःक्षोदितमन्दुरोदरम् ॥ ५७ ॥

अमीइति। ततस्तदाज्ञाऽनन्तरमऽमीभृत्यास्तस्यनलस्याऽश्वमुपाहरन्नाऽऽनिन्युः। अश्वविशेषणानिसितंश्वेतंविभूषितंविशेषेणालंकृतंजवे पवनेपिपौरुषेणबलेनाऽधिकंमानेपिपरिमाणेपिपौरुषंपुरुषप्रमाणंतस्मादधिकमजस्रंचञ्चलैःखुराञ्चलैःखुराग्रैःप्रयोज्यैःक्षोदितंचूर्णीकारितम्। मन्दुरायावाजिशालायाउदरंमध्यंयेन "खुरैः खनन्यःपृथिवीमश्वोलोकोत्तरःस्मृत" इतिशालिहोत्रे। विभूषितंवीनांपक्षिणांभुविस्थानेउषितंवेगवशाद्राकमणवशाद्वागगनगामिनमितिवा। सितमित्यनेनकफप्रकृतित्वन्तेनातिबलवत्त्वसहिष्णुत्वादिलक्षणंसूचितम्। रूपमेवैलक्षण्यंपाभिनं मानेपौरुषंत्रिषु। वाजिशालातुमन्दुरा इत्यमरः॥पुरुषशब्दात्प्रभावेयुवादित्वादण्। परिमाणे पुरुषहस्तिभ्यामणचेत्यण्। क्षोदितेति हेतुमण्णयन्ताक्निष्ठा। कर्त्तरिचतृतीयाकरणेवा ॥ ५७ ॥

अथान्तरेणावटुगामिनाध्वना निशीथिनीनाथमहःसहोदरैः। निगालगाद्देवमणेरिवोत्थितैर्विराजितंकेसरकेशरश्मिभिः ॥ ५८ ॥

अथेति। अथानन्तरंसनलोहयमारुरोहेतिसंबन्धश्लोकेनान्वयः। अश्वविशेषणानिकिंभूतंहयंस्कन्धप्ररूढाःकेशाःकेसरकेशास्तेषांरश्मिभिस्तन्तुसमूहैरेवकिरणैर्वाविराजितम्। किंभूतैर्निगालगाद्गलप्रदेशेवर्त्तमानाल्लक्षणभूताद्देवमणेर्देवमणिनाम्नोदक्षिणावर्त्तादवटुगामिनान्तरेणकण्ठमध्यवर्तिनाऽध्वनामार्गेणोत्थितैर्निःसृतैरिव यथोज्ज्वलत्वान्निशीथिनीरात्रिस्तस्यानाथश्चन्द्रस्तस्यमहःकान्तिःकिरणास्तेषांसहोदरैःसदृशैः सरूपाभवन्तीति सारूप्यंलक्ष्यते। अथचदेवमणिःकौस्तुभश्चन्द्रश्चसमुद्रादुत्पन्नत्वादुभयोःसहोदरत्वम्। केसरकेशरश्मिभिरुपलक्षितंविराजितंवीनांपक्षिणांराजाविराजोगरुडस्तद्वदाचरितम्। निगालस्तुगलोद्देशे,,अवटुर्घाटाकृकाटिकेत्य

मरः । देवमणिः शिवेऽश्वस्य कण्ठावर्ते च कौस्तुभ इति विश्वः । सहोदरैरिति वोपसर्जनस्येति वैकल्पिकत्वात्सादेशाभावः ॥ ५७ ॥

अजस्रभूमीतटकुट्टनोत्थितैरुपास्यमानं चरणेषु रेणुभिः । रयप्रकर्षाध्ययनार्थमागतैर्जनस्य चेतोभिरिवाणिमाङ्कितैः ॥ ५९ ॥

अजस्रेति । रेणुभिश्चरणेषूपास्यमानं सेव्यमानम् । किंभूतै रेणुभिरजस्रं निरन्तरं भूमीतटकुट्टनं धरातलचूर्णनं तेनोत्थितैः । कैरिव अणिमाऽणुपरिमाणत्वं तेनाङ्कितैर्युक्तैर्जनस्य लोकस्य चेतोभिरिवान्तःकरणैरिव अणुपरिमाणैरिति । किंभूतैश्चेतोभी रयप्रकर्षस्य वेगातिशयस्याध्ययनार्थं पठनार्थमागतैः । तद्वेगं प्रेक्षतां चेतोभिर्वेगातिशयाध्ययनार्थमागतैरिवेत्युत्प्रेक्षितम् । मनसोऽपि सकाशादश्वस्य वेगातिशयो द्योत्यते । अथ शिष्यो गुरुचरणयोरुपास्ते । अजस्रभूमीतटकुट्टनमुत्तमाश्वजातिः । भूमीति कदिकारादक्तिन इति ङीप् । अणिमा सञ्जिमवत् ॥ ५८ ॥

चलाचलप्रोथतया महीभृते स्ववेगदर्पानिव वक्तुमुत्सुकम् । अलं गिरा वेद किलायमाशयं स्वयं हयस्येति च मौनमास्थितम् ॥ ६० ॥

चलाचलेति । चलाचलोऽतिचञ्चलः प्रोथ ओष्ठाग्रं नासापुटं वा यस्य तस्य भावस्तत्ता तया महीभृते नलाय स्वीयवेगविषयेदर्पान्वक्तुमुत्सुकमिवोत्कण्ठितमिव । तर्हि किमिति नोक्तवानित्याशङ्क्याह । किल प्रसिद्धोऽयं नलो हयस्याऽऽशयमभिप्रायं स्वयमात्मनैव वेद जानाति किलाऽलो गिरा वाचाऽलं पूर्यतामिति हेतोरिव मौनमास्थितम् । चलाचलप्रोथत्वमश्वजातिः । स्वामिनोऽग्रे स्वयं स्वगुणांवक्तुमनुचितमित्यर्थः । चलाचलेति चलिचरिपतिवदीनां द्विर्वचनमाक्चाभ्यासस्येति द्वित्वमागागमश्च । अभ्यासकार्यमनचीति वक्तव्यान्नाद्यागमदीर्घसामर्थ्याद्धाहलादिःशेषो न ॥ महीभृत इति क्रियया यमभिप्रैतीति संप्रदानत्वम् । गिरेति वारणार्थकाऽलंशब्दयोगे तृतीया । वेदेति विदो लटो वेति णल् ॥ ६० ॥

महारथस्याध्वनि चक्रवर्तिनः परानपेक्षोद्वहना

यशःसितम् । रदावदातांशुमिषादनीदृशां हसन्तमन्तर्बलमर्वतां रवेः ॥ ६१ ॥

महारथस्येति । महारथस्यायुतयोधिनश्चक्रवर्तिनः सार्वभौमस्य नलस्याध्वनि मार्गे आकाशगामित्वेन न विद्यते ऽपेक्षा यस्याः क्रियायामिति परेषामश्वानामनपेक्षया ऽनाश्रयेणायदुद्वहनं तस्माज्जातं यद्यशस्तेन यशसा सितं श्वेतो ऽत एव रदानां दन्तानामवदातानि निर्मलानि यान्यंशवः किरणास्तेषां मिषादनीदृशां परानपेक्षोद्वहनासमर्थानां रवेः सूर्यस्यार्वतामश्वानां बलं हसन्तं सूर्याश्वाः परापेक्षोद्वहना न त्वीदृशा इत्युपहासं कुर्वन्तमिव स्थितम् । यद्वा परानपेक्षोद्वहनात्सूर्याश्वानां बलं दन्तोज्ज्वलकिरणान्तर्हसन्तमित्यन्वयः । स्वाभाविकं श्वेतत्वं यशोहेतुत्वेनोत्प्रेक्षितं सूर्याश्वानां नीलवर्णत्वात् ॥ ६१ ॥

सितत्विषश्चञ्चलतामुपेयुषा मिषेण पुच्छस्य च चामरस्य च । स्फुटं चलच्चामरयुग्मचिह्ननैरनिह्नुवानं निजवाजिराजताम् ॥ ६२ ॥

सितेति । सिताश्वेतास्त्विड्दीप्तिर्यस्य तस्य चरकन्धकेशसमूहस्य मिषेण व्याजेन चलच्चञ्चलं यच्चामरयुग्मं तस्य चिह्ननैः कृत्वा निजवाजिराजतां वाजिनां राजा वाजिराजस्तस्य भावस्तत्तां निजस्यात्मनो वाजिराजतामनिह्नुवानं प्रकटयन्तमिति स्फुटमुत्प्रेक्षते । राजा हि श्वेतचामरद्वयेन वीज्यते चलनक्रियापेक्षया चिह्ननैरिति बहुवचनं चिह्ननैरिति तत्करोतीति णिचन्ताद्भावे ल्युट्चेति ल्युट् ॥ ६२ ॥

अपि द्विजिह्वाभ्यवहारपौरुषे मुखानुषक्तायतवल्गुवल्गया । उपेयिवांसं प्रतिमल्लतां रयस्मये जितस्य प्रसभं गरुत्मतः ॥ ६३ ॥

अपीति । रयस्मये वेगगर्वे प्रसभं बलात्कारेण जितस्य गरुडस्य द्विजिह्वाः सर्पास्तेषामभ्यवहारो भक्षणं तत्साध्यपौरुषं तस्मिन्नपि मुखे ऽनुषक्ता लग्ना आयता दीर्घा वल्गुः सुन्दरी या वल्गा प्रग्रहस्तया कृत्वा प्रतिमल्लतां प्रतिभटत्वमुपेयिवांसं प्राप्तवन्तं वल्गाप्राप्तास्रहिपुच्छसदृशाद्दृश्यन्ते पूर्वं वेगदर्पविषये ऽपि ऽधुना सर्पभक्षणपौरुषेति। वल्गाकान्यकुब्जभाषायां बागइति प्रसिद्धा ॥६३॥

स सिन्धुजं शीतमहःसहोदरं हरन्तमुच्चैःश्रवसः श्रियं हयम् । जिताखिलक्ष्माभृदनल्पलोचनस्तमारुरोह क्षितिपाकशासनः ॥ ६४ ॥

सइति । सिन्धुजंसिन्धुदेशोद्भवंशीतमहश्चन्द्रस्तस्यसहोदरंतुल्यमुच्चैःश्रवसइन्द्राश्वस्यश्रियंशोभांहरन्तंतत्सदृशइति । किंभूतोनलोजिताअखिलाःसमस्ताःक्ष्माभृतोराजानोयेनतथाअनल्पेमहतीलोचनेयस्यसः । यद्वाअनल्पंलोचनंज्ञानंयस्यतथाक्षितौपृथिव्यांपाकंपचनक्रियांशास्त्युपदिशतिसूपशास्त्रप्रणेतृत्वात् । उच्चैःश्रवाअपिसमुद्रजश्चन्द्रभ्राताजितसमस्तशैलःसहस्रलोचनश्चेन्द्रआरोहतितथातंहयमारुरोहेति । सिन्धुजमित्यनेनाश्वशास्त्रोक्तचतुष्पञ्चाशदुत्तमकुलमध्यगतत्वंबलित्वंचसूचितम् ॥६४॥

निजा मयूखाइव तीक्ष्णदीधितिं स्फुटारविन्दाङ्कितपाणिपङ्कजम् । तमश्ववाराजवनाश्वयायिनं प्रकाशरूपा मनुजेशमन्वयुः ॥ ६५ ॥

निजाइति । अश्ववाराअश्वसादिनस्तंमनुजेशंराजानंनलमन्वयुरनुजग्मुः । किंभूताअश्ववारानिजाःस्वकीयाः । किंभूतंनलंस्फुटंप्रकटंलक्षणभूतानिरेखारूपाणियान्यरविन्दानितैरङ्कितंचिह्नितंपाणिपङ्कजंयस्यतंतथाजवनोवेगवान्योऽश्वस्तेनयातीत्येवंशीलम् । कंकमिवनिजाःसहजामयूखाःकिरणास्तीक्ष्णदीधितिंसूर्यमिवसूर्यविशेषणमेववास्फुटेति । कमलपाणिःसूर्यइत्यागमः । सूर्योपिजवनैरश्वैर्यातिमयूखाश्चयथासदासूर्यसहचारिणस्तथाऽश्ववाराअपितेनतेषांस्वरहस्यवेदित्वमुक्तम् । जवनस्तुजवाधिकइत्यमरः । प्रकाशोतिप्रसिद्धेस्यात्प्रकाशातपयोःस्फुटइतिविश्वः । मीनातिहिनस्तितमइतिमयूखइत्यौणादिकऊखप्रत्ययः । अश्वान्वृणतइत्यश्ववाराःकर्मण्यण् । जुचङ्क्रम्येतियुचिजवनः ॥६५॥

चलन्नलंकृत्य महारयं हयं स्ववाहवाहोचितवेषपेशलः । प्रमोदनिःस्यन्दतराक्षिपक्ष्मभिर्व्यलोकि लोकैर्नगरालयैर्नलः ॥ ६६ ॥

चलन्निति।नगरेआलयःस्थानंयेषांतैर्नगरवासिभिर्लोकैर्नलोव्यलोकिरवे

च्छयादृष्टः । किंभूतोसहारयमतिशयितवेगंहयमश्वंस्याधिष्ठानेनालंकृत्य चलन्मध्येमार्गगच्छन् । पुनःकिंभूतः रवस्ययाहोऽश्वस्तल्लक्षणोवाहोवा हनंतस्योचितोवेषोऽलङ्कारादिस्तेनपेशलोरमणीयः । यद्वावाहवाहस्या श्ववारस्य । यद्वावाहस्याश्वस्यवाहेतच्चारणउचितोवेषोनेपथ्यम् । किंभू तैर्लोकैः प्रमोदेनातिशयितानन्देनमिस्पन्दतरायक्षिपक्ष्माणिनेत्रपक्ष्मा णियेषांतैर्निर्निमेषंसादरावलोकमंकुर्वद्भिरित्यर्थः । सहारयमित्यनेनाहभि मोत्राभिर्धेनुःशतमानमूलद्वलसामर्थ्यंसूचितम् । वाहस्तुमीनमेदेवृषेह येइतिविश्वः । पेशलःसुन्दरोदक्षइतिच । निःस्पन्दत्यपिपाठः । नगाःसन्त्य स्मिन्निति नगरम् जपलुदीत्यत्रगगपांसुपाण्ड्वित्यादिवचनाद्वः ॥ ६६ ॥

क्षणादथैपक्षणदापतिप्रभःप्रभञ्जनाध्येयजवेनवा जिना । सहैवताभिर्जनदृष्टिवृष्टिभिर्बहिःपुरोऽभू त्पुरुहूतपौरुषः ॥ ६७ ॥

क्षणादिति । अथानन्तरंसएषनलोवाजिनाऽश्वेनताभिर्जनदृष्टिवृष्टिभिः सहैवक्षणाज्झिमिषमात्रेणपुरोनगराद्बहिरभूत् । किंभूतोनलः क्षणदारात्रि स्तस्याःपतिश्चन्द्रस्तद्वत्प्रभायस्य । तथापुरुहूतइन्द्रस्तद्वत्पौरुषंसामर्थ्यंयस्य कीदृशेनवाजिनाप्रभञ्जनेनवायुनाऽध्येयोऽध्येतव्योजवोवेगोयस्मात् । क्ष णादितिविभक्तिप्रतिरूपकमव्ययम् । अपपरिवहिरितिपञ्चमीसमासवि धानादेवज्ञापकाद्बहिर्योगेपञ्चमी ॥ ६७ ॥

ततःप्रतीच्छप्रहरेतिभाषिणी परस्परोल्लासितश ल्यपल्लवे । मृषामृधंसादिबलेकुतूहलान्नलस्यना सीरगतेवितेनतुः ॥ ६८ ॥

ततइति । ततःपुरनिर्गमानन्तरंनासीरंसेनामुखंगतेप्राप्तेनलस्यसादिबले ऽश्वारोहसैन्येकुतूहलात्कौतुकादतएवमृषाऽलीकंमृधंयुद्धंवितेनतुश्चक्रतुः । किंभूतेबलेहेशूरत्वंप्रतीच्छमदीयंशस्त्रंस्वाङ्गेगृहाणप्रहरमयिप्रहारंकुर्विति भाषिणीवदतीतथापरस्परोपर्युल्लासितावद्गूर्णानतुक्षिप्ताः शल्यानांशस्त्रा णांपल्लवाःप्रान्तायाभ्यामतएवमृषा । पल्लवःप्रान्तशाखीवस्त्रपल्लववन्नल स्यकौतूहलादितिवा । शल्यंतोमरशस्त्रम् । सेनामुखंतुनासीरमित्यमरः ।

परस्परेत्यत्रकस्कादित्वात्सः ॥ ६८ ॥

प्रयातुमस्माकमियं कियत्पदं धरा तदम्भोधिरपि स्थलायताम् । इतीववाहैर्निजवेगदर्पितैः पयोधिरोधक्षममुद्धतं रजः ॥ ६९ ॥

प्रयातुमिति । निजेनस्वकीयेनवेगेनप्रयोजकेनदर्पितैर्गर्वंप्रापितैर्वाहैरश्वैरितीवमनसिधृत्वाहेतोर्वारजउद्धतमुत्थापितम्।इतीतिकिम् । इयंधरापृथिव्यस्माकंधावतामश्वानांकियत्पदंस्यादपितुद्वित्राणिपदानिस्थास्यतीत्यर्थः । यस्मादतएवप्रयातुंप्रकर्षेणयातुंगन्तुमम्भोधिरपिसमुद्रोऽपिस्थलायतांस्थलमिवाचरतुभवतु । किंभूतंरजःपयोधेःसमुद्रस्यरोधःपूरणंतत्रक्षमंसमर्थम् । प्रयातुमित्यस्यस्थलायतामितिसंबन्धः । दर्पितैरितिण्यन्तान्निष्ठा । अन्यथाश्यन्विकरणस्यदृप्तइतिस्यात् । शब्विकरणस्यतुदर्पितइति ॥ ६९ ॥

हरेर्यदक्रामिपदैककेनखंपदैश्चतुर्भिःक्रमणेऽपितस्य नः । त्रपाहरीणामितिनम्रिताननैर्न्यवर्त्तितैरर्द्धनभःकृतक्रमैः ॥ ७० ॥

हरेरिति । इतिविचार्यहेतोर्वानम्रिताननैर्नम्रितंनम्रीकृतमाननंमुखंयैरर्द्धनपूर्वार्धेननभस्यन्तरिक्षेकृतःक्रमःपादविक्षेपोयैस्तैरश्वैर्न्यवर्तिनिवृत्तमर्धेनभसीतिवा । इतिकिंयत्खंनभोहरेर्विष्णोरेककेनासहायेनपदाचरणेनाक्रामिआक्रान्तंतस्यखस्यनभसश्चतुर्भिरेवपदैश्चरणैःक्रमणआक्रमणेनोऽस्माकंहरीणामश्वानामथवाविष्णूनांबहूनामस्माकंत्रपालज्जाभविष्यतीति यस्मादसज्जातीयेनएकेनहरिणैकेनैवपादेनयदाक्रान्तंनभस्तस्यबहुभिरस्माभिर्बहुभिःपदैराक्रमणेऽस्माकंमहतीलज्जाकथंनस्यादितिहरिशब्दकृतेनलुप्तोत्प्रेक्षा । सलज्जश्चनम्रमुखोभवति । अर्धनभःकृतक्रमैरित्यनेनगतेरुत्तमत्वंसूचितंतेनसादिनामानन्दोऽरीणांभीतिश्च । नोदात्तोपदेशस्यमान्तस्यानाचमेरिति वृद्धिनिषेधादक्रामीतिचिन्त्यम् । अक्रामीतिनिवृत्तप्रेषणाद्धातोःप्रकृतेर्थेणिचिसनाद्यन्ताइतिधातुसंज्ञायांलुङ्ततश्चिण्भावकर्मणोरितिचिणादेशः । णेरनिटीतिणिलोप । चिणोलुगितितस्यलु

क् । णिलोपस्यस्थानिवत्त्वेनमोदात्तोपदेशस्येतिवृद्धिनिषेधाभावः । सकृद्गमनं भवतिद्विर्बद्धं सुबद्धं भवतीति तदोदावचनज्ञापितयापरिभाषयावृद्धिनिषेधस्यानित्यत्वं कथंचित्परिहरणीयम् । यदातु तदोदाचेत्यत्रस्वरार्थं देतिप्रत्ययश्चेतिपक्षस्तदैतस्याःपरिभाषायानिर्मूलत्वाच्चिन्त्यमेव । यद्वाप्राग्दिशइतिथसोविभक्तित्वान्नविभक्ताविस्यनेनैवमकारस्येत्संज्ञानिषेधेसिद्धे इदमस्थमुरित्युकारोच्चारणंव्यर्थंसदेतस्याःपरिभाषायामूलमितिज्ञेयंगत्यन्तरंवागवेषणीयम् । पदेतिपद्दन्नितिपदादेशः । एककेनेत्येकादाकिनिच्चेतिचकारात्कन् ॥ ७० ॥

चमूचरास्तस्यनृपस्यसादिनो जिनोक्तिषुश्राद्धतयेवसैन्धवाः । विहारदेशंतमवाप्यमण्डलीमकारयन्भूरितुरङ्गमानपि ॥ ७१ ॥

चमूचराइति । तस्यनृपस्यचमूचराःसेनाचराःसादिनोश्ववारास्तंपूर्वोक्तंविहारदेशंबाह्यलीलाप्रदेशमवाप्यप्राप्यभूरितुरङ्गमानपिबहूनश्वानपिमण्डलींमण्डलाकारेणगतिविशेषमकारयन्नपिशब्दात्तन्मण्डलीकरणात्स्वयमपिकृतवन्तइत्यर्थः । केइवजिनोक्तिषुबौद्धवचनेषुश्राद्धतयाऽऽस्तिकतयासैन्धवाइव सिन्धुदेशोद्भवाजिनाइवविहारदेशंसुगतालयंप्राप्यमण्डलाकारेणावतिष्ठन्तेतद्वदित्यर्थः । तेषामयंसंप्रदायस्तण्डुलादिसम्धान्यमयींमण्डलोकारयन्तीतितत्संप्रदायविदः । चमूचराइतिचरेष्टः । श्राद्धइतिमत्वर्थेप्रज्ञेतिणः । मण्डलीमितिगौरादित्वाद्ङीष् । तुरङ्गानितिह्रक्रोरितिकर्मत्वम् ॥ ७१ ॥

द्विषद्भिरेवास्यविलङ्घिता दिशोयशोभिरेवाब्धिरकारिगोष्पदम् । इतीयधारामवधीर्यमण्डलीक्रियाश्रियाऽमण्डितुरङ्गमैःस्थली ॥ ७२ ॥

द्विषद्भिरिति । तुरङ्गैरश्वैरितीवहेतोर्विचार्यवाधारामास्कन्दितादिपञ्चप्रकारांगतिमवधीर्यत्यक्त्वाऽवज्ञायमण्डलीक्रियाश्रियामण्डलीकरणजनितशोभयास्थलीअकृत्रिमाभूमिरमण्डिअभूषि । अश्वधाराधारानिःप्रचममन्नानसयन्तिपश्चाद्भूमिगत्येतितेषांजातिः । इतिकिमस्मद्द्विषद्भिरे

वदिशोभयेनविलङ्घिताआक्रान्ताः । [अस्ययशोभिरेवकीर्तिभिरेवाब्धिःस मुद्रोगोष्पदंगोखुरप्रमाणोऽनायासेनोल्लङ्घ्यएवंविधोकारिकृतः । अनु गत्यासाभिर्दिग्न्तःसमुद्रश्चलङ्घनीयस्तयोर्लङ्घनमन्यैरेवकृतमितितत्रैवत्र सिंघकुरिति । आस्कन्दितंधौरितंरेचितंवल्गितंप्लुतम् । गतयोमूःपञ्च धाराइत्यमरः । गोष्पदमितिगोष्पदंसेवितासेवितप्रमाणेष्विति सुट्षत्वे । धारामितिधार्यतेगतौस्थाप्यतेऽनयेतिधारा भिदादित्वादङ् । जाताये चावचनम् । स्थलीतिअकृत्रिमत्वेजानपदेतिङीष् । अवधीर्येतिअवधिरेत्यव ज्ञायामितिधातोरूपंनातस्यस्यबादेशासंभवात् किंतुअवाधिपूर्वस्यईरप्रेरणे इत्यस्य । अवधीत्यत्रकण्वादित्वात्परकूपंततश्चावधीर्येतिसिद्धम् ॥७२॥

अचीकरच्चारुहयेनयाभ्रमीर्निजातपत्रस्यतलस्थ
लेनलः । मरुत्किमद्यापिनतासुशिक्षतेवितत्यवा
त्यामयचक्रचङ्क्रमान् ॥ ७३ ॥

अचीकरदिति । नलोनिजातपत्रस्यस्वकीयच्छत्रस्यतलस्थलेऽधोभागे हयेनाश्वेनचारुसम्यक्याभ्रमीर्भ्रमणान्यचीकरत्कारयामास । तासुवि षयेमरुद्वायुरद्यापिवात्यामयावातसमूहरूपाश्चक्राकाराश्चङ्क्रमाभ्रमणा नितान्वितत्यकिंनशिक्षतेऽभ्यसितिविषयेज्ञानेशक्तोभवितुंनेच्छतिकिमपितुश क्तोभवितुमिच्छत्येवपरमद्यापिशक्तोनाभूदित्यर्थः । वात्यावर्तंकुर्वन्वायु रपितद्भ्रमणज्ञानेशक्तोभवितुमिच्छतीतिवेत्युत्प्रेक्षा । एतेनाश्वस्यचलनक्रि यादार्ढ्यंसत्वचाबंधोक्तं सच्चरित्हितोनग्राह्यपति । तल्लक्षणगुणौ श्लाघ्यःकिं सत्त्वरहितोहयः । पञ्चेन्द्रियसमेतोपियथाज्ञायोविनात्मनाइतिसारसि न्धौ । हयेनेतिइत्थंभूतलक्षणेत्वात्कर्मत्वाभावः । अभ्रमीरितिकृष्यादि त्वादिक् । शिक्षतइतिसन्नन्ताच्छकेःशिक्षेर्जिज्ञासायामितियक्ष्यात्तङ् । चङ्क्रमानितियङ्डन्तात्पचाद्यच्यतोलोपेयस्यहलइतियलोपः । वितत्यशिक्ष तइतिसमानकालेक्त्वा । पाशादिभ्यश्चात्या । ततस्तद्रूप्येमयट् । ताःसु शिक्षितइतिपाठेताभ्रमीःशोभनंकिंनशिक्षतेअभ्यासते ॥ ७३ ॥

विवेशगत्वासविलासकाननंततःक्षणात्क्षोणिपति
र्धृतीच्छया । प्रवालरागच्छुरितंसुपुष्पयाहरिर्ध

नच्छायमिवार्णसांनिधिम् ॥ ७१ ॥

विवेशेति । ततोनन्तरंसद्योणिपतिर्मलःप्रवालरागेणनवपल्लवलौहित्ये नच्छुरितंविचित्रघनच्छायंनिबिडच्छायंविलासकाननंक्रीडावनंगत्वाप्राप्य तयाच्छीघ्रंघृतीच्छयाप्रीत्यभिलाषेणात्रजनमसन्तापेनिवर्तयिष्यतइत्यभि लाषेणात्यन्तंव्यासक्ताङ्गैर्यभवेदिलिवासनयावाविवेशकःकयाकिमिवविष्णुः सुषुप्सयास्वप्तुमिच्छयाप्रवालरागेणविद्रुमलौहित्येनच्छुरितंश्यामत्वाद्घ नस्यमेघस्यच्छायेवच्छायायस्यतमेवंभूतमर्णसांनिधिंसमुद्रमिवाथचपल्लव ताचजलस्थानभूतंनिबिडच्छायंवनंसुषुप्सयाहरिःसिंहोयथाविशतितथे त्यर्थः । क्षोणिपतिरितिकृपापोरितिङ्ःः । ङ्क्षान्तएववा । दीर्घान्तस्तु कृदिकारादक्तिन इतिङीषन्तः ॥ ७४ ॥

वनान्तपर्यन्तमुपेत्य सस्पृहं क्रमेण तस्मिन्नवतीर्ण दृक्पथे । न्यवर्तिदृष्टिप्रकरैःपुरौकसामनुव्रजेद्वन्धुसमाजबन्धुभिः ॥ ७५ ॥

वनेति । पुरौकसांनिति पूःपालमदृत्यस्मान्मूलविभुजादेराकृतिगणत्वा त्कप्रत्ययेसदोष्ठ्यपूर्वस्येत्युत्वेपुरइत्यदन्तेनपुरेपुरंवाओकोयेषामितिसम नीविशेषणेबहुव्रीहावित्यत्रसप्तमीग्रहणात्तत्पंकालुकसप्तमीवाबहुव्री हौसुबन्तुकिमुक्तिरेषीतिवृद्धौसिद्धमिष्टंरूपंपुरौकसांनगरवासिनांदृष्टिप्रकरै नेत्रसमूहैर्नेत्रावलोकनायैसस्पृहंसाभिलाषंवनान्तस्यवनस्वरूपस्यपर्यन्तं मर्यादामुपेत्यगत्वान्यवर्तिनिवृत्तम् । कस्मिन्सति तस्मिन्नलेक्रमेणावती र्णेदृक्पथेदृग्मात्रागोचरेसति । किंभूतैदृष्टिप्रकरैरनुव्रजन्ननुगच्छन्यो बन्धुसमाजइष्टसमूहस्तस्यबन्धुभिःसदृशैर्वनान्तःपर्यन्तोऽवधिर्येषांभव तितयेतिक्रियाविशेषणंवा । बन्धुभिरपियनान्तंसुहृदःसमीपंकीडावनस मीपंवाभिलाषंगत्वातत्रैवपथिस्थित्वापान्थकेऽदृष्टेसतिनिवर्त्यन्ते।जीव नंभुवनंवनमित्यमरः । दृक्पथइतिऋक्पूरितिसमासान्तः ॥ ७५ ॥

ततःप्रसूनेचफलेचमञ्जुलेससंमुखस्थाङ्गुलिनाजनाधिपः । निवेद्यमानंवनपालपाणिनाव्यलोकयत्काननकामनीयकम् ॥ ७६ ॥

ततइति । ततोवनप्रवेशानन्तरंसजनाधिपोनलःकाननस्यक्रीडावनस्य काननीयकंरामणीयकंव्यलोकयनपश्यतिस्म किंभूतंवनपालस्योद्यानरक्षकस्यपाणिनाहस्तेननिवेद्यमानंज्ञाप्यमानम् । किंभूतेनमञ्जुलेरमणीयेप्रसूनेपुष्पेफलेचजातावेकवचनम्।संमुखस्याऽभिमुखस्याऽङ्गुलिर्यस्य।काननीयकमितिभावेयोपधादितिवुञ्गुणवाचित्वात्पूरणगुणेतिषष्ठ्याःसमासनिषेधेपिसंज्ञाप्रमाणत्वादितिज्ञापकबलात्समासः ॥ ७६ ॥

फलानिपुष्पाणिचपल्लवेकरेवयोतिपातोद्गतवातवेपिते । स्थितैःसमादायमहर्षिवार्द्धकाद्वनेतदातिथ्यमशिक्षिशाखिभिः ॥ ७७ ॥

फलानीति ।वनेविद्यमानैःशाखिभिर्वृक्षैर्महर्षिवार्द्धकान्महर्षिसमूहात्तदातिथ्यंतस्यनलस्यपूजाऽशिक्षिशिक्षितेव । किंभूतैःशाखिभिर्वयोतिपातेनपक्षिपतनेनउद्गतचलितोयोवातस्तेनवेपितेपल्लवेशाखाग्रलक्षणएवकरेहस्तेपुष्पाणिफलानिचसमादायगृहीत्वास्थितैःवृद्धमहर्षिसंघोपिवृद्धत्वादेवचलेहस्तेफलानिपुष्पाणिचगृहीत्वाराजपूजार्थंयथातिष्ठतितथावृक्षाअपिउद्यानेमहर्षयस्तिष्ठन्तीतिसूचितंविजनेविद्याभ्यासश्चफलपुष्पयुक्तावृक्षास्तिष्ठन्तीतिभावः । वृद्धानांसमूहोवार्द्धकंगोत्रादिसूत्रेवृद्धाच्चेतिवक्तव्याद्वुञ्महर्षीणांवार्द्धकमितिषष्ठीसमासः । सामर्थ्याद्वृद्धत्वस्यगतस्यापिवृद्धशब्दस्ययथाकथंचिन्महर्षिशब्देनान्वयः । महर्षिपक्षेवयसस्तारुण्यस्यवार्द्धकादित्याख्यातोपयोगइत्यपादानत्वम् । आतिथ्यंतादर्थ्येऽतिथेर्ञ्यइतिञ्यः । शाखिनइतिव्रीह्यादित्वादिनिः ॥ ७७ ॥

विनिद्रपत्त्रालिगतालिकैतवान्मृगाङ्कचूडामणिवर्जनार्जितम् । दधानमाशासुचरिष्णुदुर्यशःसकौतुकीतत्रददर्शकेतकम् ॥ ७८ ॥

राजानंदृष्ट्वासात्त्विकभावोत्पत्तेःकण्टकितत्वात्प्रथमंकेतकंवर्णयति । विनिद्रेति । सनलस्तत्रवनेकौतुकीअपूर्वपुष्पादिदर्शनलोलोविरहीवा सन् केतकंकेतकीपुष्पंददर्शकिंभूतंकेतकंविनिद्रा विकसितापत्त्रालिःपत्रपङ्क्तिस्तत्रगतास्थितावागताःयेसेऽलयोभ्रमरास्तेषांकैतवान्मिषान्मृगाङ्कचन्द्रचू

हासगौयस्यसशिवस्तेनवर्जनंपुरागप्रसिद्धःपरित्यागस्तेनार्जितमुपार्जित माशासुदिक्षुचरिष्णुप्रसरणशीलंदुर्यशोऽपकीर्तिस्त्वांदधानंत्वमरानसन्नि किंतुमहादेवकृतपरित्यागजन्यमयशइतिसहृतापरित्यक्तोऽयशोभाग्भव ति। चरिष्णुअलङ्कृञ्इत्यादिनाइष्णुच्। कौतुकीअतद्गुणः। केतक्याः पुष्पंकेतकंविकारावयवप्रत्ययस्यपुष्पमूलेषुबहुलमितिवचनाल्लुक्। लुक्त द्धितेतिस्त्रीप्रत्ययलोपः॥ ७८॥

वियोगभाजांहृदिकण्टकैःकटुर्निधीयसेकर्णिशरः स्मरेणयत्। ततोदुराकर्षतयातदन्तकृद्विगीयसे मन्मथदेहदाहिना॥ ७९॥

वियोगेति। सेनवलेनेतिकुधाक्रोधेनकेतकमाक्रुश्यताऽनिन्द्यतेतितृ तीयश्लोकेनान्वयः। इतिकिंस्मरेणकामेनवियोगभाजांवियोगिनांस्त्रीपुं सानांहृदिवक्षसिकण्टकैःकटुःक्रूरःकर्णिशरःकर्णयुक्तोबाणस्त्वंयद्यस्मान् निधीयसेनिक्षिप्यसेततस्तस्मात्कारणात्कर्णिशरत्वाद्धाहृदयाद्दुराकर्षत योद्धर्तुमशक्यतयातदन्तकृद्वियोगिनांप्राणहारीत्वंसन्मथदेहदाहिनास्मर हरेणमहादेवेनविगीयसेनिन्द्यसेयेनवियोगिनोहताअसदादयःसदग्धस्य वतत्प्रेष्यस्त्वंकेतकमितिनिन्द्यसे। सुमोत्प्रेक्षा॥ ७९॥

त्वदग्रसूच्यासचिवेनकामिनोर्मनोभवःसीव्यतिदु र्यशःपटौ। स्फुटच्चपत्रैःकरपत्रमूर्त्तिभिर्वियोगि हृद्दारुणिदारुणायते॥ ८०॥

त्वदग्रेति। मनोभवःकामस्तवाग्रमेवसूक्ष्मत्वात्तीक्ष्णत्वाच्चसूचीतद्रू पेणसचिवेनोपकारकेणसहायेनकृत्वाकामिनोःस्त्रीपुंसयोःपरस्परधैर्यभङ्गो दुर्यशोलक्षणौपटौसीव्यतियोजयतितत्प्रथमकलिकायाअतिसुरभितयोद्दी पनभावहेतुभूतयाकामिनौउचितानुचितसंबन्धमपिअविचार्यमिथोरिरंसू प्रवर्तेतेइतिभावः॥ स्फुटमुत्प्रेक्षते। सकामोवियोगिनांहृदेवदारुकाष्ठं तस्मिन्करपत्रवत्क्रकचवन्मूर्तिःस्वरूपंयेषांतैस्तवपत्रैःकृत्वादारुणायतेभी षणवदाचरतिकेतकाग्रदर्शनाद्वियोगिनोःस्त्रीपुंसयोर्धैर्यभङ्गःपत्रदर्शनाच्चहृ दयंविदीर्णंभवतीतिभावः। दारुणायसेइतिपाठेत्वमितिशातव्यम्। सूची

तिगौरादिपाठाद्ङीष् । कामिनोर्वियोगेत्यत्रच पुमान्स्त्रियेत्येकशेषः॥८०॥

धनुर्मधुस्विन्नकरोऽपि भीमजापरंपरागैस्तव धूलिहस्तयन् । प्रसूनधन्वा शरसात्करोति मामिति क्रुधा क्रुश्यत तेन केतकम् ॥ ८१ ॥ विशेषकम् ॥

धनुरिति । प्रसूनधन्वाकामस्तवपरागैर्धूलिभिर्धूलिहस्तयन्धूलियुक्तं हस्तंकुर्वन्सन्भीमजापरंभैम्यनुरक्तंमांशरसाद्बाणाधीनंबाणलक्ष्यंकरोति। किंभूतःकामोधनुःपुष्पंतस्यमधुनारसेनस्विन्नआर्द्रः करोयस्य इतिकेतकनि न्द्यमेतत्वधूलिर्यदिनस्यात्- तदाकामःस्विन्नकरत्वाच्च्युतसायकःस्यादतो यन्नपराधस्तवैव स्विन्नकरोधनुर्धरोधूलियुक्तंहस्तंकरोतीतिजातिः । धूलिहस्तयन्निति धूलियुक्तंहस्तंकरोतीतिविग्रहयन्ताच्छतृ । प्रसूनधन्वेतिधनुष श्चेत्यनङ् । शरसादितितदधीनेतिसातिः ॥ ८१ ॥

विदर्भसुभ्रूस्तनतुङ्गताप्तये घटानिवापश्यदलं तपस्यतः । फलानि धूमस्य धयानधोमुखान्स दाडिमे दोहदधूपिनि द्रुमे ॥ ८२ ॥

विदर्भेति । सनलोदाडिमेद्रुमेदाडिमसंज्ञकेवृक्षेफलानिअपश्यत् । किं भूतेद्रुमेदोहदधूपिनिअतिशयितफलादिसमृद्धिर्येनभवतितद्दोहदंदाडिमी वृक्षस्यदोहदंयोधूपोदोहदधूपःसोऽस्यास्तीतितस्मिन् । कानिवघटानिव । किंभूतान् घटान्विदर्भसुभ्रूर्भैमीतस्याःस्तनयोस्तुङ्गताउच्चैस्त्वंतस्याआप्त येऽलमतिशयेनतपस्यतंतपःकुर्वतोऽतएवधूमस्यधयान्धायकान्अतए वाधोमुखान्अन्योप्युच्चपदप्राप्तयेऽधोमुखोधूमपानादिनातपश्चरति । एतानिदाडिमीफलानिनकिंतुघटाएवैतेतानिवेत्युत्प्रेक्षा । तपस्यतःकर्मणो रोमन्थेत्यादिनाक्यङ् । तपसःपरस्मैपदञ्चेतिवार्तिकाच्छतृ । धयान्पा घ्रादिसूत्रेणधेटःशस्तत्रोपसर्गानुवृत्तिर्नावश्यकीतिवृत्तावुक्तम् । दोहदधूपिनीतिकर्मधारयादिनिःसमर्थनीयः ॥ ८२ ॥

वियोगिनीमैक्षत दाडिमीमसौ प्रियस्मृतेः स्पष्टमुदीतकण्टकाम् । फलस्तनस्थानविदीर्णरागिहृद्विशच्छुकास्यस्मरकिंशुकाशुगाम् ॥ ८३ ॥

वियोगिनीमिति ॥ असौनलोदाडिमीमैक्षतापश्यत् । किंभूतांवियोगिनींविभिःपक्षिभिःशुकादिभिर्योगोस्याअस्तीति । अथचवियोगिनींवि रहिणींनायिकामिवेतिलुप्तोत्प्रेक्षा । प्रियस्मृतेदोहदादिस्मरणाल्लक्षणया प्राप्तेर्हेतोःस्पष्टंप्रकटमुदीतकण्टकांप्रियस्मरणाद्रोमाञ्चिताङ्गीं नायिकापि नायकस्मरणाद्रोमाञ्चिताङ्गीभवति । तथाफलानिस्तनाइवतेषांस्थानेमध्येविदीर्णंस्फुटितंरागिपक्वत्वाल्लोहितंयुक्तंहृदयान्तरप्रदेशस्तस्मिन्वि शन्तियानिशुकस्यास्यानिमुखानितान्येवस्मरस्यकिंशुकानिपलाशपुष्पाण्येवाशुगाबाणायस्यांनायिकापक्षेदाडिमीफलतुल्यस्तनमध्येविरहित्वात्स्फुटितमनुरागयुक्तंयद्धृदयंतस्मिन्विशन्तः शुकास्यतुल्यामदनकिंशुकाआशुगाबाणायस्यादाडिमीफलंस्वयमेवविदीर्यते । अथवाफलस्यपरमात्मसाक्षात्कारलक्षणस्य स्तनंकथकंबोधकमितियावदेवंभूतंयस्यानंतुरीयावस्थालक्षणंतस्माद्विदीर्णंच्युतंतुरीयावस्थामप्राप्तमेवंभूतंपूर्वेविषयेनुरागि सानुरागंयद्धृदयंतद्विशन्तः शुकालक्षणयातदुपदेशायोगाभ्यासेनहृदयसंलग्नास्तैरास्याःतेभ्याःस्मरकिंशुकाशुगायस्यास्तांविषयेभ्यःपरावृत्तचित्तामनन्तरंप्रियस्यपरमास्पदस्यसच्चिदानन्दघनस्यपरमात्मस्वरूपस्यस्मृतेः सन्निहितानन्तरप्राप्तस्यानुध्यानाच्चीप्रतत्प्राप्तिसंभावनासंजातहर्षेणोद्भूतरोमाञ्चांविविधायोगावियोगास्तद्वतीमष्टाङ्गयोगयुक्तांविशिष्टांयोगिनींवा तद्वदेवलसामर्थ्योदिवशब्दलाभः । वियोगिनीमितिसंपृचेत्यादिनाविपूर्वोद्युजेःकर्मकर्तरिघिनुणिङीप् । दाडिमीमितिजातिवाचित्वान्ङीप् । उत्पूर्वोदीङःकर्तरिनिष्ठायांउदीतेति । स्तनेतिपचाद्यच् । आस्येतिअस्यतेर्बहुलत्वात्कर्मणिण्यत् ॥ ८३ ॥

स्मरार्द्धचन्द्रेषुनिभे कृशीयसांस्फुटंपलाशेऽध्वजुषांपलाशनात् । सवृन्तमालोकतखण्डमन्वितंवियोगिहृत्खण्डिनिकालखण्डजम् ॥ ८४ ॥

स्मरार्द्धेति । सनलःपलाशेपलाशपुष्पेवृन्तंप्रसववन्धनंलोकतअद्राक्षीत् । किंभूतेपलाशेस्मरार्द्धचन्द्राकारोयइषुर्बाणस्तन्निभेतत्तुल्येतद्वाजेवातथावियोगिहृत्खण्डिनिविरहिहृदयविदारकेऽतएवकृशीयसांकृशतराणामध्वजुषांपथिकानांपलाशनात्पलंमांसंतस्याशनाद्भक्षणात् स्फुटंप्रकट

सेवपलाशेपलंसांसमश्नातीत्यन्वर्थसंज्ञकेपलाशशब्दस्याऽऽवृत्यायोजनीयम् । किमिवकालखण्डजंकालखण्डाज्जातमन्वितंवियोगिहृदि संबद्धंखण्डमिवेति लुप्तोत्प्रेक्षा । दक्षिणपार्श्वस्थंकृष्णंमांसंकालखण्डम् । कणादीयमुनिरूतइतिरः ॥ ८४ ॥

नवाललागन्धवहेनचुम्बिता करम्बिताङ्गीमकरन्दशीकरैः । दृशानृपेणस्मितशोभिकुड्मलादरादराभ्यांदरकम्पिनीपपे ॥ ८५ ॥

नवेति । दरादराभ्यामुपलक्षितेननृपेणनलेनलतादृशानेत्रेणकत्वापपे सादरंददृशेपुष्पितलतादिदर्शनंविरहिणामसह्यमितिदरोभयम् । रमणीयदर्शनाच्चादरस्तिर्यगादिसंभोगवृत्तान्तावलोकनंविरहिणांकौतूहलमाचरतीतिनृपादरः । किंभूतालातानवानूतनपल्लवा,तथागन्धवहेनकामितुल्येन वायुनाचुम्बितास्पृष्टाऽतएवमकरन्दशीकरैः पुष्परसकणैःकरम्बितंमिश्रितमङ्गंयस्याःसातथास्मितेनविकसनेनशोभीनिकुड्मलानिमुकुलानियस्यास्तथावायुसङ्गमाद्दरमीषत्कम्पतएवंशीलानविद्यतेबालताबालत्वंयस्यास्तरुणीत्यर्थः । सायथाललासदृशीतन्वीकस्तूर्यादिगन्धयुक्तेननायकेनचुम्बितारोमाञ्चयुक्ताङ्गीईषद्धास्येनशोभितकुड्मलाकारदन्ताईषत्सात्त्विककम्पयुक्ताकेनचित्कौतुकिनापरस्त्रीत्वाद्भयंसौन्दर्यादादरस्ताभ्यांयुक्तेनदृश्यते । यद्वा । वहलीतिवहोर्बाललागन्धस्यशैशवलेशस्यवहोनैवंभूतोनबाललागन्धवहस्तस्मात्तेनचुम्बिताकापिनवानवोढाललासदृशी तन्वीनवोढात्वात्सकम्पा॥ नञ्जारस्यनिषेधार्थस्यसमस्तत्वान्नलोपाभावः । संयोगोपधत्वेपिशङ्गात्रतपठेन्यस्त्विष्यतइतिङीष् ॥ ८५ ॥

विचिन्वतीः पान्थपतङ्गहिंसनैरपुण्यकर्माण्यलिकज्जलच्छलात् । व्यलोकयच्चम्पककोरकावलीः सशम्बरारेर्बलिदीपिकाइव ॥ ८६ ॥

विचिन्वतीरिति । सनलश्चम्पककोरकावलीश्चम्पककुड्मलपङ्क्तीर्व्यलोकयदऽलन्ददर्श । काइवशम्बरारेःकामस्यबलिदीपिकाबल्यर्थंदीपिकाइव । किंभूताश्चम्पककोरकावलीःपान्थाएवपतङ्गाःशलभास्तेषांहिंसनैर्मा

रणौरलिकज्जलच्छलाद्ऽलयोऽभ्रमराएवकज्जलंतस्यच्छलाद्व्याजाद्ऽपुष्प कर्णोणिविचिन्वतीऽर्जयन्तीःकामोद्दीपकानिचम्पकानिदृष्ट्वाविरहिणोऽम्रि यन्ते । पन्थोणमित्यमितिणोपान्थः । चम्पकोपरिभ्रमरोनतिष्ठतीतिकश्चि त् । तत्रतिष्ठतिपरंतुम्रियतइतिप्रामाणिकाः ॥ ८६ ॥

अमन्यतासौकुसुमेषुगर्भगंपरागमन्धंकरणंवियो गिनाम् । स्मरेणमुक्तेषुपुरापुरारयेतदङ्गभस्मेवश रेषुसङ्गतम् ॥ ८७ ॥

अमन्यतेति । असौनलःकुसुमेषुगर्भगमन्तरप्रदेशगतंपरागंदुरापूर्वंस्मरे णपुरारयेशिवायमुक्तेषुपुष्परूपेषुशरेषुसङ्गतंलग्नंतस्यशिवस्याऽङ्गलग्नंभ स्मेवाऽमन्यताऽतर्कयत् । किंभूतंवियोगिनामन्धंकरणंनेत्रोपघातकंभस्म नोऽन्धत्वंभवति । अन्धंकरणमितिआढ्यसुभगस्थूलेतिख्युन् । अरुर्द्विषेति मुम् ॥ ८७ ॥

पिकाद्वनेशृण्वतिभृङ्गहुंकृतैर्दशामुदञ्चत्करुणेवि योगिनाम् । अनास्थयासूनकरप्रसारिणींददर्श दूनःस्थलपद्मिनींनलः ॥ ८८ ॥

पिकादिति । दूनःसंतप्तोनलःस्थलपद्मिनींददर्श । कस्मिन्सतिवनेपि कात्कोकिलाद्वियोगिनांदशामवस्थांभृङ्गाणांभ्रमराणांहुंकृतैःहुंकारैःकृ त्वाशृण्वतिसतिकिंभूतेवनेउदञ्चन्तोविकासंप्राप्नुवन्तः करुणास्तरुभेदाय स्मिन् । किंभूतामनास्थयानलगतयाऽभिनयवशात्सूनानिपुष्पाणिकम लानितल्लक्षणकरान्हस्तान् प्रसारयतिएवंशीलातामऽनास्थयाऽनादरेण ऽपश्यदितिवा । अन्यस्मिन्नपिदयावतिकस्यचित्कष्टांदशांशृण्वतिअनि च्छयाकिमनेनेतिकरंप्रसार्यकश्चन्वारयति । यद्वाऽनास्थयासंसारानित्य तयाऽभिनयवशात्करंप्रसारयतीति । वनेपिकाःकूजन्ति,भृङ्गाहुङ्कारंकुर्व न्ति,करुणपुष्पाणिविकसन्ति, कमलानिचोन्मीलन्ति, एतद्दृष्ट्वाविरहिणो व्यथन्तइतिभावः । किमिदंवतश्रणोतिदुःखवार्तामितीवपुष्पविकासव्याजे नकरंप्रसारयन्तीमितिवार्थः । आस्येत्यातश्चोपसर्गइत्यङ् । दूनइतिदीर्घा न्ताद्दूङोल्वादित्वान्निष्ठानत्वम् । करुणोवृक्षःपक्षेकरुणादया ॥ ८८ ॥

रसालशालः समदृश्यतामुनास्फुरद्‌द्विरेफारवरोषहुंकृतिः। समीरलोलैर्मुकुलैर्वियोगिने जनाय दित्सन्निव तर्जनाभियम् ॥ ८९ ॥

रसालेति। अमुनानलेनरसाल आम्रलक्षणःशालोवृक्षःसमदृश्यतदृष्टः किंभूतः स्फुरन्तोभ्रमन्तोद्विरेफाभ्रमरास्तेषामारवएवरोषहुंकारोयस्य। किंकुर्वन्निवसमीरणेनवायुनालोलैर्मुकुलैः कृत्वावियोगिनेविरहिणेजनाय तर्जनायाभर्त्सनायाभीर्भयन्तांदित्सन्निवदातुमिच्छन्निव। अन्योपिहुंकृत्यचलेनाङ्गुल्यादिनातर्जयतिरसालशब्दःसत्पुंस्येववर्त्तते। दित्सन्निति ददातेः सनिद्विर्वचनंसनिमीमेतीश्अत्रलोपोभ्यासस्येतिअभ्यासलोपःसः स्याधेधातुकइतिलः। भयभीतेत्यादिवक्तव्यात्तर्जनाभियमितिसमासः॥ ८९॥

दिने दिने त्वं तनुरेधि रेऽधिकं पुनः पुनर्मूर्छ च ताप मृच्छ च। इतीव पान्थान् शपतः पिकान् द्विजान् स खेदमैक्षिष्ट सलोहितेक्षणान् ॥ ९० ॥

दिनेदिनइति। सनलःपिकान्द्विजान्पक्षिणोब्राह्मणांश्चसखेदंसोद्वेगं ऐक्षिष्टददर्श। किंभूतानिवइतिपूर्वोक्तप्रकारेणपान्थान्जनान्शपतइव। पान्थेभ्यःशापंददतइवयतोलोहितेक्षणान्मत्तत्वाद्रक्तनेत्रान्। इतिकिंरे पान्थत्वंदिनेदिनेऽधिकंभृशन्तनुःकृशएधिभवपुनस्त्वंमूर्छमूर्छांप्राप्नुहितथा त्वंतापंसर्वाङ्गतापमृच्छलभस्वच। पिकःस्वभावाद्रक्तलोचनःपिकशब्दंश्रुत्वापान्थानांकार्श्यंमूर्छातापश्चभवति। ऋच्छेत्यत्रैपाघ्रादिनाऋच्छादेशेऽतोहेर्लुगृच्छेर्वा। पान्थान्नित्यंपन्थानंगच्छतीत्यर्थेपन्थोणनित्यमितिणःपन्थादेशश्च। शीघ्रस्यमानत्वाभावात्पान्थानितिर्द्वितीया। उपलक्षाभावाच्छपतइतितद्भावः॥ ९०॥

अलिस्रजा कुड्मलमुच्चशेखरं निपीय चाम्पेयमधीरयाधिया। स धूमकेतुं विपदे वियोगिनामुदीतमातङ्कितवान शङ्कत ॥ ९१ ॥

अलीति। सनलश्चाम्पेयंकुड्मलंमुकुलमधीरयाधियावुद्ध्यानिपीयसादरमालोक्याऽतङ्कितवाञ्चकितःसन्वियोगिनांविपदेविनाशायोदीतम्

दृष्टंप्राप्तंतमेवधूमकेतुमुत्पातविशेषमशङ्कततर्कितवान् धूमकेतुर्विनाशसूचकः। किंभूतंकुड्मलमलिस्रजाभ्रमरपङ्क्त्योपशेखरमुपाग्रम्। चाम्पेयश्चम्पकोहेमपुष्पकइत्यमरः। ततोविकारप्रत्ययस्यपुष्पेतिलुक्। कुड्मलमितिकलरतपश्चेत्यतःकलप्रत्ययमनुवर्त्यकुटकशिकौतिभ्यःप्रत्ययस्यमुडितिकलस्तस्यमुडागमेकुटकौटिल्यइत्यस्यधातोःकुट्मलइमध्योयम्। कुडबाल्यइत्यस्यकुड्मलोडमध्योपि। तथाचमेदिनीकोशः। कुड्मलेमुकुलेपुंसिनद्वयोर्नरकान्तरइति॥ ९१॥

गलत्परागंभ्रमिभङ्गिभिःपतत्प्रसक्तभृङ्गावलिनागकेसरम्। समारनाराचनिघर्षणस्खलज्ज्वलत्कणंशाणमिवव्यलोकयत्॥ १२॥

गलदिति। सनलोनागकेसरंनागकेसरकुसुमशाणमिवनिकषमिवकषणपाषाणमिवव्यलोकयत्कीदृशंगलत्परागंस्रवत्परागंतथाभ्रमिभङ्गिभिर्भ्रमणरचनाविशेषैःपतन्तीवृक्षादागच्छन्तीप्रसक्तालग्नाभृङ्गावलिर्भ्रमरपङ्क्तिर्यस्मिन्। किंभूतंशाणंमारस्यकामस्यनाराचाबाणशल्यानितेषांनिघर्षणात्स्खलन्तोभ्रश्यन्तोज्वलन्तोदेदीप्यमानाःकणाःस्फुलिङ्गायस्मात्। परागोज्वलत्पतत्कणस्थानेभृङ्गावलिर्नाराचस्थानेशाणस्यापिभ्रमणंभवति। लोहसंघर्षोज्ज्वलन्तःकणाश्चतस्मादुच्छलन्ती। शाणस्तुनिकषःकषइत्यमरः॥ ९२॥

तदङ्गमुद्दिश्यसुगन्धिपातुकाःशिलीमुखालीःकुसुमाद्गुणस्पृशः। स्वचापदुर्निर्गतमार्गणभ्रमात्स्मरःस्वनन्तीरवलोक्यलज्जितः॥ १३॥

तदिति। स्मरःकामःशिलीमुखालीर्भ्रमरपङ्क्तीरवलोक्यस्वचापात्स्वधनुषोदुर्निर्गतादुःखेननिर्गतामार्गणाबाणास्तेषांभ्रमाद्भ्रान्तेर्लज्जितोलज्जांप्राप्तइव। लुप्तोत्प्रेक्षा। किंभूताःशिलीमुखालीःकुसुमादपिसुगन्धितदङ्गंनलाङ्गमुद्दिश्यपातुकाःपतनशीलाआगच्छतीः। यद्वाकुसुमात्सकाशात्पातुकाः। यद्वाकुसुमगुणन्द्वात् कुसुमाद्धनुषःपातुकाःयतोगुणस्पृशोगुणाभिलाषिणीर्मौर्वीस्पृशश्चस्वनन्तीःशब्दायमानाःशिलीमुखपदंभ्रा

न्तेःकारणम् । अलिबाणौशिलीमुखावित्यमरः ॥ दुर्निर्गतोऽहिवाणोऽध्वनतिलल्यंचनस्पृशतितेनधातुफोलज्जते । सुगन्धीतिसुपूर्वस्यगन्धस्येदित्वम् । पालुकास्त्वलीलेलषपतेत्युकञ् ॥ ९३ ॥

मरुल्ललत्पल्लवकण्टकैः क्षतंसमुच्छलच्चन्दनसारसौरभम् । सवारनारीकुचसंचितोपमन्ददर्शमालूरफलं पचेलिमम् ॥ ९४ ॥

मरुदिति । सनलःपचेलिमंपक्वं मालूरफलंबिल्वफलंददर्शकिंभूतंमरुताललन्तोविलसन्तोयेपल्लवाःशाखाग्राणितेषांकण्टकैःक्षतंमरुद्भिर्वल्लल्ललन्विलासंकुर्वन्यःपल्लवोविटस्तस्यकण्टकाःकण्टकवत्तीक्ष्णा नखास्तैःक्षतमथक्षतस्यपल्लवस्यपल्लवःपाणिस्तस्यकण्टकैर्नखैरितिच्छायार्थः । तथासमुच्छलदुद्गच्छच्चन्दनवत्सारंश्रेष्ठंसौगन्ध्यंयस्याच्चन्दनस्यसारंसौगन्ध्यंयस्मादितिच । सारशब्देनघनसारःकर्पूरोलक्षणयाश्रीखण्डयुक्तःसारइतिवा । अतएववारनारीगणिकातस्याःकुचौताभ्यांसंचितातुल्याऽर्जितावाउपमासादृश्यंयस्यगणिकास्तनतुल्यशोभंवाकुलस्त्रीकुचनखक्षतादिप्राकस्योक्तेरनौचित्यमितिवारेतिपदम् । बिल्वेशाण्डिल्यशैलूषौमालूरश्रीफलावित्यमरः । ललतिरुभयपदी । सौरभमितिङ्गन्ताच्चलघुपूर्वादितिभावेऽण् । कर्मकर्तरिकेलिमरुपसंख्यानात्पचेलिमम् ॥ ९४ ॥

युवद्वयीचित्तनिमज्जनोचितप्रसूनशून्येतरगर्भगह्वरम् । स्मरेषुधीकृत्यधियाभियान्धयासपाटलायास्तवकंप्रकम्पितः ॥ ९५ ॥

युवेति । सनलोभियान्ध्याभयभ्रान्तयाधियाबुद्ध्यापाटलायास्तवकंगुच्छंस्मरेषुधीकृत्यकामतूणीरीकृत्यप्रकम्पितश्चकितः । किंभूतंगुच्छंयुवद्वयीस्त्रीपुंसद्वयीतस्याश्चित्तेवेश्येऽन्तः करणेतयोर्मध्येनिमज्जनंपीडनंतस्मिन्नुचितानियोग्यानिप्रसूनानिपुष्पाणितैःशून्येतरंपूर्णंगर्भगह्वरंमध्यविलंयस्यएतत्पाटलागुच्छंनभवतिकिंतुकामस्यशरभ्रमितिबुद्ध्याकम्पितइत्यर्थः ॥ ९५ ॥

मुनिद्रुमः कोरकितः शितिद्युतिर्वनेऽमुनाऽमन्यत सिंहिकासुतः । तमिस्रपक्षत्रुटिकूटभक्षितंकला

कलापाङ्कुलवैधवंत्रमन् ॥ १६ ॥

मुनीति । अमुनानलेनवनेकोरकितःकृष्णाद्युतिर्यस्यसमुनिद्रुमोऽगस्त्य वृक्षःसिंहिकासुतोराहुरिवामन्यतज्ञातइतिलुप्तोत्प्रेक्षाकिलइवार्थेवा । किं भूतोराहुन्तमिस्रपक्षेऽन्धकारपक्षेयात्रुटिश्चन्द्रस्यकलाविच्छेदः सैवकूटंव्या जस्तेनभक्षितंगिलितंवैधवंविधुश्चन्द्रस्तत्संबन्धिनंकलासमूहंयमस्तुद्गिरन्मु निपदंशान्तिसंभावनाद्वघनिवृत्तिसंभावनार्थंश्यामवर्णत्वाद्राहुत्वंश्यामत्व न्तस्यकलिकानांशुभ्रत्वाद्याकारसौम्याच्चचन्द्रकलात्वं,चन्द्राद्वयमनेनव्यज्य ते । कोरकाःसंजाताअस्यतारकादित्वादितच् । अथचसिंहिकापुत्रःसिंहः शतिद्युतिर्धवलवर्णोभक्षितंशापदादित्युद्गिरन्वनेमन्यतेऽयंसिंह इतितद्द र्शनाद्यथाविरहिणीस्यागस्त्यदर्शनाज्जातमितिभावः । शितीधवलमेच काविल्यमरः ॥ ९६ ॥

पुराहठाक्षिप्ततुषारपाण्डुरच्छदावृतेर्वीरुधिबद्धवि भ्रमः । मिलन्निमीलंससृजुर्विलोकितानभस्वत स्तांकुसुमेषुकेलयः ॥ १७ ॥

पुरेति । कुसुमेषुपुष्पेषुनभस्वतोवायोःकेलयःक्रीडाविलोलाःसत्यस्तांन लंमिलन्निमीलंकृतनेत्रसङ्कोचंससृजुश्चक्रुः । किंभूताःपुराआदौहठेनबला त्कारेणाक्षिप्ताश्चालितास्तुषारेणहिमेन पाण्डुराच्छदाःपत्राणि याभिस्ता स्तथावृतेरावरणस्यसंबन्धिन्यांवीरुधिलतायांबद्धविभ्रमाः कर्ताविशिष्टभ्र माःकृतपक्षिभ्रमणावाछदलक्षणमावरणमाक्षिप्तयेमेतिवायुविशेषणंवा।लि यंगादिसंभोगावलोकनसुखादिवशात्कृतनेत्रसङ्कोचमित्यर्थः । विरहित्वा दसह्यत्वाद्वापरसंभोगदर्शनस्यानुचितत्वाद्वामिलन्निमीलानेत्रव्याधा रोयस्य । वीरुधिस्त्रीलिङ्गत्वाद्योषितिनभस्वतःपुल्लिङ्गत्वान्नायकस्यकुसु मेषुकेलयःकामक्रीडाः । नेक्षेतार्कंननग्नांस्त्रीनचसंसक्तमैथुनाम्,,इतियाज्ञ वल्क्यनिषेधात् ॥ ९७ ॥

गता यदुत्सङ्गतले विशालतान्द्रुमाः शिरोभिःफल गौरवेणताम् । कथंनधात्रीमतिमात्रनामितैःसव न्दमानानभिनन्दतिस्मतान् ॥ १८ ॥

गताइति । सनलोऽतिमात्रमतिशयेननामितैः फलगौरवेणफलबाहुल्येन पुण्यजन्यफलाधिक्येनचनम्रितैः शिरोभिरग्रभागैर्मस्तकैश्चतांधात्रीपृथ्वी मुपमातरञ्चवन्दमानान्स्पृशतोनमस्कारंकुर्वतश्चतान्द्रुमान्सुतांश्चकथंना भिनन्दतिस्म प्रीत्याकंनास्तौषीत् । कांस्तान्येद्रुमायस्याधात्र्याउत्सङ्ग तलउपरिप्रदेशेऽथवाङ्कस्थलेविशालतांवृद्धिंगताः प्राप्तास्तेहियुक्तकारिणा स्तोलुमुचिताआसन् । फलभरनम्राहिवृक्षाःस्तोतव्याएव । विरहित्वान्नाभिन न्दतिस्मकिंतुनेतिकाकुर्वा । वियोगतप्रायतस्मैरोषकारणहेतवःपुष्पवृक्षा इवफलवृक्षाअपिनरुरुचिरेइतिभावः । यतोदुःखितेमनसिसर्वमसह्यमिति भावः । धात्रीस्यादुपमातापिक्षितिरप्यामलक्यपीत्यमरः । दधतियांधयं तियामितिवाधात्री । धःकर्मणिष्ट्रन्निति ष्ट्रन्निषित्वान्ङीष् । नामितैरिति ण्यलङ्कलेतिपाक्षिकंमित्त्वम् ॥ ९८ ॥

नृपायतस्मै हिमितंवनानिलैः सुधीकृतंपुष्परसैरह र्महः । विनिर्मितंकेतकरेणुभिःसितंवियोगिनेद त्तनकौमुदीमुदः ॥ ९९ ॥

नृपेति । अहर्महोऽह्नोदिवसस्यमहस्तेजस्तस्मैवियोगिनेनृपायकौमु दीमुदश्चन्द्रिकाजनितान्सन्तोषान्नादत्त । किंभूतमहर्महोवनानिलैरुद्या नवायुभिर्हिमितंहिमीकृतंपुष्परसैर्मकरन्दैः सुधीकृतममृतीकृतंकेसकरेणु भिः केतकीकुसुमपरागैःसितंश्वेतंविनिर्मितंकृतंचन्द्रिकातुल्यमपिदिवसते जोविरहित्वात्तस्यचन्द्रिकादुःखदायिनीतिदुःखञ्जातमित्यर्थः । अहर्म हःकौमुदीदिव्यस्वरूपकंतस्मैमुदोनादत्तइतिवा । शैत्यादिगुणयोगादह र्महस्तस्मैमुदोदत्तनकौमुदीतिवा । शैत्यादिगुणयोगेनदिवसतेजःसुखा न्तरददौ । कौमुदीमुदोनददावितिवा । दिवसतेजःकौमुदीजन्यहर्षान्ना दत्तकिमपितुददावेवेतिवा । अहर्महइति रोऽसुपीतिरेफः ॥ ९९ ॥

अयोगभाजोऽपिनृपस्यपश्यतातदेवसाक्षादमृतां शुमाननम् । पिकेनरोषारुणचक्षुषामुहुःकुहूरुता हूयतचन्द्रवैरिणी ॥ १०० ॥

अयोगेति । अयोगभाजोपिविरहिणोपिनृपस्यनलस्यतत्प्रसिद्धमाननंमु

त्वं सादादबाधितत्वेनामृतांशुं चन्द्रमेव पश्यता पिकेन कोकिलेन चन्द्रवैरिण्य मावास्यामुहुराहूयताऽऽकारिता । किंभूतेन पिकेनानेन मुखेन विरहित्वा न्म्लानेन भवितव्यं तदधुनापि न म्लायतीति विरोधेन क्रोधेनारुणे रक्ते चक्षुषी यस्य तथा कुहूः कुहूरिति शब्दो यस्य कुहूरिति रौतीति वा कुहूरिति शब्द स्ततोऽमावास्याऽऽकारिता उतनिश्चये किं त्वर्थे या । चन्द्रवैरिणी कुहूरिति वा योजना । विरहेऽपि चन्द्राधिक्यं मुखस्य तद्वत्पाण्डुतादिगुणोपेतत्वेनेति वा । कुहूः स्यात्कोकिलालापे नष्टेन्दुकलयोरपीति विश्वः । पिकस्य नेत्रे स्वभावेन रक्ते शब्दश्च कुहूरिति तत्रैतत्सर्वमुत्प्रेक्षितम् ॥ १०० ॥

अशोकमर्थान्वितनामताशया गतान् शरण्यं गृह
शोचिनोऽध्वगान् । अमन्यतावन्तमिवैष पल्लवैः प्र
तीष्टकामज्वलदस्त्रजालकम् ॥ १०१ ॥

अशोकमिति । एष नलोऽशोकं वृक्षमेवंभूतमिवाऽमन्यताऽर्थेन यस्तेषां शोको न भवतीत्येवंरूपेणान्वितमन्वर्थं नाम यस्य तस्य भावोऽर्थान्वितनामता तस्या आशयाऽभिलाषेणाऽऽगतान् प्राप्तान् गृहशोचिनः स्त्रीशोचिनोऽध्वगान् पान्थानवन्तमिति वाऽमन्यतेत्यन्वयः । पुनः किंभूतं पल्लवैः शाखाग्रैः कृत्वा प्रतीष्टमङ्गीकृतं कामस्य ज्वलदारक्तमस्त्रजालकमस्त्रसमूहो येनास्त्ररूपाणि जालकानि कलिका येनेति वा, यतः शरण्यं शरणे रक्षणे साधुमन्योऽपि शरण्योऽरिशस्त्राणि स्वाङ्गे गृह्णन् शरणागतान् रक्षति पल्लवैररवन्तमिति वा । कामस्य ज्वलदस्त्रजालकमाग्नेयास्त्रकारहं येनेति वा । अर्थान्वितनामताशया शरणागतान् पान्थानवन्तं मारयन्तमिति वाऽमन्यताऽवनम् मारणार्थमेवेति तात्पर्यं । यतः शरणे मारणे साधुं समर्थं पथिकानां कामास्त्रेभ्यो भयं तानि तु पुष्पान्तराद्दारुणान्यत्रैव विद्यन्ते तत एव कामशस्त्राणि स्वहस्ते गृहीत्वाऽयमेव मारयतीति प्रकृतोपयिकत्वादयमेवार्थः साधीयान् रक्तान्यशोकपुष्पाणि दृष्ट्वा पान्था अध्यन्तमित्यर्थः । शरणं वधरक्षित्रोः शरणं रक्षणे गृहे । गृहाः पत्न्यां गृहे स्मृता इति विश्वः । क्षारको जालकं क्लीबे कलिका कोरकः पुमानित्यमरः । शरणे साधुरिति तत्र साधुरिति यत् । अध्वगान् अन्तात्यन्ताध्वेति डः ॥ १०१ ॥

विलासवापीतटवीचिवादनात् पिकालिगीतैः शि

ऽखिलास्यलाघवात् । वनेऽपितौर्यत्रिकमाररराधतं
क्कभोगमाप्नोतिनभाग्यभाग्जनः ॥ १०२ ॥

विलासेति । तौर्यत्रिकंनृत्यगीतवाद्यरूपंकर्तृवनेपितंनलमाररराधाऽऽराधतेस्मकस्माद्विलासार्थंक्रीडार्थंवापीदीर्घिकातस्यास्तटेलीरेवीचिवादनात्तरङ्गनादात्तथापिकाःकोकिलाअलिनोभ्रमरास्तेषाङ्गीतेगानात्पिकानामालिःपङ्क्तिर्वातथाशिखीनांमयूराणांलास्यंनृत्यन्तस्यलाघवाद्वातुर्याद्र्थान्तरंन्यसन्नाह । क्वेति । भाग्यभाग्दैवयुक्तोजनःपुरुषःक्वकस्मिन्स्थानेभोगंसुखंसुखसाधनंवानाप्नोत्यपितुसर्वत्रापिप्राप्नोतिविरहिणस्तौर्यत्रिकंसुखायन तथापिमयूरादीनांसेवाव्यापारोदर्शितोनतुतस्यनलस्वीकारोभुज्यतइतिभोगइतितेषांवास्तवीनिरुक्तिरस्त्येवनलस्यसातदानास्तिमाभूत्तथापिभोगएव। यथानीरागजनसमीपस्थायुवतिर्युवतिरेवाऽखिलतौर्यत्रिकन्तंपुरवद्वनेपिरराधहिंखिलवद्भाग्यभाक्शुभाशुभकर्मभाक्सुखदुःखान्यतरसाक्षात्कारलक्षणंभोगंकुत्रनाप्नोत्यपितुसर्वत्रापि । योहिसुखीसस्थानान्तरेपिसुखंप्राप्नोतियस्तुदुःखीसस्थानान्तरेगतोपिदुःख्येवेतिवा। सुखिनस्तस्यवनेपिसुखप्रतिपादनंप्रसङ्गकृतम् । भाग्यंशुभात्मकंविधौस्याच्छुभाशुभकर्मणीतिविश्वः । अलीतिद्वन्द्वम् इकारान्तत्वेघ्यन्तत्वात्पूर्वनिपातःस्यात् ॥ १०२ ॥

तदर्थमध्याप्यजनेनतद्वनेशुकाविमुक्ताःपटवस्तम
स्तुवन्। स्वरामृतेनोपजगुश्चसारिकास्तथैवतत्पौ
रुपगायनीकृताः ॥ १०३ ॥

तदर्थमिति । जनेनलोकेनतदर्थंनलस्तुत्यर्थमेवाऽध्याप्यपाठयित्वातद्वनेनलोद्यानेविमुक्ताःपटवःस्फुटवाचःशुकास्तंनलमस्तुवंस्तथैवतेनैवप्रकारेणतद्विमुक्ताःस्फुटवाचःसारिकाअपिस्वरामृतेनतंनलमुपजगुस्तुष्टुवुः । किंभूतास्तस्यपौरुषंपराक्रमस्तस्यगायनागायन्यश्चकृतागायनीकृताजनेनेतिशेषः । उभयोर्विशेषणंसारिकाणामेववा । अनेनस्तुतिविरुदावलिपाठकाःसूचिताः अध्याप्येतिक्रीडजीनांणाविस्यात्वम् । गायनीकृताइत्यत्रल्युट्चेतिल्युट्ततश्चिवि. ॥ १०३ ॥

इतोष्टगन्धाढ्यमटन्नसौवनंपिकोपगीतोऽपिशुक
स्तुतोपिच। अविन्दतामोदभरंबहिश्चरंविदर्भसुभ्रू
विरहेणनान्तरम् ॥ १०४ ॥

इतीति । असौनलइतिपूर्वोक्तप्रकारेणवनमटन् परिभ्रमन्सन्बहिश्च
रंबाह्यमामोदभरंसौरभ्यातिशयमविन्दतप्राप विदर्भसुभ्रूर्भैमीतस्याविर
हेणान्तरमामोदभरंहर्षातिशयंनलेभेबहिश्चरमितिक्वचित्पाठः । तत्रपरं
केवलम् । किंभूतंवनंमिष्टगन्धाढ्यमिष्टेनाभीष्टेनगन्धेनसौरभ्येणाढ्यंसमृद्धं
किंभूतोसौपिकोपगीतोपितथाशुकस्तुतोपि । आमोदोहर्षगन्धयोरिति
विश्वः ॥ १०४ ॥

करेणमीनंनिजकेतनंदधद्द्रुमालवालांबुनिवेशशंक
या । व्यतर्कि सर्वर्तुघनेवनेमधुंसमित्रमत्रानुसर
न्नितस्स्मरः ॥ १०५ ॥

करेणेति । सनलःस्मरइवव्यतर्किलोकैरितिशेषः । किंभूतःस्मरःसर्वेच
तेऋतवश्चसर्वर्तवस्तैर्घनेसंपूर्णेऽत्रास्मिन्वनेमित्रंसहायंमधुंवसन्तमनुसर
न्मृगयमाणोनिजकेतनंचक्रवर्तिचिन्हध्वजरूपंचमीनंलक्षणभूतरेखारूपं
मत्स्यंद्रुमाणामालवालेषुअम्बुतस्मिन्निवेशशङ्कयाकरेणदधद्धारयन् । द
धदितिनाभ्यस्तादितिनुम्निषेधः । आलूयतेऽत्रेत्यालवालमौणादिक
आलच्प्रत्ययः ॥ १०५ ॥

लतावलालास्यकलागुरुस्तरुप्रसूनगन्धोत्करपश्य
तोहरः । असेवतामुंमधुगन्धवारिणिप्रणीतलीला
प्लवनोवनानिलः ॥ १०६ ॥

लतेति । वनानिलोऽमुंनलमसेवत । किंभूतोलतारूपाअबलास्तासां
लास्यकलानृत्यविद्यातस्यागुरुरध्यापकस्तथातरूणां प्रसूनानिपुष्पाणिते
षांगन्धोत्करस्यगन्धसमूहस्यपश्यतोहरश्चोरस्तथामधुपुष्परसस्तल्लक्षणेगन्ध
वारिणिगन्धोदके प्रणीतंकृतंलीलाप्लवनंजलक्रीडायेनमधुगन्धाख्यंनलसर
इतिकेचित् । क्रमेणविशेषणत्रयेणमन्दत्वसुगन्धत्वशीतलत्वानिसूच्यन्ते ।
एवंविधोवायुः कार्यसिद्धेःसूचकोऽन्योप्येवंविधःपीठमर्दादिःपरिचारको

भायकंसेवते । पश्यतोहरइतिपष्ठीचानादरइतिपष्ठ्यावाक्दिक्पश्यद्भ्यो युक्तिदण्डहरेष्वित्यलुक् ॥ १०६ ॥

अथस्वमादायभयेनमन्थनाच्चिरत्नरत्नाधिकमुच्चितं चिरात् । निलीयतस्मिन्निवसन्नपांनिधिर्वनेतडागोदहृश्योऽवनीभुजा ॥ १०७ ॥

अथेति । अथानन्तरमवनीभुजाराज्ञानलेनसतडागोऽपांनिधिरिवसमुद्रइवददृशेत्युत्प्रेक्षा । किंभूतश्चिराद्बहुकालेनोच्चितंवृद्धिंप्रापितंतथा चिरत्नैश्चिरंतनैरत्नैरैरावतादिभिरधिकंपूर्वंतान्यसहायान्येवासन्निदानीं तुतान्येवबहूनिजातानितेभ्योधिकंवास्वंधनंमन्थनाद्भयेनादायगृहीत्वात स्मिन्वनेनिलीयतडागरूपेणैवतिरोहितीभूयनिवसन्समुद्रोपमयोदकवाहुल्यंव्यज्यतेतस्मिन्वनेसन्निधीयमानइतिपक्षेसाक्षादुत्प्रेक्षा । अन्योऽपिध नीराजादिपीडनाद्भयेनसर्वंस्वंगृहीत्वानिरुपद्रवेदेशान्तरेगुप्तोवसति । रत्नंस्वजातिश्रेष्ठेपीत्यमरः । तडागइतितडआघातइत्यस्मात्पिनाकादय श्चेत्युणादिसूत्रेणाकप्रत्ययेसिद्धम् । मन्थनादितिभीत्रेत्यपादानत्वम् । चिरत्नेतिचिरपरुत्परारिभ्यस्त्नोवक्तव्यइतित्नः ॥ १०७ ॥

पयोनिलीनाभ्रमुकामुक्तावलीरदाननंतोरगपुच्छसुच्छवीन् । जलार्द्धरुद्धस्यतटान्तभूभिदोमृणालजालस्यमिषाद्वभारयः ॥ १०८ ॥

समुद्रपक्षेनाह । अग्रेपयोधिलक्ष्मीमुपीतितडागविशेषणादेवपयोधिलक्ष्मीमुदत्वमाहाष्टभिः पयइतिसक्तःयस्तडागोमृणालंजालस्यबिससमूहस्यमिषाद्व्याजात्पयसिनिलीनामग्नाअभ्रमुकामुक्ताऐरावतास्तेपामावलीसमूहस्तस्यारदान्दन्तान्बभारकिंभूतान्रदान्अनन्तोरगोऽनन्तसंज्ञकउरगःशेषस्तस्यपुच्छवत्सुच्छवीन्शोभनदीप्तीन्सच्छवीनितिपाठेसदृशदीप्तीन्किंभूतस्यमृणालजालस्यजलेनार्द्धरुद्धस्यअर्धावृतस्वरूपस्यतथातटान्तेतटसमीपेयाभूर्भूमिस्तांभिनत्तीतितटान्तभूभिदस्तस्यामाकण्ठमग्नत्वादैरावतानदृश्यन्तेकिंतुदन्ताएवदृश्यन्तेपूर्वंतुएकएवैरावतआसीदधुनातुबहवइत्यर्थः । आवलीपदेनरत्नाधिकत्वंसूचितमेवमुत्तरत्रापिरत्नाधिक्यंद्र

ष्टव्यम् । तटान्तभूमेरूत्वंदन्तानामपिविशेषणं । कर्मेर्नलोकेतिनिषेधाभा
वाद्दन्तमुकामुकाइतिषष्ठीसमासः । सच्छ्रीनित्यत्रसमानस्येतियोगविभा
गात्समासस्सः ॥ १०८ ॥

तटान्तविश्रान्ततुरङ्गमच्छटास्फुटानुबिम्बोदितचुं
बनेनयः । बभौचलद्वीचिकशांतशातनैःसहस्रमुच्चैः
श्रवसामिवाश्रयन् ॥ १०९ ॥

तटेति । यस्तडागस्तटान्तेकूलप्रान्तेविश्रान्ताःस्थितानततुरङ्गमच्छटा
अश्वसमूहास्तेषांस्फुटंप्रकटमुदितोऽनुबिम्बःप्रतिबिम्बस्तस्यचुम्बनेनसंब
न्धेनतत्प्रतिबिम्बमिषेणेत्यर्थःउच्चैःश्रवसांसहस्रमाश्रयन्निवबभौ । किंभू
तंसहस्रं वीचयएवकशाअश्वताडन्यस्तासामन्ताःप्रान्तास्तैर्यानिशातनानि
तैश्चलच्चञ्चलंप्रतिबिम्बितंवरनुतरङ्गकशाश्च ञ्चलमिवप्रतिभातितत्रताडि
तत्वेनचलत्वमुत्प्रेक्षागर्भंनलाश्वानांउच्चैःश्रवःसाम्यञ्चद्योत्यते । अश्वादे
स्ताडनीकशेत्यमरः ॥ १०९ ॥

सिताम्बुजानांनिवहस्यय श्छलादूबभावलिश्यामलितोदरश्रियां । तमःसमच्छायकलङ्कसङ्कुलंकु
लंसुधांशोर्बहुलंबहून्यहु ॥ ११० ॥

सितेति । यस्तडागःसिताम्बुजानांश्वेतोत्पलानांनिवहस्यसमूहस्यछला
द्मिषात्सुधांशोश्चन्द्रस्यबहुलंसान्द्रंविस्तृतंवाकुलंवृन्दवहन्सन्वहुश्राति
शयेनबभौशुशुभे । किंभूतानांअलिभिर्भ्रमरैःश्यामसिताश्यामलीकृतोदर
श्रीर्मध्यशोभायेषां किंभूतंकुलंतमःसमच्छायोऽधकारसदृशशोभोयःकलङ्क
स्तेनसङ्कुलंव्याप्तम् । श्रियानितिभाषितपुंस्कत्वात्पुंवत् ॥ ११० ॥

रथाङ्गभाजाकमलानुषङ्गिणा शिलीमुखस्तोमस
खेनशार्ङ्गिणा । सरोजिनीस्तम्बकदम्बकैतवान्मृ
णालशेषाहिभुवान्वयायियः ॥ १११ ॥

रथेति ॥ यस्तडागःसरोजिनीकमलिनीतस्याःस्तम्बकदम्बोगुल्मसमूह
स्तस्यकैतवादिमषाद्कमलिनीगुल्मसमूहेनैवशार्ङ्गिणाश्रीकृष्णेनान्वया
व्यऽनुसृतः कृष्णोहिसमुद्रेशेतेकदम्बपदप्रयोगसामर्थ्याच्छार्ङ्गिणेतिजा

तायेकवचनम् । किंभूतेनरथाङ्गंचक्रंचक्रवाकश्चतद्राजा तथाकमलालक्ष्मीः कमलमुत्पलंतयातेनवासहाऽनुषङ्गःसम्बन्धोऽस्यास्तीतितेन,तथाशिलीमुखस्तोमोऽत्रसरसमूहस्तत्सखेनतत्सदृशेनतद्वच्छयामेनतत्सहितेनच माया समूहसहितेमवातथामृणालमिवशेषाहिःसएवभूःशयनस्थानंयस्यमृणाला न्येवंविशेषाहिर्भूरुत्पत्तिस्थानंयस्य ॥ कमलानुषङ्गिणेत्यत्रेनिः ॥ १११ ॥

तरङ्गिणीरङ्कजुषःस्ववल्लभास्तरङ्गरेखाविभरांबभूव यः । दरोद्गतैःकोकनदौघकोरकै र्धृतप्रवालाङ्कुरसंचयश्रियः ॥ ११२ ॥

तरङ्गिणीरिति ॥ यस्तडागस्तरङ्गरेखास्तरङ्गमालाएवतरङ्गिणीर्नदीर्विभरामृबभूवव्यस्तरूपकम् । किंभूताअङ्कजुषोमध्यकेविनीश्चताश्चस्ववल्लभाः स्वप्रियाःप्रायेश्वरीश्च । किंभूतस्तडागोदरोद्गतैरीषदुद्भूतैःकोकनदौघार क्तोत्पलसमूहास्तेषांकोरकैर्मुकुलैःकृत्वाधृतःप्रवालांकुरसञ्चयोविद्रुमाङ्कुरसमूहोयेन समुद्रेनद्यःप्रविशन्तिविद्रुमाङ्कुराश्चबहवःसन्तितथाऽत्रापीति समुद्रसाम्यम् । ११२ ॥

महीयसःपंकजमंडलस्य यश्छलेनगौरस्यचमेचकस्यच । नलेनमेने सलिलेनिलीनयोस्त्विषंविमुञ्चन्विधुकालकूटयोः ॥ ११३ ॥

महीयसइति । यस्तडागोनलेनमहीयसोमहत्तरस्यगौरस्यश्वेतस्यतथा मेचकस्यनीलस्यपङ्कजमण्डलस्यकमलसमूहस्यच्छलेनव्याजेनसलिलेनिलीनयोर्निमग्नयोर्विधुकालकूटयोश्चन्द्रविषयोस्त्विषंदीप्तिंविमुञ्चन्मुद्रिरन्निव मेनेशङ्कितःसमुद्रेयथाचन्द्रोविषञ्चतिष्ठतितथाऽत्रापीति । विधुरमृतमिति केचित् ॥ ११३ ॥

चलीकृतायत्रतरङ्गरिङ्गणैरबालशैवाललतापरम्परा । ध्रुवंदधुर्वाडवहव्यवाडवस्थितिप्ररोहत्तमभूमधूमतां ॥ ११४ ॥

चलीकृताइति॥ यत्रयस्मिंस्तडागेतरङ्गरिङ्गणैस्तरङ्गस्खलनैश्चलीकृताश्चालिताअबालामहत्यःशैवाललतास्तासांपरंपराःसमूहावाडवहव्यवाट्वाड

वानलस्तस्यावस्थितिरवस्थानन्तेनप्ररोहतमोऽतिशयेनप्रादुर्भूतोभूमाबा हुल्यंयस्यैवंविधोयोधूमस्तस्यभावस्ततातांदधुरितिग्रंथश्लेषे समुद्रेवडवा नलस्तिष्ठतितद्वदत्रापि । प्ररोहत्तमधूमभूमतामितिक्वचित् तत्रप्ररोहत्त मोधूमभूमायासामिति । बहेभ्र्वे त्यस्यत्वांदसत्वस्यप्रायिकत्वाद्भ्यथादि त्यत्रशिवः बह्वोर्नाबोभूमेतिबह्वोर्लोपोभूचबह्वोरितिसिद्धं ॥ ११४ ॥

प्रकाममादित्यमवाप्यकंटकैः करम्बितामोदभ
रविवृण्वती । धृतस्फुटश्रीगृहविग्रहादिवा सरो
जिनीयत्प्रभवाऽप्सरायिता ॥ ११५ ॥

प्रकाममिति ॥ यत्प्रभवायस्मात्प्रभवउत्पत्तिर्यस्याःसासरोजिनीकम लिनीदिवाऽप्सरायिताऽप्सरसइवाचरिताऽप्सरस्तुल्या । किंभूता आदि त्यंसूर्यमवाप्यप्रकाममतिशयेनकण्टकैःकरंबितमाध्यामाऽऽमोदभरंसौगन्ध्य बाहुल्यंविवृण्वतीप्रकटयंती तथाधृतः स्फुटानिविकसितानिश्रीगृहाणिक मलानितान्येवविग्रहःशरीरंयया अथैवंविधाः प्रकामंप्रकृष्टमदनंआदित्यं देवंप्राप्यरोमाञ्चिताहर्षंप्रकटयन्त्योदिवास्वर्गेणधृतःस्फुटायाःप्रकाशमा नायाःश्रियःशोभायाःगृहंस्थानंविग्रहःशरीरंयासांताअप्सरसोपि । आदि त्यमितिदित्यदित्येतिण्यःअप्सरायितेतिकर्तुःक्यङ्सलोपश्चेतिक्यङिओ जसोप्सरसइत्यादिनासलोपः ॥ ११५ ॥

यदंबुपूरप्रतिबिम्बितायतिं मरुत्तरङ्गैस्तरलस्तट
द्रुमः । निमज्ज्यमैनाकमहीभृतःसतस्ततानपक्षा
न्धुवतःसपक्षतां ॥ ११६ ॥

यदिति ॥ यस्यतडागस्यांऽबुनःउदकस्यपूरेप्रवाहेप्रतिबिम्बताप्रतिक लिताऽऽयतिर्दैर्घ्यंयस्यैवंभूतस्तटद्रुमस्तीरवृक्षोनिमज्ज्याऽन्तर्निलीयसतो विद्यमानस्यमैनाकमहीभृतोमैनाकपर्वतस्यसपक्षतांसमानतांपक्षसाहि त्यंचततानविस्तारयामास मैनाकइवस्थितइत्यर्थः । किंभूतःमरुत्तरंगैर्वा युचालितोर्मिभिस्तरलश्चञ्चलःकिंभूतस्य पक्षान्धुवतः कंपयतःअत्रवृक्षप्र तिबिम्बःसमुद्रेमैनाकस्तिष्ठति ॥ ११६ ॥

पयोधिलक्ष्मीमुषिकेलिपल्वलेरिरंसुहंसीकलनाद

सादरं। सतत्रचित्रं विचरन्तमंतिके हिरण्मयंहंस मबोधिनैषधः ॥ ११७ ॥

पयोधीति॥ सनलस्तत्रतस्मिन्केलिपल्वले क्रीडाल्पसरसिचित्रंअंतिकेविचरन्तहंसीमसमीपेगच्छंतंहिरण्मयंसुवर्णमयंहंसंअबोध्यऽज्ञासीत् किंभूते पयोधिःसमुद्रस्तस्यलक्ष्मीशोभांपूर्वोक्ताब्धिलक्षणप्रकारेणमुष्णातीति किंभूतंहंसं रिरंसुरंतुमिच्छुर्हंसीतस्याःकलनादोऽव्यक्तमधुरध्वनिस्तत्रसादरंसाभिलाषंचित्रंसुवर्णमयत्वादाश्चर्यकारकंवा अंतिकेपल्वलसमीपेवापूर्वोक्तप्रकारेणातिवर्णितस्यपल्वलत्वमनुचितं ततुनलस्यक्रीडासरइतिबुध्यापल्वलशब्दप्रयोगइति अथचवित्तत्वात्समुद्रतुल्येविलासित्वात्पल्वलतुल्येशरीरेविचरन्तंहंसंपरमात्मानंकश्चिद्योगीपश्यति रिरंसुर्हंसोशक्तिस्तस्याःकलनादेसादरं हिरण्मयत्वंहिरण्मयःपुरुषइतिश्रुतेः विहरंतमितिक्वचित् हिरण्यस्यविकारइत्यर्थेमयटिदाण्डिनायनादिनाहिरण्मयः साधुः अबोधीतिकर्तरिचिण् ॥ ११७ ॥

प्रियासु बालासु रतक्षमासु च द्विपत्रितं पल्लवितं च बिभ्रतम् । स्मरार्जितं रागमहीरुहाङ्कुरं मिषेण चञ्चोश्चरणद्वयस्य च ॥ ११८ ॥

प्रियास्विति ॥किंभूतं बालासुप्रियासुरतक्षमासुचसुरतसमर्थासुप्रियासुचंचोर्मिषेणचरणद्वयस्यचमिषेणद्विपत्रितंद्विपत्रयुक्तंपल्लवितंपल्लवयुक्तंचस्मरार्जितंकामोत्पन्नंरागोऽनुरागस्तज्जक्षणोमहीरुहोवृक्षस्तस्यांकुरंबिभ्रतंयथाक्रमंधारयन्तंबालासुस्वल्पोनुरागःप्रौढासुभूयानित्यर्थःपत्रद्वयसाम्यंचञ्चुपुटस्यानेकांगुलीसंयोगाच्चरणद्वयस्यपल्लवसाम्यं राजहंसस्यचञ्चुचरणौलोहितौ द्विपत्रपल्लवाभ्यांतारकादित्वादितच् विभ्रतमितिनाभ्यस्तादितिनुमभावः चञ्चुपुटस्यद्विपत्रितत्वाद्बालासुप्रियासुचुंबनादिव्यापारःप्रौढासुचरणद्वयस्यपल्लवितत्वात्सर्वांगीणइतिसूचितम् ॥ ११८ ॥

युगममहीनरहेन्द्रस्समवेक्ष्य सकाञ्चनं शकुन्तमेकान्तमनोविनोदिनम् । प्रियावियोगाद्विधुरोपि निर्भरं कुतूहलाक्रान्तमना मनागभूत् ॥ ११९ ॥

महीति॥समहीमहेन्द्रः पृथ्वीन्द्रः प्रियावियोगाद्भैमीविरहान्निर्भरमत्यन्तं विधुरोऽपिविह्वलोऽपितंशकुन्तंहंसंक्षणंमुहूर्त्तमवेत्याऽवलोक्यमनागीषत्कुतूहलेनकौतुकेनाक्रान्तंमनोऽन्तःकरणंयस्यैवंभूतोऽभूत् ॥किंभूतंयतएकान्तेननियमेनसर्वदाऽभीक्ष्णंवामनोविनोदयतिरञ्जयत्येवंशीलम् ॥ ११९ ॥

अवश्यभव्येष्वनवग्रहग्रहा यया दिशा धावति वेधसःस्पृहा । तृणेन वात्येव तयाऽनुगम्यते जनस्य चित्तेन भृशावशात्मना ॥ १२० ॥

विरहित्वेऽपितस्यकुतूहलाक्रान्तत्वंकुतइत्यपेक्षायांकविरर्थान्तरन्यासेनोत्तरमाहससैन्यनलदर्शनेनातिभीतःकथंतत्रनिद्द्राविंत्युत्तरश्लोकाकाङ्क्षायामुत्तरश्लोकसमर्थनार्थंवाऽर्थान्तरन्यासमाह॥ अवश्येति॥ अवश्यंनियमेनभव्येषुभवितव्येषुशुभादिषुविषयेऽनवग्रहोऽबाध्यमानोनिरर्गलोग्रहोऽभिनिवेशःप्रसवोयस्याःसावेधसोब्रह्मणःस्पृहावाञ्छाययादिशायेनमार्गेणधावतिगच्छतितयादिशातेनैवमार्गेणजनस्यलोकस्यचित्तेनसावेधसःस्पृहाऽनुगम्यतेयथाविधिःप्रेरयतितथालोकःकरोतीत्यर्थः॥किंभूतेनचित्तेनभृशमत्यर्थमवशोऽनधीनआत्मास्वरूपंयस्यतेनविधिस्पृहाधीनेनेत्यर्थः॥यथाऽप्रतिबन्धावात्यायया दिशाधावतितयादिशानिःसारत्वाद्वातपरतन्त्रेण तृणेनसावात्याऽनुगम्यतेतथेत्यर्थः ॥ अवश्यंभाविभैमीपरिणयनानुकूलेविधिप्रेरितेहंसेकौतुकंयुक्तमितिभावः । विधिप्रेरितस्यादेवनलस्वीकृतस्योपग्रहणपूर्वकमोचनद्वारानलस्योपकारार्थंसैन्यसंनिधावपिबुद्धिपूर्वंनिद्द्रावितिभावः । यद्वाऽप्यमेनाऽऽकारेणतेनज्ञातस्तथापिविधिवशादेवभाविन्यपिसुखेऽन्तःकरणंसोत्साहंजातमितिभावः । अवश्यभव्येष्वितिमयूरव्यंसकादित्वात्समासःलुम्पेदवश्यमःकृतिमलोपः ॥ १२० ॥

अथाऽवलम्ब्यक्षणमेकपादिकां तदा निदद्रावुपपल्वलंखगः । सतिर्यगावर्जितकन्धरःशिरः पिधायपक्षेणरतिक्रमालसः ॥ १२१ ॥

अथेति॥अथानन्तरंसखगोहंसस्तदा तस्मिन्समयेरतिक्रमेनसुरतखेदेनाऽलसःसन्उपपल्वलंसरःसमीपेक्षणं नरेन्द्रौनिद्राञ्चक्रे॥ किंकृत्वापक्षेणशि

रःपिधायाऽऽछाद्य किंभूतः तिर्यगावर्जितानम्रीकृताकंधराग्रीवायेनसः पुनःकिंकृत्वा एकश्चासौपादश्चएकपादःसोऽस्यांस्थितास्तीतितांस्थितिमचलस्याऽङ्गीकृत्य पक्षिजातिरियं।एकपादिकामितिबहुव्रीहौकुम्भपद्यादिष्वेकपदीशब्दस्यपाठात्पादशब्दान्तलोपेपादोऽन्यतरस्यामितिङीपिभत्वात्पद्वादेशेएकपदीमितिप्राप्तेनकर्मधारयान्तत्वश्चौयद्दत्येकाद्यराकृतोजातेःसप्तम्यांचनतौस्मृताविति चानित्यत्वादनाश्रियोक्तकर्मधारयादस्त्यर्थेठनीकादेशेसमर्थनीयम् उपपल्वलमितिसामीप्येऽव्ययीभावः ॥ १२१ ॥

सनालमात्माननर्निर्जितप्रभं ह्रियानतंकाञ्चनम
म्बुजन्मकिम् । अबुद्धतंविद्रुमदण्डमण्डितं स
पीतमम्भःप्रभुचामरंनुकिम् ॥ १२२ ॥

सनालमिति॥सनलस्तंहंसमित्यऽबुद्धतर्कितवान् । इतिकिं एकचरणाव्स्थानात्सनालंनालसहितमात्मनः स्वस्याऽननेनमुखेननिर्जिताप्रभायस्याऽतएवह्रियालज्जयानतंनम्रंकाञ्चनंसौवर्णमम्बुजन्मकमलमेतत्किं तथाचरणस्यरक्तत्वाद्विद्रुमदण्डेनमण्डितमलङ्कृतंपीतंपीतवर्णमंभःप्रभोर्वरुणस्यचामरंकिमितितर्कितवान् कमलंसनालंचामरंचसदण्डंभवतिकांचनमितिविकारेऽनुदात्तादेश्चेत्यञ्रजतादित्वाद्वा अबुद्धेतिबुध्यतेर्लुङिभ्रूपस्तथोर्धोधइतिधादेशेरूपं ॥ १२२ ॥

कृतावरोहस्यहयादुपानहौ ततःपदेरेजतुरस्यबि
भ्रती । तयोःप्रवालैर्वनयोस्तथाम्बुजैर्नियोद्धुका
मेकिमुबद्धवर्मणी ॥ १२३ ॥

कृतेति॥ततोऽनन्तरंहयादश्चात्कृतावरोहस्यकृतोत्तरणस्याऽस्यनलस्यपदेचरणौरेजतुःशुशुभाते॥किंभूतेपदेउपानहौबिभ्रतीधारयमाणे तत्रोत्प्रेक्षतेतयोःप्रकृतयोर्वनयोःकाननोदकयोःयथाक्रमंप्रवालैःपल्लवैस्तथाम्बुजैःसहनियोद्धुकामेसङ्ग्रामयितुकामेसतीबद्धवर्मणी बद्धंवर्मकवचंयाभ्यांतेकिमुसंभावनायांतथासमुच्चये अत्रनियुद्धंयुद्धमात्रंनतुबाहुयुद्धं तन्नपदेपल्लवरक्तोत्पलतुल्येइतिसूचितं योद्धुकामोबद्धकवचोभवति । वनंसलिलकाननेइत्यमरः उपानहाविति नहिवृत्तीतिदीर्घः रेजतुरितिफणांचसप्तानामित्येत्वा

न्यासलोपी ॥ १२३ ॥

विधाय मूर्तिं कपटेन वामनीं स्वयं बलिध्वंसिविडम्बिनीमयम् । उपेतपार्श्वश्चरणेन मौनिना नृपः पतङ्गं समधत्त पाणिना ॥ १२४ ॥

विधायेति ॥ अयं नृपः पाणिना हस्तेन पतङ्गं हंसं स्वयमेव समधत्त धृतवान् ॥ किं कृत्वा कपटेन बलिध्वंसी नारायणस्तस्य विडम्बिनीमनुसरणशीलां वामनीं ह्रस्वां मूर्तिं स्वरूपं विधाय कृत्वा । किंभूतः मौनिना निःशब्देन चरणेन गमनेन चोपेतः प्राप्तः पार्श्वो हंससामीप्यं येन त्रिविक्रमोऽपि बलिं छलयितुं वामनावतारमूर्तिं कृत्वाऽकाशगामित्वान्निःशब्देन चरणेन गमनेन वा प्राप्तसूर्यपार्श्वोऽभवत् सूर्यं हस्तेनास्प्राक्षीदित्यागमः पक्षिधारणजातिरुक्ता । वामनीति स्वरूपे षिद्गौरादित्वान्ङीष्वा ॥ १२४ ॥

तदात्तमात्मानमवेत्य संभ्रमात्पुनः पुनः प्रायसदुत्प्लवाय सः । गतो विरुत्योड्डयने निराशतां करौ निरोद्धुर्दशति स्म केवलम् ॥ १२५ ॥

तदात्तमिति ॥ स हंसः आत्मानं तेन नलेनात्तं धृतमवेत्य ज्ञात्वा संभ्रमाद्भयात्पुनः पुनरुत्प्लवायोड्डीनगमनाय प्रायसत् यत्नं चक्रे ॥ अनंतरमुड्डयने निराशतां निःप्रयत्नत्वमाशाराहित्यं वा गतः प्राप्तः सन् विरुत्य दीर्घशब्दं कृत्वा केवलं निरोद्धुर्ग्रहीतुर्नलस्य करौ दशति स्म ददंश पक्षिजातिः । प्रायसदिति यसु प्रयत्ने ऽस्माद्यसोऽनुपसर्गे इति श्यनो निषेधे लङि शप् यः लुङि पुषादित्वादङ् तदेति भिन्नं वा ॥ १२५ ॥

ससंभ्रमोत्पाति पतत्कुलाकुलं सरः प्रपद्योत्कतयाऽनुकम्पताम् । तमूर्मिलोलैः पतगग्रहान्नृपं न्यवारयद्वारिरुहैः करैरिव ॥ १२६ ॥

ससंभ्रमेति ॥ सरः कर्तृ सजातीयधारणात्ससम्भ्रमं भयसहितमुत्पाऽत्यव श्यमुत्पतनशीलं पतत्कुलं पक्षिकुलं तेनाऽऽकुलं व्याप्तं सदत एव पक्षिपक्षवातेन योत्कता उद्गलत्कमुदकं यस्य तस्य भावस्तत्ता तया हंसोत्कंठतया वाऽनुकं

प्रतांसकम्पतांदयालुतांवाप्रपद्यप्राप्योर्मिलोलैस्तरङ्गचञ्चलैर्वारिरुहैःकम लैरेवकरैर्हस्तैस्तंनृपंपतङ्गग्रहाद्धंसग्रहणान्न्यवारयद्विन्यषेधयदिवकरैरि वेतिवाकश्चिज्जिघांसुमुत्कपिठतस्त्वेनदयालुतांप्राप्यचञ्चलैःकमलतुल्यैःक रैर्वारयतिद्वयमपिपक्षिजातिः।कम्प्रेत्यत्रनमिकम्पीतिरः।यद्यपिसरसःपतग ग्रहोनेष्टस्तथापिनृपस्येष्टइतिवारणायोनाभीप्सितइत्यपादानत्वम्॥१२६॥

पतत्रिणातद्रुचिरेणवञ्चितं श्रियःप्रयान्त्याःप्रवि हायपल्वलम् । चलत्पदाम्भोरुहनूपुरोपमा चु कूजकूलेकलहंसमण्डली ॥ १२७ ॥

पतत्रिणेति ॥ कलहंसमण्डलीराजहंसततिःकूलेतीरेचुकूजशब्दंचका र । किंभूतात्पूर्वोक्तंपल्वलमल्पसरःप्रविहायत्यक्त्वाप्रयान्त्यागच्छन्त्याः श्रियःशोभायाःशब्दच्छलेनलक्ष्म्याश्चलन्तीयेपदाम्भोरुहेचरणकमलेतयोर्व र्तमानौनूपुरौतदुपमातत्तुल्या । श्रीत्यागेकारणमाह । किंभूतंपल्वलंरुचिरे णसुन्दरेणपतत्रिणातेनपक्षिणाहंसेनवञ्चितंरहितं तस्यनूपुरसाम्यात्कूजि तस्यमञ्जीरशब्दसाम्यंकूजनेनैवतस्यानूपुरतुल्यत्वंवा यथासुखप्रदेनप्रि येणत्यक्तंस्थानंत्यक्त्वागच्छन्त्याःप्रियायाश्चरणेनूपुरौकूजतइतिश्लेषः । प्रया न्त्याइतिवर्तमानप्रत्ययेनश्रियःशीघ्रंप्रत्यागमनंसूचितम् । कलहंसस्तुका दम्बेराजहंसेनृपोत्तमइतिविश्वः ॥ १२७ ॥

नवासयोग्यावसुधेयमीदृशस्त्वमङ्गयस्याःपतिरु ज्झितस्थितिः । इतिप्रहायक्षितिमाश्रितानभः खगास्तमाचुक्रुशुरारवैःखलु ॥ १२८ ॥

नवासेति । क्षितिंप्रहायत्यक्त्वानभोन्तरिक्षमाश्रिताःप्राप्ताःखगाःपक्षिण आरवैःशब्दैस्तंनलमित्तिपूर्वोक्तप्रकारेणाचुक्रुशुः।खलूत्प्रेक्षायांनिश्चयेवा।इ तीतिकिंहेअङ्गदीनकर्तृकसामर्थ्यामन्त्रणेयस्याःवसुधायाउज्झितस्थितिरत्य क्तमर्यादईदृशोनिरपराधप्राणिधारणलक्षणमधर्मंकुर्वाणोनिरपत्रपोवात्वं पतिःपालयितासेयंवसुधापृथ्वीवासयोग्यानभवतीतियरशून्यंनभएवाश्रयि ष्यामोनतुबहुधनरत्नसंपूर्णांवसुंधरांदुष्टस्वामित्वादित्यर्थः । अन्योपिसो पद्रवंदेशंत्यजति । आरवैरित्यत्रऋदोरपोनित्यमुपसर्गेरुवइतियाधकेघञि

प्राग्वेविभावाकिरणुवोरित्याकिपजोविकल्पविधानात्पक्षेऽप् ॥ १२८ ॥

नजातरूपच्छदजातरूपता द्विजस्यदृष्टेयमिति स्तुवन्मुहुः ॥ अवादितेनाथसमानसौकसा जनाधिनाथःकरपञ्जरस्पृशा ॥ १२९ ॥

नजातेति । अथानन्तरमितिपूर्वोक्तप्रकारेणमुहुर्वारंवारंस्तुवन्सजनाधिनाथोनलोमानसौकसाहंसेनावादिवदत्यमाणप्रकारेणोक्तः । किंभूतेन करपञ्जरंहस्तलक्षणंपञ्जरंपक्षिबन्धनयन्त्रंस्पृशतीतितेन । इतिकिंद्विजस्यपक्षिणोजातरूपस्यसुवर्णस्यच्छदौपक्षौताभ्यांजातंरूपंसौन्दर्यंयस्यतस्यभावस्तत्तारागाद्यादिनदृष्टेति । अथचब्राह्मणमात्रस्यसौवर्णप्रच्छदसंजातसौन्दर्येणाश्चर्यकारिभवति । पञ्जरपदेनकरपुटस्यशैथिल्यात्पीडाभावःसूच्यते ॥ १२९ ॥

धिगस्तुतृष्णातरलंभवन्मनः समीक्ष्यपक्षान्ममहेमजन्मनः । तवार्णवस्येवतुषारशीकरैर्भवेदमीभिःकमलोदयःकियान् ॥ १३० ॥

धिगिति ॥हेराजन्हेमजन्मनःसुवर्णप्रभवस्यसुवर्णप्रभत्वान्ममपक्षान्समीक्ष्यदृष्ट्वातृष्णयास्पृहयातरलंचञ्चलं भवन्मनस्त्वदन्तःकरणंधिक्गर्ह्यमस्तु सुवर्णाभिलाषेणैवत्वयाऽहंधृतःस्तुतश्चेत्यर्थः । अमीभिःपक्षैस्तवराज्ञःसतः कियान्कियत्परिमाणाद्दलालक्ष्मीस्तस्योदयआधिक्यंभवेदपितुनाल्पोमोत्पर्थःकैःकस्येवतुषारशीकरैर्हिमकणैरर्णवस्यसमुद्रस्येव यथाहिमकणैः समुद्रस्यकमलंजलंतस्योदयःकियान्यथोदकवृष्ट्यैवसमुद्रेणाहिमकणानाद्रियन्तेतथासमृद्धेनत्वयाममपक्षसुवर्णंनाभिलषणीयमितिभावः । परद्रव्याभिलाषेणकियद्दलक्ष्मीसमुद्रयोर्भवेदपितुविपदेवेतिवा । कमलाश्रीर्हरिप्रिया । सलिलंकमलंजलमितिचामरः । धिग्योगेमनइतिद्वितीया ॥ १३० ॥

नकेवलंप्राणिवधोवधोमम त्वदीक्षणाद्विश्वसितान्तरात्मनः । विगर्हितंधर्मधनैर्निबर्हणं विशिष्यविश्वासजुषान्द्विषामपि ॥ १३१ ॥

रटामम्खीनवप्रसूतिर्नवप्रसवासापिस्वतोजीवितुमसमर्थोपत्यन्तरेणामि जीविकाऽसंभावितेत्याह । यतस्तपस्विनीपतिव्रताअथचदीनएवमल्लक्षणो जनस्तयोर्मातृपत्न्योर्गतिर्वृत्त्युपायः । यद्वामत्तएकःपुत्रीयस्याःसाअजन नीमन्मरणानन्तरमप्रसवित्रीयतो जरातुरानन्दृष्टानप्रसवसंभावनायाम पिपातिव्रत्यादऽजननीअप्रसूतिश्च ह्यायस्याः । यद्वाअप्रएवसानुरेवसुतराम् तीरक्षणंयस्याःसामद्विर्योगात्मवेतन्मरणंकरिष्यतीत्यर्थः । वरटाविशेषणा नितयोःपुत्रवरटयोस्त्वंमामर्दयन्पीडयन्मारयन्हेविधेप्रहरन्दैववाकरुणा दयात्वांनरुणद्धिनवृणोतिनवारयतीत्यर्थः । अहोआश्चर्यमेवंविधपीडने हिन्ययासदयेनभवितव्यंतवहे वस्यसतोदयानोत्पद्यतेकिंपुनर्मनुष्यस्येति करुणोक्तिः । हंसस्ययोषिद्वरटेत्यमरः । अर्दयन्निति चौरादिकादर्दयतेः संबोधनेचेतिशतृप्रत्ययः । आत्मनेपद्यवेतिकेचित् । तदागणकृत्यमनि त्यमित्यर्दनमर्दस्तद्गन्तं कुर्वन्नितिमतुवत्लुकावासमाधिः ॥ १३५ ॥

मुहूर्तमात्रंभवनिन्दयादया सखासखायःस्रवद्स्रवोमम । निवृत्तिमेष्यन्तिपरंदुरुत्तरस्त्वयैवमातःसुतशोकसागरः ॥ १३६ ॥

मुहूर्तेति । ममसखायोमित्राणिपक्षिणोमुहूर्तमात्रंक्षणमात्रमीदृश्येवसंसारस्थितिरितिभवस्यसंसारस्यनिन्दयानिवृत्तिंदुःखविस्मरणमेष्यन्तियास्यन्ति । किंभूताःस्रवन्तिगलन्तिअश्रूणियेषां तथादयासखाःदयालवः । हे मातःपरंकेवलंसुतशोकःपुत्रशोकएवसागरःसमुद्रस्त्वयैवदुरुत्तरोदुःखेनाऽपितरितुमशक्योभविष्यतीतिशेषः । ममनित्राणांक्षणमात्रंदुःखंत्वमतुयावज्जीवमितिभावः । मुहूर्तमात्रमितिकालाध्वनोरितिद्वितीया दयासखा इतिराजाहःसखिभ्यष्टच् । दुरुत्तरइतिखल् । नलोकेतिनिषेधात्त्वयेति तृतीया ॥ १३६ ॥

मदर्थसन्देशमृणालमन्थरःप्रियः कियद्दूरइतित्वयोदिते । विलोकयन्त्याःरुदतोऽथपक्षिणः प्रियेसकीदृग्भवितातवक्षणः ॥ १३७ ॥

मदर्थेति । हेप्रियेसतवक्षणःसमयःकीदृक्कीदृशोभविताभविष्यतिमि

तरामनिर्वाच्योभविष्यतीतिभावः । किंभूतायास्तवत्वयाइतिपूर्वोक्तप्रका रेणावचसिमत्सहचरान्प्रतिउदितेउक्तेसतिपृष्टेसतीत्यर्थः । अथानन्तर मेवपक्षिणोमत्सहचरान्रुदतोरोदनंकुर्वतोविलोकयन्त्याःपश्यन्त्याः । इति किंहेसहचरामह्यमिमेमदर्थेयेसंदेशमृणालेसंदेशश्चमृणालंचतयोर्विष येमन्थरोऽलसस्तत्रगन्त्वात्वमिदं मत्प्रियांब्रूहीतिसंदेशआज्ञा, मृणालंच मद्धत्यमेवंनूतोमत्प्रियःकिमद्दूरे पथिवर्ततेतदपिकियद्दूरंयस्येतिप्रिय विशेषणंवा । पूर्वत्राऽन्यपदार्थःपन्थाः । मदर्थेमृणालानिआनेयानीति सन्देशमृणालानितैर्मन्थरोभारबाहुल्यान्मन्थरइतिवा । मदर्थेत्यर्थेनति त्यसमासइतिसमासः ॥ १३७ ॥

कथंविधातर्मयिपाणिपङ्कजात्तवप्रियाशैत्यमृदुत्वशिल्पिनः । वियोक्ष्यसेवल्लभयेतिनिर्गता लिपिर्ललाटन्तपनिष्ठुराक्षरा ॥ १३८ ॥

कथमिति । हेविधातर्ब्रह्मन्मयिविषयेतवपाणिपङ्कजात्करकमला दित्यंभूतालिपिःकथंनिर्गता । किंभूतात्प्रियायाःशैत्यंशीतत्वंमृदुत्वं चतयोःशिल्पिनोनिर्मातुः । इतिकिंत्वंवल्लभयाप्रिययासहवियोक्ष्यसेवि योगंप्राप्स्यसीतिललाटंतापयन्तीतिललाटन्तपानिनिष्ठुराणिकठिनानिअ क्षराणियस्यांलिप्यामेतद्युक्तमित्यर्थः । कारणगुणाःकार्यगुणानारभन्तइ तिन्यायात् । करपङ्कजंशीतलंमृदुचतस्यदाहकठिनयोरुत्पादकत्वंविरुद्ध मितिभावः। ललाटन्तपेत्यत्राऽसूर्यललाटयोर्दृशितपोरितिखश् । अरुर्द्वि षदजन्तस्येतिमुम् ॥ १३८ ॥

अयिस्वयूथ्यैरशनिक्षतोपम ममाद्यवृत्तान्तमिमंबतोदिता । मुखानिलोलाक्षिदिशामसंशयं दशापिशून्यानिविलोकयिष्यसि ॥ १३९ ॥

अयीति । अयिप्रियेलोलाक्षिस्वभावतःशोकवशाच्चञ्चलनेत्रेत्वमद्य दिशांदशापिमुखानिअसंशयंनिश्चितमेवशून्यानिरिक्तानिविलोकयिष्यसि इत्यसिवतखेदेनांविभासर्वेशून्यमिवद्रक्ष्यसीतिभावः । किंभूतास्वयूथ्यैः स्ववर्ग्यैर्हंसैरशनिक्षतोपमंवज्रप्रहारसदृशमिमंमरणरूपंममवृत्तान्तंवार्ता

दिताबक्ता । भ्रूणोर्थग्रहणाद्वर्द्धिकमोतस्य वृत्तान्तंनुस्यंकर्मकर्मणीति द्वितीया ॥ १३९ ॥

ममैवशोकेनविदीर्णवक्षसा त्वयाविचित्राङ्गिवि पद्यतेयदि । तदाऽस्मिदैवेनहतोपिहाहतः स्फुटं यतस्तेशिशवःपरासवः ॥ १४० ॥

ममेति । हेविचित्राङ्गिसुन्दरगात्रिममैवशोकेनदुःखेनविदीर्णवक्षसा स्फुटितहृदययात्वयायदिविपद्यतेम्रियतेतदातर्हिहाखेदेअहंदैवेनहतोऽपिपुनर्हतोस्मियतःस्फुटंनिश्चितन्तेइतिअतिनयेवाऽल्पीयांसः शिशवोबालकाः परासवोमृताभवेयुर्मांविनात्वत्तोपितेषांजीवनंसंभाव्यतेतवमरणेसतितेपिमरिष्यन्तीतिपिष्टपेषणमेवदैवेनकृतंमतिभावः । एकशोकेनेतिपाठः ॥ १४० ॥

तवाऽपिहाहाविरहात्क्षुधाकुलाः कुलायकूलेषुवि लुठ्यतेषुते । चिरेणलब्धाबहुभिर्मनोरथैर्गताःक्ष णेनास्फुटितेक्षणाभम ॥ १४१ ॥

तवेति । हाहेतिखेदेहेप्रियेममतेबालकाबहुभिर्मनोरथैश्चिरेणबहुकालेनलब्धाःसन्तःक्षणेनगतामृतप्रायाइत्यर्थः । किंभूताःक्षुधाकुलास्तथाऽतिबाल्यादस्फुटितेक्षणाअप्रकाशितनेत्राः । किंकृत्वातवापिअपिशब्दान्ममापिविरहात्तेषु प्रसिद्धेषुकुलायकूलेषुस्वकृतेषुनीडतटेषु विलुठ्यलुठित्वा । पूर्वश्लोकार्थानुवादः ॥ १४१ ॥

सुताःकमाहूयचिरायचुङ्कृतैर्विधायकंप्राणिमुखा निकंप्रति । कथासुशिष्यध्वमितिप्रमील्यसः स्रु तस्यसेकाद्बुबुधेनृपाश्रुणः ॥ १४२ ॥

इतिप्रियांप्रत्युक्त्वासुतान्प्रत्याह । सुताइति । हेसुताःपुत्राजननींमाञ्चविनाचुङ्कृतैःशिशुपक्षिसूक्ष्मशब्दविशेषैश्चिरायकमाहूयाऽऽकार्यभक्ष्यंयाचयिष्यथंकंप्रतिकंप्राणिचलानिसुखानिविधास्यथोर्ध्वीःकथयिष्यथाऽपितुनकमपिप्रतितवयोर्मृतत्वाद्शिशुपक्षिणामियंजातिः । एवंसतिपरंपूर्वंकथासुशिष्यध्वंकथाशेषीभवध्यमित्युक्त्वासहंसःप्रमील्यमूर्च्छांप्राप्यस्रुतस्यकारुण्या

द्रुलितस्य नृपाश्रुणो नृपनेत्रवाष्पस्य सेकात्सेचनाद्ववृधे । मद्व्ययावचनं च गोष्ठीकरणं च कथेदानीं तु हंसस्य वचः । आहूय विधायेत्येतदन्तं शोकवशात्स्खलितोक्तिः । करुणारसबोधकगोष्ठीषु विषये चतुरा भविष्यथेति पितरं मातरं च विनायुष्मान्वस्तु मापकः शिक्षयेदिति वाक्यशेषो वा । शिष्यध्वमिति कर्मकर्तरि प्राप्तकाले लोट्तङ् । एवमहमपि कथासु शिष्ये" इत्युत्तरं चापत्यम् ॥ १४२ ॥

**इत्थममुं विलपन्तममुञ्चद्दीनदयालुतयाऽवनिपालः । रूपमदर्शि धृतोऽसि यदर्थं गच्छ यथेच्छमथेत्यभिधाय ॥ १४३ ॥**

इत्थमिति । अवनिपालो राजा दीनेषु दयालुस्तस्य भावस्तत्ता तयेत्यभिधायोक्त्वेत्थं पूर्वोक्तप्रकारेण विलपन्तं विलापं कुर्वन्तममुं हंसममुञ्चदत्यजत् । इति किं हे हंस यदर्थं धृतोऽसि तद्रूपमदर्शि दृष्टम् । अथातः परं त्वं यथेच्छं स्वेच्छया गच्छ यदर्थं धृतोऽसीत्यादिना धिगस्तु तृष्णेत्यादि परिहृतम् । स्पृहिगृहीत्यालुचि दयालुः । दोधकं वृत्तम् ॥ १४३ ॥

**आनन्दजाश्रुभिरनुस्रियमाणमार्गान् प्राक्शोकनिर्गमितनेत्रपयःप्रवाहान् । चक्रे स चक्रनिभचङ्क्रमणच्छलेन नीराजनां जनयतां निजबान्धवानाम् ॥ १४४ ॥**

आनन्देति । स हंसश्चक्रनिभं चक्राकारं चङ्क्रमणं भ्रमणं तस्य च्छलेन व्याजेन नीराजनामारार्तिकं जनयतां कुर्वतां निजबान्धवानां स्वीयमित्राणां प्राक् स्वग्रहणसमये शोकेन निर्गमितान्नेत्रपयःप्रवाहान्वाष्पप्रवाहान् स्वस्य मुक्तिसमये आनन्दजाश्रुभिरानन्दजनितवाष्पैरनुस्रियमाणमार्गान् अनुगम्यमानमार्गांश्चक्रे । धृते हंसे रुरुदुर्मुक्ते जहसुरित्यर्थः । बद्धमुक्तं पक्षिणं वेष्टयित्वा पक्षिणो भ्रमन्ति रुदन्ति चेति पक्षिजातिः । अन्यस्यापि कारागृहादिबद्धविमुक्तस्यानन्दाश्रुसहितैर्बान्धवैर्नीराजना क्रियते । चङ्क्रमणमिति क्रमे गतिकौटिल्ये यङन्ताद्भावे ल्युट् । वलयाकारापि गतिः कुटिलैव । यङोचि चेति चकारादन्यत्रापि यङो लुक् । सर्वसर्गसमाप्तिश्लोकेष्वानन्दपदप्रयोगादानन्द

दायकमिदं काव्यम्। वसन्ततिलकावृत्तम् ॥ १४४ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महाकाव्ये चारुणि नैषधीयचरिते सर्गोऽयमादिर्गतः ॥ १४५ ॥

श्रीहर्षमिति । श्रीहीरनामा पिता मामल्लदेवी माता च यं श्रीहर्षनामानं पुत्रं सुषुवे । किंभूतः श्रीहीरः कविराजानां राजिः पङ्क्तिस्तस्या मुकुटानामलङ्काररूपो हीरो हीराख्यं रत्नं किंभूतं जितेन्द्रियचयं जित इन्द्रियचय इन्द्रियसमूहो येन तस्य श्रीहर्षस्य चिन्तामणिमन्त्रस्य चिन्तनमनुध्यानं जपादिकं तस्य फले शृङ्गारभङ्ग्या शृङ्गाररचनाविशेषेण चारुणि रमणीये शृङ्गाररसप्रधाने नैषधीयं नलसंबन्धि चरितं चरित्रं यस्मिन्नेवंविधे महाकाव्येऽयमादिः प्रथमः सर्गो गतः समाप्तः ॥ चिन्तामणिमन्त्रचिन्तनसामर्थ्यादेवस्विधं काव्यं कृतमिति भावः शार्दूलविक्रीडितं वृत्तम् नैषधीयेति वृद्धाः । छन्दांस्यलङ्काराश्चात्र नोक्ताः । लक्षणग्रन्थगौरवभयात्तेसुधियाग्रन्थान्तरात् ज्ञातव्याः ॥ १४५ ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे प्रथमः सर्गः समाप्तः ॥ १ ॥

# ॥ अथ नैषधीयेचरिते ॥

## ॥ द्वितीयः सर्गः प्रारभ्यते ॥

अधिगत्यजगत्यधीश्वराद्थ मुक्तिंपुरुषोत्तमात्त
तः ॥ वचसामपिगोचरोनयःसतमानन्दमविन्द
तद्विजः ॥ १ ॥

हंसमुखेननैमीवर्णनार्थंद्वितीयंसर्गमारभते । अधिगत्येति । अथमो चनानन्तरंसद्विजोहंसस्तमानन्दंलोकोत्तरंहर्षमविन्दतलेभे ॥ तंकंयआन न्दोवचसामपिगोचरोविषयोनवर्णयितुमशक्यइत्यर्थः ॥ किंकृत्वाततस्त स्माज्जगत्यापृथ्व्याअधीश्वरात्स्वामिनः पुरुषोत्तमात्पुरुषश्रेष्ठान्नलाद्मु क्तिंमोचनमधिगत्यप्राप्य ॥ यथाद्विजोब्राह्मणोजगतिलोकेऽधीश्वरात्स र्वोत्कृष्टात्पुरुषोत्तमाच्छ्रीविष्णोः सकाशात्तत्प्रसादान्मुक्तिं मुक्तिसाध नंसंसारमोचकंज्ञानंप्राप्यवागगोचरमपिशब्दान्मनसोप्यगोचरमानन्दंब्र ह्मस्वरूपंप्राप्नोति ॥ यतोवाचोनिवर्तन्त,,इतिआनन्दंब्रह्मणोरूपम्"इति श्रुतेर्ज्ञानान्मोक्षइति । जगतीजगतिच्छन्दोविशेषेपिक्षितावपि । दन्त विप्राण्डजाद्विजाइत्यमरः । नगिह्रौरखइतिनिषेधात्षष्ठीसमासोन । पु रुषेषूत्तमइतिनिर्द्धारणसप्तमीसमासएवस्वरेविशेषदर्शनात् । लाभार्थोवि दिःस्वरितेन्मुखादिः । सर्गेस्मिन्नान्तेवियोगिनीवियाधवैतालीयकन्दः ॥ १ ॥

अधुनीतखगःसनैकधातनुमुत्फुल्लतनूरुहीकृताम् ।
करयन्त्रणदन्तुरान्तरेव्यलिखच्चञ्चुपुटेनपक्षती
॥ २ ॥

अधुनीतइति ॥ सखगोहंसस्तनुंशरीरंनैकधाऽनेकप्रकारमधुनीताऽक म्पयत् । किंभूतांतनुमुत्फुल्लामिविकसितानितनूरुहाणिरोमाणियस्यांसा अनुत्फुल्लतनूरुहाउत्फुल्लतनूरुहीकृताताम् । तथाचञ्चुपुटेनपक्षतीपक्ष

मूलेऽप्यलिखत् समीचकार ॥ किंभूते पक्षतीकरयन्त्रणेन नलहस्तनियमनेन धारणेन दन्तुरं निम्नोन्नतम् अन्तरं मध्यं ययोस्ते । तत्फुल्लसंफुल्लयोरुपसंख्यानमिति साधुः तच्छीकृते लिखितैः दन्तुरं दन्तुरमन्तरम् ॥ अत्र तूत्तमं तत्त्वमात्रम् । पक्षान्तरिरितितिः ॥ २ ॥

अयमेकतमेन पक्षते रधिमध्योर्ध्वगजङ्घमङ्घ्रिणा । स्खलनक्षण एव शिश्रिये द्रुतकण्डूयितमौलिरालयम् ॥ ३ ॥

अयमिति ॥ अयं हंसः स्खलनक्षण एव मोचनसमय एव आलयं नीडं शिश्रिये ऽभजत् । किंभूतः पक्षतेः पक्षमूलस्याधिमध्यं मध्यऊर्ध्वगोर्ध्वगामिनी जङ्घा यस्मिन् कर्मणि तद्यथा तथा एकतमेन एकेनाङ्घ्रिणा चरणेन द्रुतं शीघ्रं कण्डूयितो मौलिर्मस्तकं येन हंसजातिः । एकतमेनेति स्वार्थेऽपि तमवाद्य इति वचनात्तमप् ॥ ३ ॥

सगरुद्वनदुर्गदुर्ग्रहान्कटुकीटान्दशतः सतः क्वचित् । नुनुदे तनुकण्डुपण्डितः पटुचञ्चूपुटकोटिकुट्टनैः ॥ ४ ॥

स इति । स हंसः पटुकीटाद्यपनयने समर्थं चञ्चूपुटं तस्य कोटिरग्रभागस्तेन कुट्टनानि तैः कीटान् तनुकण्डु तन्वी स्वल्पा कण्डुर्यस्यां क्रियायां यथा भवति तथा नुनुदे स्फोटयामास । किंभूतः पण्डितः कण्डूपनयने कुशलः किंभूतान् गरुद्वनं पक्षवृन्दं तदेव वनं दुर्गं तत्र दुर्ग्रहान् घर्तुमशक्यान् अत एव कटुतीक्ष्णं पीडाकारि यथा तथा दशतः खादतः । तथा क्वचित् निर्द्धारयितुमशक्ये शरीरदेशे सतो विद्यमानान् । अन्योऽपि पर्वतदुर्गाद्दुर्ग्रहानुपद्रवकारकान्मारयेत् नुनुदे इति । नुनुदइति स्वरितेत्त्वादात्मनेपदम् ॥ ४ ॥

अयमेत्य तडागनीडजैर्लघु पर्यव्रियत त्रयशङ्कितैः ॥ उदडीयत वैकृतात्करग्रहजादस्य विकस्वरस्वरैः ५

अयमिति । अयं हंसस्तडागस्य नीडजाः पक्षिणस्तैरेत्यागत्य लघु शीघ्रं पर्यव्रियत वेष्टितः । अथानन्तरमस्य करग्रहजात् नलस्य हस्तग्रहणाज्जातात् वैकृताद्विकारात् शङ्कितैस्तैस्तैरेव विकस्वरस्वरैरुच्चस्वरैः पक्षिभिरुदडीय

ततश्चहीनमेषापिपक्षिजातिः । वैकृतदन्तुरपक्षत्वात् । तीर्थादौकरग्रह
णार्थंकैश्चित्कृष्णपरितोवेष्ट्यतेअथवालिग्रहणाजातकलहादेः शङ्कितैरुच्चैः
स्वरैर्गम्यते । लघुक्षिप्रमित्यमरः । वैकृतात्स्वार्थेऽण् । स्येशभावेतिवर
चिचिकस्वरः ॥ ५ ॥

वहतोबहुशैवलक्ष्मतान्धृतरुद्राक्षमधुव्रतंखगः ॥
सनलस्यकरंययौपुनःसरसःकोकनदभ्रमादिव ६

वहतइति । सखगोहंसःसरसःसकाशान्नलस्यकरंपुनर्ययौ । कस्मा
दिवकोकनदभ्रमादिवरक्तोत्पलभ्रान्तेरिव । सरसःपल्वलस्यकोकनदभ्र
मादिवेतिवा । नलकरस्यरक्तत्वात्कोकनदभ्रान्तिः । रक्तोत्पलंचहंसानां
प्रियमित्युत्प्रेक्षा।किंभूतस्यनलस्यसरसश्चबहूनिशिवसंबन्धीनिलक्ष्माणित्रि
पुण्ड्रादीनियस्यतस्यभावस्तत्तातांवहतोधारयतःशिवेभक्तिर्येषांतेशैवास्त
त्संबन्धीनिवा सरःपक्षेबहूनिशैवलानियस्यांसाबहुशैवलाक्ष्मापृथ्वीयस्मिं
स्तस्यभावस्तत्तातांवहतोधारयतःशिवंकल्याणंतत्संबन्धीनिशुभसूचकानि
लक्ष्माणिसामुद्रिकोक्तानिमत्स्यादीनियस्येतिवा । किंभूतंकरंधृतंरुद्राक्षा
णांमधुतुल्यंसमीचीनंव्रतंनियमोयेनशैवत्वात् । धृतारुद्राक्षाएवमधुव्र
ताभ्रमरायेनेतिवा । रुद्राक्षधारणंनियमेनकरोतिअन्यचिह्नधारणेनियमो
नेतिनपौनरुक्त्यम् । कोकनदमपिरुद्राक्षसदृशभ्रमरयुक्तंभवतीत्यथ
वारुद्रस्याक्षमाःक्षमंषष्ठ्याःसमासस्तान्धुनोतिकम्पयतिरुद्राक्षमधुःसचतद्
व्रतंचधृतंतद्येनेतिवाशिवद्रोहिपराभवकारिणमित्यर्थः । अनेनपौनरुक्त्य
शङ्काऽपिनिरस्ता । रवर्णंरुपशब्दोधृतारुद्यैस्तेधृतरुतःसशब्दाद् रोऽग्नि
स्तद्वद्वीचिपिङ्गलानिनेत्राणियेषान्तेराक्षा एवंभूताभ्रमरायत्रेतिवा अर्था
त्कोकनदंविशेषणम् । रशब्दोग्निवाचीआगमशास्त्रे „तथा रः पावकेचतीक्ष्णे
चेतिविश्वः । शैवेत्यत्रतस्येदंभक्तिरितिवाण् । रुदितिसंपदादित्वान्क्वि
प्राणाइतिबहुव्रीहौसक्थ्यक्ष्णोरितिषच् । रुद्राक्षमान्धुनोतीतिदीर्घान्ता
त्क्विप्चेतिक्विप् । व्रतविशेषणत्वादनपुंसकत्वाद्ध्रस्वत्वम् ॥ ६ ॥

पतगश्चिरकाललालनादतिविस्रम्भमवापितोनुसः
अतुलंविदधेकुतूहलंभुजमेतस्यभजन्महीभुजः ७

पतगइति । एतस्यमहीभुजोराज्ञोभुजंभजदाश्रयन्पतगोहंसोऽतुलमनु

पमंकुतूहलंविदधेचकार। पुनरागमनकौतूहलेहेतुःनुवितर्के चिरकाललालनात्सान्त्वनादतिविस्रम्भमतिविश्वासमवापितःप्रापितइव। अनुपश्चादेतस्यभुजंभजन्निितिवा। सन्निितिपाठेऽवापितःसन्। अन्योपिबहुकालपोषितोविश्वासंप्राप्तःस्वामिनंस्वगुणेनकुतुकिनंकरोति॥ ७॥

नृपमानसमिष्टमानसः सनिमज्जत्कुतुकामृतोर्मिषु॥ अवलम्बितकर्णशष्कुलीकलशीकंरचयन्नवोचत॥ ८॥

नृपेति। इष्टंमानसंसरोयस्यसहंसोऽवोचतोवाच। किंकुर्वन्कुतुकामृतोर्मिषुकौतूहललक्षणामृततरङ्गेषुनिमज्जद्बुडद्नृपमानसंनलान्तःकरणंत्रावलम्बितेकर्णशष्कुल्यावेवकलश्यौयेनैवंविधंरचयन्सावधानंकुर्वन्नित्यर्थः। राज्ञोमनःस्ववचनश्रवणोत्सुकंकुर्वन्नुवाचेतिभावः। अन्योपिकश्चिन्मज्जत्तद्दृष्टस्यकलशमवलम्बनन्दत्ते। कर्णाकारोखाद्यविशेषःशष्कुली मनएवमानसंप्रज्ञादित्वादण्। मानसंसरसिस्वान्ते,, अकृतंयत्नशेषःस्यात्पीयूषेसलिलइतिविश्वः॥ कलशीकंनद्यृतश्चेतिकप्नकपीतिह्रस्वनिषेधः॥ ८॥

मृगयानविगीयतेनृपैरपिधर्मागममर्मपारगैः॥ स्मरसुन्दरमांयदत्यजस्तवधर्मः सदयोदयोज्ज्वलः॥ ९॥

किमवोचदित्याह। मृगयेति। धर्मागमाधर्मशास्त्राणितेषांमर्मरहस्यंतस्यपारङ्गच्छन्तीति एवंभूतैरपिनृपैराजभिर्मन्वादिभिर्मृगयापापर्द्धिर्नविगीयतेननिंद्यतेऽपितुक्रियतएव। एवंसत्यपिहेस्मरवत्सुन्दरत्वंमांयदत्यजः सतवदयोदयोज्ज्वलोधर्मोदयायाउदयेनउत्पत्योज्ज्वलःशोभमानःसदयःसन्नयःशुभावहोयिधिर्यस्योपकरिष्यमाणत्वात् तथादयोज्ज्वलइतिवा दयोदयेनसहवर्तमानोऽतएवोज्ज्वलइतिवा मन्मोचनेदयांविनाऽन्यत्कारणंनास्तीत्यर्थः। स्मरेतिभिन्नम्। हेसुन्दरत्वंस्मरविचारयवाक्यार्थःकर्म। नृपैःक्रियमाणामृगयाधर्मागममर्मपारगैरपिननिन्द्यतेइतिवा। पारगैरितिअन्तात्यन्ताध्वेतिडः॥ ९॥

अबलस्वकुलाशिनोझषान् निजनीडद्रुमपीडिनः खगान् ॥ अनवद्यतृणार्दिनोमृगान्मृगयाघाय नभूभृतांघ्नताम् ॥ १० ॥

मृगयायाअनिन्दनेकारणमाह । अबलेति । मृगयाभूभुजामघायपापा यनभवति । कथमित्यतआह । किंभूतानांभूभुजामबलंनिर्बलंस्वकुलंयत्त दश्नन्तिएवंशीलान्झषान् मीनान्घ्नतांमारयतांतथानिजाःस्वीयायेनीडद्रु मानिवासस्थानवृक्षास्तान्पीडयन्तिएवंशीलान्खगान्पक्षिणःघ्नतां तथाअ नवद्यंनिर्मलंतृणंतदर्द्दन्तिपीडयन्तिएवंशीलान्मृगान्घ्नताम्अन्तःसंज्ञाभव न्त्येतेसुखदुःखसमन्विता,, इत्यादिस्मृतेस्तृणतृणादेरपिप्राणित्वात्तद्वध स्तुदोषायपरंदुष्टनिग्रहोराज्ञांधर्मएवेतिभावः । अबलान्यशिनोभक्षयन्ती तिकृत्स्यानांजातिस्वभावः ॥ अनवद्येत्यवद्यपर्य्येतिसाधु । पश्चाद्द्रु मीडित्सत्पुरुषोक्ता । पूर्वश्लोकेमृगयादोषाऽभावेस्मृतिप्रमाणमुक्त्वाऽत्रयु क्तिमप्यवदत् ॥ १० ॥

यदवादिषमप्रियंतव प्रियमाधायनुनुत्सुरस्मित त् । क्लमातपसञ्ज्वरंतरो रभिवृष्ट्याऽमृतमंशुमा निव ॥ ११ ॥

यदिति ॥ हेराजन्अहंतवयदप्रियंनिन्द्याद्यऽवादिषमुक्तवानस्मि प्रियमा धायकृत्वातदप्रियंनुनुत्सुर्निराकर्त्तुमिच्छुरस्मि । तत्रदृष्टान्तमाह अंशुमान् सूर्यस्तरोर्वृक्षस्यातपेनकृतंसञ्ज्वरंपीडामभृतंजलमभिवृष्ट्याभितोवर्षित्वाय थानुदतीत्यर्थः । अनेनदृष्टान्तेनातिशयितंप्रियंकरिष्यामीतिसूच्यते ॥११॥

उपनम्रमयाचितंहितंपरिहर्त्तुंनतवापिसाम्प्रतम् ॥ करकल्पजनान्तराद्विधेःशुचितः प्राप्यमिवाहिप्रति ग्रहः ॥ १२ ॥

उपेति । अयाचितमप्रार्थितमुपनम्रमुपस्थितंहितंप्रियंपरिहर्त्तुंत्यक्तुंतवा पिसार्वभौमस्यापिनसाम्प्रतंनयुक्तम् । हियतःकरकल्पमीषदूनमात्मःकरोज नान्तरमन्योजनोजनान्तरम्करकल्पजनान्तरंयस्यएवंविधाच्छुचितोनिर्मला च्छोभनाद्विधेर्दैवात्सम्प्रतिग्रहस्त्वयाऽप्राप्यमाप्तः । सर्वैर्हिशुभंदैवात्प्राप्य

तेयदुत्ववद्याज्वलितत्वेनापिनिराकर्त्तुंनशक्यतेतेषारेणाहि्द्दीयतेयद्वाविधिदैव स्यहस्तभूताज्जनान्तरादेऽतादृशः प्रतिग्रहोराज्ञोदेयोयन,,अयाचिताहृतं ग्राह्यमपिदुष्कृतकर्मणः,, इतियाज्ञवल्क्यः ॥ १२ ॥

पतगेनमयाजगत्पते रुपकृत्यैतवकिंप्रभूयते ॥ इ तिवेद्मिनतुत्यजन्तिमां तदपिप्रत्युपकर्त्तुमर्त्तयः

स्वगर्वंपरिहरति ॥ पतगेनेति । पतगेनपक्षिणामयाजगत्पतेर्भुवनाधि पतेस्तवनलस्योपकृत्यैउपकारायप्रभूयतेकिंसमर्थेनभूयतेऽपितुनेतियद्यपि वेद्मिजानामितदपितथापिप्रत्युपकर्त्तुंप्रत्युपकारार्थंमर्त्तयःकथमस्योपक रोमीतिउत्कण्ठादराः पीडावामांनतुनैवत्यजन्तिअसमर्थमपिप्रेरयन्ती त्यर्थः ॥ १३ ॥

अचिरादुपकर्त्तुराचरेदथवात्मौपयिकीमुपक्रि यां ॥ पृथुरित्थमथाणुरस्तुसान विशेषेविदुषामि हग्रहः ॥ १४ ॥

उपकर्त्तुंशक्यतेनवेतिविचारोमास्तुकिंतुउपकर्त्तुःप्रत्युपकर्त्तव्यमेवेतिवि धिरस्तीत्याह ॥ अचिरादिति । अथवापक्षान्तरेयःपुरुषःकश्चनोपकर्त्तुरुप कारकस्यात्मौपयिकीमात्मोपायभूतामात्मोपायादागतां वाआत्मोपायसा ध्यामित्यर्थः। एवंभूतामुपक्रियामुपकारमचिराज्झटित्याऽऽचरेत्कुर्याज्जी वनस्यसत्वरगत्वरत्वादचिरादित्युक्तम् । इत्थंविधौसतिसाचोपक्रिया पृथुर्महती अथवाअणुरल्पावाऽस्तुतिष्ठतुइहइति विशेषेमहत्त्वाल्पत्व लक्षणेविदुषांज्ञातॄणांग्रहोनिर्बन्धोनास्ति उपकारस्यमहत्त्वात्स्वौद्धत्यपरि हारएवतात्पर्यम् । उपायएवौपयिकीतिविनयादिषुउपायाद्ध्रस्वत्वंचेति पाठात्स्वार्थेठक्तिदन्तात्तत्रआगतइतिअण्णन्तत्वाट्टाढौवृद्ध्रस्वत्वम् । युक्तमौपयिकंलभ्यमित्यमरः ॥ १४ ॥

भवितानविचारचारुचेत्तदपिश्रव्यमिदंमदीरित म् । खगवागियमित्यतोपिकिंनमुदं धास्यतिकी रगीरिव ॥ १५ ॥

वचनप्रसङ्गार्थमाह । भवितेति । यद्यपिइदंमदीरितंमद्वचनंविचारचा

त्वविचारविषयेमीमांसासहंचेन्नभविताभविष्यति अहंलोकोत्तरमुपकारं करिष्यामीतिसत्यमेवतथापित्वंमिथ्याचेत्मन्यसेतथापिमदीयंवचःश्रव्यंश्रवणार्हंभवत्येव । विचारचारुचेत्कथंश्रव्यमित्याशङ्कायामाह । इयंखगवाक्पक्षिणोवाक्पत्त्रीमनुष्यभाषावदतीतिश्लोपिहेतोर्मेद्वचःकिंमुदंसन्तोषंनधास्यतिनकरिष्यतिअपितुकरिष्यत्येवेष्टसाधनत्वात् । अयिरेवार्थेः । केवशुकवागिव । श्रव्यमर्होर्थेऽचोयदितियत् । सार्वधातुकार्धधातुकयोरितिगुणः । धातोस्तन्निमित्तस्यैवेतिवान्तादेशः ॥ १५ ॥

सजयत्यरिसार्थसार्थकी कृतनामाकिलभीमभूपतिः । यमवाप्यविदर्भभूःप्रभुं हसतिद्यामपिशक्रभर्तृकाम् ॥ १६ ॥

सदेवाह॥ सइति ॥ किलप्रसिद्धौसभीमसञ्ज्ञकोभूपतीराजाजयतिसर्वोत्कर्षेणवर्त्तते । किंभूतोऽरिसार्थैवैरिसमूहैसार्थकीकृतमन्वर्थीकृतंनामस्वंसंज्ञायेन विभ्यत्यस्माद्वैरिणइतिभत्वन्येहलिभीमः भीमाद्योपादानइतिसाधुत्वम्। सकोविदर्भभूर्विराट्भूर्यंप्रभुंपतिमवाप्यशक्रभर्तृकामपीन्द्रपतिकामपिद्यान्दिवंहसतितत्तुल्याभवतीत्यर्थः । शङ्कतेतपस्विभ्योपीतिशक्रस्तद्भर्तृकाद्यौरहंतुभीमभर्तृकेतिहासहेतुः । शक्यतेजेतुमितिवा । तस्मात्कोपिनबिभेतीतिवा । अर्थेनसहवर्त्तमानंसार्थकंतेनसहेतितुल्ययोग,,इतिबहुव्रीहिः । वोपसर्जनस्येतिसमासः । शेषाद्विभाषेतिकप् । तद्धितः । शक्रभर्तृकांनद्यृतश्चेतिकप् ॥ १६ ॥

दमनादमनाक्प्रसेदुष स्तनयांतथ्यगरिस्तपोधनात् । वरमापसदिष्टविष्टपत्रितयानन्यसदृग्गुणोदयाम् ॥ १७ ॥

भैम्यालोकोत्तरेगुणोत्कर्षेमिथ्यात्वनिरासार्थंपुराणप्रसिद्धमितिहासंसूचयन्नाह ॥ दमनादिति । हेराजन्सभीमोदमनादेतन्नाम्नस्तपोधनाद्पर्वेरदानसमर्थाद्मनागऽल्पार्थे प्रसेदुषःप्रसन्नात्तथ्यगिरोऽप्रतारकादेवंभूतात्तनयांवरंकन्यालक्षणमभीप्सितमापप्राप्तवान् । किंभूतांदिष्टःकालोविष्टपंभुवनमनयोस्त्रिऽतयेकालत्रयेभुवनत्रयेचाऽनन्यसदृगन्यसदृशोनभवतिएवं

भूतः सौन्दर्यौदार्यादिगुणोदयोयस्यांतांभूतभविष्यद्वर्त्तमानकालेलोकत्र येपीदृक्सौन्दर्यादिगुणवतीकापिनास्तीतिभावः। दिष्टस्तेनैवमुनिनादत्तो विष्टपत्रितयेऽनन्यसदृशोगुणोदयोयस्यैतामितिवा। कालोदिष्टइत्यमरः। दमनात्संहितपिदमः संज्ञायामितिल्युः। प्रसेदुषः प्रसदेरनिटोभाषायांसद वसश्रुवइतिक्वसुः। अनन्यसदृक्सर्वनाम्नोवृत्तिमात्रइतिपुंवद्भावः॥ १७॥

भुवनत्रयसुभ्रुवामसौ दमयन्तीकमनीयतामदम्।
उदियाययतस्तनुश्रिया दमयन्तीतिततोऽभिधां न्यधे॥ १८॥

भुवनेति। यतोयस्मात्कारणादसौभीमतनयाभुवनत्रयेसुभ्रुवः सौन्दर्यव त्यस्तासांकमनीयतयायोमदः सौन्दर्येणयोगर्वस्तंतनुश्रियाशरीरसौन्दर्येण दमयन्तीग्लपयन्तीश्रमयन्तीतिवाउदियायोत्पन्ना। ततस्तस्मात्कारणाद्दम यन्तीतिअभिधांसार्थकंनामदधेबभार। भूसुधूभ्रस्जिभ्यश्छन्दसीतिक्युनि साधितस्यभुवनशब्दस्यबाहुलकाद्भाषायांप्रयोगः। अत्राणकर्मकादितिकर्त्रे भिप्रायेक्रियाफलेयत्परस्मैपदंविहितंतन्नैवनपादम्येत्यादिनानिषेधाद्दणा वकर्मकत्वेचतत्रैवचित्तवत्कर्तृकत्वाभावात्परस्मैपदाप्राप्तेर्निषेधाशङ्काया अभावाच्चकर्त्रभिप्रायेयथाप्राप्तंपरस्मैपदंभवत्येवेतिदमयन्तीत्यत्रप्रताधु ज्यते॥ १८॥

श्रियमेवपरंधराधिपाद्गुणसिन्धोरुदितामवेहि ताम्। व्यवधावपिवाविधोःकलां मृडचूडानिलयांनवेदकः॥ १९॥

श्रियमिति। हेराजंस्त्वंतांभैमींश्रियमेवलक्ष्मीमेवावेहिजानीहिपरमयं विशेषः गुणसिन्धोर्गुणसमुद्राद्धराधिपात्पृथ्वीपतेरुदितामुत्पन्नांलक्ष्मीसमु द्रादुत्पन्नाइयन्तुगुणसमुद्रादितिविशेषः। अप्रसिद्धस्य ज्ञापनंक्रियनेनतुप्र सिद्धस्येत्याह वाप्रसिद्धौ। व्यवधिर्व्यवधानंतस्यांसत्यामपिमृडोमहादेवस्त स्यचूडामौलिःसानिलयः स्थानंयस्याःसातांविधोश्चन्द्रस्यकलांकोनवेदजा नातिअपितुसर्वोपिवेत्त्यस्याऽप्रत्यक्षत्वेऽपितन्मौलिस्थितांचन्द्रकलांसर्वो पिवेत्तितथाव्यवधानेपित्वमपितांवेत्सीतिभावः। ष्णोलोटिहेरपित्वाद्दु

णाभावस्तजादित्वभावादेत्येधत्यूठ्श्विलिवृत्त्यभावेनात्तुणः । आङ्प्रस्नेपि ओमाङोश्चेतिपररूपमाप्तेरवेह्रीत्येवरूपम् ॥ १९ ॥

चिकुरप्रकराजयन्तितेविदुषीमूर्द्धनिसाविभर्त्ति यान् । पशुनाप्यपुरस्कृतेनतत्तुलनामिच्छतुचामरेणकः ॥ २० ॥

चिकुरेति । हेराजंस्तेचिकुरप्रकराःकेशसमूहाजयन्तिसर्वोत्कर्षेणवर्त्तन्ते । तेकेसाविदुषीपण्डितामैसीयान्चिकुरप्रकरान् मूर्धनिमस्तकआविभर्त्तिधारयतिआभरणंकरोतीतिवा । चामरेणसाम्येसतिसर्वोत्कृष्टत्वंकथमित्यत आह । पशुनाचमरसंज्ञकेनापिअपुरस्कृतेनपश्चात्कृतेनचामरेणतत्तुलनांते षांकेशानान्तुलनांसाम्यंकइच्छतुनकोपिचमराणांहीनस्थानधारणात्तुलनानास्ति । अथचयात्रायेमस्तकेप्रियन्तेपूज्यन्तेतेषांमूर्खेणापिअपूजितेना ञ्जात्रासहसाम्यंकोभिलष्येत् । अतस्तत्केशानांसर्वोत्कर्षता । विदुषीविदेः शतुर्वसुः । उगितश्चेतिङीप् । वसोःसंप्रसारणम् । तुलनाण्यासेलियुच् । संज्ञापूर्वकविधेरनित्यत्वाल्लघूपधगुणाभावः ॥ २० ॥

त्वदृशोर्जनयन्तिसान्त्वनां खुरकण्डूयनकैतवान्मृगाः । जितयोरुदयत्प्रमोलयोस्तदृक्षत्रेक्षण शोभयाभयात् ॥ २१ ॥

त्वदृशोरिति । हेराजन्मृगाःखुरेणकण्डूयनंकण्डूयनयनंतदेवव्याजस्तस्मात्त्वदृशोः स्वनेत्रयोःसान्त्वनामाश्वासनंजनयन्तिकुर्वन्ति । यतस्त्वामैस्याश्रवर्वैक्षणशोभयाविशालनेत्रशोभयाजितयोःपराभूतयोरतएवभयादिवोदयत्प्रमीलयोर्जायमानतन्द्रीकयोः । लुप्तोऽप्रेक्षायथाकेनचिज्जितं भीतमन्यमपिकश्चित्करपरामर्शादिनासान्त्वयतितथामृगाअपिस्वनेत्रेसान्त्वयन्ति । तंद्रीप्रमीलेत्यमरः । खर्वोह्रस्वश्ववामनइतिच । उदयदितिइंगतौ ॥ २१ ॥

अपिलोकयुगंदृशाऽपि श्रुतदृष्टारमणीगुणाश्रपि । श्रुतिगामितयादमस्वसुर्व्यतिभातेसुतरान्धरापते ॥ २२ ॥

अपीतिहेधरापते पृथ्वीपते दमस्वसुर्भैम्याः लोकयुगमपिमातृकुलपितृकुललक्षणंश्रुतिगामितयालोकाकर्णनविषयत्वेनजगत्प्रसिद्धत्वेनसुतरांव्यतिभातेपरस्परोत्कर्षेणविनिमयेनवाभासतइत्यर्थः । इदंभैमीमातृकुलमितिजगद्विख्यातत्वंतेनभैमीपितृकुलस्यशोभनत्वंतद्वद्भैमीमातृकुलेनाङ्गीकृतमितिविनिमयः। भैमीसंबन्धेनपितृकुलवन्मातृकुलंमातृकुलवच्चपितृकुलंशोभते सादृश्यन्तुतात्पर्यार्थः । तच्चसादृश्यंश्रुतिगामितयाविशेष्यते । तच्चश्रुतिगामित्वलक्षणंसादृश्यंमातृकुलस्यपितृकुलापेक्षयापितृकुलस्यचमातृकुलापेक्षयानतुदृगाद्यपेक्षया । एवंदृगादीनामपिसजातीयापेक्षयैवश्रुतिगामित्वलक्षणंसादृश्यमङ्गीकरणीयंनतुलोकयुगाद्यपेक्षया । तथादमस्वसुर्दृशावपिनेत्रेअपिश्रुतिगामितयाऽऽकर्णदेशविशालत्वेनातिसुतरांविनिमयेनभातेशोभेतेइतितद्विवचनंदक्षिणनयनस्यश्रुतिगामित्वेनयाशोभातांवामंनयनमङ्गीकरोतिवामनयनस्यश्रुतिगामित्वेनयाशोभातान्दक्षिणंनयनमङ्गीकरोतीत्यत्रापिविनिमयः श्रुतिगामित्वेनदक्षिणंवाममिववामंदक्षिणमिवेत्यत्रापिसादृश्यएवतात्पर्यंज्ञेयम् । तथादमस्वसुःसंबन्धिनःश्रुतदृष्टाःश्रुताःपुराणादौदृष्टाःकासुचित्सुन्दरीषुयद्वाकासुचित्स्त्रीष्वेवश्रुताःकासुचिद्दृष्टारमणीगुणाःस्त्रीगुणाःश्रुतिगामितयालोकाकर्णनविषयत्वेनव्यतिभातेविनिमयेनशोभन्तइतिबहुवचनम् । पुराणादावन्यस्त्रीसमवायेश्रुतास्तेकासुचिद्दृष्टास्तेभैम्यामेवभूयन्तइतिश्रुतानांदृष्टानांचस्त्रीगुणानांदमस्वसुःसंबन्धिनांसर्वेषांश्रुतिगामित्वंविद्यतेततःश्रुतानांस्त्रीगुणानांदमस्वसुःसबन्धिनांयच्छ्रुतिगामितयाशोभनन्तद्दृष्टैरङ्गीकृतम् । एवंदृष्टानांशोभनंतच्छ्रुतैरङ्गीकृतमित्यत्रापियथाकथंचिद्विनिमयः । यथाश्रुताभैमीसंबन्धिनःश्रुतिगामितयाशोभन्तेतथादृष्टाअपिभैमीसंबन्धिनःश्रुतिगामितयाशोभन्तइत्यत्रापिसादृश्यएवतात्पर्यम् । श्रुतदृष्टाअपिसर्वैगुणाभैम्यांविद्यन्तइतिभावः । सामुद्रिकशास्त्रेश्रुतानांपद्मिन्यादौदृष्टानामितिवायथाकथंचिज्ज्ञेयम् । विस्तरभयान्नलिख्यते ॥ श्रुतिःश्रोत्रेतथाम्नायेवार्त्तायांश्रोत्रकर्मणीतिविश्वः । गामीगम्यादिरावश्यकेताच्छील्येवाणिनिः । स्वतलोरितिपुंवत् । व्यतिपूर्वस्यभातेःकर्तरिकर्मव्यतिहारइत्यात्मनेपदम् । द्विवचनेसवर्णदीर्घत्वेकृतेबहुवचनेचात्मनेपदेष्वनतइतिझस्यादादेशेशब्लुक्

टेरेत्वम् । सर्वत्रवचनश्लेषः ॥ २२ ॥

नलिनंमलिनंविवृण्वती पृषतीमस्पृशतीतदीक्षणे । अपिखञ्जनमञ्जनाञ्चितेविदधातेरुचिगर्वदुर्विधम् ॥ २३ ॥

नलिनमिति ॥ तदीक्षणेभैमीनेत्रेपृषतीमञ्जनशलाकामस्पृशतीअप्राप्तेअञ्जमानम् जितेसतीनलिनंकमलंमलिनंस्वकान्त्यादूषितंविदधातेकुर्वाते । किंभूतेतदीक्षणेविवृण्वतीआत्मानंप्रकाशयन्तीप्रसारयन्तीत्रगुरीत्याविलोकमानेअञ्जनाञ्चितेअञ्जनपूरितेसाञ्जनेसतीतदीक्षणेखञ्जनमपिखञ्जरीटमपिरुचिगर्वेणकान्तिमदेनदुर्विधंदरिद्रंविदधाते । अवतंसीकृतंकमलंकटाक्षावलोकनप्रसृतयास्वकान्त्यामलिनंश्यामंविवृण्वतीकुर्वतीतयापृषतींहरिणीमस्पृशतीनेत्रविषयेऽगणयन्तीएवंविधेभैमीनेत्रेकज्जलाञ्चितेखञ्जनमितिपूर्ववत् । अञ्जनपूजनात्पूर्वंस्वकान्त्याकमलंजितंहरिणीनेत्रयोस्तुभैमीनेत्रशोभासम्भावनापिनास्ति । अञ्जनपूजनानन्तरंखञ्जनस्यभैमीनेत्रसदृशेनान्यस्येतिगर्वस्तद्रहितंकुर्वातइत्यर्थइतिवारुचिकान्तिविषयेदर्पेणरहितमितिवारुचीतिभिन्नंपदंखञ्जनोहिशुक्लकृष्णोऽतिचपलोऽतिचञ्चलश्चातस्तेनसाम्यसंभावनायांकज्जलदानानन्तरंतदधिककान्तित्वात्सोपिजितइतिभावः । मलिनंस्वगतंश्यामंगुणंविलोकनवशाद्विवृण्वतीप्रकाशयन्तीमलिनंरुचिगर्वदुर्विधंविदधातइतिवा । मलिनंश्यामंनलिनंनीलोत्पलंरुचिगर्वदुर्विधंविदधातेइतिवा । सविलासवीक्षणादशायाःपूर्वमेवनीलोत्पलंजितमित्यर्थः। तथाअसंकुचन्तीसतीपृषतींहरिणींरुचिगर्वदुर्विधांविदधातेनिर्निमेषत्ववेलायामपिताभ्यांहरिणीजिताकिंपुनः कटाक्षविक्षेपवेलायामितिवा । अस्मिन्पक्षेदुर्विधादुर्विधइतिनपुंसकमनपुंसकेनेतिपुंनपुंसकवद्भावौ। अज्यतेनेनेत्यञ्जनंतेनपूजितेइत्यनेनल्युडन्तस्याञ्जूव्यक्तिम्रक्षणेष्वितिधातोरर्थानुसारेण दृशोस्निग्धनीलरक्तसितवर्णकान्तिचाक्चक्यपोगःसूचितः । तथाचमलिनादिपुमध्वेक्षचित्कस्यचिद्गुरुत्वाद्दृशोस्तुपूर्वोक्तगुणसद्भावात्ताभ्यांनलिनादीनिजितानीतिभावः । मलिनंदूषितेकृष्णेइतिविश्वः । अञ्चितेअञ्चेःपूजायामितिइटिनाञ्चेःपूजायामितिनलोपनिषेधः । अञ्जनाञ्जितेइतिपाठेऽञ्जसीतिचौरादिकस्याञ्जय

तेर्निष्ठाञ्जनेनभासितइत्यर्थः ॥ २३ ॥

अधरं किल बिम्बनामकं फलमस्मादिति भव्यमन्वयम् । लभतेऽधरबिम्ब इत्यदः पदमस्या रदनच्छदं वदत् ॥ २४ ॥

अधरमिति । हेराजन्तस्यादमयन्त्यारदनच्छदमधरमोष्ठंवददिदमदधरबिम्बइतिअदःपदमेतत्पदंसुयन्तोयंशब्दः । इत्यतोहेतोर्भव्यंसमीचीनमन्वयंसंबन्धंलभतेप्राप्नोति । इतिकिंकिलयस्माद्बिम्बनामकंफलमस्मादोष्ठादधरंहीनंबिम्बापेक्षयाऽस्याधिकत्वात्वाद्यतस्माच्चाऽधरंबिम्बंयस्माद्बिम्बमपकृष्टंफलंयस्मादधरविम्बइतिबहुव्रीहिः । मतुअधरएवबिम्बमितिअन्यासान्तुअधरोबिम्बएवेतितत्पुरुषःकर्मधारयः । एतस्यास्तुबहुव्रीहौअर्थतःशब्दतश्चभव्य इत्यभैम्यधरोजितबिम्बइतिभावः ॥ २४ ॥

हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा । कृतमध्यबिलं विलोक्यते धृतगम्भीरखनीखनीलिमा ॥ २५ ॥

हृतेति ॥ इन्दुमण्डलंचन्द्रबिम्बंवेधसाब्रह्मणादमयन्तीवदनायभैमीमुखंनिर्मातुंहृतसारमिवगृहीतश्रेष्ठभागमिवकृतंमध्येबिलंछिद्रंयस्यएवंभूतंविलोक्यतेदृश्यतेलक्ष्यतइत्यर्थः । कलङ्केनहृतसारत्वमुत्प्रेक्षितम् । किंभूतंधृतागम्भीरखन्यांनिम्नगर्त्ते परभागेस्थितस्यखस्याकाशस्यनीलिमायेनकलङ्कोनभवतिकिंतुअयमाकाशनीलिमा । भैमीमुखंनिष्कलङ्कचन्द्रसारतुल्यमितिभावः । वदनायक्रियार्थोपपदस्येतिचतुर्थी । खनीतिकृदिकारादक्तिनइतिङीप् ॥ २५ ॥

धृतलाञ्छनगोमयाञ्चनं विधुमालेपनपाण्डुरं विधिः । भ्रमयत्युचितं विदर्भजाननीराजनवर्द्धमानकम् ॥ २६ ॥

प्रकारान्तरेणभैमीमुखस्यचन्द्राधिक्यमाह । धृतेति । ब्रह्माविधायचन्द्रोत्कामप्यसितत्रोत्प्रेक्षायिविधिर्ब्रह्माविधुंचन्द्रमुचितंयोग्यंविदर्भजाभैमीतस्याआननस्यानीराजनार्थमारात्त्रिकार्थंवर्द्धमानकमिववर्द्धमानकंशरावं

न्नमयति । किंभूतंविधुंभूतंलाञ्छनमेवकलङ्कएवगोमयान्त्रमंगोमयपूजनंयेनतथाआलेपनंपिष्टोदकम् । अल्पयद्इतिलोकेप्रसिद्धंतेनपावकुरंचन्द्रस्तन्मुखसादृश्यंनप्रापेतिभावः । गोमयलिप्तेनचूर्णादिचिह्नेनशरावेणादृष्टिदोषनिरासार्थंनीराजनाक्रियतइतिलोकाचारः ॥ शरावोवर्धमानकइत्यमरः ॥ २६ ॥

सुषमाविषयेपरीक्षणेनिखिलं पद्ममभाजितन्मुखात् । अधुनापिनभङ्गलक्षणं सलिलोन्मज्जनमुज्झति स्फुटम् ॥ २७ ॥

सुषमेति । कमलस्यशोभाधिकामैमीवदनस्येवेतिसुषमाविषयेपरीक्षणेदिव्येनशोधनेनिखिलंसमस्तंपद्मंपद्मजातंतस्मुखाद्भैमीमुखाद्भाजिपराजयंप्राप्तंयतः भङ्गलक्षणंपराजयचिह्नंसलिलोन्मज्जनंजलादुन्मज्जनमूर्ध्वंभयनमद्यापिनोज्झतिस्फुटंव्यक्तमेवनत्यजतिस्फुटमुत्प्रेक्षेवा । जलोन्मज्जनंतस्यस्वाभाविकंभङ्गलक्षणत्वेनोत्प्रेक्षितंस्फुटंविकासितमितिपद्मविशेषणंवा । जलदिव्येधनुर्धरमुक्तंबाणमादाययावदन्योधावन्नागच्छतितावद्यःसलिलेनिमग्नएवतिष्ठतिसविजयते । यस्तुततःपूर्वमेवोन्मज्जतिसपराजयतइतिभावः । सुषमापरमाशोभेत्यमरः । सुविदुर्निभ्यइतिषत्वम् । अभाजीतिकर्मकर्तरिचिण् । भञ्जेश्चचिणीतिनलोपः ॥ २७ ॥

धनुषीरतिपञ्चबाणयोरुदिते विश्वजयाय तद्भ्रुवौ । नलिकेनतदुच्चनासिके त्वयिनालीकविमुक्तिकामयोः ॥ २८ ॥

धनुषीइति । तद्भ्रुवौभैमीभ्रुवौविश्वजयायत्रैलोक्यजयायरतिपञ्चबाणयोर्धनुषीनउदितेप्रादुर्भूतेनेतिकाकायोजनीयम् । युइतिपाठेवितर्के । तथातस्याभैम्याउच्चनासिकेरन्ध्रद्वयोपलक्षितेनासिकेत्वयिविषयेनालीकौनलिकाप्रेर्यलघुशरौतयोर्विमुक्तिकामयोर्मोक्षाभिलाषिणोरतिकामयोर्नलिकेशराधारनल्यौनभवतोऽपितुनलिकेएवेततस्याउच्चनासिकंदृष्ट्वासर्वोपिकामाधीनोभवतीतिभावः । नालीकःशरशल्ययोरितिविश्वः । विश्वजयायेतुमर्थादितिचतुर्थी । रतिकामयोरितिशीलिकामिभिक्षाचरिभ्योणः ॥ २८ ॥

सदृशी तव शूर सा परं जलदुर्गस्थमृणालजिद्भुजा ।
अपि मित्रजुषां सरोरुहां गृहयालुः करलीलया श्रियः ॥

सदृशीति । हे शूर सा भैमी परं केवलं तव सदृशी योग्या । किंभूता जलल(?) घणं दुर्गं तत्र तिष्ठन्ति जलदुर्गस्थानि मृणालानि जयतः इति जितौ भुजौ यस्याः सा मृणालादपि कोमलौ गौरौ चेत्यर्थः । तथा करलीलया हस्तविलासेन मित्रं सूर्यं सुहृदं च जुषन्ते सेवन्ते मित्रजूंषि तेषां विकसितत्वात् सश्रीकाणामपि सरोरुहां कमलानां श्रियो गृहयालुर्ग्रहीतुकामा । त्वमपि जलदुर्गस्थवैरिजिद्भुजः सत्सुहृदां सत्सहायानामपि वैरिणां संपदः करलीलया बलिक्रियया गृहयालुरिति शूरस्य उभयोः साम्यम् । अपिरन्यश्चेत्यर्थे वा । मित्रं सुहृदि मित्रोऽर्क इति हैमी, बलि हस्तांशवः करा, लीला विलासक्रिययोरिति चा,ऽमरः । गृहिस्पृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् इत्यादिना ऽऽलुचि अयामन्तेत्यया देशे गृहयालुस्तद्योगेन लोकेति षष्ठीनिषेधाच्छ्रिय इति द्वितीया ॥ २९ ॥

वयसी शिशुतातदुत्तरे सुदृशि स्वाभिविधिं विधित्सुनी । विधिनापि न रोमरेखया कृतसीम्नी प्रविभज्य रज्यतः ॥ ३० ॥

वयसीति । हे राजँस्तस्यां सुदृशि सुनयनायां स्वाभिविधिं निजाभिव्याप्तिं विधित्सुनी कर्तुकामे अहमेव सर्वां तन्वं व्याप्स्यामि इति बाल्यं यौवनं च ते एवंतारुण्यमपि । एवंभूते शिशुता च तदुत्तरं च शिशुतायाबाल्यतः परं तारुण्यं च वयसी न रज्यतो ऽपि तु रज्यत एव संतुष्यत एव यावत् एव सा कन्या तस्यां स्थिरे इत्यर्थः । वयःसन्धौ वर्त्तमानास्तिष्ठतीत्यर्थः । किंभूते वयसी विधिना ब्रह्मणा दरे वर्त्तमानया रोमरेखया प्रविभज्य सम्यग्विभागं कृत्वा कृतसीमी कृतमर्यादे अपि । एवंविधे विभज्य न रज्यतः किं तर्हि संवलिते युगपदानुपूर्व्यं भजेते इति वा । बाल्यं वर्तते रेखया नूपेन वक्षस्य प्रारम्भ एव पुनः संवलिते इति तौ रम्यत्वाद्बाल्यं त्यक्तुं न शक्नोति तारुण्यं चागन्तुमिच्छतीति भावः । विधिना ब्रह्मणा रोमाणां रेखया कृतसीम्न्यपि सर्वत्राधिकायां शुचिमदीयं मदीयमिति कोपि द्विवदेते ॥ ३० ॥

अपि तद्वपुषि प्रसर्पतोर्गमिते कान्तिभरैरगाधताम्

म् । स्मरयौवनयोःखलुद्वयोःप्लवकुंभौभवतःकुचावुभौ ॥ ३१ ॥

अपीति । उभौकुचौस्तनौतद्वपुषिप्रसर्पतोःप्लवमानयोःक्रीडतोर्द्वयोः स्मरयौवनयोःकामतारुण्ययोःप्लवकुम्भौप्लवनार्थंकुम्भौतरणकुम्भौभवतः खलुउत्प्रेक्षायाम् । किंभूतेतद्वपुषिकान्तिपूरैःकान्तिप्रवाहैरगाधतामतलस्पर्शत्वंगमितेपि प्रापितेपिअगाधेह्रदेक्रीडाऽनुचितातत्रापिक्रीडतोरितिद्योतनार्थमपिशब्दः । पूर्वापेक्षयापिरम्यत्वेप्यर्थइतिवा । अगाधेह्रदेक्रीडतोर्द्वयोर्घटद्वयेनभाव्यम् । यद्यपिद्विवचनेनैवद्वयोर्लाभइति च लभ्यतेतथापिसदासहवासित्वपरस्परमिलितत्वप्रदर्शनार्थमुक्तमित्यवगन्तव्यम् ॥ ३१ ॥

कलशे निजहेतुदण्डजः किमुचक्रभ्रमिकारितागुणः । सतदुच्चकुचौभवत्प्रभासरचक्रभ्रममातनोतियत् ॥ ३२ ॥

कलशइति । न्यायशास्त्रे समवायिकारणमसमवायिकारणंनिमित्तकारणंचेति । यत्समवेतमेवकार्यमुत्पद्यतेतत्समवायिकारणं यथामृत्पिण्डोघटस्य । तत्रपूर्वश्लोकेकुम्भत्वारोपणेनतदुभयसाम्यमसहमानःकविःप्रभागुणाधिक्यप्रतिपादनेनतयोरुत्कृष्टतामारोपयितुंस्वमनुसेसापूर्वामुक्तिभङ्गिंप्रणीतवान् । असंभाव्यवस्तुदर्शनेपरसंमतिप्रश्नेकिमुशब्दः । हेराजन्चक्रभ्रमंकरोतिएवंशीलश्चक्रभ्रमकारीतस्यभावश्चक्रभ्रमकारितातल्लक्षणोगुणःस्वभावःकलशेघटेदृश्यतेसनिजस्यस्वस्यघटस्यहेतुर्निमित्तकारणंदण्डस्तस्माज्जातःकिमु । समवायिकारणगुणःकार्यगुणमारभतेनतुनिमित्तगुणोऽत्रनिमित्तगुणःकार्यगुणमारभतइतिअसंभाव्यमेतत्तथाकुत्रचिद्दृष्टमितिप्रश्नार्थःकिमु । नयासुदृष्टःकुत्रेत्यपेक्षायामाह । यद्यस्मात्सकलशस्तस्याभैम्याउच्चकुचौभवदुच्चकुचतांप्रपद्यमानःप्रभासरेणदीप्तिसमूहेनचक्रभ्रमंकुलालचक्रभ्रमणमर्थंद्रष्टुःकरोतिसुन्दरवस्तुदर्शनेनद्रष्टुर्भ्रमणंभवति । सूर्याद्यालोकावलोकनवत् । अथवसतदुच्चकुचौभवन्दीप्तिसमूहेनचक्रस्यलोकसमूहस्यवाभ्रमंमदजनितंमोहमातनोति । सर्वोपिस्तनकान्तिदर्शनेनकामान्धोभव

तीतिभावः । अथचकान्तिप्रवाहेचक्रवाकभ्रान्तिमातनोतिप्रवाहेचक्रवाकाभवन्ति । अतोभ्रमकारणत्वाच्छब्दच्छलाच्चचक्रभ्रमकारितागुणोघटेविद्यते मुक्ताभिर्नकांतिमत्त्वेनचतत्कुचौघटचक्रवाकतुल्याविति भावः । निजःसहजश्चासौहेतुश्चसमवायिकारणमितियावत् तादृशोनभवतीत्यनिजहेतुर्निमित्तकारणंतादृशाद्दण्डाज्जातःकिञ्चित्युत्प्रेक्षाआक्षेपोवा । दण्डगुणःकलशेविद्यतइत्यत्रकिंप्रमाणमित्याशङ्कायांशब्दच्छलेनहेतुतामाह । सइति । यद्यस्मादितियावदितियथामतिव्याख्येयम् । चक्रोगणेचक्रवाकेचक्रंसैन्यरथाङ्गयोः । ग्रामजालेकुलालस्यभाण्डेराष्ट्रास्त्रयोरपीतिविश्वः ॥ ३२ ॥

भजतेखलुषण्मुखंशिखीचिकुरैर्निर्मितबर्हगर्हणः।
अपिजम्भरिपुंदमस्वसुर्जितकुम्भःकुचशोभयेभराट् ॥ ३३ ॥

भजतइति । खलूत्प्रेक्षायाम् । दमस्वसुश्चिकुरैःकेशैर्निर्मिताकृताबर्हगर्हणापिच्छभारतिरस्कारोयस्यसशिखीमयूरःषण्मुखंकार्त्तिकेयंभजतेसेवतेप्रसङ्गतएतदुक्तम् । तथादमस्वसुःकुचशोभयास्तनभारेणजितौकुम्भौगण्डौयस्यसइभराट्करिणांराजाऐरावतोपिजम्भारिमिन्द्रंसेवते । भैम्याःकेशसाम्यंस्तनसाम्यंचदेवाराधनेनप्राप्नुकामौवैरनिर्यातनार्थंवातौभजतइतिभावः । अधिकेनजितोन्यमधिकंभजते । चिकुरैरितिबहुत्वंसूचयित्वाषण्मुखत्वात्स्कन्दस्यकेशसंभावनयातदाश्रयणंशिखिनः स्कन्दाश्रयणंयुक्तम् । जभिजृभीगात्रविनामे । जम्भतेगात्रविनामंकरोतीतिजम्भस्तद्रिपुर्जम्भादधिकोतएवसेव्यते । अस्यागात्रविलासकारिणीकुचशोभाजम्भतुल्येतिहेतोस्तदधिकमिन्द्रंसेवतइति ॥ ३३ ॥

उदरंनतमध्यपृष्ठतास्फुरदङ्गुष्ठपदेनमुष्टिना ।
चतुरङ्गुलमध्यनिर्गतत्रिवलिभ्राजिकृतंदमस्वसुः ॥ ३४ ॥

उदरमिति । हेराजन्दमस्वसुर्भैम्याउदरंमुष्टिनाकृतंविधिनेत्यर्थात् । किंभूतेनमुष्टिनानतोनिम्नोमध्योयस्यैवंविधंपृष्ठंयस्योदरस्तस्यभावस्तत्तातयास्फुरत्तंप्रकटीभवदङ्गुष्ठपदमङ्गुष्ठस्थानंयस्यतेन । किंभूतमुदरंचतसृणा

ङ्गुलीनांसध्यान्निर्गतानिसृतानिस्त्रोवलयस्तानिभिन्नोजतेतस्त्रीसंपृष्ठम ध्येनिमत्वमङ्गुष्टनिवेशादुदरेत्रिवलियुक्तत्वंचतुरङ्गुलिधारणाञ्चतसृणांत्री णयेवान्तराणिभवंति । चतुरङ्गुलमितितत्पुरुषस्येत्यच् ॥ ३४ ॥

उदरंपरिमातिमुष्टिना कुतुकीकोपिदमस्वसुः किमु । धृतत्त्नुतुरङ्गुलीव यद्वलिभिर्भातिसहेमकाञ्चिभिः ॥ ३५ ॥

प्रकारान्तरेणोदरमेववर्णयति । उदरमिति । कोपिकुतुकीदमस्वसुरुदरंमुष्टिनाद्यतयापरिमातिध्यवच्छिनत्तिकिमुत्प्रेक्षायांयद्यस्मात्तदुदरं सहेमकाञ्चिभिः सुवर्णमेखलासहिताभिर्वलिभिःकृत्वाधृतास्तस्यमुष्टेश्चत स्रअङ्गुलयोयेनएवंविधमिवभातितिस्त्रोवलयश्चतुर्थीहेमकाञ्चीचतस्त्रोङ्गु लयस्तस्यमुष्टेरित्यर्थः । कोव्रस्ताअपिरेवार्थः । अस्त्रैवेत्यर्थः ॥ ३५ ॥

पृथुवर्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया । त्रिधिरेककचक्रचारिणं किमुनिर्मित्सतिमान्मथंरथम् ॥ ३६ ॥

पृथिवति । विधिर्ब्रह्मामान्मथंकामसंबन्धिनंरथंनिर्मित्सतिनिर्मातुमि च्छतिकिमुत्प्रेक्षायाम् । किंभूतोविधिर्मिहिरःसूर्यस्तस्यस्यन्दनोरथस्त स्यशिल्पंनिर्माणंतस्यशिक्षयाअभ्यासेनपृथुंमहान्तंवर्तुलंतस्याभैम्यानित म्बंकरोतीतिकृत । किंभूतंरथमेककेनाऽसहायेनचक्रेणचरतिएवंशीलंसू र्यरथैकचक्रनिर्माणाभ्यासेनब्रह्मणाभैमीनितम्बःकृतःसकामरथत्वेनोत्प्रे क्षितः । नितम्बदर्शनात्मदनप्रादुर्भावोभवतीतिभावः । निर्मित्सतिमा ङःसनिमीमेत्यादिनाचइत् । अत्रलोपोभ्यासस्येत्यभ्यासलोपः ॥ ३६

तरुमूरुयुगेनसुन्दरी किमुरम्भापरिणाहिनापरम् । तरुणीमपिजिष्णुरेवतां धनदापत्यतपःफलस्तनीम् ॥ ३७ ॥

तरुमिति । हेराजन्सुन्दरीभैमीपरिणाहिनाविशालेनऊरुयुगेनोरुद्व येनतरुंवृक्षरूपारम्भांकदलींपरंकेवलंजिष्णुर्जयनशीलेतिकिमुकिंवक्तव्यंअ पितवेवंनवक्तव्यंकिंतुतरुणीमप्रितांरम्भांअप्सरोविशेषमपिजिष्णु रेव ।

किंभूतां धनदापत्यस्य कुबेरस्य पुत्रस्य नलकूबरस्य तपसः फलं स्तनौ यस्या यद्यनेन नलकूबरेण तपः कृतं तां रम्भां कदलीमप्यूरुयुगेन जितवतीत्यर्थः । द्वयेन द्वयं जितम् । परिणाहो विशालतेत्यमरः । रम्भा कदल्यप्सरसोरिति विश्वः । मलोके तिनिषेधात्तद्भिलिङ्द्वितीया । सुन्दरीगौरादित्वान्ङीप् ॥ ३७ ॥

जलजे रविसेवयेव ये पदमेतत्पदतामवापतुः । ध्रुवमेत्य रुतः सहंसकीकुरुतस्ते विधिपत्रदम्पती ३८

जलजइति । ये जलजे कमले सूर्यस्य सेवयैव एतस्या भैम्याः पदतां चरणत्वं पदं पुनः स्थानं व्याजं च अवापतुः प्रापतुरिव ध्रुवमुत्प्रेक्षे । विधिपत्रदम्पती ब्रह्मवाहनपक्षी जायापती हंसस्त्रीपुंसौ कर्त्तारौ ते जलजे कर्मणी एत्य गत्वाऽऽत्यरुतः शब्दाद्ध्रुवं निश्चयेन सहंसकीकुरुतो हंसवत्स्थिते कुरुतो हंसरवतुल्याच्छिञ्जिताद्धेतेर्हंसमेते इत्यनुमीयेते इत्यर्थः । हंसकः पादकटकस्तत्सहिते नूपुरयुक्ते कुरुतः । विधिहंसमिथुनमेव नूपुरत्वेन परिणतमित्यर्थः । रविसेवया पद्मयोर्भैमीपदत्वप्राप्तिर्विधिसेवया हंसानामेतच्चरणस्थानप्राप्तिरित्यर्थः । विधिपत्रदम्पती ये पद्मे एत्य रुतः शब्दं कुरुतः । रुशब्दे । तयोः सहंसे कुरुत इति वा । कमलस्य हंससंयोगो युक्तो भैमीपदयोः पद्मादप्युत्कृष्टत्वाद्धंसरवसमानशिञ्जितयोगाच्चेयमुत्प्रेक्षा । सुन्दरतरे सुकुमारे च मृगताक्षचरणे स्वीयहंसमिथुनमेव तद्भूषणत्वेन कल्पितं तादृशस्यान्यस्य भूषणस्याभावादिति च ध्वनिः । हंसकः पादकटक इत्यमरः । पक्षेशेषाद्विभाषेति कप्तत्प्राप्तिः । रुत इति पक्षे चंपदादिः ॥ ३८ ॥

श्रितपुण्यसरःसरित्कथं न समाधिक्षपिताखिलक्षपम् । जलजं गतिमेतु मञ्जुलां दमयन्तीपदनाम्नि जन्मनि ॥ ३९ ॥

श्रितेति । जलजं कमलं दमयन्तीपदमेव चरणमेव नाम यस्य एवंभूते जन्मनि जन्मान्तरे मञ्जुलां रम्यां गतिं गमनं पुण्यश्लोकप्राप्तिरूपां दशां च कथं न एतु प्राप्नोतु । किंभूतं श्रितानि पुण्यानि श्रेयस्कराणि सरांसि श्रेयस्कारिण्यो लक्ष्यये न तत् तया समाधिना मुकुलीभावेन सम्यगाधिना क्षपिता अतिवाहिता अखिलाः क्षपा रात्रयो येन अन्योपि सेवितपुण्यतीर्थः समाधिना योगाङ्गेनातिवा

दिलवसस्वरासिर्जन्म त्वरे चत्तमादर्शांप्राप्नोति तद्वद्वैमीपदप्राप्तिर्जलत्व ॥ ३८ ॥

सरसीः परिशीलितुं मया गमिकर्मीकृतनैकनीवृता । अतिथित्वमनायि सादृशोः सदसत्संशयगोचरोदरी ॥ ४० ॥

एतादृशीसाकथंत्वयाज्ञातेत्यतआह ॥ सरसीरिति ॥ सरसीः सरांसि परिशीलितुमवगाहितुंगमेर्धातोः कर्मीकृतागतिविषयीकृतानैकाअनेकानी वृतादेशायेनैवंविधेनमयासाभैमीदृशोरतिथिः वंदृष्टिगोचरत्वमनायिप्रापी तादृष्टेत्यर्थः । किंभूतासदसतोरस्तिनास्तीतिसंशयस्तस्यगोचरोविषयउद रंयस्याःसाअत्यन्तंकृशोदरीतिभावः । तेनक्वापिदेशेतादृशीनदृष्टेतिभा वः । नीवृज्जनपदोदेशइत्यमरः । सरसीरितिगौरादित्वान्ङीष् । शीले र्भ्वादिकातुमुन् । नीवृत्नहिवृतीतिदीर्घःनासिकोदरेतिङीष् ॥४०॥

अत्र धृत्यादिवोपियौवतैर्न सहाधीतवतीमिमामहम् । कतमस्तुविधातुराशये पतिरस्यावसतीत्यचिन्तयम् ॥ ४१ ॥

अत्रेति । हेराजन्नहमित्यचिन्तयंविचारितवानस्मि । किंकृत्वादिवो पिस्वर्लोकस्यापियौवतैः स्त्रीसमूहैः सहमाधीतवतीनाध्ययनकर्त्रीमिमाभै मीमत्रधृत्यनिश्चित्यसदृशैः सहपठ्यतेकिलइतिकिंविधातुर्ब्रह्मणआशयेम नसिअस्याभैम्याः कतमस्तुकोवापतिर्वसतिविंशतइतिविधात्रासुरसुन्दरी भ्योपिसुन्दर्याभैम्यायोग्यःकोमत्तोविनिर्मितइतिचिन्तितवानित्यर्थः । यौ वतैरितियुवतिशब्दात्समूहिकेभिक्षादित्वादणिभस्याढइतिप्राप्तःपुवद्भा वोभिक्षादौयुवतिशब्दपाठसामर्थ्यान्नभवतीतिकेचित् । अत्रन्तादसुदात्ता देरञित्यपरे । नसहाधीतवतीमितिसुप्सुपेतिसमासः । कतमइतिक तरकतमौजातिपरिप्रश्नेद्वतिवचनसामर्थ्यात्स्वार्थेपिडतमच् ॥ ४१ ॥

अनुरूपमिमंनिरूपयन्नथ सर्वेष्वपिपूर्वपक्षताम् । युवसुव्यपनेतुमक्षमस्त्वयि सिद्धान्तधियंन्यवेशयम् ॥ ४२ ॥

अन्विति । इममस्याभैम्याअनुरूपंरूपयोग्यंपतिंनिरूपयन्नयंवायोग्योयंवायोग्यइति विचारयन्नपिअथपश्चात्सर्वेष्वपियुवसुतरूणेषुपूर्वंपश्चात्तामयोग्यरूपत्वंप्रपन्नेतुनिराकृतेसत्यमोऽस्यार्थः सम्यक्त्वयिसिद्धान्तधियंभैमीरूपानुरूपत्वबुद्धिंनिःसपत्नं निश्चयंग्यवेशयंनिवेशितवान् । अथपश्चात्त्वमीतिवा । त्वत्तोन्यस्तद्योग्यःकोपिरूपेणोननिश्चतइति । अन्यत्रापिपूर्वपक्षापेक्षयासिद्धान्तस्यबलवत्त्वम् ॥ ४२ ॥

अनयातवरूपसीमया कृतसंस्कारविबोधनस्य मे । चिरमप्यवलोकिताद्यसा स्मृतिमारूढवती शुचिस्मिता ॥ ४३ ॥

अनयेति । चिरंचिरकालमवलोकितापिशुचिस्मितारम्यहासाभैमीअद्यमेस्मृतिंस्मृतिपथंआरूढवतीप्राप्ता । किंभूतस्यमे तवानयादृश्यमानयारूपसीमयालावण्यमर्यादयाकृतंजनितंसंस्कारविबोधनंपूर्वाहित भावनाख्यसंस्कारसमुद्बोधोयस्यतद्रूपयोग्यत्वात्त्वद्रूपदर्शनेसास्मृतेत्यर्थः । सदृशदर्शनेहिस्मृतिर्भवति । सदृशादृष्टचिन्ताद्याःस्मृतिबीजस्यबोधकाइति । रूपसीमयेतिह्राबुभाज्यामितिह्रापितृतीया ॥ ४३ ॥

त्वयिवीरविराजतेपर दमयन्तीकिलकिञ्चितंकिल । तरुणीस्तनएवदीप्यते मणिहारावलिरामणीयकम् ॥ ४४ ॥

त्वयीति । किलेतिसंभावनायांहेवीरहेशूरकिलदमयन्त्याःकिलकिञ्चितंशृङ्गारचेष्टाविशेषस्त्वयिपरंकेवलंविराजते विशेषेणशोभतेवीरस्यैवशृङ्गारित्वंयुज्यतेवीरानुरागित्वस्त्रियइतिसूचनार्थंवीरेतिपदम् । अर्थान्तरन्यासंदृष्टान्तत्वेनाह । मणिहारावलेर्मुक्ताहारसमूहस्यरामणीयकंसौन्दर्यंतरुणीस्तनेतरुण्याएवकुचेशोभतेनतुवृद्धयोषितः । क्रोधाश्रुहर्षभीत्यादेःसङ्करःकिलकिञ्चितमित्यालङ्कारिकाः । रामणीयकंकामनीयकवत् ४४

तवरूपमिदंतयाविनाविफलं पुष्पमिवावकेशिनः । इयमृद्धधनावृथावनीस्वननीसंप्रवदत्यिकापिका ॥ ४५ ॥

पुनरुत्कण्ठार्थमाह । तवेति । हेराजंस्तवेदं द्वयमात्मननुपमतयारू पंभैम्याविनाविफलंनिरर्थकंकस्यक्रिमिवअवकेशिनोवन्ध्यवृक्षस्यविफलंफ लरहितंपुष्पमिवतद्यथानशोभते। अथवा अवकेशिनोसुपिष्टतमुपष्टस्यशिर सिधार्यमाणंपुष्पंयथाविफलं तयाविनानकेवलंरूपंकिंयत्रद्वयनापूर्णयना द्वयमवमीपुष्प पिद्वयायर्थवतयासंभवद्त्नः कूजन्तःपिकाः कोकिलाय स्यांसावन्यपिस्वयमारोपितालिविलासवाटिकाऽपिका मकापिभैमीप्राप्त्यभा वेसर्वमेतन्निरर्थकमित्यर्थः। वन्ध्योफलोऽवकेशीचेत्यमरः। वमीतिगौरा दित्वान्ङीष्। अव्यक्तवाकृत्वा संभवदित्यत्रवदेःशता ॥ ४५ ॥

अनयासुरकाम्यमानया सह्योगःसुलभस्तुनत्व या । घनसंवृतयाम्बुदागमे कुमुदेनेव निशाकर त्विषा ॥ ४६ ॥

अहमेवैतद्रूपयोग्यस्तर्हि सुलभाकथमित्यतआह । ततःसुरैर्देवैरपिका म्यमानयाऽभिलष्यमाणयाऽनयाभैम्यासह्योगः संबन्धस्तुत्वयानसुलभः सुप्रापः। तत्रयुक्तिमाह। कयाकेनेवअम्बुदागमेवर्षाकालेघनसंवृतयामे घच्छन्नयानिशाकरस्यचन्द्रस्यत्विषादीप्त्यासहसंबन्धः कुमुदेनेवसुप्रापोन प्राप्यतेपरंतुदुः खेनमदुपायेनसाप्राप्यालभ्यत्वात्त्वय्येवतस्याअनुरागमु त्पाद्यत्वामेवयथाभजेत्तथाकरिष्यामीतिभावः। यथावर्षासुमेघानामतिप्र तिबन्धकतयाकुमुदेनचन्द्रज्योत्स्नादुष्प्रापापिवायुनादैवान्मेघनिराकरणे प्राप्यतेतथेत्यर्थः। सुलभःखलर्थत्वेनषष्ठीनिषेधात्त्वयेतितृतीया ॥ ४६ ॥

तदहंविदधेतथातथा दमयन्त्यासविधेतवस्तव म् । हृदयेनिहितस्तयाभवानपिनेन्द्रेणयथापने नीयते ॥ ४७ ॥

व्यञ्जितमर्थंव्यक्तीकुर्वन्निगमयति। तदिति । तत्तस्माद्योगस्यसान्तराय त्वात्कारणादहंदमयन्त्याःसविधेसमीपेतवस्तवंस्तुतिंतथातथातेनतेन प्रकारेणविदधेकरिष्यामि। तयाभैम्याहृदयेमनसिनिहितोऽवधृतोभवा न्यथायेनप्रकारेणइन्द्रेणापिनापनीयतेदूरीक्रियतेकिंपुनर्मनुष्येण। इन्द्रा देरप्यधिकतयात्वंवर्णनीयः। विदधेअपनीयतेइतिचवर्तमानसामीप्येव र्तमानवत्प्रत्ययः। विदधेआशंसायांभूतवद्वा ॥ ४७ ॥

तवसम्मतिमेव केवलामधिगन्तुं धिगिदं निवेदितम् । ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम् ॥ ४८ ॥

अनौचित्यं परिहरति । तवेति । इदं दमयन्तीयोजनं तवानुमतं नवेति केवलां सम्मतिमनुमतिमधिगन्तुमेव प्राप्तुमित्यर्थः । इदं निवेदितं विज्ञप्तिम् । हि यस्मात्साधवो महान्तो निजोपयोगितां निजोपकारितां फलेन फलनिष्पत्त्या ब्रुवते न तु कण्ठेन कण्ठस्थेन वचनेन तव केवलां संमतिमेवाधिगन्तुं ज्ञातुमेवेदं निवेदितं न स्ववचनं तथापि निज्ञमनोपकारो न कर्त्तव्य इति केनापि नोच्यते इति वा भवत्संमतिं ज्ञातुमेव इदं वचनं यदि संमतिं भवत्कर्तृकमात्मसंमानं प्राप्तुं चेद् वचनं तर्हि धिक् निंद्यमेव यतः साधवो नैतादृशा भवन्तीति वा ॥ ४८ ॥

तदिदं विशदं वचोमृतं परिपीयाभ्युदितं द्विजाधिपात् । अतितृप्ततया विनिर्ममे स तदुद्गारमिव स्मितं सितम् ॥ ४९ ॥

तदिति । स नलः द्विजाधिपात् द्विजश्रेष्ठाद्धंसाद्ब्राह्मणाद्वा अभ्युदितं निर्गतमिदं पूर्वोक्तं विशदं प्रव्यक्तं धवलं च वचोलक्षणममृतं परिपीय सादरमाकर्ण्य पीत्वाऽतितृप्ततयाऽतिहृष्टत्वेन सितं श्वेतं स्मितं तस्य पीतस्यामृतस्योद्गारमिव निर्ममे चकार श्वेतस्य श्वेत एवोद्गारो भवतीति सितपदम् । अन्योऽप्यतितृप्तोऽजीर्णतयाऽऽदुद्गारं करोतीति सोऽथ पक्षस्त्वास्मितो भवति । साधवः स्मितभाषिणो भैमीप्राप्तिसंभावनाज्जातहर्षोद्गारस्मितम् । उद्गार इतिवन्धोऽयं इतिघम् ॥ ४९ ॥

परिमृज्य भुजाग्रजन्मना पतगं कोकनदेन नैषधः । मृदुतस्य मुदेऽकिरद्गिरः प्रियवादामृतकूपकण्ठजाः ॥ ५० ॥

परीति । नैषधो नलस्तस्य हंसस्य मुदे हर्षाय गिरो वाचो मृदुकोमलं यथा तथाऽकिरदुवाच । किं कृत्वा भुजाग्रे बाहुप्रान्ते जन्मोत्पत्तिर्यस्य तेन कोकनदेन रक्तोत्पलेन करेणेत्यर्थः । पतगं परिमृज्य संस्पृश्य । किंभूता गिरः प्रियवादामृतं स्तुतिवचोलक्षणममृतं तस्य कूपश्चाकर इत्यर्थः । एवंभूतो यः कण्ठ

स्तस्माज्जाताःमञ्जुलंसरसंवचश्चवाचेतिभावः । मृदुपरिसृज्येतिवा ॥५०॥

न तुलाविषयेतवाकृतिर्नवचोवर्त्मनिते सुशील
लता । त्वदुदाहरणाकृतौगुणा इतिसामुद्रिकसा
रमुद्रणा ॥ ५१ ॥

नेति । हेहंसतवाकृतिःस्वरूपंतुल्यतेइतितुलाउपमेयंतल्लक्षणेविषयेनउ
पमानाभावात्किंतूपमानमेवतुल्यतेऽनयेतितुलोपमानंतस्यविषयेलक्ष्येउ
पमेयमध्येनतिष्ठतिकिंतूपमानमेवेतिवा । तथातेसुशीलतासुस्वभावत्वंसु
वृत्तत्वंवावचोवर्त्मनिवाग्गोचरेन वर्णयितुंनशक्यतइत्यर्थः । तथाआ
कृतौगुणाइतियत्रा कृतिस्तत्रगुणाभवन्तीतिसामुद्रिकशास्त्रस्यसारोरहस्य
स्तस्यमुद्रणानियमनासंग्रहइतियावत् सात्वदुदाहरणंदृष्टान्तोयस्याः ।
अन्यथासानिर्विषयास्यादितिभावः । तयाकृतिंगुणांश्चदृष्ट्वासामुद्रिकशास्त्र
कारैर्यत्राकृतिस्तत्रगुणाभवन्तीत्युक्तम् । उदाहरणंप्रथमदृष्टान्तस्त्वमित्य
र्थइतिवा । तुलेतिकर्मणिकरणेवाघञर्थेकविधानमितिकः । यद्वातुल्यात्
तुलनेतियद्यपिभवितव्यंतथाप्यतुलोपमाभ्यामितिनिर्देशात्कप्रत्ययः । सा
मुद्रकेतिसमुद्रेणप्रोक्तमस्मिन्नर्थेतेनप्रोक्तमित्यणिस्वार्थेकन्सामुद्रिकेति ।
मुद्रकेतिपाठेण्यन्तात्दृश्यर्थेऽतइनिठनावितिठन् ॥ ५१ ॥

नसुवर्णमयी तनुःपरंननु किंवागपितावकीत
था । नपरंपथिपक्षपातिता ऽनवलम्बेकिमुमादृ
शेऽपिसा ॥ ५२ ॥

नेति । ननुसंबोधनेतावकीतवेयंतनुःपरंकेवलंसुवर्णमयीहेमविकारो
न किंतुतावकीवागपितथापिलथाकिंसुवर्णमयीशोभनावर्णायस्याःसा ।
किंप्रश्ने वाक्पटुत्वंशरीरसौन्दर्यंचत्वय्येवेतिसूचितम् । नुःसंबोधने । ने
तिपृथग्वागपितथानकिंअपितुतथैवेतिवा । अन्यच्चतवपक्षपातितापक्षा
भ्यांपततिगच्छतिएवंशीलःपक्षपातीतस्यभावस्तत्ताअनालम्बेनिरालम्बे
पथिअन्तरिक्षमार्गेपरंकेवलंनकिंतुसापक्षपातितास्ववर्गाद्यः पातित्वमनु
कूलवर्तित्वमनवलम्बेनिर्गतिकेमादृशेमत्सदृशेकिमुकिंनेतिवा । निराल
म्बनस्यममत्वमेवालम्बनमितिभावः ॥ ५२ ॥

भृशतापभृतामयाभवान्मरुरासादितुषारसारवान् । धनिनामितरःसतां पुनर्गुणवत्संनिधिरेव संनिधिः ॥ ५३ ॥

भृशेति । हेहंसमयाभवान्मरुद्वायुरासादिप्राप्तः किंभूतेनभृशतापंप्रतिशयितकामज्वरंबिभर्तीति । किंभूतोमरुत्ततुषारस्यहिमस्यसारःश्रेष्ठोभागोविद्यतेसस्मिन्ज्वरतप्तस्यशीतलेनवायुनायथातापनाशस्तथा भवत्संगत्याममेत्यर्थःतदेवेदंदृष्टान्तेनाह । धनिनांधनवतामितरएतद्विलक्षणो नीचोद्रव्यरूपोवासंनिधिःसम्यङ्निधिः सतांविदुषांपुनर्गुणवतांसन्निधिःसमागमएवसंनिधिः सम्यङ्निधिर्नेत्वन्यः निधिप्राप्त्याधनिकानां यथांहर्षस्तथागुणिजनसन्निधिवासिनांहर्षः । सन्निति पृथग्वा इतरस्त्वन्यनीचयोरित्यमरः ॥ ५३ ॥

शतशःश्रुतिमागतैवसा त्रिजगन्मोहमहौषधिर्मम । अमुनातवशंसितेनतु स्वदृशैवाधिगतामवैमिताम् ॥ ५४ ॥

शतशइति । त्रिजगतोमोहोमूर्छाप्रापणी वशीकरणेचमहौषधिरुत्तमौषधिःसंमोहनीविद्येत्यर्थःसाभैमीशतशःशताद्वबहुत्वोऽनेकवारंवाममश्रुतिंमागतैवअनेकवारंमयाकर्णितैवेत्यर्थः । अमुनाऽनेनतवशंसितेनत्वत्कर्तृकेणसौन्दर्यकथनेनतुपुनरहंतांभैमींस्वदृशैवस्वनेत्रेणैवाधिगतां दृष्टामवैमिजाने । यद्येवंविधात्वयादृष्टातर्हितयापिदृष्टैवेतिभ्रांतिमित्रतयालौकिकयुक्तिः । यद्वबहुवारमाकर्ण्यतेतत्कदाचिद्दृश्यतेपि । शतशइत्यिबहुर्थंकारकत्वाच्छस् ॥ ५४ ॥

अखिलंविदुषामनाविलं सुहृदाचस्वहृदाचपश्यताम् । सविधेऽपिनसूक्ष्मसाक्षिणी वदनालंकृतिमात्रमक्षिणी ॥ ५५ ॥

नेत्रादपिमित्रवचनस्याधिक्यमाह । अखिलमिमिति । चौतुल्ययोगार्थौ । सुहृदामित्रेणचस्वहृदास्वमनसाचअखिलंसमस्तंवस्तुअनाविलमसंदिग्धमविपर्यस्तंवाऽऽगमानुमानाभ्यांपश्यतामनाविलमसंदिग्धंयथाभवतितथा

वाञ्छामतांविदुषांज्ञातृणामक्षिणीनेत्रेयदनालंकृतिमात्रंमुखालंकरणमेवन त्वन्यत्तयोःप्रयोजनंयतः । किंभूतेअक्षिणीसविधेपिसमीपेपिनसूक्ष्मसाक्षि णीनसूक्ष्मवस्तुग्राहकेयतोऽयं स्वगलंकज्जलारक्तत्वादिकमपिद्रष्टुंनश क्नोतितदुदरस्यंकथंगृह्णीयात्सामीप्याभावादितिभावः । अतःप्रत्यक्षम्ना म्यांदुर्बलमित्यर्थः । मित्रस्यप्रथमपदार्थंहृदयापेक्षयाप्राधान्यद्योतनार्थ म् । एवंविधेअक्षिणीविदुषामलंकरणमात्रंनकिंतुअलंकृतिरेवावदकथये तिवा । सुहृदादेशकालादिव्यवहितमपिपश्यतिनतुनेत्राभ्यां । सुहृद् दुर्हृदावितिसाधुः । नसूक्ष्मेतिनशब्देनसमासः । सूक्ष्मसाक्षिणीनेतिवि चित्मात्रंकारस्त्वेऽवधारणे । अत्रावधारणेमात्रशब्दः ॥५५॥

अमितंमधु तत्कथामम श्रवणप्राघुणकीकृताज नैः । मदनानलबोधनेभवेत् खगधाय्याधिगधै र्यधारिणः ॥ ५६ ॥

अमितमिति । हेखगहंसजनैर्लोकैःश्रवणयोःप्राघुणकीकृताअतिथीकृ ताश्राविताततस्याभैम्याःकथाममदनानलस्यकामाग्नेर्बोधनेदीपनेसमर्था धाय्याअग्निसंधुक्षणेऋग्भवेत्भवतितयायथाऽग्निर्दीप्यतेतथातत्कथाया ममममदनाग्निर्दीप्यते । किंभूतातत्कथाअमितमनुपमंबहुवामधुदिव्याऽ परिमिताऽमृततुल्येत्यर्थः । अतोऽधैर्यधारिणोमत्सदृशानधीरान्धिक् । एतादृशाअधीरानिंद्याः । ममविशेषणमधैर्यधारिणइतिवा । तथाऽबोधि गित्यर्थः । ऋक्सामिधेनीधाय्याचयास्यादग्निसमिन्धनेइत्यमरः ॥ ५६ ॥

विषमोमलयाहिमण्डली विषफूत्कारमयो मयो हितः । खगकालकलत्रदिग्भवः पवनस्त्वद्विरहा नलैधसा ॥ ५७ ॥

विषमइति ॥ हेखगतद्विरहानलोत्त्रैमीवियोगवह्निस्तस्यैधसाइन्धनेनम याकालकलत्रंदक्षिणादिक्तत्रभवःपवनोवायुर्दक्षिणवातोविषमोदुःसहक हितस्तर्कितः । किंभूतोमलयाचलवर्तमानअहिमण्डलीभुजङ्गसमूहस्त स्यविषंतस्यफूत्कारमयोग्निसन्धुक्षणधमनवायुरूपो विषंमातिआत्मसात् सीकरोतीतिवाविषमयतेददातिवा । कालयतिसर्वभूतानीतिकालस्तस्युत्र

स्त्वेवंविधप्यस्मा न्यतेफूत्कारसन्धुक्षितेनवह्निनायथाकाष्ठंदह्यतेतथाम लयपवनसन्धुक्षितेनविरहानलेनाहंनदिह्यतइतिभावः मलयाचलेपन्न नशब्दात्तत्सर्पवाकुल्यम् । विषमइतिश्चालाऽनुपसर्गकः। फूत्कारमयइतिता द्रूप्येप्राचुर्येवामयट्।कालइतिमोदनायांटकालयतेर्धौरादिकात्पचाद्यच्॥ ५७

प्रतिमासमसौ निशापतिः खग सङ्गच्छतियह्निनाधिपम् । किमुतीव्रतरैस्ततःकरैर्मम दाहायसधैर्यतस्करैः ॥ ५८ ॥

प्रतीति । हेखगासौनिशापतिश्चन्द्रःप्रतिमासंमासेमासेयहिनाधिपं सूर्यंसंगच्छतिप्रविशतियच्चन्द्रस्ततः सूर्यसङ्गात्तीव्रतरैरतितीक्ष्णैर्धैर्यत स्करैर्धैर्यचोरैःकिरणैर्मम दाहायजातः । किमुइतिशेषः । उपलक्षितइति वा । विधोःविरहिणांसंतापकारित्वंस्वतएवरवेस्तैक्ष्ण्यमादायोत्प्रेक्षित म् । अन्योपिस्वतोऽपकारेऽसमर्थोन्यसहायोपकारंकरोति । प्रतिमास वीप्सायामव्ययीभावः । संगच्छतीतिसकर्मकत्वात्तङभावः ॥ ५८ ॥

कुसुमानियदिस्मरेषवोनतु वज्रंविषवल्लिजानितम् । हृदयंयदमूमुहन्नमूर्मम यच्चातितरामतीतपन् ॥ ५९ ॥

कुसुमेति । यदिस्मरेषवःकामबाणाःकुसुमानिपुष्पाणिनतुवज्रंवज्रक पायदिनभवन्तीत्यर्थः । तर्हितानिवाकुसुमानिविषवल्लिजानिविषवल्ली भवानि । यद्वाममतेस्मरेषवोवज्रमेव नतुकुसुमानिलोकप्रसिद्धिविरुद्धं यदिचेत्तर्हितानिविषवल्लीजातानिभविष्यन्तिकुसुमत्वमस्तुविषवल्लिजत्वं मास्तु । विषयतेबाधकमाह ॥ यद्यस्मादमूःस्मरेषवोममहृदयमतितराम तिशयेनामूमुहन्मोहयामासुः । अतीतपंचतापयामासुः । अन्यत्कर्मो हतापीविषवल्लिजत्वेनविनानसंगच्छेतेतस्माद्विषवल्लिजानिवेत्यर्थः । व पुहंयोरित्यमरः । अमूमुहन्नतीतपन्निति मुहेस्तपेश्चण्यंतात्लुङ् । तयो रकर्मकत्वाद्गतिबुद्धीत्यादिनाऽणौ कर्तुर्णौकर्मत्वाद्धृदयमितिद्वितीया । अतितरांकिमेतिक्रित्याम् ॥ ५९ ॥

तदिहानवधौनिमज्जतो मम कन्दर्पशराधिनीर

धो । भवपोतइवावलम्बनं विधिनाऽऽकस्मिक
सृष्टसन्निधि ॥ ६० ॥

तदिति ॥ हेहंसततस्तस्मात्त्वंतमवलम्बनमाधारोभवकइवपोतइव समुद्रतरणयानपात्रमिव । किंभूतस्यममइहास्मिन्नवधौनिर्मर्यादेकंदर्पशरैर्जनितोयआधिर्मानसीव्यथातद्रूपेनीरधौसमुद्रेनिमज्जतोमज्जतः । किंभूतोविधिनाब्रह्मणादैवेनवाआकस्मिकोऽकस्मात्सृष्टोजातः कृतासन्निधिंसान्निध्यंयस्य । अपारेसमुद्रेनिमज्जतः कस्यचिद्दैववशात्समीपगःपोतोयथावलम्बनंभवतितथात्वमपिभवेतिभावः ॥ हेतुशून्यःकालोऽकस्मादित्यनेनाव्ययेनलक्ष्यते । तत्रभवआकस्मिकोऽध्यात्मादित्वाट्ठञ् अव्ययानांभमात्रेटिलोपः ॥ ६० ॥

अथवाभवतः प्रवर्त्तनानकथं पिष्टमियंपिनष्टि
नः । स्वतएवसतांपरार्थता ग्रहणानांहियथाय
थार्थता ॥ ६१ ॥

अथवेति । पूर्वोपरितोषहृयंमंवपोतइवावलम्बनमित्यादिकामोऽस्मत्कर्तृकाभवतस्त्वत्कर्मिकाप्रवर्त्तनाप्रेरणापिष्टंपिष्टमेवकथंनपिनष्टिपिष्टपेषणन्यायंकथंनानुसरतिव्यर्थमित्यर्थः । ननुस्वतःप्रवृत्तौपिष्टपेषणंनतथाऽस्तीत्याशङ्कायांस्वतःप्रवृत्तिंदृष्टान्तेनसमर्थयते।हियस्मात्सतांसाधूनांपरार्थतापरोपकारित्वंस्वतएवपरप्रेरणंनापेक्षतइत्यर्थः । तस्मात्पिष्टपेषणत्वात्प्रवर्तनेतिभावः । यथाग्रहणानांज्ञानानांयथार्थताप्रामाण्यंस्वतएवज्ञानंस्वतःप्रमाणमितिमीमांसकाः । यद्वागृह्यन्तेज्ञायन्तेर्थायैस्तानिशब्दास्तेषांयथार्थताअनुगतार्थतास्वतएव । वृक्षशब्दोच्चारणमात्रेमूलशाखापत्रादिप्रत्यक्षमिवस्फुरतियथातथासतांनाममात्रेगृहीतेतेषांपरोपकारित्वंस्फुरत्येव । एकेसत्पुरुषाःपरार्थघटकाःस्वार्थंपरित्यज्येत्यादिसदुक्तयः । अन्यद्विस्तरभयान्नलिख्यते । प्रवर्त्तनेतिण्यासेतियुच् । अस्मदोद्वयोश्चेति एकत्वेपिबहुवचनम् ॥ ६१ ॥

तववर्त्मनिवर्त्ततांशिवं पुनरस्तुत्वरितंसमागमः ।
अयिसाधयसाधयेप्सितं स्मरणीयाःसमयेवयंव
यः ॥ ६२ ॥

तवेति ॥ तस्मैनिमार्गेतवशिवंकल्याणंवर्ततांभवतुकृतकार्यस्यतवत्वरितंशीघ्रंसामागमोमयासहमेलनंपुनरप्यस्तुभवतु । अयिहंसहंस्विति मैत्री प्रासिलक्षणंमदभिलषितंसाधयसाधयनिष्पादयस्वार्त्तिद्योतनार्थेवीप्सा । साधयगच्छाभिमतंसाधयकुर्वितिवा । अयिहेवयःपक्षिन्वयंसमयेसखाराहित्यसमयएकाकेस्मर्त्तव्याः । तस्मादस्मदभिलाषवत्वाद्यितव्यइतिकेचित् । अथच किंचित्प्रतिबन्धकाशङ्कासमयेवयंवैन्यादयःकार्यसिध्यर्थंस्मरणीयाः । अनुनयेत्वपीत्यमरः । वयमस्मदोद्वयोश्चेत्येकत्वेबहुवचनम् । पक्षेत्यदादीनांनित्यइतिअस्मदःशेषः ॥ ६२ ॥

इतितं सविसृज्यधैर्यवान् नृपतिःसूनृतवागबृहस्पतिः । आविशद्भवनेश्मविस्मितः स्मृतिलग्नैः कलहंसशंसितैः ॥ ६३ ॥

इतीति । सनृपतिर्नलइतिपूर्वोक्तप्रकारेणतंहंसंविसृज्यप्रस्थाप्यवनवेश्मचउद्यानगृहमविशत् किंभूतोधैर्यवान्धैर्ययुक्तोयावद्धंसागमनंतत्रैवप्रतिक्षाकारित्वात् तथासूनृतवाक्प्रियेसत्येववचसिबृहस्पतिरिवमतुपसारवादी । तथारमणीयत्वात्स्मृतिगोचरंस्मरणविषयंलग्नैर्गतैःकलहंसशंसितैर्हंसभाषितैःकलैर्गम्भीरैर्हंसभाषितैर्वाविस्मितःसाश्चर्यः ॥ ६३ ॥

अथभीमसुतावलोकनैः सफलकर्तुमहस्तदेवसः । क्षितिमण्डलमण्डनायितं नगरंकुण्डिनमण्डजो ययौ ॥ ६४ ॥

अथेति । अथानन्तरंसोऽण्डजोहंसोभीमसुताभैमीतस्याअवलोकनैर्दर्शनैस्तद्देवाद्दिनंसफलंसार्थकंकर्तुंकुण्डिनंनामनगरंययौजगाम । किंभूतंरमणीयत्वाद्वैस्यचिह्नितत्वाच्चक्षितिमण्डलस्य मण्डलायितमलङ्कारीभूतंमण्डनमिवाचरतितदेवइत्यनेनशकुनमपिसूचितम्भोनकृतः । तेनपरोपकारित्वंसूच्यते ॥ ६४ ॥

प्रथमंपथिलोचनातिथिं पथिकप्रार्थितसिद्धिशंसिनम् । कलशंजलसंभृतंपुरः कलहंसंकलयांबभूव सः ॥ ६५ ॥

तद्गमने शोभनशकुनमाह । प्रथममिति । स कलहंसः प्रथमं पथिला गैलोचमातिथिं सलोचनगोचरं जलसंभृतं जलपूर्णं कलशं घटं पुरोऽग्रे कलयांबभूव ज्ञातवान् स्वानुकूलं शकुनमग्रहीदित्यर्थः । अतिथिशब्देनाकस्मिकोपस्थितिः सूच्यते बुद्धिपूर्वकं शकुनं तथा न फलदं यथाऽकस्मिकं किंभूतं कलशं पथिकैः प्रार्थितायाः सिद्धेः शंसतीति शंसि निर्द्योतकम् । पथिकः पथः ष्कन् ॥६५॥

अवलम्ब्य दिदृक्षयाऽम्बरे क्षणमाश्चर्यरसालसङ्कुलम् । स विलासवनेऽवनीभृतः फलमैक्षिष्ट रसालसङ्कुलम् ॥ ६६ ॥

अवलम्ब्येति । स हंसोऽवनीभृतो नलस्य विलासवने क्रीडावने रसालेऽम्रे सङ्कुलं लग्नं फलमैक्षिष्ट ददर्श । फलमात्रदर्शनं कार्यसिद्धिसूचकं तु तथा मा स्वफलदर्शनमिति भावः । किं कृत्वा क्षणं मुहूर्तं दिदृक्षया मार्गावलोकनेच्छया ऽम्बरे आकाशे रमणीयोद्यानदर्शनाश्चर्यरसेनालसं मन्दं गतं गमनमवलम्ब्याश्रित्य हसिपक्षिजातिः ॥ ६६ ॥

नभसः कलभैरुपासितं जलदैर्भूरितरक्षुपन्नगम् । स ददर्श पतङ्गपुङ्गवो विटपच्छन्नतरक्षुपन्नगम् ॥

नभस इति । स पतङ्गपुङ्गवः पक्षिश्रेष्ठो नगं पर्वतं ददर्श । किंभूतं नभस आकाशस्य कलभैः करिशावकरूपैर्जलदैर्मेघैरुपासितं सेवितं तथा भूरितराः क्षुपा ह्रस्वशाखाशिफवृक्षा यस्मिन् तथा विटपैः शाखाभिश्छन्नास्तिरोहितास्तरक्षवो मृगादनाः श्वापदविशेषाः पन्नगाः सर्पाश्च यत्र । कलभदर्शनस्य शकुनरूपत्वाज्जलदानां कलभत्वमुक्तम् । उपासितेत्यनेन तरक्षुपन्नगदर्शनस्य शकुनत्वात्तेषां छन्नत्वमुक्तम् । कलभः करिशावकः । ह्रस्वशाखाशिफः क्षुपः । तरक्षुस्तु मृगादन इत्यमरः । स्पुरुषव्याघ्रपुङ्गवेत्यादिवचनात् पुङ्गवशब्दः प्रशंसावचनः प्रशस्तः पतगः । प्रशंसावचनैश्चेति समासः । छन्नेति वा छान्तशान्तेति साधु । पन्नग इति सर्वत्र पन्नयोरुपसंख्यानमिति डः ॥ ६७ ॥

स ययौ धुतपक्षतिः क्षणं क्षणमूर्ध्वायन दुर्विभावनः । वितताकृतनिश्चलच्छदः क्षणमालोककदत्तकौतुकः ॥ ६८ ॥

सद्यति । सहंसएवंभूतःसन्ययौ । किंभूतःसुवर्णत्रिंशत्कलाललामपंधुताक्षम्पितापक्षतिःपक्षमूलंयेनतथाक्षणमूर्ध्वमयनंगमनंतेनदुर्विभावनोदुर्लक्ष्यस्तथाभ्रवविततौकृतौविस्तारितावतएवमिश्रणौ निष्कम्पौचदीपक्षौयस्य सर्वोपिपक्षजातिः । अतएवालोककानांपश्यतांजनानांदत्तंकौतुकंयेनए कत्रदुर्लक्ष्यत्वादेवकौतूहलम् । आलोकइतिण्वुल् ॥ ६८ ॥

तनुदीधितिधारयारयाद्गतया लोकविलोकनामसौ । छुदहेमकषाविवालसत् कषपाषाणनिभे नभस्तले ॥ ६९ ॥

तन्विति । असौहंसोऽलसद्विरराज किंकुर्वन्नएवगच्छन्लोकविलोकनां जगन्नयनगोचरं गतयाप्रयातनुदीधितिधारयाशरीरदीप्तिधारयागमनवेगात्तन्वीकृतयादीधितिधारातयाच्छा कृत्वाकषपाषाणनिभेनि कषोपलतुल्येनभस्तलेगगनेच्छदहेमपक्षसुवर्णशुद्धमशुद्धंवेतिपरीक्षार्थंकषन्निवकषेसुवर्णलेखापिजनैर्विलोक्यते ॥ ६९ ॥

विनमद्भिरधः स्थितैःखगैर्झटिति श्येननिपातशङ्किभिः । सनिरैक्षिद्धशैकयोपरिस्यदझङ्कारितपक्षपद्धतिः ॥ ७० ॥

विनमद्भिरिति । सहंसःस्वापेक्षयाऽधस्थितैःखगैःपक्षिभिरेकएवरयाद्याद्वशाद्दृष्ट्याउपरिऊर्ध्वंनिरैक्षिदृष्टः । किंभूतैःश्येननिपातशङ्किभिःश्येननिपातमशङ्कनशीलैरतएवझटितिविनमद्भिर्नम्रीभूतैः । किंभूतःश्येननिपातशङ्कायांहेतुः स्यदेनवेगेनझाङ्कारितामामित्याकारशब्दंकुर्वतीपक्षपद्धतिःपक्षसरणिर्यस्य । श्येनश्चपक्षिजातिरियम् । झाङ्कारितेतितारकादित्वादितच्स्यदोजववृत्तिच्छनिपातः ॥ ७० ॥

दद्दृशेनजनेनयन्नसौ भुवितच्छायमवेक्ष्य तत्क्षणात् । दिविदिक्षुवितीर्णचक्षुषा पृथुवेगद्रुतमुक्तदृक्पथः ॥ ७१ ॥

ददृशइति । जनेनयन्गच्छन्नसौहंसोनददृशेनदृष्टः । किंभूतेनभुविभूम्यांतस्यहंसस्यच्छायातच्छायमवेक्ष्यदृष्ट्वातदवलोकनार्थं तत्क्षणात्तस्मि

क्षेवक्षणेदिविगगनेदिक्षुदिशासुयवितीर्णंदत्तंचक्षुर्येनकिंभूतीयतः पृथुना तिशयेनवेगेनद्रुतंझटितिमुक्तस्त्यक्तोदृक्पथोदृष्टिमार्गोयेन । भुवितच्छा यांदृष्ट्वातदवलोकनार्थंयावदन्तरिक्षेदिक्षुचदृष्टिर्दीयतेतावदेवातिवेगेनदूर गामित्वान्नालोकितइतिभावः । यन्नितीर्णःशतरिरूपम् । तच्छायंविभा षासेनेतिनपुंसकत्वम् । दृक्पथक्षगादिनासमासान्तः ॥ ७१

नवनप्रथिशिञ्जियेऽमुना क्वचिदप्युन्नतरद्रुचारुत
म् । नसगोत्रजमन्ववादिवा गतिवेगप्रसरद्रुचा
रुतम् ॥ ७२ ॥

नवनमिति । अमुनाहंसेनपथिमार्गेक्वचिदपिप्रदेशेवनंनशिश्रियेनाश्रि तंकिंभूतमुन्नतराणांद्रूणांद्रुमाणांचारुतासौन्दर्यंयत्रतथावाऽथवासगोत्रजं स्वजातिहंसजातंरुतंमाऽन्ववादिना नूदितंसगोत्रैः सहसंवादोनागतइत्य र्थःकिंभूतेन गतिवेगेनगमनवेगेनप्रसरन्तीरुक्रुचिर्यस्यतेनवनस्थितिःस्व पूज्यसंभाषणंचपक्षिजाति । विलम्बभयादुभयमपितेननकृतमितिगमने सादरत्वंसूचितम् । सगोत्रेतिज्योतिर्जनपदेतिसः । रुगितिसंपदादित्वा त्क्विप् ॥ ७२ ॥

अथभीमभुजेनपालिता नगरी मञ्जुरसौधराजि
ता । पतगस्यजगाम्दृक्पथं हरशैलोपमसौधरा
जिता ॥ ७३ ॥

अथेति । अथधराजिताराज्ञाभीमेनपालिताअसौमञ्जुःसुन्दरीकुण्डि नाख्यानगरीपतगस्यहंसस्यदृक्पथंदृष्टिगोचरंजगाम । किंभूतेनभीमौश त्रूणांभयानकौभुजौयस्यकिंभूताहरशैलःकैलासस्तदुपमैस्तत्सदृशैः सौधैः सुधाधवलितैराजगृहैराजीताशोभिता । कैलासोऽपिभीमभुजेनहरभुजेन पालितः । सौधराजितेतिविरोधाभासः ॥ ७३ ॥

दयितंप्रतियत्रसन्तता रतिहासाइवरेजिरेभुवः ।
स्फटिकोपलविग्रहागृहाः शशभृद्भित्तनिरङ्कभित्त
यः ॥ ७४ ॥

दयितमिति । असौका, यत्रनगर्यांगृहाभुवोनायिकातुल्यायारतिहा

साःकेलिहासाश्चयदेजिरेशुभ्रभिरेकिंभूतारतिहासादयितंपत्योपतिंभीमंप्रतिसंततामिरन्तराःप्रवृत्तायाकिंभूतागृहाःस्फटिकोपलाः स्फटिकरत्नानिविग्रहःस्वरूपंयेषांस्फाटिकरत्ननिर्मिताइत्यर्थः । तथाप्रभभूम्नन्तरस्यभित्तंप्रकलंतहन्तिरङ्कानिकलङ्काभित्तयोयेषां गृहाणांशुभ्रत्वाद्धासतुल्यत्वमितिसमयेकान्तंप्रतिक्रीणांहासाभवन्तिअन्यदाम । गृहाःपुंसिचभूम्न्येव । भित्तंशकलखण्डेवेत्यमरः । संतताःसमोवेतिपक्षेमलोपाभावः । भित्तंशकलमितिसाधुः ॥ ७४ ॥

नृपनीलमणीगृहत्विषामुपधेर्यत्रभयेनभास्वतः ।
शरणार्थमुवास वासरेह्यसदावृत्युदयन्नमंतमः ७५

नृपेति । यत्रतमोऽन्धकारंनृपस्यराज्ञोनीलमणीनिर्मितागृहास्तेषांत्विषस्तासामुपधेर्व्याजाद्भास्वतः सूर्याद्भयेनेयहेतुनावासरेदिवसेऽपिशरणंगृहंरक्षितारंवाअर्थयतेतादृशंसदुवासवसतिस्म । इन्द्रनीलनिर्मितगृहदीप्तयोनभवन्तिकिंत्वन्धकारोयमितिभावः । अन्योभीतोऽन्योपिरक्षितारमाश्रयतेतदाश्रयेणोदयंप्राप्नोतिच । किंभूतंतमोऽसतोअविद्यमानाआवृत्तिर्भ्रंशुर्दनंयस्यतदसतएवातिशयेनोदयस्प्रसरत्वदयत्तमःततःकर्मधारयो वा । अन्यत्ररात्रौतमस्तिष्ठतिदिवाव्यावर्ततेअत्रतुरात्रिंदिवमसतीअविद्यमानाआवृत्तिःप्रतिबन्धकंसूर्योदियस्याऽसदेवोदयत्तमम्इतिवा । सूर्यादेरिन्द्रनीलदीप्तिप्रतिबन्धकत्वाद्धावादसितिविरुद्धमितिवा । उपधिव्याजचक्रयोरितिविश्वः । मणीतिकृदिकारादितिङीप् । भास्वतइतिभीत्रेत्यपादानत्वम् । शरणार्थंवसुखोलदर्थेतिसमासः । पक्षेकर्मण्यण् ॥ ७५ ॥

सितदीप्रमणिप्रकल्पिते यदगारेहसदङ्कुरोदसि ।
निखिलान्निशि पूर्णिमातिथीनुपतस्थेतिथिरेकिकातिथिः ॥ ७६ ॥

सितेति ॥ यदगारेयन्नानगर्याअगारेगृहेषुजातावेकवचनंनिशिरात्रौरश्मिद्वारकाकिमोपूर्णिमातिथिर्निखिलान् प्रतिपदादीन्प्रतिथियोपकोभूत्वाऽऽसन्नुपतस्थेप्रापआगत्तुकरूपेणसङ्गतेत्यर्थः।किंभूतेसिताःस्फाटिकादीप्तादीप्तिमन्तोयेमणयोरत्नानितैःप्रकल्पितेनिर्मितेतथाहसतीप्रकाशमानेअङ्केसमीपेरोदसीद्यावापृथिव्यौयस्यतद्धसदङ्करोदस्तस्मिन्यद्वाह

उन्नङ्गोमध्योययोरेवंविधेरोदसीद्यावा भूमीयेनसर्वोस्मपिरात्रिषुसितमणि निर्मितगृहप्रभापटलेनद्यावाभूम्योरन्तरालस्य प्रकाशमानत्वादन्धकाराभावात्पूर्णिमैवजातेतिज्ञातिर्भवतीतिभावः । तिथयोर्द्वयोरित्यमरः । दीप्रेतिनमिकम्पीतिरः । उपतस्थे उपाद्देवपूजेत्यादिनाचङ्गतकरणेतङ् । एकैवैषिका एकाद्ाकिनिश्चेतिस्वार्थेकः ॥ ७६ ॥

सुदतीजनमज्जनार्पितैर्घुसृणैर्यत्र कषायिताश्या । ननिशाखिलयाऽपिनामिका प्रससादग्रहिलेवमामिनी ॥ ७७ ॥

सुदतीति। यत्रवापिकाजलक्रीडादीर्घिकाखिलयापिसकलयापिनिशया स्याम प्रससादनस्वच्छाभूत् किंभूतासुदतीजनानांसुन्दरीसमूहानांमज्जनेनजलक्रीडयाऽर्पितैर्विलीर्णैर्घुसृणैःकुङ्कुमाङ्गरागैःकाषायितःकलुषितआशयोजल्यंयस्याःकेव यग्रहिलाआग्रहवतीमानिनीयसुन्दरीत्यनेनकुङ्कुमाङ्गरागबाहुल्यंसूच्यते । मानिन्यपिसपत्नीजनेर्पितमिलितंप्रियंकुंकुमाङ्गरागं दृष्ट्वाप्रियेणनमस्कारादिनाप्रसादितापिसकलयारात्र्यानप्रसीदतिसापिघुसृणैःकलुषितातयाआशयाशमनंशयःस्वप्नःसमविद्यतेयस्याइतिवासुदतीजनेमज्जनमासक्तिरितिवा । शोभनाद्न्तायस्याःसाअग्रान्तशुद्धेतिवकारस्यानुक्तसमुच्चयार्थत्वान्नित्यंस्त्रीसंज्ञत्वाच्छयांसंज्ञायामितिवादन्तादेशः। निशापदन्निशितिनिशायामिच। ग्रहोनुग्रहनिर्बन्धावितिविश्वः। ग्रहशब्दोभिवेन्ध्यवाचकःप्रकृतेतुमाननिर्बन्धः। सुदादेराकृतिगणत्वात्अवकादिलच् ॥७७॥

क्षणनीरवयायया निशिश्रितवप्रावलियोगपट्टया । मणिवेश्ममयंसमानिर्मलं किमपिज्योतिरबाह्यमीक्ष्यते ॥ ७८ ॥

क्षणेति ॥ ययानगर्यानिशिअर्द्धरात्रेक्षणनीरवयाक्षणमात्रंनिःशब्दयामणिवेश्ममयंरत्नगृहरूपंनिर्मलमुज्ज्वलमबाह्यं प्राकारमध्यंस्थितंकिमपिअनुपमकंज्योतिस्तेजईक्ष्यतेस्मकिंभूतयाश्रितोवप्रावलिरेवप्राकारपङ्क्तिरेवयोगपट्टंययामणिगृहबाहुल्यंसूचितम् । अन्ययापियोगिन्याध्यानमौनिन्याआश्रितयोगपट्टयाचनिर्मलमविद्यादिदोषरहितं किमपिवाङ्मनसो

रविषयम्अबाह्यमाभ्यन्तरमात्मलक्षणंज्योतीराशीर्दृश्यतेविषयीक्रियतेइ त्यर्थः यजेः प्राप्तिरप्यर्थः । स्वेनपरमात्मसाक्षात्काररूपेणयन्नीरंसात्त्विक भावजनितमश्रुजलंतद्द्यामिप्राप्नोतिसादृश्यावा आवृतत्वात्कः । तदुक्तंगी तायांयानिशासर्वभूतानामिति ॥ ७८ ॥

विललासजलाशयोदरे क्वचनद्यौरनुबिम्बितेव या । परिखाकपटस्फुटस्फुरत्प्रतिबिम्बानवलम्बिताम्बुनि ॥ ७९ ॥

विललासेति ॥ यानगरीक्वचनकस्मिंश्चिज्जलाशयोदरेजलाधरामध्येऽनुबिम्बिताप्रतिबिम्बिताद्यौरिवस्वर्गइवविललासशुशुभेमध्यएवप्रतिबिम्बितेत्यत्रहेतुमाह ॥ परिखेति । प्राकारपरितो जलसहितोगर्त्तःपरिखातस्याःकपटंव्याजस्तेनस्फुटंप्रव्यक्तंस्फुरताप्रतिबिम्बेनानवलम्बितमसंपृक्तमम्बुयस्याःयत्रवा । महतिजलाशयेनगरिरूपाल्पपरिमाणाद्यौःप्रतिबिम्बिताप्रतिबिम्बस्यानेषोदकंनदृश्यतेपरितस्तुदृश्यते । मध्यएवप्रतिबिम्बितत्वात्परितोयदुदकंसैवपरिखेतिभावः । नगर्याःस्वर्गसाम्यम् ॥ ७९ ॥

व्रजतांदिवियद्गृहावलीचलचैलाञ्चलदण्डताडनाः । व्यतरन्नरुणायविश्रमं सृजतेहेलिहयालिकालनाम् ॥ ८० ॥

व्रजतइति । यद्गृहावलीयस्याःप्रासादपङ्क्तिस्तस्याश्चलचैलाःपताकावस्त्रप्रान्तास्तएवदण्डाःप्रोदास्तैस्ताडनाःहननानिकर्त्र्यःदिविगगनेव्रजतेहेलिःसूर्यस्तस्यहयाःअश्वास्तेषामालिःपङ्क्तिस्तस्याःकालनांप्रेरणांसृजते कुर्वतेअरुणायसूर्यसारथयेविश्रमंविश्रान्तिंव्यतरन्ददुः । पताकावस्त्रचाञ्चल्यदर्शनेनाऽरुणप्रतोदताडनबुध्यासूर्याश्वश्रेणिस्त्वरितागच्छति अतएवारुणस्यविश्रान्तिगृहाणामुच्चत्वंपताकायुक्तत्वंच । हेलिरालिङ्गनेरवाविति यादवः ॥ ८० ॥

क्षितिगर्भधराम्बरालयैस्तलमध्योपरिपूरिगांपृथक् । जगतांखलुयाखिलाद्भुता ऽजनिसारैर्निजचिह्नधारिभिः ॥ ८१ ॥

क्षितीति ॥ यानगरीजगतांसारैःश्रेष्ठैरंशैरिवअजनिनिरमायि । किल इवार्थः । किंभूतैःसारैःक्षितिगर्भःपातालंधरापृथ्वीअम्बरमाकाशमेतच्च त्रयमालयआश्रयोयेषांतैःकिंभुतानामन्तलंअधःप्रदेशंमध्यंधरारूपमुपरिआ काशरूपंपूरयन्तिव्याप्नुवन्तिपततसंज्ञकानामित्यर्थः । पुनःकिंभूतैर्हेतुगर्भ विशेषणंपृथक्निजंस्वकीयंचिह्नंलक्षणंतद्धारिभिःपातालस्यमिथ्यादिचिह्नं तत्तलगृहे धान्यादिभूतेषुचिह्नं तन्मध्यगृहेषु त्वक्चंन्दनवनितादिस्वर्गचि ह्नंसदूर्ध्वगृहेषुविद्यतेइत्यर्थः। त्रिभूमिकगृहयुक्तेत्यर्थः। याजाश्रयसारैर्नि तत्वादेवाखिलासकलाप्यद्भुता एकैवत्रैलोक्यरूपत्वादाश्चर्यकारिणीतिभा वः । एकस्मिन्नपिलोकेवर्तमानत्वेपिलोकान्तरवस्तुदर्शनाद्विस्मयइति वा । अधस्वरूपययोरश्रीतलमित्यमरः । धराचाम्बरंचेतिसमाहारंकृत्वापू र्वपदेनसमासः ॥ ८१ ॥

दधदम्बुदनीलकण्ठतां वहदत्यच्छसुधोज्ज्वलंव
पुः । कथमृच्छतुनामयत्रनक्षितिभृन्मन्दिरमिन्दु
मौलिताम् ॥ ८२ ॥

दधदिति । यत्रनगर्यांक्षितिभृन्मन्दिरंराजगृहमिन्दुमौलितांचन्द्रयुक्ता ग्रतांचन्द्रशेखरत्वंचकथंनामनऋच्छतुप्राप्नोत्वेवसंप्रश्नेलोट्। किंभूतमम्बु दैर्मेघैर्नील श्यामःकण्ठःकण्ठस्थानीयप्रदेशोयस्यतस्यभावस्तत्तातांदधत्त था ऽत्यच्छयातिनिर्मलयासुधयालेपेनउज्ज्वलंवपुःस्वरूपंवहद्बिभ्रदिन्दु मौलौयस्यतत्सदृशंदेवम्नीलकण्ठतामतिनिर्मलसुधावद्गौरंधारयतिक ण्ठादेवेमेघाअग्रभागेचन्द्रश्चेत्युक्त्वंराजगृहस्यसूच्यते। सुधालेपोऽमृतंस्नु हीत्यमरः ॥ ८२ ॥

बहुरूपकशालभञ्जिका मुखचन्द्रेषु कलङ्करङ्क
वः । यदनेककसौधकंधराहारिभिः कुक्षिगतीकृ
ताइव ॥ ८३ ॥

बह्विति । बहुरूपकंसौन्दर्यमाकतिर्वायासांनेवंविधाःशालभञ्जिकादन्ता दिरचिताःस्तम्भादिषुनिर्मिताः पुत्रिकास्तासांमुखान्येवचन्द्रास्तेषुकलङ्कर ङ्कवःसंभाविताङ्कमृगायस्यांनगर्यामनेकानांबहुसंख्यकानांसौधानांप्रा

सादानां कन्धरासु गतैः कत्रिमैर्हरिभिः सिंहैः कुक्षिगतीकृताद्वचभ्रशिलाद्व वलक्ष्यन्ते कुक्षीगतास्तादृशाः कृताः चन्द्रेषुलाञ्छनंमृगैर्भोव्यमते तुतत्र विद्यन्तेतर्हि कन्धरागतैः सिंहैर्भंशिलाइवेतिलक्ष्यते। निष्कलङ्कानितासां मुखानीत्यर्थः। वहुरूपकेतिश्लेषादितिकप्। पुंवद्भावादाप्निवृत्तौप्रत्यय स्यादितीत्वनिवृत्तिः ॥ ७३ ॥

बलिवश्मादिवंसतथ्यभागुपरि स्माह्दिवोपिनार
दः। अधराधकृतायथैवसा विपरीताऽजनिभूवि
भूषया ॥ ८४ ॥

बलीति। तथ्यवाक्सत्यवक्तासनारदोबलिसद्मपातालंतज्ज्ञणादिर्व स्वर्गदिवोपिस्वर्गादपिउपरिअतिरमणीयंआहस्मवदतिस्म। स्वर्गाद प्यतिरमणीयानिपातालानीतिविष्णुपुराणेनारदवचनम्। अथचशब्दच्छ लेनऊर्ध्वभागेपातालमितिप्रसिद्धेरभावात्कथंतस्यसत्यवाक्त्वमित्याशङ्कांश ब्दच्छलेनसमर्थयते। अथपश्चाद्भूविभूषयापृथ्व्यलङ्कारभूतयाययानगर्या अधराहीनाकृतेवर्जितेवेत्यर्थः। अथचअधोदेशेकृतेवसाबलिसद्मद्यौःवि परीताअन्यादृशीअजनिजाता। अधोभागेऽभूदित्यर्थः। पूर्वंभूर्लोकाद्योर्ध्वं मभूदिदानींतान्यांमधोभागेजातेतिवैपरीत्यम्। अथवानयाजितत्वादेव पातालस्याप्यधरत्वंतस्यधोभागेस्थितत्वादित्युभयथापि नारदस्यसत्यवा क्त्वम्। स्वर्गात्पातालंरमणीयंतदप्यनयाजितमितिस्वर्गपातालाभ्यामियम तिरमणीयेतिश्लोकतात्पर्यं ॥ ७४ ॥

प्रतिहट्टपथेघरट्टजात्पथिकाह्वानदसक्तुसौरभैः।
कलहान्नघनान्यदुत्थिता दधुनाप्युज्झतिघर्घरस्
वरः ॥ ८५ ॥

प्रतीति। प्रतिहट्टपथेसर्वेष्वपिविपणिमार्गेषुपथिकाःपान्थास्तेषामाह्वा नमाकारणंतद्ददतिआह्वानदास्तेषांसक्तूनांसौरभाणिसौगन्ध्यानितैः कृत्वाउपल क्षिताद्वाघरट्टजाद्गोधूमादि पेषणपाषाणोघरट्टस्तस्माज्जातादुत्थिताद्वा यानगर्याउत्थितात्कलहाज्जातोयोघर्घरस्वरः पूर्वपक्षोऽधुनाऽद्यापि घ नान्मेघान्नोज्झतिनत्यजतियतच्छब्दार्थोऽर्थात्तस्यःसक्तूनामामोदमाघ्रा

य पान्थानभोजनार्थंतत्रत्यान्सक्तुत्यक्तुंनशक्नुवंति। मेघाश्वतान्गृहंप्रतिप्र स्थापयन्तीतिसक्तुनिमित्तमेघघरट्टयोःकलहः । मेघाःपीडयन्तिसक्तुप रिपतन्तिघरट्टाणीवयन्तितेनमेघानांघरट्टानांचनित्यंकलहः । तेनघर्घरस्व रोद्याऽपिमेघान्नमुञ्चतीतिवा। घरट्टाःपान्थाह्वानन्ददतिमेघाश्चध्वन्तिच गृहयन्तीतिभावः। योऽसितिरोधारकलहंकरोतिघर्घरस्वरत्नस्यजातिसर्वोपका रित्वंनगर्यांद्योत्यते । हट्टपथेकलहोभवति । ऋगादिनासमासान्तः । तृतीयासप्तम्योरित्यनभावः । घर्घरःपृथक् ॥ ८५ ॥

वरणःकनकस्यमानिनीं दिवमङ्कादमराद्रिराग
ताम् । घनरत्नकपाटपक्षतिः परिरभ्यानुनयन्नु
वासयाम् ॥ ८६ ॥

वरणइति । कनकस्यसुवर्णस्यवरणःप्राकारएवामराद्रिःसुमेरुर्मानिनीं कोपनामतएवाङ्कात्स्वोत्सङ्गात्यक्त्वाआगतांभुवंप्राप्तायांनगरीमेवदिवंपरि रभ्यालिङ्ग्यानुनयन्प्रसादयन्नुवास । मेरुःकथंतत्रागतइत्यतआह । घ नरत्नेनिबिडेवारत्नकपाटेतेएवपक्षतीपक्षौयस्य । सपक्षत्वात्तस्यतत्रागम नम् । उवासेत्यनेनतद्दिव्ययातत्रैवस्थितोननुतांगृहीत्वास्वगृहंनेतुमशक त् । अभिमानिनीत्वाच्छ्राघ्यापिनानुनेतुंशक्यते । स्वर्णप्राकारोमेरुतुल्यः । नगरीस्वर्गतुल्यारत्नकपाटेहेमाद्रिपक्षतुल्येअन्योपिमानिनीमन्यत्रगतामा लिङ्ग्यानुनयस्तदनुरोधात्तत्रैववसति । प्राकारोवरणःशालइत्यमरः । अनुनयन्निवासेतिवापाठः ॥ ८६ ॥

अनलैः परिवेषमेत्यया ज्वलदर्कोपलजन्म
भिः । उदयंलयमन्तरारवे रवहद्बाणपुरीपरा
र्ध्यताम् ॥ ८७ ॥

अनलैरिति । यानगरीज्वलद्भिर्दैदीप्यमानैरर्कोपलैःसूर्यकान्तैर्निर्मि तेभ्योवप्रेभ्योजन्मयेषांतैरनलैरग्निभिःपरिवेष्टनप्रेत्यप्राप्यरवेःसूर्यस्यउद यंलयमस्तंचअन्तराउदयमारभ्याऽस्तपर्यन्तंबाणपुरीवपरार्ध्यतामप्रगण्य तांश्रेष्ठतांअवहत्दधार ॥ पुर्याःपरार्ध्यतांवा । बाणपुर्यपिरुद्रप्रसादादनला वरुद्धेतिप्रसिद्धिः । सूर्यकिरणसंबन्धात्सूर्यकान्तेभ्योग्निरुत्पद्यते अनेक प्राकारेतिभावः । उदयंलयंअन्तरान्तरेणेतिद्वितीया ॥ ८७ ॥

बहुकम्बुमणिर्वराटिकागणनाटङ्करकर्कटोत्करः। हिमवालुकयाच्छवालुकः पटु दध्वान यदापणार्णवः ॥ ८८ ॥

बह्विति। यस्या आपणो हट्ट एवार्णवः पटु सातिशयं दध्वान गर्जितवान्। किंभूतः बहवः कम्बवः शङ्खा मणयो मौक्तिकादयो यत्र समुद्रोऽप्येवं तथा वराटिकागणनायां कपर्दकगणनार्थं नटङ्कोऽङ्कनं तः कराः हस्ता एव कर्कटोत्कराः कुलीरसमूहा यत्र समुद्रेऽप्यनेके कुलीराः सन्तीति तस्या मेऽत्र वराटिकागणनात्वरत् हस्तास्तथा हिमवालुकया कर्पूरेणाच्छवालुको निर्मलसिकतः समुद्रेऽपि सिकताः सन्तीति तस्या मेऽत्र कर्पूरः। सिकतासाम्येनात्र कर्पूरवाहुल्यं तत्र देशे बाहुल्येन कपर्दैर्व्यवहारः। पटुशब्देन जनसंमर्दः सूच्यते ॥ ८८ ॥

यदगारघटाट्टकुट्टिमस्रवदिन्दूपलतुन्दिलापया। मुमुचे न पतिव्रतौचिती प्रतिचन्द्रोदयमभ्रगङ्गया॥

यदिति। अभ्रगङ्गया आकाशगङ्गया प्रतिचन्द्रोदयं चन्द्रोदये चन्द्रोदये पतिव्रतौचिती पातिव्रत्यौचित्यं न मुमुचे न त्यक्तं किंभूतया यदगारघटानां यस्या गृहसमूहानां अट्टा उपरिगृहास्तेषु कुट्टिमा बद्धभूमयस्ता सु स्रवन्तो ये इन्दूपलाश्चन्द्रकान्तास्तैस्तुन्दिला बहुतरा आपो जलानि यस्यास्तया। चन्द्रोदये समुद्रोदकवृद्धिर्भवति गङ्गा च तत्पत्नी चन्द्रकान्तगलदुदकसंपर्कात् वृद्धैरिति पातिव्रत्यौचित्यम्। आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशेत्यादि पतिव्रतालक्षणम्। अनेनाकाशगङ्गाया अपि कुट्टिमानामूर्ध्वभावत्वं सूच्यते। तुन्दिला मत्वर्थे तुन्दादिभ्य इलच्। लक्षणया पुष्टत्वम्। तुन्दिलापयेति ऋगादिना समासान्तः। प्रसिद्धोपमायाम् ॥ ८९ ॥

रुचयोऽस्तमितस्य भास्वतः स्खलिता यत्र निरालयाः खलु। अनुशायमभुर्विलेपनापणकाश्मीररजःपरम्परा ॥ ९० ॥

रुचय इति। यत्र नगर्यामनुसायं प्रतिसन्ध्याकालं विलेपनापणे सुगन्धद्रव्यहट्टे काश्मीरजकेसरं तस्य रजःपरम्परा चूर्णपरम्परा विक्रेयं तस्य वीथयो मार्गा अस्तमितस्यास्तंगतस्य भास्वतो रवेः स्खलिता च्युताः निरालया निराश्रया रुचयस्तत्प्रभा

भोग्तिसकिलप्रयार्थः । भावेलुक् । अनुवीप्सायाम् । सायकालेताखांर त्वादिस्वर्थः । विक्रेयंपण्यं । अवद्यपण्येतिसाधु । पद्क्तिवीपीपद व्यपि ॥ ९० ॥

विततं वणिजापणेऽखिलं पणितुं यत्र जनेन वीक्ष्य ते । मुनिनेव मृकण्डुसूनुना जगतीवस्तु पुरोदरे हरेः ॥ ९१ ॥

विततमिति । यत्रनगर्यांजनेनलोकेनवणिजाम्बाभणीविनाआपणेहट्टे पणितुंविक्रेतुंविततंविस्तारितमखिलंजगतीवस्तुवीक्ष्यतेऽवलोक्यते । एकै कस्यापिवणिजोहट्टेसर्ववस्तुविद्यतइतिभावः । केनकस्मिन्किमिवमृकण्डु सूनुनामार्कण्डेयेनमुनिनापुरापूर्वंहरेर्विष्णोरुदरेजठरेजगतीपुत्रैलोक्येयुक्ता तंवस्त्विववीक्ष्यतेस्मेत्यर्थः । पणितुंश्चार्थधातुकेविकल्पादायाभावः । वी क्ष्यतेभूतेपुरायोगेपुरिलुङ्चास्मेइतिलट् । उकाराकारादेशापत्यार्थेशुभ्रा दित्वाड्ढकिकित्वाद्वृद्धौढेलोपोऽकद्रूादित्युकारलोपेचमार्कण्डेयः ॥ ९१ ॥

सममेणमदैर्यदापणे तुलयन्सौरभलोभनिश्चलम् । पणितानजनारवैरवैरपि गुञ्जन्तमलिंमलीम सम् ॥ ९२ ॥

सममिति । यस्यानगर्याआपणेपणिताविक्रेतामलीमसंश्यामंगुञ्ज न्तमपिशब्दायमानमपिअलिंभ्रमरंजनारवैर्लोककोलाहलैर्नावैत्नाज्ञासी त् । किंकुर्वन्मेणमदैःकस्तूरिकाभिःसमंसहतुलयन् । किंभूतमलिंसौरभ लोभेनसौरभाभिलाषेण निश्चलेकस्तूरिकायाउपरिस्थितंनिश्चलस्यास्समान वर्णत्वाच्चकस्तूरिकायाः सकाशाद्भिन्नत्वेनयद्यपिज्ञातुंनशक्यतेतथापिगु ञ्जनाद्भ्रमपिनज्ञेयः । जनशब्देगुञ्जनस्यानभिहितत्वादितिभावः । अवै दितिवणोलङ्किरूपम् । तुलयन्नितितुलउन्मानेइतिण्यन्ताच्छता । संज्ञा पूर्वकविधित्वाल्लघूपधगुणाभावः ॥ मलीमसंत्वेमोत्वजातमित्रेतिसाधु॥ ९२॥

रविकान्तमयेनसेतुना सकलाहज्वलनाहितोष्म णा । शिशिरेनिशिगच्छतां पुराचरणौयत्रजनो तिनोद्धिमम् ॥ ९३ ॥

गौररक्तनीलोत्पलैरचिताभिर्मिताभ्रां ख्यंगस्यादेकवद्भावः । तथापरेष्वन्येषु अङ्गेषु चम्पकैश्चम्पापुष्पैरचिताभालाप्यनेकविधैः पुष्पैः क्रियते वदनकरच रणेष्वेकमलं तुल्यं अन्यदङ्गं चम्पकतुल्यमितिभावः । मालयायथाकामः प्रव र्त्तीयते तथातयेत्यर्थः अक्षिदधीत्यादावंगाधिकारे तस्य चलदुत्तरपदस्य चे तिलद्कविध्यनुज्ञानादनकादेशेऽल्लोपोनइत्यल्लोपः । आदिलआकोदोऽना स्यथिहरयइतितङ् । स्याच्योरितीकारः । हृस्वादितिसिचोलोपः ॥९६॥

जघनस्तनभारगौरवाद्वियदालम्ब्य विहर्त्तुमक्ष मा । ध्रुवमप्सरसोवतीर्ययां शतमध्यासततत्र खीजनः ॥ १७ ॥

जघनेति । शतमसंख्याताअप्सरसोजघनस्तनभारगौरवात्नितम्बकुच योर्भारेयत्स्थूलत्वेनगौरवाद् वियदाकाशमवलम्ब्यततोविहर्त्तुंक्रीडितुंसक्ष माअसमर्थाःध्रुवंनिश्चितमतोभुवमागत्यतत्रस्त्रीजनोभूत्वायांनगरींअध्या सतअध्यतिष्ठत् । यत्रस्त्र्योऽप्सरसस्तुल्याइतिभावः । अभ्यर्हितत्वाज्जघ नस्यपूर्वनिपातः । यामितिअधिशीङ्स्थासामितिकर्मत्वम् ॥ ९७ ॥

स्थितिशालिसमस्तवर्णतामकथंचित्रमयीबिभर्त्तु या । स्वरभेदमुपैतुयाकथं कलितानल्पमुखार वामत्रा ॥ १८ ॥

स्थितीति। यानगरीस्थित्यास्वीयस्वीयाचारामतिक्रमणेनशालिनःशोभ मानाःसमस्तावर्णायस्यांतस्याभावस्तत्तातांकथंकेनप्रकारेणनबिभर्त्तुअपि तुबिभर्त्त्येव अतएवचित्रमयीआश्चर्यरूपा । अन्यत्रब्राह्मणादिवर्णानांसंक राद्अत्रचतदभावाश्चर्यरूपत्वम् । ब्राह्मणादयोअसंकीर्णास्तिष्ठन्तीत्यर्थः । अथचयाचित्रमयीआलेख्यप्रचुरासास्थित्यापरस्परानतिक्रमणशालिनःस र्वनीलपीतादिवर्णायस्यांतद्भावकथंनबिभर्त्तुअपितुबिभर्त्येव वासनुश्चये । चायस्माद्याकलिता अनल्पानांबहूनांनरादीनांमुखारवाशब्दायययाएवंभू ता । तस्मात्स्वरभेदमनेकशब्दत्वंनरकरितुरगादिशब्दानाभेदंकोलाह लघनाद्घघर्घरशब्दंवाकथंनोपैतु । अथचकलितोऽङ्गीकृतोवाचाटत्वादन ल्पमुखात्राम्नायास्तेषामारवोवेदरूपोययाज्ञातोवायस्यांसा । स्वरभेदमु

दात्तादिभेदं स्वर्गसाम्यं कथं न प्राप्नोतु यद्वा स्थितयोर्वर्णानामष्टौ स्थानानि ताभिः शालिनः समस्ता वर्णा अक्षराणि यस्यां । आम्नायाः सलक्षणा वेदं यत्र पठन्तीत्यर्थः । अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु चेति शिक्षायाम् । अथ च स्वः स्वर्गोऽपि भेदं स्वर्गसाम्यं कथं न प्राप्नोतु । स्वर्गे अनल्पमुखस्य चतुर्मुखस्य ब्रह्मणः आरवः शब्दो विद्यते तस्मात्स्वर्गेणास्यैकत्वं युज्यते । यावद्गुणारवास्वरभेदं कथं कथमुपैतु अपि तु न । लोकयात्रामध्ये स्त्रीपुंसादिस्वरभेदो नोपलभ्यत इत्यर्थः । वर्णोद्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे । आस्ते स्याद्यर्थयोर्ह्यास्यमित्यमरः ॥ ९८ ॥

स्वरुचारुणया पताकया दिनमर्केण समीयुषोतू

षः । लिलिहुर्बहुधा सुधाकरं निशि माणिक्यमया

यदालयाः ॥ ९९ ॥

स्वरुचेति । माणिक्यसंज्ञकै रत्नविशेषैर्निर्मिता यदालया यस्याः पुर्या गृहाः स्वरुचा गृहकान्त्या अरुणया रक्तया पताकया कृत्वा निशि रात्रौ सुधाकरममृतनिधिं चन्द्रं बहुधाऽनेकप्रकारं लिलिहुरस्पृशन् । पताकाया जिह्वात्वं सूच्यते । सापि आरक्ता भवति । किंभूता दिनं समस्तदिवसं तं समीयुषा सङ्गतेनार्केण सूर्येण कृत्वा उत्तप्ता संतप्ता बहुतरा उद्गता या तृट् पिपासा येषां ते ऽन्योऽपि सूर्येण संतप्तो रात्रौ जिह्वया शीतलं मधुरं च वस्तु लेढि आस्वादयतीति भावः । दिनमत्यन्तसंयोगे द्वितीया ॥ उपेयिवानित्यत्र उपेत्यस्यानुप्रत्वादनुपसर्गस्य अन्योपसर्गस्य च भवतीत्युक्तत्वात्समीयुषेति साधुः । बहुविधेति बहुगणेति संख्यात्वात्संख्याया विधार्थे धेति धाप्रत्ययः । लिहेः स्वरितत्वात्कर्त्रभिप्राये क्रियाफले परस्मैपदम् ॥ ९९ ॥

लिलिहुः स्वरुचा पताकया निशि जिह्वानिभया सु

धाकरम् । स्थितमर्ककरैः पिपासु यन्नृपसद्मामलपद्मरागजम् ॥ १०० ॥

लिलिहुरिति । पूर्वोक्त एवार्थो जिह्वापदप्रक्षेपेणावर्णितः लिहेः स्वरितत्वात्कर्त्रभिप्राये क्रियाफले तङ् । श्रितमिति पाठः । अर्ककरैः श्रितं सामीप्यादभिप्रायम् । स्थितमित्यपि क्वचित् । अर्ककरैः पिपासु स्थितमर्ककरैस्तप्तमित्यर्थः ॥ १०० ॥

अमृतद्युतिलक्ष्मपीतया मिलितं यद्वलभीपताकया। वलयायितशेषशायिनः सखितामादित पीतवाससः ॥ १०१ ॥

अमृतेति । पीतयागौर्यास्यानगर्याबलभीपताकयावलभीसंज्ञकगृह विशेषवैजयन्त्यामिलितंसंबद्धंअमृतद्युतेश्चन्द्रस्यलक्ष्मलाञ्छनंकर्तृवलयायितोमण्डलीभूतःशेषस्तस्मिन्शेतेएवंशीलस्यपीतवाससोविष्णोःसखितांसाम्यमादितप्राप तत्सदृशंबभूवेत्यर्थः । कलङ्कस्यसितोवर्त्तमानस्यचन्द्रस्यशेषसाम्यंकलङ्कस्यकृष्णसाम्यम् । पीतपताकायाःपीतवस्त्रसाम्यंअत्युच्चत्वंचयुज्यते ॥ १०१ ॥

अश्रान्तश्रुतिपाठपूतरसनाविर्भूतभूरिस्तवा जिह्मब्रह्ममुखौघविघ्नितनवस्वर्गक्रियाकेलिना । पूर्वं गाधिसुतेन सामिघटिता मुक्तानुमन्दाकिनी यत्प्रासाददुकूलवल्लिरनिलान्दोलैरखेलद्दिवि १०२

अश्रान्तेति । यस्याःप्रासादानांदेवगृहराजगृहाणांदुकूलवल्लिर्वैजयन्तीरूपाश्वेतदुकूलवल्लिरनिलान्दोलैर्वायुकर्तृकचालनैर्दिविआकाशेमन्दाकिनीनुस्वर्गंगेवाखेलत्चिक्रीड । नुरिवार्थेवितर्केवा । किंभूतामन्दाकिनी । गाधिसुतेनविश्वामित्रेणपूर्वंसामिघटिता । अर्द्धनिर्मिता । पश्चाद्यस्तत्त्यामुक्तात्यक्ता । किंभूतेनअश्रान्तश्रुतिपाठेननिरन्तरवेदपाठेनपूताःपवित्राश्चयोरसनाश्चयोजिह्वाभ्यआविर्भूतेषुप्रकटीभूतेषुभूरिषुबहुषुस्तवेषुस्तुतिषु अजिह्माअमलसाब्रह्ममुखौघाश्चत्वार्येपिब्रह्ममुखानितैर्विघ्नितावि घ्नवतीकृतानवानूतनास्वर्गक्रियाकेलिःस्वर्गनिर्मितिक्रीडायस्यतेन । पूर्वंकृतांसृष्टिंब्रह्मादिभिरर्थितोविश्वामित्रोऽमुञ्चदितिपुराणादौ । लतावद्वायुनाचञ्चलीक्रियते । सामित्वर्द्धेजुगुप्सितइत्यमरः। सामिघटितेत्यत्रसामीतिसमासः ॥ १०२ ॥

यदतिविमलनीलवेश्मरश्मिभ्रमरितभाः शुचिसौधवस्त्रवल्लिः । अलभत शमनस्वसुः शिशुत्वं दिवसकराङ्कतले चलालुठन्ती ॥१०३॥

यदिति। यस्या नगर्या अतिविमलानि नीलरत्ननिर्मितवेश्मानि गृहाणि तेषां रश्मिभिः किरणैर्नन्दूत्तमरीचाञ्चमरीकलातैः कृत्वाऽऽमरयद्दाचरितावा सादीप्तिर्यस्याः साएवंविधाशुचिसौधवलभिर्धवलगृहाग्रपताकापङ्क्ति र्दिवसकरस्य सूर्यस्य अङ्कतले समीपाधोभागे उत्सङ्गतले च। चलाचञ्चला लुठन्ती क्रीडन्ती सती शमनस्वसुर्यमभगिन्यायमुनायाः शिशुत्वमलभतप्राप। बालिकायमुनेवशोभते स्मेत्यर्थः। सापि श्यामा पितुः सूर्यस्य समीपे शिशुत्वाच्चञ्चलालुपठनं करोति। शिशुत्वं यमुनापत्यत्वमिति केचित्। उत्प्रेक्षेयं सूच्यते ॥ १०३ ॥

स्वप्राणेश्वरनर्महर्म्यकटकातिथ्यग्रहायोत्सुकं पाथोदं निजकेलिसौधशिखरादारुह्य यत्कामिनी।
साक्षादप्सरसो विमानकलितव्योमान एवाभवद्
यत्त्रापनिमेषमभ्रतरसा यान्नीरसादध्वनि ॥ १०४ ॥

स्वप्राणेति। यत्कामिनी यस्या नगर्याः स्त्री अभ्रतरसा मेघवेगेन अध्वनि मार्गे रसान्मेघवेगजनितप्रीतेः प्रियानुरागाद्वा यान्ती गच्छन्ती सती यस्मान्निमेषं निमेषोपलक्षितमपि विलम्बं अप्राप नेत्रसंकोचं न प्राप। तेन कारणेन साक्षी विमानेन कलितं गमितं कलीकृतं व्योमगगनं याभिरेवंविधाः साक्षात्प्रत्यक्षदृश्यमाना अप्सरस एवाभवत्। किं कृत्वा निजं यत्केलिसौधं क्रीडागृहं तस्य शिखराच्छृङ्गात् पाथोदं मेघमारुह्य किंभूतं पाथोदं स्वप्राणेश्वरः स्वप्रियस्तस्य नर्महर्म्यं क्रीडागृहं तस्य कटके मध्यप्रदेशे आतिथ्यग्रहाय प्राघुणिकपूजाग्रहणाय कटकग्राहय इति यावत्। तस्मैवोत्सुकमुत्कण्ठितं सहजसौन्दर्येण विमानतुल्य मेघाधिरोहेणाकाशगमनेन निमेषाप्राप्त्या च देवाङ्गनातुल्या जातेति भावः। कटकशिखरपदाभ्यामपि हर्म्ययोरत्युन्नतत्वं सूचितम्। अदः काल इस्मिन्रसादिति वा। प्रसितोत्सुकाभ्यां मपि तृतीयासप्तम्योः प्रसङ्गात्। आतिथ्यगृह एवायः शुभविधिस्तत्रोत्सुकमिति व्याख्येयं वा कामिन्यपेक्षयाशुभकर्मत्वम्। व्योमान इति अनो बहुव्रीहेरिति नङीप्। स्त्रियां बहुष्वप्सरस इत्यमरः ॥ १०४ ॥

वैदर्भीकेलिशैलेमरकतशिखरादुत्थितैरंशुदर्भै
र्ब्रह्माण्डाघातभग्नैः स्यदजमदतया ह्रीधृता वाङ्मु

त्वैः । कस्यानोत्तानगायादिविसुरसुरभेरास्यदे शंगताऽग्रे यद्गोग्रासप्रदानव्रतसुकृतमविश्रान्तमुज्जृम्भतेस्म ॥ १०५ ॥

वैदर्भीति । यस्यान्नगर्यागोग्रासस्यप्रदानलक्षणंव्रतंतस्यसुकृतंपुण्यंनीलत्वात् ।अंशुभिरेवदर्भैरविश्रान्तमनवरतमुज्जृंभतेस्म।किंभूतैर्वैदर्भीकेलिशैले भैमीक्रीडापर्वते मरकताख्यरत्नविशेषनिर्मितशिखरादुच्छ्रितैरूर्ध्वंगामिभिस्तथाव्रजाखडसंघट्टनेनभग्नः स्यद्जोवेगजोमदोगर्वोयेषां तद्भावस्तत्तातयाह्रियालज्जयेवधृतंकृतअवाङ्मुखत्वंख्याघट्टनंयैः । अतएवदिविस्वर्गेवत्तानगायाउत्तानगामिन्याःकस्याःसुरसुरभेर्देवगव्याऽऽस्यदेशंमुखप्रदेशमगताग्रैःनप्राप्ताग्रैःसर्वस्याअपिमुखंप्राप्ताग्रैरनेकमरकतरत्ननिर्मितोभैमीक्रीडाशैलस्ततउत्थिताःकिरणायावद्बृह्माण्डंगतास्ततउपरिगमनाभावान्निवृत्ता देवगवीमानुत्तानगामित्वात्तन्मुखपतितादर्भंस्याजातादितिभावः।उत्तानावैदेवगवावहन्तीतिश्रुतेः।अन्योभग्नगर्वोलज्जयाऽधोमुखोभवति१०५

विधुकरपरिरम्भादात्मनिष्यन्दपूर्णैःशशिदृषदुपक्लृप्तैरालवालैस्तरूणाम् । विफलितजलसेकप्रक्रियागौरवेण व्यरचिसहृतचित्तस्तत्रभैमीवनेन ॥

विधिविति । तत्रनगर्यांभैमीवनेनसहंसोरमणीयत्वादाहृतचित्तआकृष्टमनाःव्यरचिविरचितः । किंभूतेनतरूणामालवालैर्जलाधारैःकर्तृभिर्विफलितंव्यर्थीकृतजलसेकप्रक्रियागौरवंजलसेचनप्रकारसारोयस्य। किंभूतैः शशीदृषद्भिःचन्द्रकान्तैरुपक्लृप्तानिनिर्मितानितैः । पुनःकिंभूतैर्विधुकरपरिरम्भाच्चन्द्रकिरणसंपर्कादात्मनःस्वस्यनिष्यन्देननिर्झरोदकेनपूर्णैर्वृक्षाणामालवालपूर्णप्रयासश्चन्द्रकान्तनिर्मितत्वात्तैरेवक्रियतइतिभावः । निष्यन्दइतिअनुविपर्यभिनिभ्यइतिषत्वम् ॥ १०६ ॥

अथकनकपतत्रस्तत्रतांराजपुत्रीं सदसिसदृशभासांविस्फुरन्तीसखीनाम् । उडुपरिषदिमध्यस्थाऽपि शीतांशुलेखाऽनुकरणपटुलक्ष्मीमक्षिलक्ष्मीचकार ॥ १०७ ॥

अथेति।अथानन्तरंकनकपतत्रःसुवर्णपक्षोहंसस्तत्रवनेतांराजपुत्रींभैमी मक्षिलक्षीचकार ।. नेत्रगोचरीचकारकिंभूतांसदृशभासांसमानकान्तीनां सखीनांसदसिसभायांविस्फुरन्तींविशेषेणदीप्यमानांतथोडुपरीषदिनक्षत्र समूहेसत्यथांसश्यस्थापिशीतांशुलेखाचन्द्रलेखातस्याअनुकारोऽनुकारेपटुः स मर्थोलक्ष्मीःशोभायस्यास्तां । सदृशदीप्तित्वेपिनक्षत्रापेक्षयाचन्द्रलेखाय श्चाधिकातथासख्यपेक्षयाभैमीति । भैमीसखीनांतत्सादृश्यकथनमन्यसुन्द रीभ्योविशिष्टसौन्दर्यप्रतिपादनार्थं । सूतोग्रराजभोजकुलमेरुभ्योदुहितुः पुत्रडितिराजशब्दात्परस्यदुहितृशब्दस्यपुत्रडादेशेटित्वान्ङीपिराजपुत्री ति । केचित्तुशार्ङ्गरवादिषुपुत्रशब्दंपठन्तितेनपुरुहूतपुत्रीत्यादिसिद्धम् । विस्फुरन्तीस्फुरतिस्फुलत्योरितिषत्वम् । लक्ष्मीरिसमासान्तविधेरनित्य त्वात्कबभावः ॥ १०७ ॥

भ्रमणरयविकीर्णस्वर्णभासा खगेनक्वचनपतनयोग्यंदेशमन्विष्यताऽधः । मुखविधुमदसीयंसेवितुं लम्बमानः शशिपरिधिरिवोर्ध्वंमण्डलस्तेनतेने ॥

भ्रमणेति। तेनखगेनहंसेनऊर्ध्वमूर्ध्वप्रदेशेशशीपरिधिरिवचन्द्रपरिवेष इवमण्डलस्तेनेविस्तारितःकृतइत्यर्थः । अवतरतःपक्षिणोमण्डलगतिःक्रिया स्वभावः।किंभूतेनभ्रमणरयेणपरिभ्रमणवेगेनविकीर्णाप्रसारितासुवर्णभाः सुवर्णदीप्तिर्येन । तथाक्वचनअधःकस्मिन्नप्यधःप्रदेशेपतनयोग्यमवतर णयोग्यंदेशंस्थानमन्विष्यतापर्यालोचयता । किंभूतःशशिपरिधिरदसीयं अमुष्याभैम्याअयन्तुमुखचन्द्रंसेवितुंपरिचुम्बितुंलम्बमानोऽधः प्रदेशमा गतः । अदसीयंत्यदादित्वाद्वृद्धाच्छः । भस्याऽढेतद्धितइतिपुंवद्भावः । बि म्बोऽस्त्रीमण्डलंत्रिष्वित्यमरः ॥ १०८ ॥

अनुभवतिशचीत्थं साघृताचीमुखाभिर्नसहसहचरीभिर्नन्दनानन्दमुच्चैः ॥ इतिमतिरुदयासीत्पक्षिणः प्रेक्ष्यभैमींविपिनभुविसखीभिःसार्द्धमाबद्धकेलिं ॥ १०९ ॥

अन्विति । विपिनभुविउपवनप्रदेशेसखीभिःसार्द्धंसहआबद्धकेलिंकृत

क्रीडांभैमीं प्रेत्यद्रष्टुंपापवियोगेहंसस्यद्धतिमतिर्नेड्डिरुदयासीत् तत्यक्तावभू वइतिकिंवाप्रविष्टाशचीन्द्राणी घृताचीमुखाभिर्घृताचीप्रभृतिभिः सहच रीभिरप्सरोभिःसखीभिःसहसार्द्धंमुच्चैरतिशयेनइत्थमनेन प्रकारेणभैमीवदि तिचेत्यर्थः ॥ नन्दनानन्दंनन्दनवनेक्रीडांनानुभवति । एतत्क्रीडासुखंश च्याअपिनास्तीत्यर्थः ॥ ततोपीयमधिकेतिभावः । नानुभवति । अपितुसै वेयंकिंनन्दनानन्दमनुभवतीतिवा । भैमीतत्सखीवनानांशचीघृताचीनन्द नैःसाम्यम् । सहचरीपचादौचरडितिपाठाट्टित्वान्ङीप् । प्रेत्येतिभिन्नक र्तृकत्वात्क्त्वानुपपत्तौस्थितस्येत्यध्याहार्यम् । केलिमितिह्रस्वःपाठः॥१०९॥

श्रीहर्षंकविराजराजिमुकुटालङ्कारहीरःसुतं श्री हीरःसुषुवेजितेन्द्रियचयंमामल्लदेवीचयम्॥ द्वैती यीकतयामितोऽयमगमत्तस्यप्रबन्धेमहाकाव्येचा रुणिनैषधीयचरितेसर्गोनिसर्गोज्ज्वलः ॥

॥ द्वितीयःसर्गः समाप्तः ॥

श्रीहर्षमिति । पूर्वार्द्धंपूर्ववत् ॥ द्वयोःपूरणोद्वितीयः । द्वितीयएवद्वै तीयीकः ॥ तीयादीकक्स्वार्थेवक्तव्यः।द्वैतीयीकस्तस्यभावस्तयामितो गमितोनिसर्गोज्ज्वलःस्वभावसुन्दरः । शेषंस्पष्टम् ॥ ११० ॥

इतिश्रीवेदकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणभट्टकृतेनैष धीयप्रकाशेद्वितीयः सर्गःसमाप्तिमगमत् ॥

# नैषधीयेचरितेतृतीयःसर्गः

आकुञ्चिताभ्यामथपक्षतिभ्यां नभोविभागात्त्वरसाऽवतीर्य । निवेशदेशाततधूतपक्षः पपातभूमावुपभैमिहंसः ॥ १ ॥

अथभैम्यास्तद्गुणान्हंसमुखेनवर्णयितुंतृतीयसर्गमारभते ॥ आकुंचिताभ्यामिति ॥ अथोपवनप्राप्त्यनंतरंनलकरणानंतरंवाहंसःआकुंचिताभ्यांकृतसंकोचाभ्यांपक्षतिभ्यांपक्षमूलाभ्यांनभोविभागात्आकाशप्रदेशात्त्वरसावेगेनअवतीर्यउत्तीर्यउपभैमिभैमीसमीपेभूमौपपातउपविशतिस्मकिंभूतःनिवेशदेशेउपवेशस्थानेआततौविस्तरितौकंपितौचपक्षौयेनसःपक्षिणातिः १

आकस्मिकःपक्षपुटाहतायाः क्षितेस्तदायःस्वनउच्चचार । द्रागन्यविन्यस्तदृशःसतस्याः संभ्रान्तमन्तःकरणंचकार ॥ २ ॥

आकस्मिकइति ॥ पक्षपुटेनपक्षद्वयेनाहतायाःक्षितेःसकाशात्आकस्मिकःअचिंतितोपनतःअज्ञानहेतुकःयःस्वनःशब्दःतदापतनसमयेउच्चचारउद्भूत्अकस्मात्वात्तच्छब्दस्तस्याभैम्याअंतःकरणंद्राक्झटितिसंभ्रांतंसचकितंचकारआकस्मिकशब्दश्रवणात्सभयासाश्चर्याचजातेतिभावःकीदृश्याःअस्याःअन्यविन्यस्तदृशःअन्यत्रस्वनदेशान्प्रदेशांतरेषुविन्यस्तेचालितेदृशौययासाकुतोयंशब्दउत्पन्नइतिदृतस्ततोविलोकितवतीतिभावः ॥ २ ॥

नेत्राणिवैदर्भसुतासखीनां विमुक्ततत्तद्विषयग्रहाणि । प्रापुस्तमेकंनिरुपाख्यरूपं ब्रह्मेवचेतांसियतव्रतानाम् ॥ ३ ॥

नेत्राणीति ॥ वैदर्भसुतासखीनांनेत्राणिनिरुपाख्यंवक्तुमशक्यंरूपंसौंदर्यंयस्यतंएकंकेवलंहंसंप्रापुःसादरंपपुरित्यर्थःकिंभूतानिविमुक्तःत्यक्तःतेषांतेषांविषयाणांस्रक्चंदननृत्यगीतादीनांग्रहोग्रहणंयैस्तानिकेषांकानिकि

मिवयततत्रतामांयोगिनांचेतांसिब्रह्मेवपरमात्मस्वरूपमिवतान्यपिविमुक्तातद्विषयाःस्त्रक्चंदनवनितादयस्तेपुप्रह्वोंगीकारोयैस्तानि निरुपाख्यरूपमीदृक्तयाप्रतिपादयितुमशक्यरूपंयोगिमनोविषयत्वात्ब्रह्मणःएकमद्वितीयंचवैदर्भःविदर्भाणांराजेतिपूर्ववत् तत्तदितिवीप्सायांद्विर्वचनादेकशेषाभावः ॥ ३ ॥

हंसंतनौसन्निहितंचरन्तं मुनेर्मनोवृत्तिरिवस्विकायाम् । गृहीतुकामादरिणाशयेन यत्नादसौ निश्चलतांजगाहे ॥ ४ ॥

हंसमिति ॥ असौभैमीदरिणाभयेनअदरिणानिर्भयेनआशयेनपाणिना हंसंगृहीतुकामाधर्त्तुंकामासतीयत्नात्स्विकायांस्वायांतनौशरीरेनिश्चलतां जगाहेप्राप चित्तेनुचंचलैशभून्निभूतंसन्निहितंनिकटंसततानलेननिहितं प्रेषितंवाचरंतंगच्छंतंप्रयत्नपूर्वनिश्चलत्वंबालत्वाद्भयं धारणानिवेशाद्भयाभावःकस्यकेवमुनेःमनोवृत्तिरिवयथामुनेःयोगिनःमानसोव्यापारःस्विकायां तनौचरन्तंसद्भिर्नेत्रादिभिर्निंतरांहितंध्यातंसङ्गोवातेस्यएवनिहितंहृष्टं हंसंपरमात्मानं आदरयुक्तेनाशयेनाभिप्रायेणग्रहीतुकामासतीनिश्चलतां प्राप्नोतिपक्षिधारणजातिःहंसपक्षिणिविष्णौच स्विकेतिभस्त्रैषेतिवेत्वंगृहीतुकामागृहोलिटीतिइटोदीर्घःतुंकामेतिमलोपःअदरिणेतिअतइनंतस्य नञ्समासः ॥ ४ ॥

तामिंगितैरप्यनुमायमायामयं नभैम्याविवियदुत्पपात । तत्पाणिमात्मोपरिपातुकंतु मोघंवितेने प्लुतिलाघवेन ॥ ५ ॥

तामिति ॥ अयंहंसःतां भ्युत्थगमनादिरूपांभैम्यामायांस्वधारणकपटवृतिंइंगितैश्चेष्टाभिरनुमायज्ञात्वापिवियदाकाशंनोत्पपात उड्डुनयनविषयं नचकार किंतुआत्मोपरिपातुकं स्वस्योपरिपतनशीलंतत्पाणिंभैमीहस्तंअदूरंउत्प्लवनलघुतयामोघनिष्फलंवितेने कृतवान् तार्थइयंविजनप्रदेशेनेतव्येतिबुध्वानोत्पपात उत्पततेधारणार्थंप्रयत्नमकर्त्त्वैवगमिष्यतीतिदौत्यासिद्धिःस्यादितिभावःअनुमायनत्वपीतिनिषेधात्रेत्वंपातुकमितिलषपते

तिशीलेउकञ् उपरिपातुकमितिसुहसुपेतिसमासंकृत्वापश्चात्पूर्वेणषष्ठीस मासः अ न्यथापूरणगुणेतिषष्ठीसमासनिषेधप्रसंगात्पातुकशब्दस्योकप्रत्ययां तत्वेपिउपरिपातुकशब्दस्यतदंतत्वाभावात्नलोकेतिषष्ठीनिषेधाभावः॥५॥

व्यर्थीकृतंपत्त्ररथेनतेनतथाऽवसायव्यवसायमस्याः । परस्परामर्पितहस्ततालतत्कालमालीभिरहस्यताऽलम् ॥ ६ ॥

व्यर्थीकृतमिति ॥ आलीभिःसखीभिस्तत्कालंतस्मिन्कालेपरस्परामन्योन्यामर्पितोदत्तःहस्तेषुतालस्तालिकायस्यांक्रियायांयथाभवतितथाअलंअत्यर्थमहस्यतहसितंकिंकृत्वाअस्याः भैम्याव्यवसायंपक्षिधारणोपायंतथाप्रुतिलाघवप्रकारेण तेनपत्त्ररथेनपक्षिणाहंसेन व्यर्थीकृतं निष्फलीकृतंअवसायज्ञात्वापरस्परांकर्मव्यतिहारेसर्वनाम्नोद्वेभवतइतिद्वित्वंबहुलवचनात्समासवद्भावाभावेपूर्वपदस्यप्रथमैकवचनांतत्वम् कस्कादित्वात्सःस्त्रीपुंनपुंसकयोरुत्तरपदस्यवाम्भावोवक्तव्यइत्युत्तरपदस्याम्भावःतत्कालंकालाध्वनोरितिद्वितीया ॥ ६ ॥

उच्चाटनीयःकरतालिकानां दानादिदानींभवतीभिरेषः । याऽन्वेतिमांद्रुह्यतिमह्यमेव साऽत्रेत्युपालंभितयालिवर्गः ॥ ७ ॥

उच्चेति ॥ तयाभैम्याआलिवर्गःसखीजनइतिअनेनप्रकारेणउपालंभिरउपालब्धःइतिकिंइदानींनीमन्येनंधारयंत्यांभवतीभिःएषः हंसःकरतालिकानांहस्ततालानांदानाद्वादनात्उच्चाटनीयउड्डनीयः प्रश्नःकाकुःएतस्यग्रहणेमयायत्नःक्रियतेभवतीभिरुच्चाटनंक्रियतेएतन्नयुक्तमित्यर्थःअत्रभासुभवतीदुरध्येयामासन्वेतिअनुगमिष्यतिसामह्यमेवद्रुह्यत्येव एषशब्दस्यावृत्तिःसमद्रोहमेवकरिष्यतीतिलिअन्वेतिद्रुह्यतीतिवर्तमानसामीप्यइतिभविष्यतिलट्अन्वादेशेपिनचवाहेतिएवशब्देनसाक्षाद्योगेनिषेधान्मह्यमित्यत्रनमयादेशःमह्यंक्रुधद्रुहेतिचतुर्थी ॥ ७ ॥

धृतालपकोपाहसितेसखीनां छायेवभास्वंतमभिप्रयातुः । श्यामाऽथहंसस्यकरानवाप्तेर्मंदाक्षल

त्स्यालगतिस्मपश्चात् ॥ ८ ॥

धृतेति ॥ अयानायौवनमध्यस्थाहंसस्यपश्चाद्गतिस्मचचालकिंभूतास खीनांहसितैहास्यविषयेवधूपराधाभावात्धृतःकृतोल्पः कोपोययातथाहं सस्यकरेणहस्तेनानवाप्तेरप्राप्तेर्हेतोर्मंदाक्षेणलज्यतेदृश्यतेत्यर्थः कस्यके वभास्वतंसूर्यंअभिप्रयातुःसूर्यसंमुखंगच्छतःपुरुषस्यजायायथातस्यैवपश्चाद्ग गति छायापिहिहंसस्यसूर्यस्यकिरणाप्राप्तेःश्रमार्भवति हंसस्यपश्चादि त्यनेनयोगेषष्ठ्यतसर्थप्रत्ययनेतिषष्ठीपश्चादितिनिपातः मंदाक्षंह्रीस्त्रपा इत्यमरः ॥ ८ ॥

अस्तानहंसाभिमुखीपुनस्ते यात्रेतिताभिश्छल हस्यमाना । साऽहमनैवाशकुनीभवेन्मे भावि प्रियावेदकएषहंसः ॥ ९ ॥

अस्तेति ॥ ताभिःसखीभिरितिपूर्वोक्तेनप्रकारेणछलेनशब्दछलेनहस्य मानासामैमीइतिवद्यमाणंसखीःप्रतिआहस्म इतिकिं हेभैमिहंसाभिमु खीराजहंसंसन्मुखीअथचसूर्यंसन्मुखीयात्रातेपुनःराजपुत्र्याः नशस्तानप्र शस्ता अशकुनत्वाच्छास्त्रनिषिद्धत्वात्इतिसखीवचनम् हेसख्यःएषहंसो मेममनैवअशकुनीभवेत् अपशकुनरूपोनैवस्यादितिप्रार्थनायांलिङ् यतो यंभावियत्प्रियंतस्यावेदकःसूचकःराजहंसाभिमुखयात्राशकुनरूपैव हंसद र्शनस्यश्रवणस्यचवसंतराजेनसर्वसिद्धिकरत्वोक्तेरितिअतएवभविष्यदनु रागवान्यः प्रियोनलस्तस्यावेदकइतिचलोकोत्तरसुवर्णशकुनदर्शनाल्लोको त्तरनलशुभप्राप्तिरनुमीयतेभविष्यन्ननुरागवान्वानैवाशकुनीः पक्ष्येवेतिवा प्रत्ययादित्यंप्रतिवुद्धमितियात्रानिषेधात् । तथानायंसूर्योदिःकिंतुपक्ष्येव अशकुनशकुनशब्दादशुभसूचकात्पक्षिनिषेधकाच्चाऽस्यच्चावितीकारःपक्षि निषेधकादशकुनिशब्दादर्थौचेतिदीर्घोवा भावीगन्त्यादिः ॥ ९ ॥

हंसोप्यसौहंसगतेःसुदत्याः पुरःपुरश्चारुचलन्ब भासे । वैलक्ष्यहेतोर्गतिमेतदीयामग्रेऽनुकृत्योप हसन्निवोच्चैः ॥ १० ॥

हंसइति ॥ नकेवलंताभिरेताभिरेवहसिताकिंतुअसौहंसोपिवैलक्ष्यहे

तोभैमीलज्जोत्पादनमेवहेतुःतस्याएतदीयांभैमीसंबंधिनींगतिंअग्र्याएवां ऽग्रेअनुकृत्यअनुसृत्यउच्चैरुच्चैरतिशयेनोपहसन्निवउपहासं कुर्वन्निवबभा सेशुशुभे किंकुर्वन्हंसवद्गतिर्गमनंयस्याःसुदत्याःभैम्याःपुरअग्रेचाकरमणी यंचलन्गच्छन् परिहासकोपिवेपाद्यनुकरणेनान्याम्हेपयती सुदत्यावैलक्ष्य हेतोरितिचषष्ठ्यरतसर्वैतिषष्ठीहेतुप्रयोगइतिषष्ठ्यौ ॥ १० ॥

पदेपदेभाविनिभाविनीतं यथाकरप्राप्यमवैतिनू नम् । तथासखेलंचलतालतासु प्रतार्यतेनाचकृ षे कृशांगी ॥ ११ ॥

पदइति ॥ भावोहंसग्रहणानुसंधानंतद्वतीसाभैमीभाविनिभविष्यतिप देपदेचरणविन्यासेतंहंसंकरप्राप्यंहस्तप्राप्यंनूनंनिश्चयेनयथाऽवैतिजाना तिउत्तरस्मिन्पदेऽवश्यमेनंधारयिष्यामीतियथाजानातितथासखेलंसक्री डंचलतागच्छतातेनहंसेनप्रतार्यवंचयित्वासाकृशाङ्गीलतासुवल्लीसमीपेत्र्या चकृषेआकृष्टाभाविनीयमितिपाठेभाविनीपदविशेषणं भामिनीतिपाठेह स्ताप्राप्तेःकोपनेत्यर्थःकृशांगीतिविरहपीडासूच्यतेप्राप्यंकृत्यार्थेतितृश्राव श्यकेकृत्यः ॥ ११ ॥

रुषानिषिद्धालिजनांयदेनां छायाद्वितीयांकलयां चकार । तदाश्रमाम्भःकणभूषितांगीं सकीरव न्मानुषवागवादीत् ॥ १२ ॥

रुषेति ॥ कीरवच्छुकवन्मानुषीवाक्यस्ययथाशुकोमनुष्यवाचावदति तथासहंसोरुषाक्रोधेननिषिद्धःआलिजनःसखीसमूहोययाऽतएवछायैव द्वितीयासहचरीयस्यास्तामेकाकिनीसथाश्रमांभःकणैःश्रमजनितघर्मोद कबिंदुभिः भूषितमंगंयस्यास्तांयदाकलयांचकारज्ञातवान् तदातांप्रत्यवा दीत्उवाच छायाद्वितीयामित्यनेनदूत्यावसरःसूचितःश्रमांभइत्यनेनश्रा तेयमतःपरंनागमिष्यतीतिदूत्यंकर्तुमशक्यंतस्मादत्रैवस्थातव्यंमयेतिसूचि तं भूषितपदेनश्रमबिंदूनांमुक्तासाम्यंसूचितं छाययाकांत्याअद्वितीयांअ विद्यमानप्रतिमां रुषानिषिद्धालिजनांश्रमांभःकणभूषितांगींयदाज्ञातवा निति वा मानुषस्यवागिववाक्यस्येतिवा ॥ १२ ॥

अयेकियद्यावदुपैषिदूरं व्यर्थंपरिश्राम्यसिवा कि
मर्थम् । उदेतितेभीरपिकिन्नुबाले विलोकयन्त्या
नघनावनालीः ॥ १३ ॥

अयेति ॥ अयेभैमिकियद्दूरंयावदुपैषिआगमिष्यसि वासमुच्चये त्वंइत्थं अनेनप्रकारेणशीघ्रमागमनादिनाव्यर्थंनिष्फलंकिंवापरिश्राम्यसिकथय कि मातेये । अयेइतिव्यर्थंपत्यर्थंवा अमोलकार्येइत्यर्थःकिमर्थंमितिपाठेअर्थं शब्दःप्रयोजनवाची ततश्चकिंप्रयोजनमित्यर्थःयातीतियास्तद्वत् यावत् शीघ्रगामिपुरुषवत्कियद्दूरमुपैष्यसिव्यर्थंमेवपत्यर्थमित्थंपरिश्राम्यसिका काप्रश्ने व्यर्थंकियद्दूरमुपैषीतिवा नुबालेभैमि परिश्रमंतद्वैव्यर्थंघनगणयसि तर्हिघनानिविडावनालीर्वनपंक्तीर्विलोकयंत्याःपश्यंत्यास्तेतवभीरपिकिं मोदेति मोत्पद्यते बालायाहिघनवनपंक्तिदर्शनेनभयेमोदेतव्यं तदपित वमोदेतीत्याश्चर्यम् नवालइतिपाठेवबयोरभेदान्नवाआलयःसख्योयस्याः तत्सम्बुद्धिःनूतनत्वात्ताःत्वांत्रातां वनसमीपेपरित्यज्यगतास्तथापरित्य तानेतिभावःयावदुपैषीतियावत्पुरेतिभविष्यतिलट् एतेरेजादित्वात्पूर्व पासहृपत्येधतीतिवृद्धिः ॥ १३ ॥

वृथाऽर्पयन्तीमपदेपदन्त्वांमरुल्ललत्पल्लवपाणिकं
पैः । आलीवपश्यप्रतिषेधतीयं कपोतहुंकारगि
रावनाली ॥ १४ ॥

वृथेति ॥ हेभैमिइयंवनालीवनपंक्तिःआलीवसखीवमरुतावायुनाललं तोविलसंतःपल्लवाःतन्नवाःपाणयःतेषांकम्पैःकंपनैःकृत्वातथाकपोता नांपारावतानांहुंकारगीःहुंहुंइतिशब्दस्तयाचअपथेमद्वारणरूपेअस्थानेअ मार्गेचवृथानिष्फलंपदंव्यवसायंचरणन्यासंचार्पयंतीकुर्वतीत्वांप्रतिषेधति पश्यवाक्यार्थःकर्म सख्यपिकरकंपनैःहुंकारेणचसखींनिषेधतिपदंव्यसित त्राणस्थानलक्ष्यांघ्रिवस्तुषुइत्यमरः अपथेपथोविभाषेतिअप्रत्ययेअपथंन पुंसकमितिसाधुः हुंकारकिरेतिपाठेकिरतीतिकिरःइगुपधज्ञाप्रीकिरःकः इत्यनेनकेकांतेनपूर्वस्यकर्मषष्ठीसमासइतिसिद्धांतः ॥ १४ ॥

धार्यःकथंकारमहंभवत्या वियद्विहारीवसुधैकग

स्या । अहोशिशुत्वंतवखण्डितंन स्मरस्यसख्या वयसाप्यनेन ॥ १५ ॥

अस्यानत्वमेवाह ॥ धार्यइति ॥ हेभैमिवसुधायामेवएकाअसाधारणा गतिःसंचरणंयस्या वसुधैवएकागतिर्यस्याइतिवा भवत्यात्वयावियतिअ तरिक्षेविहारोगमनंयस्यएवंभूतोहं कथंकारंकथमिवधार्यःधर्तुंशक्यः अ पितुनकथंचित् अहोआश्चर्येसंबोधनेवा स्मरस्यसख्याकामसमित्रेणअनेनम त्यक्षदृश्येनवयसापितारुण्येनतवशिशुत्वंबालत्वमज्ञत्वंचनखंडितंमता शितंसनगगमगामित्वंस्वस्यचकेवलभुवीगामित्वमविचार्यैवमद्ग्रहणोद्यो गंकरोषीतिभावःप्रश्नःकाकुर्वा अनेनवयःसंधिस्थः अथवस्मरतुल्यस्वमल स्यमित्रेणअनेनसमलक्षणेनवयसापक्षिणातवेदंशिशुत्वंबालत्वंनखंडितंअ पितुखंडितप्रायमेव मयाशीघ्रमेवनलप्राप्तेःकरिष्यमाणत्वात्बालत्वंक्ष टितिगमिष्यतीतिभविष्यत्पपिभूतवदुपचारः धार्यःशक्तिलिङ्चेतिकृत्यःक थंकारंअन्यथैवकथमितिणमुल् भविष्यत्वात्वात्तृतीयासख्याभावितपुस्क त्वात्साधुः ॥ १५ ॥

सहस्रपत्रासनपत्रहंसवंशस्य पत्राणिपतत्रिणः स्मः । अस्मादृशांचाटुरसामृतानि स्वर्लोकलोकेतरदुर्लभानि ॥ १६ ॥

मयिधृतेपिसवनकिंचित्फलमित्याह ॥ सहस्रेति ॥ हेभैमिवयंसहस्रप त्रंकमलमासनंयस्यब्रह्मणस्तस्यपत्राणिवाहनानिहंसास्तेषांवंशस्यकुलस्य पत्राणिपक्षभूताःसहायभूताःपतत्रिणःस्मःभवामःततःकिमतआह अस्मे ति अस्मादृशांचाटूनिप्रियवचनानितेषुयोरसःशृंगारादिस्तल्लक्षणानिअ मृतानिस्वर्लोकेयेलोकाः जनास्तेभ्यइतरेऽन्येपृथिवीपाताललोकवासिन स्तैर्दुर्लभानिदुष्प्रापाणिभुविजनानांदुष्प्रापाणि मानुषीत्वंतद्धर्मंकिंक्रिष्य सीतिभावःपक्षंस्याद्वाहनेपर्णेपक्षेचशरपक्षिणामितिविश्वः अस्मदोद्वयोश्चे तिस्वाभिप्रायंचबहुवचनं नलतडागस्थहंसाभिप्रायंवाअस्मादृशांआसवे नासवत्वात्त्वंदुर्लभानिमधुदुग्धानितिसुमभावः ॥ १६ ॥

स्वर्गापगाहेममृणालिनीनां नालामृणालाग्रभुजो

भजामः । स्वन्नानुरूपां तनुरूपऋद्धिं कार्यं निदानाद्धि गुणानधीते ॥ १७ ॥

ननु भवेतां हंसस्यास्तु वर्णशरीरत्वं कथमित्यत आह ॥ स्वर्गेति ॥ हे भैमि वयं अन्नानुरूपां भक्षणीययोग्यां तनुरूपऋद्धिं शोभां समृद्धिं भजामः प्राप्नुमः किंभूताः स्वर्गापगा स्वर्गनदी तस्याः हेमसृणालिनीनां सुवर्णकमलिनीनां ये नालाः मृणालानि च तेषां मया खिक्रनेणसकलानि कोमलानि विसानि प्रवाल मालासंबंधीनि मृणालानि वा भुंजत इति भुजेः क्विप्‌ हि प्रसिद्धौ कार्यं घटादि निदानादादिकारणात् मृत्पिंडादेः सजवादिकारणाम् कार्यादीन्‌ अधीते लभते कारणगुणाः कार्यगुणानारभंतइति तैल्याविकाः अतस्तेसुवर्णमृणालभक्षणात्सुवर्णमयत्वमस्माकमिति भावः नालाशब्दस्त्रिलिंगः नलस्येमेनालाव यमितिभिन्नपदं रूपऋद्धिमिति कस्यचक्रइति उक्तिभावः निदानात् आख्यातोपयोगइत्यपादानत्वम् ॥ १७

धातुर्नियोगादिह नैषधीयं लीलासरः सेवितुमागतेषु । हैमेषु हंसेष्वहमेक एव भ्रमामि भूलोकविलोकनोत्कः ॥ १८ ॥

ननु यदि भवान्‌ ब्रह्मणो वाहनं तर्हि भुवं प्रत्यागमने आगमने कोहेतुरत आऽऽह ॥ धातुरिति ॥ हे भैमि किंहास्य पतंगस्य धातुर्ब्रह्मणो नियोगात्‌ आज्ञायाः इह भूलोके नैषधीयं नलसंबंधि लीलासरः सेवितुं आलोडयितुं आगते प्राप्तेषु हैमेषु सौवर्णेषु हंसेषु मध्ये एकोऽहमेव भूलोकविलोकने उत्कः उत्कंठितः सन्‌ भ्रमामि विचरामि भूलोकं पश्यन्‌ प्रसंगादत्रागतोऽहमिन्यर्थः नत्वदृश्यं सावहयोनलसरसि क्रीडंतीत्यर्थः हैमेषु विकारेषु अनुदात्तादित्वान्नप्रकृतिभावः हंसेषु निर्द्धारणे सप्तमी उत्कउन्मना इतिनिपातात्साधुः ॥ १८ ॥

विधेः कदाचिद्भ्रमणीविलासे श्रमातुरेभ्यः स्वमहत्तरेभ्यः । स्कन्धस्य विश्रान्तिमदां तदाहि श्राम्यामि नाविश्रमविश्वगोऽपि ॥ १९ ॥

धार्यः कथंकार इति यदुक्तं तत्र भूपर्यटनेन श्रांतस्य तव धारणे कः प्रयास इति आशंकायामाह ॥ विधेरिति ॥ हे भैमि अहं विधेर्ब्रह्मणः कदाचित्क

सिंचितसमयेत्वमणीविलासैवाहलीलायांश्रमातुरेभ्यःपरिश्रांतेभ्यःस्वम
हत्तरेभ्यःनिजपूर्वजेभ्यःहंसेभ्यः स्कंधस्यविश्रांतिंअदां तेपुतद्धारमहमग्रा
हिषं किंभूतोहं अविश्रमंक्वचिद्दिश्रांतिमकृत्वैवविघ्नगोऽपिसर्वलोकगास्य
पितदादितत्प्रभृतिनविश्रांतोभवामि निजपूर्वजप्रसादात्क्लमरहितोविघ्नं
भ्रमामीतिभावःभ्रमणीतिकृत्यल्युटइतिल्युट्श्राम्यामिश्रमामण्नामिति
दीर्घःश्रमकरणेस्य आपिगमेर्डोदृश्यतइतिविघ्नगइत्यत्रडः ॥ १९ ॥

बन्धाय दिव्ये न तिरश्चि कश्चित् पाशादिरासादितपौरुषः स्यात् । एकं विना मादृशि तन्नरस्य स्वर्भोगभाग्यं विरलोदयस्य ॥ २० ॥

ननुपक्षिणःसर्वेश्रबंधनसंभवात्त्वंकथंनबद्धइत्याशंक्यनलप्रसंगेनोत्तरंप्र
यच्छति ॥ बंधायेति ॥ कश्चित्पाशादिःवागुरादिःदिव्येदिविभवेमादृशि
मत्सदृशेतिरश्चिपक्षिणिविषयेबंधनायमादृशंबद्धुंआसादितपौरुषः प्राप्तसा
मर्थ्योनस्याद्भवेत्दिव्यत्वादेवाहंकेनचित्बन्द्धुंनशक्यइत्यर्थः परमयंविशे
षःविरलोदयस्यविरलजन्मनः क्वचित्कस्यचिन्नरस्यपुरुषस्य तत्प्रसिद्धंएकं
असाधारणंस्वर्भोगभाग्यंस्वर्लोकेस्रक्चंदनादिभोगयोग्यं शुभंकर्मविनायो
भूमिस्थोऽपिस्वर्गभोगंभुक्तेतस्यैवमादृशाबश्याइतिभावः एवंविधःकश्चनम
र्त्यइत्यर्थः अथच विगतोरेफोविरेफस्तस्यरस्थाने लस्योदयोयस्मिन्तस्य
नलस्य यद्वानरशब्दस्यविशेषेणरस्थानेलोदयोयस्यत्तभयथापिनलस्येत्यर्थः
ततश्चनलस्यस्वर्भोगभाग्यं विनामादृशंबद्धुंनकोपिशक्नोति नलस्यस्वर्भो
गभागधेयस्यैवमादृशावश्याइतिभावःसचासौनरश्चतन्नरइतिवाबंधायतुम
र्थोदितिचतुर्थी दिव्येदिगादित्वाद्यत् एकंपृथग्विनेतिद्वितीया ॥ २० ॥

इष्टेन पूर्तेन नलस्य वश्याः स्वर्भोगमत्रापि सृजन्त्यमर्त्याः । महीरुहा दोहदसेकशक्तेराकालिकं कोरकमुद्गिरन्ति ॥ २१ ॥

नलस्यस्वर्भोगभाग्यमेवकुतइत्यतआह ॥ इष्टेनेति ॥ इष्टेनयागादिना
पूर्तेनकूपादिनाउपपक्षितोऽधिकदक्षिणादिनाइष्टेनवावश्या अमर्त्यादेवा
अत्रापिभूलोकेपिमनुष्यजन्मन्यपिनलस्यस्वर्भोगंसृजंति यागबाहुल्यंनलं

तडागवापीतुल्यं विनाकेनापिनकृतमितितस्यैववश्याभूत्त्वात्स्वर्भोगंसृजंति दे शांतरदेशाभ्भोविस्वर्गफलंकथमत्रैवेत्याशंक्याह अचेतनाअपिमहीरुहा वृक्षाःदोहदसेकशक्तैः धूपादिदोहदसामर्थ्योद्भोधानोषधिविशेषसाम र्थ्याद्वाउदकसेकसामर्थ्याच्चआकालिकंअन्यकालभवनयोग्यंकोरकंकलिका मुद्गिरंति कालांतरेपिप्रकटयंतितथावृक्षाअपिइष्टेनदोहदेनपूर्तेनखातेमा लवालेनमलाऽधीनाःसंतोदोहदसेकसामर्थ्यादाकालिकेकोरकमुद्गिरंती त्यपिज्ञेयं अन्योपिइष्टःवश्यःसन्स्वर्गफलतुल्यंवस्तुददाति ॥ अथक्रतुकर्मे ष्टंपूर्तंखातादिकर्मणीत्यमरः वश्यावश्यंगतइतिवत् महीरुहाःद्रुमपुष्पाख्यः अकालेभवःआध्यात्मादित्वाट्ठक् पूर्तेनमध्यार्यैतेनस्वनिषेधः ॥ २१ ॥

सुवर्णशैलादवतीर्यतूर्णं स्वर्वाहिनीवारिकणाव कीर्णैः । तंवीजयामःस्मरकेलिकाले पक्षैर्नृपंचा मरबद्धसख्यैः ॥ २२ ॥

स्वर्भोगमेववक्ति ॥ सुवर्णेति ॥ वयंस्मरकेलिकालेसुरतक्रीडासमयेपक्षैः तंनृपंनलंवीजयामःतस्यसुरतखेदापनयनंकुर्मः किंकृत्वा सुवर्णशैलान्मे रोःतूर्णंझटितिअवतीर्यागत्य किंतैःपक्षैस्स्वर्वाहिनीमंदाकिनीतस्यावारिक णाःजलकणास्तैरवकीर्णैर्व्याप्तैःतथागौरत्वाच्चामरैः सहबद्धंकृतंसख्यंसादृ श्यंयैश्चामरसदृशैरित्यर्थःअथवाअमरैर्देवैः सहबद्धंसख्यंयैर्देवैरपिनलस्यस्व र्भोगःसृज्यतेअस्मत्पक्षैरपीतितैः सहसख्यंअस्मिन्पक्षेदेवावयंचवीजयामः तूर्णमित्यनेनखेदाभावः सूचितःस्वरत्वरेत्यूढ ॥ २२ ॥

क्रियेतचेत्साधुविभक्तिचिन्ता व्यक्तिस्तदासाप्र थमाभिधेया । यास्वौजसांसाधयितुंविलासैस्ता वत्क्षमानामपदंबहुस्यात् ॥ २३ ॥

तस्यामलेऽनुसंदृष्ट्वातद्वर्णनंप्रक्रमते॥क्रियेतेति॥केकेसाधवःइतिसाधूनां मध्येविभक्त्याविभागेनचिंताविचारणाचेद्यदि क्रियेततदातर्हिसानलल क्षणाव्यक्तिःप्रथमाआद्याअभिधेयावक्तव्या साधूनांमध्येनलएवप्रथमंगण्यइ तिभावःसाकायास्वौजसांस्वकीयतेजसांविलासैर्विभवैर्बहुसंख्याकंअना मपदंनमनंनामःसमविद्यतेयेषांतेअनामाःशत्रवःतेषांराज्ञांशत्रूणांपदंस्था

मंतादत्साकल्यनसाधयितुं स्वाधीनं कर्तुं समासमर्थो भवेत् तावदसिमहत् समानासपृथ्वीसं शकंपदंसाधयितुमेकैवयवक्तुः अनेकधास्यादितिसविसर्गः पाठइतिवा एतेनपृथ्वीसंख्यसेयएवराजानान्यइतिसूचितमितिव्याख्यानं अथवेंदुयदिसाधुसम्यक् विभक्तीनांसु पतिक्रांचिंताविचारणाक्रियतेतदा साव्यक्तिः प्रथमाअभिधेया प्रथमेतिअभिधेयंस स्वायस्याःसा साक्ता या स्वौजसांएकवचनद्विवचनबहुवचनसंज्ञानां प्रत्ययानांविलासैः यथासंभव विसर्जनीयलोपात्मादेशयीभावादिरूपैः प्रकारविशेषैर्वक्ष्मानप्रातिपदिकं पदंसु वसंसाधयितुंनिष्पादयितुंतावदतितरांसमासमर्थास्यात्भवतिसाव्यक्तिः प्रथमाभिधेया व्यज्यतेऽनयाप्रातिपादिकार्थइतिव्यक्तिः प्रथमेत्यभिधेयां अथयसाधुविभक्तीनांचिंताविचारोयदिक्रियतेतर्ह्येकवचनादिसंज्ञानांस्वौजसांमध्येयाप्रथमाविभक्तिःस्यक्तिःसु लक्षणासैवाभिधेयेतियावत् प्रयोगेयोऽयस्वायएकवचनमुत्सर्गतः करिष्यइतिन्यायेनसुविभक्तिरेवविधेयाभवतीइतिभावः ॥ २३ ॥

राजा सयज्वा विबुधव्रजत्रा कृत्वाऽध्वराज्योपमये
वराज्यम् । भुंक्ते श्रितश्रोत्रियसात्कृतश्रीः पूर्वं
त्वहो शेषमशेषमत्यम् ॥ २४ ॥

राजेति ॥ श्रितश्रोत्रियसादाश्रितछंदोध्याय्यधीनदेयीकृताश्रीर्लक्ष्मीर्येन सः यज्वाविधिनेष्टवान् सराजानलः अध्वरेयज्ञेयदाज्यंघृतंदेवसमूहाधीनदेयीकृतंतस्यघृतस्यउपमयैवदृष्टांतेनैवउपभोगेनैवराज्यंविबुधानांविदुषां व्रजःसमूहस्तदायत्तंदेयंकृत्वासंपाद्यश्लोकोक्तक्रमापेक्षयापूर्वंअध्वराज्यंभुक्ताऽवशेषाज्यंअन्यद्राज्यंअशेषंसकलमपिभुंक्तेइत्यहोआश्चर्यं (यत्पूर्वंभुज्यतेतदशेषंभवतियन्पश्चात्तच्छेषमितिलोकप्रसिद्धिः अत्रतुविपरीतमित्यहोआश्चर्यं) देवसमूहाधीनदेयीकृतस्ययज्ञघृतस्यउपभोगंयथाकरोतितथाविद्वज्जनायत्तीकृतस्यराज्यस्यापीतिभावः यज्ञदक्षिणास्तुश्रोत्रियेभ्यएवदत्ताः राज्यभोगस्तुविद्वज्जनैःसहेति विबुधव्रजत्रेत्यनेनश्रोत्रियसादित्यस्यनपौनरुक्त्यशंका जन्मनाब्राह्मणोज्ञेयःसंस्काराद्द्विजउच्यते विद्ययायातिविप्रत्वं त्रिभिःश्रोत्रियउच्यते इतिमुख्यत्वाद्यपृथगुपादानंश्रोत्रियस्य अथचसर्वजनोपभोग्यत्वादध्वनिमार्गेस्थयज्ञावयंतत्साम्येनैवोपभुंक्तइतिसमस्तराज्यो

यभोगएवार्थयहेतुरितिअनेकयज्ञकारीसन्राडधिराज्यस्यघोपभुक्तेतिभा वःयद्वासुयज्ञोऽइवेनिप् राज्योपमयेतिषष्ठीसमासःभुक्तेउपभोगस्यविव क्षितत्वात्स्त्रियंभुंक्तइतिवत् भुजोऽनवनइतितङ् श्रिताःस्वयमाश्रिताःपा लिताइतिकर्मण्येवक्तप्रत्ययःसमर्थनीयःश्रोत्रियन्छंदोधीतइतिश्रोत्रियश ब्दःसाधुः कृतश्रीरितीयङ्स्थानत्वान्नदीत्वाभावात्कवभावः॥ २४॥

दारिद्र्यदारिद्रविणौघवर्षैरमोघमेघव्रतमर्थिसा र्थे । सन्तुष्टमिष्टानितमिष्टदेवं नाथन्तिकेनाम नलोकनाथम् ॥ २५ ॥

दारिद्र्येति ॥ केनामलोकाःतंलोकनाथंराजानंनलंइष्टानिहितानिधना दीनिननाथंतियाचंतेअपितुसर्वेपि याञ्चाकरणेहेतुगर्भाणिविशेषणानिकिं भूतंबहुत्वेनदारिद्र्यदारिभिः दरिद्रनाशकैर्द्रविणौघवर्षैघनसमूहवर्षैःकृत्वा अर्थिसार्थेयाचकसमूहेअमोघंसफलंमेघव्रतंयस्य जलदायथाजलवर्षैर्लोकं सुखयंतितथाधनवर्षैरयं तथासंतुष्टमयदानैःसंतोषयुक्तंसहर्षोत्साहयुक्तं वा तथाइष्टदेवंइष्टायज्ञिकर्माकृतादेवायेनइष्टाप्रियादेवायस्येतिवा इष्टो हितश्चासौदेवोराजाचइष्टदेवताकृपंवा नामेतिशिरश्चालने दारिद्र्यनाशस मर्थधनदानशीलत्वात्सर्वोपितंयाचतइतिभावः ॥ अथवप्रसन्नदेवंत्रत्वा थंइदंद्रव्याधनादीनिसर्वेपियाचंते नाथिर्याञ्चार्थोद्विकर्मकःआशिष्येवात्म नेपदंनियमादत्रपरस्मैपदम् ॥ २५ ॥

अस्मात्किलश्रोत्रसुधांविधाय रंभाचिरंभामतुलां नलस्य । तत्रानुरक्तातमनाप्यभेजे तन्नामगन्धा न्नलकूवरंसा ॥ २६ ॥

मानुषाणांनलाऽनुरागोऽस्तीतिकिमाश्चर्यंकिन्तुस्वर्वनितानामपिनलाऽ नुरागोऽस्तीतिबोधयितुमाह॥अस्मदिति॥सारमणीयस्वरूपारंभादेवांगना नलस्य अतुलांलोकत्रयेप्यनुपमांभांकांतिंअस्मत्सकाशात् चिरंश्रोत्रसुधांक र्णामृतंविधायकृत्वाबहुकालंसादरसाकर्ण्यतत्रनलेअनुरक्तासतीतंनलंअना प्यकिलअप्राप्यैवतस्यनलस्यनाम्नोगंधाल्लेशात्तन्मत्यनुरागान्नलकूवरंकुबेरपु त्रंभेजेप्राप नलकूवरनामापेक्षयातस्यलेशत्वंम् गंधाल्लवंचादितिवाक्यो

यम् अन्योपिअभीष्टवस्तुप्राप्त्यभावात्केनचिद्गुणेनतत्सदृशमन्यद्वस्तुभज ते । गंधोगंधकआमोदेलेशेसंबंधगर्वयोरितिविश्वः अनाप्येत्यत्राङ्प्रश्लेषा दनमुपूर्वत्वाल्ल्यप् ॥ २६ ॥

स्वर्लोकमस्माभिरितः प्रयातैः केलीषुतद्गानगुणान्निपीय । हाहेतिगायन्यदशोचितेन नाम्नैवहाहाहरिगायनोऽभूत् ॥ २७ ॥

स्वर्लोकमिति ॥ केलीषुनलसुखासिकावेलासुक्रीडासुवातस्यनल स्यगानस्यगुणान्माधुर्यादिगुणान्निपीयसादरमा कर्ण्येतःभूलोकात्स्व र्लोकंप्रयातैरस्माभिःकर्तृभिःगायन्हाहाख्यःक्रोहरिगायनोइंद्रगायकःहाहे तियत्अशोचिहाहाकष्टं इतियस्माद्विदितस्तेनैवकारणेनसहरिगायनोमा आहाहाख्यवानभूत् ततःपरंहाहाइत्येवंनामाभूत्तेनैवनाम्नेत्यथवा हाहा हूहूश्चैवमाघार्गंधर्वाश्चिदिवौकसामित्यमरःगायनस्युट्चेतिल्युट् ॥ २७ ॥

शृण्वन्सदारस्तदुदारभावं हृष्यन्मुहुर्लोमपुलोमजायाः । पुण्येननालोकतनाकपालः प्रमोदवाष्पावृतनेत्रमालः ॥ २८ ॥

शृण्वन्निति ॥ लोकपालइंद्रःपुलोमजायाःइंद्राण्यालोमतस्यायत्पुण्ये ननालोकतपश्यतिस्म किंकुर्वन्सदारःसन्इंद्राणीसहितःतस्यनलस्योदा रभावंवदान्यत्वंशृण्वन्आकर्णयन्मुहुर्वारंहृष्यंस्तरोमांचोभवनअदत्तद्रो ममापश्यदितिवा मुहुर्वारंवारंहृष्यदितिरोमविशेषणंवा तद्दर्शनेक्रने हेतुगर्भंविशेषणं तथाप्रमोदवाष्पैरानंदाश्रुभिः आवृताच्छन्नानेत्रपंक्तिर्य स्यसः इंद्राण्यानलगुणाकर्णनोद्भूतं रोमांचंचेदिंद्रोद्रक्ष्यत् अद्भुतौदार्य श्रवणरभावेशाद्रोमांचोदयः तद्दर्शनेशक्रस्यशृंगाररसाधिकशंकाच्यामर्षिश्र मतीत्वात्तत्यागमकरिष्यत्तस्यौदार्यातिशयःसूचितः अदर्शनेहेतुद्वयं । बा ष्पैर्नेत्रनिमीलनस्यंतस्याः पुण्यत्वंच ॥ २८ ॥

सापीश्वरेशृण्वतितद्गुणौघान् प्रसह्यचेतोहरतोर्द्धशंभुः । अभूदपर्णाङ्गुलिरुद्धकर्णा कदानकण्डूयनकैतवेन ॥ २९ ॥

सापीति ॥ सापि पातिव्रत्येनप्रसिद्धाऽपर्णापार्वत्यपिकण्डूयनकैतवेनकण्डूयनव्याजेन अङ्गुलिरुद्धकर्णाङ्गुलिभीरुद्धकर्णाकदानाभूत् अपितुसर्वदैवजातास्मिन्सतिईश्वरेशंभौप्रसह्यबलात्कारेणचेतोऽन्तः करणंहरतोवशीकुर्वतस्तद्गुणौघान्नलगुणसमूहाञ्शृणवतिसादरमाकर्णयति सातिकिंभूताअपर्णा अर्द्धंशरीरार्धंशंभुर्यस्याः शंभोःशरीरार्द्धंवाएकदेशिसमासो वा शंभोरर्द्धशरीरत्वादन्यत्रगन्तुमशक्यत्वात्तद्गुणश्रवणेनसात्विकभावरोमाञ्चाद्युत्पत्तेः पातिव्रत्यभङ्गभीत्याशंभुर्जास्यतीतिभीत्याथ तद्गुणवर्णनप्रस्तावेकण्डूयनव्याजेनकर्णौनिरुणद्धिस्मेत्यर्थः । अपर्णेत्यनेनपर्णत्यागतपस्ययाशंभुप्राप्त्यर्थंप्रत्नानयातयापातिव्रत्यभङ्गभीत्याकर्णरोधःकृत इति भावः ॥ २९ ॥

अलंसृजन् धर्मविधौविधाता रुणद्धिमौनस्य मिषेणवाणीम् । तत्कण्ठमालिङ्ग्यरसस्यतृप्ता नवेद तां वेदजडःस वक्राम् ॥३०॥

अलमिति ॥ धर्मविधौसंध्याकर्मकरणेसृजनसक्तःसन्विधाताब्रह्मामौनस्यमिषेणअलमत्यर्थंवाणीमावृणोति बहिर्निर्गतापुरुषान्तरं मभजदितिशंकयामौनंकरोतिनतुधर्मार्थमितिभावः। यद्रुणद्धितदसंवृणोतिवा । वैयर्थ्यमेवाह।सब्रह्मातत्कण्ठंनलकण्ठमालिङ्ग्याश्लिष्यरसस्यशृङ्गारादिरसैःतृप्तांपूर्णांवक्रांवक्रोक्तिरूपांतांवाणींनवेदजानातियतोवेदजडः सदैववेदपाठव्याकुलीभूतहृदयः निरुद्धापिकदानिर्जित्यनलकण्ठमालिलिङ्गेतिनाज्ञासीदितिभावः । अथवावेदजडत्वात्तंविहायअनुरागान्नलकण्ठमालिङ्ग्यशृङ्गारादिपूर्णामित्यर्थः शृङ्गारादियुक्तांवक्रोक्तिंनलएवजानातिनान्यइत्यर्थः । अन्योऽपिकान्दसोविरक्तामनुरक्तांवास्वस्त्रियंनजानाति । पूरणगुणेति सुहितार्थयोगेषष्ठीसमासनिषेधाद्रसस्येतितृप्त्यर्थंकरणेषष्ठी ॥३०॥

श्रियस्तदालिङ्गनभूर्नभूता व्रतक्षितिःकाऽपिपतिव्रतायाः । समस्तभूतात्मतया न भूतं तद्भर्तुरीर्ष्याकलुषाणुनापि ॥ ३१ ॥

श्रियइति ॥ पतिव्रतायाःश्रियःशोभायाअथवाराज्यलक्ष्म्याःनलेनसहतदालिङ्गनंनलालिङ्गनं तस्माद्भवतीतिभूःकापिव्रतक्षतिः पातिव्रत्यक्षतिर्नभूता

नजाता तस्यालक्ष्म्याभर्तुर्विष्णोर्नसालिङ्गनेमलक्ष्मीविषयेईर्ष्याऽसहि ष्णुत्वलक्षणा तथाकलुषंकालुष्यं तस्यत्वगुर्लेशस्तेनापिनभूतं नजातं तस्य पातिव्रत्यस्यतत्यभावेतद्भर्तुरीर्ष्याकालुष्याभावेचहेतुमाह । समस्तभूतात्मत याविष्णोःसकलभूतस्वरूपत्वेनसमस्तात्मात्माविष्णुस्तस्यभावस्तत्तातया नलोपिविष्णुरेवेतिनलदालिङ्गनेपातिव्रत्यक्षितिः। विष्णोरीर्ष्याचमाभूदि त्यर्थः। सदाकान्तिसंपत्तियुक्तमितिभावः। कलुषशब्दोऽत्रधर्मवाचकपरः। असूयानिमित्तपापलेशेनापिनभूतमितिवा। पत्यर्थमसूशब्दस्ययाजकादि त्वात्षष्ठीसमासः ॥ ३१ ॥

धिक्तंविधेःपाणिमजातलज्जं निर्माति यःपर्व
णिपूर्णमिन्दुम् । मन्ये सविज्ञः स्मृततन्मुखश्रीः
कृतार्धमौज्झद्धरमूर्द्धियस्तम् ॥ ३२ ॥

धिगिति॥ हेभैमिस्मृतातस्यनलस्यमुखश्रीर्येनएवंभूतोपियोविधेर्ब्रह्मणः पाणिर्हस्तः पर्वणिपूर्णिमायांपूर्णंपरिपूर्णकलंसकलङ्कंचन्द्रंनिर्मातिरचयति अतएवअजातलज्जंनिर्लज्जंविधेः पाणिं धिक् लज्जैवमुखाननेतत्प्रियः कूरस्तस्मादतिहीनंपूर्णचन्द्रंनिर्मातिसनिर्लज्जस्मात्निन्द्यएवसविधेःपाणि र्विज्ञःकुशलः सकःयःस्मृतनलाननशोभःसन्कृतार्द्धंकृतैकदेशमपिसंचन्द्रं हरमूर्ध्निशिवमस्तकेऔज्झत्तत्याजइत्यहंमन्येप्रारब्धमपितदुसमस्यान्यस्य स्मरणात्तत्त्यजति सविपश्चिदेवेतिभावः। पूर्णमलमेकपक्षंचचन्द्रंयद्यपिक एवब्रह्मणःपाणिर्निर्माति तथापिकार्यभेदान्मूर्खत्वंविज्ञत्वंकालभेदादुपच र्यतेचन्द्रमुखादप्यतिरमणीयंतदाननमितिभावः ॥ ३२ ॥

निलीयते ह्रीविधुरः स्वजैत्रं श्रुत्वा विधुस्तस्य
मुखंमुखान्नः । सूरे समुद्रस्यकदापिपूरे कदाचि
दभ्रभ्रमदभ्रगर्भे ॥ ३३ ॥

निलीयतइति॥ हेभैमिविधुश्चन्द्रोनोऽस्माकंमुखात्तस्यमुखंस्वजैत्रंस्वस्य जेतृश्रुत्वाह्रीविधुरोलज्जाविकलः सन्कदापिकदाचिदमावास्यायांसूरेसूर्ये कदापिअस्तसमयेसमुद्रस्यपूरेप्रवाहेकदाचित्प्रावृट्कालेऽभ्रआकाशेभ्रम न्ति अभ्राणिमेघास्तेषांगर्भेमध्येनिलीयतेअन्तर्हितोभवति अन्योऽपिस्व जेतारंश्रुत्वालज्जाविकलोऽलक्षितेपुस्थानेषुनिलीयते। सूरःसूर्योयेना,द्यो

दिवौद्वेस्त्रियामभ्रम्,, अभ्रं मेघ,इत्यमरः। जैतैवजैत्रंप्रज्ञाद्यण् ॥ ३३ ॥

संज्ञाप्यनः स्वध्वजभृत्यवर्गान् दैत्यारिरत्यब्जल लास्यनुत्यै । तत्संकुचन्नाभिसरोजपीताद्धातुर्विलज्जं रमते रमायां ॥ ३४ ॥

संज्ञाप्येति ॥ दैत्यारिर्विष्णुःस्वध्वजस्यगरुडस्यभृत्यवर्गोऽस्मान्नत्यब्जं जितकमलंनलास्यंनलमुखंतस्यनुत्यैस्तुतयेसंज्ञयाज्ञाप्य धातुर्ब्रह्मणःसकाशाद्विलज्जंलज्जारहितंयथातथारमायांलक्ष्म्यां रमतेक्रीडति-किंभूताद्धातुस्तयास्तत्कृतयानलाननुत्यासंकुचन्मुकुलीभवन्नाभिसरोजं-नाभिकमलंतेन पीतादन्तर्हितादपश्यदित्यर्थः। अब्जमतिकान्तमयमेवमुकुलीभवनेहेतुः॥ स्तवःस्तोत्रंनुतिःस्तुतिरित्यमरः। पश्यतोवृद्धस्यसमक्षंस्त्रीक्रीडालज्जावहा ॥ ३४ ॥

रेखाभिरास्ये गणनादिवास्य द्वात्रिंशतादन्तमयी भिरन्तः । चतुर्दशाष्टादशचात्रविद्या द्वेधा भवन्तीति शशंस वेधाः ॥ ३५ ॥

रेखाभिरिति ॥ वेधाअस्यअन्तरास्येमुखमध्येद्वात्रिंशताद्वात्रिंशत्संख्याभिर्दन्तरूपाभीरेखाभिर्गणनात्संख्यानंकृत्वाइतिशशंसेवकथयतिस्मेवइतिकिं नलमुखमध्येद्वेधाखतन्त्राभ्यांद्वाभ्यामपिप्रकाराभ्यांचतुर्दश अष्टादशचविद्याःसन्तिइतिदन्तानांरेखात्वनिरूपणंसूक्ष्मत्वेनसामुद्रिकलक्षणद्योतनार्थं दन्ताद्वात्रिंशद्विद्यन्तइतिभावः। चतुर्दशाष्टादशचमिलित्वाद्वात्रिंशत् विद्यानांचतुर्दशत्वमष्टादशत्वंचप्रथमसर्गउक्तम्। विंशत्याद्याःसदैकत्वइतिद्वात्रिंशच्छब्दोबहुवचनान्तविशेषणम्। गणनाल्ल्यब्लोपेकर्मणिपंचमी। द्विधासंख्यायाविधार्थेधाइतिधाप्रत्ययस्यएधाश्चेत्येधाच् ॥३५॥

श्रियौनरेन्द्रस्य निरीक्ष्य तस्य स्मराग्मरेन्द्रावपि नस्मरामः । वासेन तस्मिन् क्षमयोश्च सम्यग् बुद्धीन दध्मः खलु शेषबुद्धौ ॥ ३६ ॥

श्रियाविति ॥ इमेवयंतस्यनरेन्द्रस्यश्रियौशोभासम्पद्धौनिरीक्ष्यदृष्ट्वास्मरामरेन्द्रावपिकामेन्द्रावपिनस्मरामोऽन्तःकरणगोचरीनकुर्मो मदनेका

ञ्जितेवृन्दे चसमृद्धिरेवनलेचद्वैअपीत्याधिक्यम् । तस्मिन्नलेक्षमयोर्भूक्षा
न्त्योःसम्यग्वासेनवसत्याखलुनिश्चयेनशेषबुद्धौअनन्तसुगतायपिबुद्धौचित्ते
नदध्सोमनसानुस्वरामइत्यर्थः।तयोरेकैवक्षमाधारत्वमस्यचद्वयोरप्याधार
त्वमतस्तयोःस्मरणंनताभ्यामयमधिकइतिवा।भूमिक्षान्त्योःक्षमेत्यमरः।क्ष
मेणाःशेषत्वेनाविवक्षणात्स्मरामरेन्द्रावित्यत्रअधीगर्थेतिपञ्चभावः ॥३६॥

**विना पतत्रं विनसातनूजैः, समीरणैरीक्षणलङ्घ**
**णीयैः। मनोभिरासीदनणुप्रमाणैर्नलङ्घिता दिक्क**
**तमा तदश्वैः ॥ ३७ ॥**

विनेति ॥ तस्यनलस्याश्वैःकतमादिङ्नलङ्घितानिर्जिताआसीदपितु
सर्वापि किंभूतैःपतत्रंपक्षंविनापक्षरहितैर्विनसातनूजैर्गरुडैरिवयातथाई
क्षणलक्षणीयैर्नेत्रगोचरैःसमीरणैर्वायुभिस्तथाऽनणुप्रमाणैर्महापरिमाणा
धिकरणैर्मनोभिरन्तःकरणैर्गरुडःसपक्षोवायुरचाक्षुषोमनोऽणुपरिमाणमि
तिप्रसिद्धिः ॥ तद्विपरीताअपितदश्वावेगेनगरुडादिरूपाजाताइतिभावः।
इवयोजनावाकर्तव्या । नवर्जितेतिक्वचित्पाठः । अतिजवास्तदश्वाइतिभा
वः । कतरकतमौजातिपरिप्रश्नइतिनिर्देशात्स्वार्थेडतमच् ॥ ३७ ॥

**संग्रामभूमीषु भवत्यरीणामस्त्रैर्नदीमातृकतां गता**
**सु । तद्बाणधारापवनाशनानां राजव्रजीयैरसु**
**भिःसुभिक्षम् ॥ ३८ ॥**

संग्रामेति ॥ हेभैमिराज्ञांप्रजाःसमूहास्तेषामिमेराजव्रजीयास्तैरसुभिर्न
रेन्द्रप्राणरूपैर्वायुभिः करणातस्यनलस्यबाणधाराबाणपरंपरास्तान्नक्षणाः
पवनाशनाःसर्पास्तेषांसुभिक्षंभिक्षासमृद्धिर्भवति नलबाणैःसर्वेपिशत्रवो-
हताइतिभावः। कासुसतीषुसंग्रामभूमिषुअरीणांशत्रूणामस्त्रैरुधिरैर्नदीमा
तृकतांगतासुनदीजलपरिपूर्णासुसतीषुवैरिरुधिरनदीपूर्णास्वित्यर्थः।दैर्घ्ये
णाशुगामित्वेनप्राणहरत्वेनबाणानांपवनाशनत्वाद्बाणानांपवनाभिधत्वा
त्तैरेषांसुभिक्षमितिभावः। नदीमातृकासुभूमिषुअवग्रहादिभिःसद्भावेसुभि
क्षंभवति॥देशोनद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः॥स्यान्नदीमातृकोदेवमा
तृकश्चयथाक्रममित्यमरः। नदीमातृकइतिनद्यृतश्चेतिकप्। राजव्रजीयेति
वृद्धाच्छः। सुभिक्षंभिक्षाणांसमृद्धिरव्ययंविभक्तीत्यव्ययीभावः ॥ ३८ ॥

यशो यदस्याऽजनिसंयुगेषु कण्डूलभावं भजता भुजेन । हेतोर्गुणादेवदिगापगाली कूलंकषत्वव्यसनं तदीयम् ॥ ३९ ॥

यशइति ॥ कण्डूलभावंरणकण्डूसहितत्वंभजताप्राप्नुवताभुजेनसंयुगेषु इत्यस्ययशोऽजनिसंपादितं तत्तदीयंयशःसंबन्धिदिशएवापगा नद्यस्ता-सामालीपङ्क्तिस्तस्याःकूलंतीरंतत्कषत्वंकषणस्वभावस्तद्रूपंव्यसनंहेतोः कारणस्यगुणादेवंजातमितिशेषः । नतुस्वभावतोयशःकारणेभुजेविद्यमा नात्कण्डूस्वभावलक्षणात्कारणगुणादेवयशसिकूलंकषत्वंव्यसनमागतमिति भावः । तस्ययशःसर्वदिग्व्यापीत्यर्थः । कण्डूलेतिसिध्मादिभ्यश्चेत्यस्त्यर्थे इलच् कण्डूशब्दात्याद्न्तइतिवा । आतोऽनुपसर्गेकः । कूलंकषइति सर्वकू लेतिखशिअजन्तस्यान्मुम् ॥ ३९ ॥

यदित्रिलोकीगणनापरास्यात्तस्याः समाप्तिर्यदि नायुषस्यात् । पारेपरार्द्धंगणितंयदि स्याद्गणेय निःशेषगुणोऽपिसस्यात् ॥ ४० ॥

इदानींतस्यगुणावर्णनेऽशक्तिंद्योतयन्नतिशयोक्तिमाह ॥ यदीति । त्रि लोकीत्रैलोक्यंयदिगणनापरागुणगणनासक्तास्यात्तस्यास्त्रिलोक्यास्तद्गुण गणनार्थमायुषः समाप्तिर्यदिनस्याद्यदिगणितंगणितशास्त्रंपारेपरार्द्धं परा र्द्धस्यपारंयदिस्यात् तदातस्त्रिलोकीगणयितुंशक्यानिःशेषाःसमग्रागुणा यस्यएवंभूतोपिसभवेन्नतुएवंततः सोऽप्यसंख्येयगुणइतिभावः । त्रिलो कीतिसमाहारद्विगौद्विगोरितिङीप् । पारेपरार्द्धंपारेमध्येषष्ठ्यावेतिसमा सः । एदन्तत्वंचनिपातनात् । गणेयइत्यौणादिकोगणेरेयःस्यात् । क्रि यातिपत्तेरविवक्षितत्वाल्लिङ् ॥ ४० ॥

अवारितद्वारतयातिरश्चामन्तःपुरे तस्यनिविश्यराज्ञः । गतेषु रम्येष्वधिकं विशेषमध्यापयामःपरमाणुमध्याः ॥ ४१ ॥

तस्यान्तःपुरेस्वगतिंद्योतयन्नाह ॥ अवारीति ॥ हंसैर्भैमिवयंपरमाणुवन्म ध्यमासांताअतिकृशोदराःकथंभूताः स्वतएवरम्येषुगतेषुअधिकंलोकोत्त

रंगमलविशेषमध्यापयामः पाठयामः किंकृत्वासिरधांवल्यादीनामकारि तद्वारतया अनिषिद्धद्वारत्वेनतस्यराज्ञोऽन्तपुरे निविश्य । दृष्टः अदृक्रूत्वादृगतिवुद्धीतिअस्यन्तकर्तृर्यन्तत्वेकर्मत्वम् ॥ ४१ ॥

पीयूषधारामधुराभिरन्तस्तासांरसोदन्वतिमज्जयामः । रम्भादिसौभाग्यरहःकथाभिः काव्येन काव्यं सृजताऽऽदृताभिः ॥ ४२ ॥

नर्मदाचिव्यमपिकुर्मइत्याह ॥ पीयूषेति ॥ वयं रम्भादीनामप्सरसां सौभाग्यंपुरुषवशीकरणादिशक्तिस्तस्यरहस्यंतस्यकथाभिःसंभोगगोष्ठीभिः सुरतन्तरगोप्यकथाभिस्तासांनलस्त्रीणामन्तर्हृदयंरसोदन्वति शृङ्गाररसमुद्रे निमज्जयामोनिमग्नीकुर्मः, किंभूताभिः पीयूषधारामृतप्रवाहस्तस्याःसकाशादमधुराभिरन्यूनाभिस्तथाकाव्यंप्रबन्धविशेषंसृजताकुर्वताकाव्येनशुक्रेणआदृताभिःकाव्येप्रतिपादिताभिः।उदन्वतिउदन्वानुदधौइतिसाधुः । तत्रनिमज्जनंयुक्तम् । रहःसुरतगोप्ययोर्दितिविश्वः ॥ ४२ ॥

काभिर्नतत्राऽभिनवस्मराज्ञा विश्वासनिक्षेपवणिक्क्रियेहम् । जिह्वेति यन्नैवकुतोपितिर्यक्कश्चित्तिरश्चस्त्रपतेनतेन ॥ ४३ ॥

तस्यविश्वासत्वं वदन्नादेशार्हत्वमाह॥काभिरिति॥तत्रनलान्तःपुरेकाभिःसुन्दरीभिरहंपक्षीअभिनवाऽतिगोप्यास्मराज्ञातस्याविश्वासेननिक्षेपवणिक्न्यासनिक्षेपणिक्नक्रियेअपितुसर्वाभिरपिकृतःकयाबारवकामरहस्यंमयिनकथ्यतइत्यर्थः । तत्रहेतुर्यद्यतोहेतोस्तिर्यक्पक्ष्यादिकुतोपि कस्मादपि प्राणिनोनैवजिह्वेतिलज्जते तेनकारणेनकश्चित्कोपिप्राणीतिरश्चोपिसकाशान्नत्रपतेलज्जते ऽतस्ता निर्लज्जाः सत्योमदग्रेअतिगोप्याअपिकामगोष्ठीः कुर्वन्तीतिभावः । अन्यदपिगोप्यंविश्वासयोग्येवणिजिनिक्षिप्यते ॥ ४३ ॥

वार्तापि सा सत्यपि माऽन्यमेति योगादरन्ध्रे हृदि यांनिरुन्धे । विरञ्चिनानाननवादधौतसमाधिशास्त्रश्रुतिपूर्णकर्णः ॥ ४४ ॥

तासां परिहासोक्तमपि वचो नाऽन्यस्मै कथयामीत्याह ॥ वार्त्तेति ॥ असत्यम पि अलीकापि सा परिहासवार्ता परिहासकथापि अन्यं नैति अन्यस्मै न कथया मीत्यर्थः साकाऽस्यत्र अरि सेदर हिते दृढियोगादुपायेन गृह्यतादित्यर्थः। यां वार्ता निरन्येनितरां शृणोमि। ध्यानादिसंबन्धाद्दोषरहिते हृदीति वा सद्दोषमेवान्तःकरणम् अन्यस्मै अन्यथा वार्तां कथयति। दुरन्तः करणं लुब्धानादि नापि दोषमलीनकश्चयामीति भावः। वार्तापि अन्यं नैति दिर्जुलान्यदलीकाप्य न्यं नैति किमुत सत्येति द्योतमार्थेऽपि शब्दः। दुष्टप्रयुक्तावार्ताजनहिताचैक धनीयापि न प्राप्यते वरण्वादेव दृढिनिर्गलः संभाव्यते हृदं तु अरण्य मथमाऽन्त सो कुलटापि काम गार्हियो वाक्कीरन्ध्रस्या मेद हृदाप्य न्यं पुरुषं नैतीत्यत्युक्तिः। योगवत्त्वमेवाह। विरिञ्चेर्ब्रह्मणो नानामानि यत्प्राणसुखानिल रत्नोवादो परन्तं तेन धौतं पवित्रीकृतं स तापि शाखा योगशास्त्रं तस्य श्रुतिः श्रवणं तेन पू र्णकर्णायस्य योगशास्त्राधिकृतवस्थेति यो योगिनो हि यत्र कुत्रापिनकल्प न्ति तथा ब्रह्मणपदेशाद् हंसपि त्वन्दविषयः संधि प्राह्माविश्वासार्हमपि वि श्वस्यकामगोष्ठी कुर्विति भावः। अन्येष्ववरिति लेत्वा लत् ॥ ४४ ॥

नलाश्रयेण त्रिदिवोपभोगं तवानवाप्यं लभते न का न्या। कुमुद्वतीवेन्दुपरिग्रहेण ज्योत्स्नोत्सवं दुर्लभमम्बुजिन्या ॥ ४५ ॥

अतिशयितमभिलाषमुत्पादयितुं तल्लाभमेवं हृष्टंसस्त्वाह ॥ नलेति ॥ हे भैमि तवत्वया अनवाप्यं दुष्प्रापमस्मत्फलं पापकबीजनादि सेवादिरूपं त्रि दिवोपभोगं नलाश्रयेण कृत्वा अन्या जायिका अमरी पि लभते वतखेदे हाहा कष्टं प्राप्यते। वर्तमानसामीप्येलट्। प्राप्नोतिवत्तुलवत्प्रभत्वादिति वा। केव अम्बुजिन्या कमलिन्या दुर्लभं दुष्प्रापं ज्योत्स्नोत्सवं चन्द्रिकाजन्यं विकासादि रूपं महोत्सवमिन्दुपरिग्रहेण चन्द्राङ्गीकारेण कुमुद्वती यथा लभते अन्यस्या अतर्हत्वादेवमेवेदः स्वर्भोगसिद्धौ नलपरिग्रहस्त्वया संपाद्य इत्यर्थः। नहि तद्विना वयमन्यं भजाम इत्यर्थः ॥ तवकर्तृयोगे कृत्यानामिति कर्त्तरि षष्ठी। अम्बुजिन्या खलर्थयोगे षष्ठीनिषेधात् कर्त्तरि तृतीया ॥ ४५ ॥

तदेनैषधानूढतयो दुरापं शर्मत्वयाऽस्मत्कृतपक्षपातात्

जन्म । रसालवन्या मधुपानुविद्धं सौभाग्यमप्राप्तवसन्तयेव ॥ ४६ ॥

प्रकृतमुपसंहरन्नाह ॥ तदिति ॥ ततस्मात्त्वयानैषधेननलेनअनूढतयाअपरिणीतत्त्वेनअस्माभिःकर्तव्यश्चाटुप्रियवचनं तस्माज्जन्मयस्यतत्प्रर्मसुखंदुरापंदुष्प्रापंनतात्रयेणैवत्वयापि असत्प्रियवचनजनितंसुखंप्राप्यंनान्यथेतिभावः । कयाकिमिवअप्राप्तवसन्तया रसालवन्याआम्रकारवाटिकयामधुपैर्भ्रमरैरनुविद्धं कृतंसौभाग्यंमकरन्दास्वादझङ्कारगुञ्जनादिलक्षणमिवयथादुष्प्रापं पूर्वश्लोकेअम्बुजिनीदृष्टान्तेनसर्वथादुष्प्रापत्वं सूचितमिदानीमाम्रवनीदृष्टान्तेनकालान्तरेप्राप्यतेइतिसूच्यते । सप्तमं योगेनलोकेतिपष्ठीनिषेधः ॥ ४६ ॥

तस्यैव वायास्यसि किं न हस्तं दृष्टं मनःकेन विधेः प्रविश्य । अजातपाणिग्रहणाऽसि तावद्रूपस्वरूपातिशयाश्रयश्च ॥ ४७ ॥

तत्रनलप्राप्तिसंभावनायामधैर्यंनकर्त्तव्यमित्याह ॥ तस्येति ॥ त्वंतस्यैवनलस्यैववाहस्तंकिंनप्राप्स्यसिअपितुएवमपिसंभाव्यतेसर्वथानलंनप्राप्नोषीतिनिश्चितुंनशक्यमइतिपूर्वमापरितोषद्योतकोवाशब्दः । निश्चयाभावःकथमतआह । केनपुरुषेणविधेर्ब्रह्मणोमनोऽन्तःकरणंप्रविश्यदृष्टंज्ञातं भैस्यानलोनप्राप्स्यतइतिअपितुनकेनापिएवंसतिकदाचित्तत्प्राप्तिसंभावनापीत्याह । तावदादौ त्वंनजातंपाणिग्रहणंविवाहोयस्याःसाएवंभूतासि वर्तसे प्रथममेवनैराश्यंनकर्तव्यमित्यर्थः । ममयोग्यताभावश्चेत्तत्प्राप्तिःकथंस्यादित्याशङ्क्याह । रूपस्यलावण्यस्यस्वरूपेणैवअलंकारमन्तरेणैवस्वाभाविकोविषयस्तस्याश्रयःस्थानमप्यसि सहजसौन्दर्येणनलप्राप्तिरपितवसंभाव्यतइतिभावः ॥ ४७ ॥

निशा शशाङ्कं शिवया गिरीशं श्रियाहरिंयोजयतःप्रतीतः । विधेरपि स्वारसिकः प्रयासः परस्परंयोग्यसमागमाय ॥ ४८ ॥

स्वरूपत्वात्तस्यानलप्राप्तिं दृढयति ॥ निशेति ॥ निशारात्र्याशशाङ्कंच

न्तं श्रियागौर्या गिरीशं शिवं श्रिया लक्ष्म्या हरिं विष्णुं योजयतः संयोगं प्रापय तो विधेरपि अन्योपि स्वःरसिकः स्वेच्छाकारी। प्रयासः प्रयत्नः परस्परमिथो योग्ययोः समागमाय मेलनाय प्रतीतः ख्यातः पूर्वो ब्रह्मा तेन ब्रह्मणा स्वरसत स्तत्परस्परयोग्ययोरेव समागमं करोति न त्वयोग्ययोरिति अतो नलमपि त्वय्येव योजयतीति भावः। स्वरसेन चरति स्वारसिकः। चरतीति ठक्स्व स्य द्वारादिषु पठितत्वात्तत्र तदादिविधेरप्यनुज्ञानात्स्वैरसिक इति य द्यपि भवितव्यं तथापि स्वागतादिषु दर्शनात्स्वार्थिकत्वाभाविकादिभाष्यका रप्रयोगदर्शनात् वृद्धिरेवेति ज्ञेयम् अन्यत्रापि दृष्टव्यम् ॥ ४८ ॥

**वेलातिगस्त्रैणगुणाब्धिवेणिर्न योगयोग्यासि न**
**लेतरेण। संदर्भ्यते दर्भगुणेन मल्लीमाला न मृद्वी भृश**
**कर्कशेन ॥ ४९ ॥**

अन्यनिराकरणेन तत्रैव त्वं योग्येत्याह। वेलेति। वेलां मर्यादामतिक्रम्य गच्छतीति एवंभूतो यः स्त्रैणः स्त्रीसंबन्धी गुणाब्धिः सौन्दर्यादिगुणसमुद्रस्तस्य वेणिः प्रवाहरूपा समस्तसौन्दर्यादिगुणभाजनं त्वं नलादितरेणापरेण सह योगयोग्या सम्बन्धयोग्या नासि न भवसि यतो मृद्वी मल्लीमाला पुष्पमाला भृशकर्कशेनात्यन्तकठिनेन दर्भगुणेन कुशनिर्मितदोरकेण न संदर्भ्यते न ग्रथ्यते मल्लीमालायाः कुशदोरकेण गुम्फनमनुचितं तथा त्वं नलव्यतिरिक्तेन योगयोग्येति भावः। वेणिर्नदीप्रवाहस्य चाह्वये इति वैजयन्ती। स्त्रीसंबन्धिन स्त्रैणः स्त्रीपुंसाभ्यां नञ्स्नञाविति नञ्। वेणिन इति पाठे तु वणिः इति संबुद्ध्यन्तं तत्र न द्वयन्तत्वाद्धस्वः। मृद्वी वोतो गुणवचनादिति ङीष् ॥ ४९ ॥

**विधिं वधूसृष्टिमपृच्छमेव तद्यानयुग्यो नलकेलि**
**योग्याम्। त्वन्नामवर्णा इव कर्णपीता मयास्य**
**संक्रीडति चक्रिचक्रे ॥ ५० ॥**

तस्याप्तत्वमन्यप्रकारान्तरेणाह्रेतुमाह ॥ विधिमिति ॥ अहं तस्य विधे र्यानं विमानं तस्य धुर्यो भारवाहकः सन् नलकेलेर्नलक्रीडाया योग्यामुचितां वधूसृष्टिं नलक्रीडायोग्या कान्या निर्मितेति कीदृशी विधिं ब्रह्माणमपृच्छमे वत्सृष्टवानेव। तेन किमुत्तरितमित्यत आह। नलकेलियोग्या भैमी विरचिते

तितवनास्तोवर्णाकर्णान्यांपीताइववत्तरत्वेनतमयाश्रुतास्यगेव। किमि तिनश्रुताइत्यतआह।कस्मिन्सति। अस्य ब्रह्मणश्चक्रिणोरथस्य चक्रेसंक्री डतिकूजतिसतिरथाङ्गकूजनेनसस्यगुणाकर्णातिभावः।यदिमिथ्येनावक्ष्यत् तदास्वतएवकार्यसिद्धेस्तदर्थस्वस्मिन्सादराभविष्यदितीवशब्दप्रयोगः। च क्रिचक्रेहंससमूहइतिकश्चित्। युग्येतद्वहतीतियत्। संक्रीडतिसमोऽकूज नेइतिप्रतिषेधाच्चता ॥ ५० ॥

अन्येन पत्या त्वयि योजितायां विज्ञत्वकीर्त्या गतजन्मनोवा। जनापवादार्णवमुत्तरीतुं विधा विधातुःकतमातरीःस्यात् ॥ ५१ ॥

ब्रह्मणःस्ववचनान्यथाकरणेबाधकमाह ॥ अन्येनेति ॥ वाऽथवानि श्चयेनावात्वयिअन्येनलातिरिक्तेनपत्याभर्त्रायोजितायांसत्यांविज्ञत्वकी र्त्यासर्वज्ञत्वयशसैवगतसतिक्रान्तंजन्मयस्यथेनवाएवंविधस्यविधातुर्जना पवादएवार्णवस्तंसर्वज्ञेनब्रह्मणाइदमनुचितंकथमकारीतिलोकापवादस मुद्रमुत्तरीतुंकतमाविधाप्रकारःतरीर्नौकास्याद् अपितुनकापीत्यर्थः।सकले नापिजन्मनायत्सर्वज्ञत्वंब्रह्मणार्जितंतदेकस्यास्तवान्यथाकरणेतदेवगमि ष्यतीतिभियाजलेनैवयोजनीयेतिभावः।समुद्रंतरीतुंकाचिन्नौर्भवति जना पवादार्णवंतरीतुंनकापीतिभावः। स्त्रियांनौस्तरणिस्तरीरित्यमरः। उत्त रीतुंवृतोवेतिदीर्घः।तरत्यनयातरीरवितृस्तृतन्त्रिभ्यईः ॥ ५१ ॥

आस्तां तदप्रस्तुतचिन्तयाऽलं मयाऽसितत्विभ्र मितातिवेलम्। सोऽहंतदागःपरिमार्ष्टुकामस्तवे प्सितंकिंविदधेऽभिधेहि ॥ ५२ ॥

अभिप्रायंज्ञातुमुपसंहरन्नाह ॥ आस्तामिति ॥ हेभैमितन्नलवर्णनंतथत द्योग्यत्वप्रतिपादनंवाऽऽस्तांतिष्ठतुनकर्तव्यमित्यर्थः।यतोऽप्रस्तुतस्यचि न्तयाकथयाऽलंनिष्प्रयोजनत्वात्। हेतन्विमयात्वमतिदूरानयनादति वेलंभृशंभ्रमितासि सोऽहंतदागोऽपराधंपरिमार्ष्टुकामोपनेतुकामः संस्तवकि मीप्सितंकंमनोरथंविदधेकरोमिअभिधेहिब्रूहि अप्रस्तुतचिन्तयेतिवारणा र्थयोगेतृतीया ॥ ५२ ॥

इतीरयित्वा विरराम पत्त्री स राजपुत्रीहृदयं बुभुत्सुः । ह्रदे गभीरे हृदि चावगाढे शंसन्ति कार्यावतरं हि सन्तः ॥ ५३ ॥

इतीति ॥ राजपुत्र्या भैम्या हृदयं नले अनुरागो विद्यते न वेति मनो बुभुत्सुर्जिज्ञासुः स पत्त्री हंसः इति पूर्वोक्तमीरयित्वोक्त्वा विरराम तूष्णीमभूत् । ननु नलानुरागस्त्वयि विद्यते त्वमपि नले अनुरक्ता भवेति प्रकटं किमिति नोक्तवानित्यत आह । हि यस्माद्गभीरे गाम्भीर्ययुक्ते ह्रदे जलाशये गूढाभिप्राये हृदि चाऽवगाढे आलोडिते ज्ञाते च सति सन्तः पण्डिताः कार्यावतरं करणीयं तरणं यथं कार्यस्य प्रस्तावं च शंसन्ति कथयन्ति गम्भीरं ह्रदमनालोड्य नोत्तरीतव्यमित्युत्तरणमार्गं यथा न कोपि कथयति तथाऽऽशयमविज्ञाय बुधस्तदग्रे कार्यविशेषप्रस्तावं न करोति अतस्तदभिप्रायं ज्ञात्वा तस्यां नलानुरागप्रकाशनं कर्तव्यमिति नलानुरागमप्रकाश्यैव तूष्णीं बभूवेत्यर्थः । राजपुत्रीति हृदयस्य गूढाशयत्वम् । विररामेति व्याङ्परिभ्यो रम इति परस्मैपदम् । हृदयं नलोकेति षष्ठीनिषेधः ॥ ५३ ॥

किंचित्तिरश्चीनविलोलमौलिर्विचिन्त्य वाचं मनसा मुहूर्तम् । पतत्त्रिणं सा पृथिवीन्द्रपुत्री जगाद वक्त्रेण तृणीकृतेन्दुः ॥ ५४ ॥

किंचिदिति ॥ सा पृथिवीन्द्रपुत्री भैमी मुहूर्तं क्षणमात्रं मनसाऽन्तःकरणेन वाच्यं वचनं विचिन्त्य विचार्य तं पतत्त्रिणं हंसं जगाद किंभूता वचनविचारणे क्रियमाणे किंचिदीषत्तिरश्चीनो वक्रो विलोलश्चञ्चलो मौलिर्मस्तकं यस्याः सा तथा सहजसौन्दर्येणाभिलाषसिद्ध्याशयाऽतिप्रसन्नत्वेन च वक्त्रेण मुखेन तृणीकृतो न्यक्कृत इन्दुश्चन्द्रो यया । तिरश्चीनं विभाषाञ्चेरदिक्स्त्रियामिति स्वार्थे खः । पुत्रीति शार्ङ्गरवादिपाठान्ङीन् ॥ ५४ ॥

धिक् चापले वत्सिमवत्सलत्वं यत्प्रेरणादुत्तरलीभवन्त्या । समीरसङ्गादिव नीरभङ्ग्या मया तटस्थस्त्वमुपद्रुतोऽसि ॥ ५५ ॥

आत्मनोऽनुचितकारित्वमाह ॥ धिगिति ॥ हे हंस चापलत्वविषये यत्

ऽसमवत्सलत्वं तत्सत्यबालस्य भावोयदिस्तमाद्बालत्वं तेन वत्सलान्यंसत्वेह त्वं बालत्वेन चापलविषयेयत्प्रेरितम् अचपलाङ्गीकरणमितियावत् तद्वि ह्निन्द्यमनुचितं यतोयस्य चापलस्य प्रेरणान्नियोगाद्यदधीनतयावृत्तस्तीभ वन्त्याऽतिश्रयेण चञ्चलीभवन्त्यामयापश्चाद्गत्वात्तटस्थ उदासीनस्त्वमु पद्रुतः पीडितोसि कयेवसमीरसङ्गाद्वायुसंबन्धाच्चञ्चलीभवन्त्यानीरमङ्ग्यै वतरङ्गभङ्ग्यैवतरङ्गरूपयाउदकरचनयातटस्था कूलस्थायथोपद्रूयते नि रपराधापश्चाद्गत्वामयापीडितोऽतोहमनुचितकारिण्येवेतिभावः। वत्स शब्दात् पृथ्वादित्वाद्विमनिच् तस्मादेवचःसासत्वामित्यभिलापवतिलुप् तथावत्सलइतिल्लेहवानुच्यते ॥ ५५ ॥

आदर्शतांस्वच्छतया प्रयासि सतांसनावत्खलु दर्शनीयः। आगः पुरस्कुर्वतिसागसंमां यस्यात्मनीदंप्रतिबिम्बितं तत् ॥ ५६ ॥

आत्मनिन्दापूर्वकंहंसस्तुतिमाह ॥ आदर्शेति ॥ हेहंसदर्शनीयोऽतिरम णीयस्त्वंखलुनिश्चयेनउत्प्रेक्षेवास्वच्छतयानिष्कपटतया कत्वासतांसाधूनां तावत्प्रथममादर्शतांदृष्टान्ततांप्रयासिप्राप्नोषिकिमादर्शवदयंनिष्कपटइति प्रश्नेत्वमेवप्रथमंदृष्टान्तयोग्योसीत्यर्थः। अन्यत्वमिर्मलतयादर्पणत्वमपि द र्पणोपिसतामवलोकनीयः श्रीकरैः प्रातरवलोक्यतेच। निष्कपटतामादर्श त्वञ्चसमर्पयते पश्चाल्लग्नत्वात्सागसंसापराधांमांपुरस्कुर्वति मयासित न्विप्रमितेत्यादिवचनात्सांमतिप्रियभाषिणीयस्यतवात्मनिस्वरूपेइदमाग स्तदस्थणीडनलक्षणोमत्मापराधःप्रतिबिम्बितः सोहन्तदागस्त्यादिवचना त्त्वयामदपराधःस्वीयत्वेनैवस्वीकृत इतिसतांस्वभावोऽन्यापराधंस्वा त्मन्यारोपयन्ति खलुकिमर्थं मादर्शतां प्रयासिकिन्तुततोप्यधिकः। आदर्शे पुरःस्थापितेयथास्थितंवस्तु प्रतिफलतित्वयितुसापराधेवस्तुनिपुरःस्थिते पिअपराधलक्षणागःप्रतिबिम्बितोनतुसापराधांवस्तोऽत्यादर्शादधिकस्त्वा दादर्शरूपोसीति ॥ ५६ ॥

अनार्यमप्याचरितं कुमार्या भवान् मम क्षाम्यतु सौम्य तावत्। हंसोऽपि देवांशतयासि वन्द्यः श्रीवत्सलक्ष्मेव हि मत्स्यमूर्तिः ॥ ५७ ॥

ननुतवकोमनोरथस्तंवदेत्यतआह ॥ मनस्त्विति॥हेहंससमनोरथःकण्ठपथंकण्ठमार्गंवचनगोचरंकथंकेनप्रकारेणयातुअपितुनकेनापिसकस्तुपुमर्थंमभिलाषंमनोन्तःकरणंजातुकदाचिदपिनोज्झतिनत्यजतिअन्तःकरणस्याधोदेशस्थानित्वात्कण्ठस्यचोर्ध्वदेशत्वादित्यर्थः। अधरथोपिगर्तपातादिनात्तव्यःपन्थाःमंनावतरति सर्वत्रापिमनसोगतिसाधनत्वाद्भिलाषोपिमनोरथः। अथचयोवक्तुमपिनशक्यतेसकर्तुं कथंशक्यतइतिदुःसाध्यत्वंतदेवाह मामसंभावनायामलज्जानिर्लज्जासाध्यमसाध्यमित्यज्ञानासतीकाबालाद्विजराजस्यचन्द्रस्यपाणिनाग्रहणाभिलाषंग्रहणाभिलाषंकथयेदपितुहस्तेनचन्द्रंगृहीतुंममवाञ्छेतिकापिनकथयति हस्तेनचन्द्रप्राप्तिर्यथाऽशक्यातथासमनोरथप्राप्तिरितिभावः। द्विजेतिसंबुद्धिः। राज्ञश्चन्द्रस्येतिवा अथचस्वाभिलाषंकथयद्विजानांराजासम्राघनलस्तद्विवाहेच्छाकाकथयेदपितुनकापि नलविवाहेच्छाममेतिकथंकथयेयमितिभावः। अथचसलज्जत्वाद्वक्तुंनशक्यतइत्याह हेद्विजराज काश्चीपाणिग्रहेविवाहेऽभिलाषमिच्छांनिर्लज्जासतीप्रकटयेदपित्वेवंप्रौढैवकथयतिनबालेत्यर्थः ॥ ५९ ॥

वाचंतदीयां परिपीय मृद्वीं मृद्वीकया तुल्यरसां स हंसः। तत्याज तोषंपरपुष्टघुष्टे घृणां च वीणाक्वणिते वितेने ॥ ६० ॥

वाचमिति ॥ सहंसोमृद्वीकयाद्राक्षयातुल्योरसोमधुररसोयस्यास्तांमृद्वींकोमलांतदीयांभैमीसंबन्धिनींवाचंपरिपीयाऽऽकर्ण्यपरपुष्टानांकोकिलानांघुष्टेकूजितेतोषंहर्षंतत्याज तथावीणाक्वणितेवीणानिनादेपिघृणांजुगुप्सांवितेनेचकार पिककूजितवीणाक्वणिताभ्यामपितद्वाणीकोमलासरलाचेतिभावः।मृद्वीकागोस्तनीद्राक्षेत्यमरः। मृद्वीकाचोतोगुणवचनादितिङीषन्तात्संज्ञायांकनिकेणइत्यस्यसंज्ञापूर्वकविधित्वाद्ध्रस्वत्वाभावः। घुष्टइत्यत्रज्ञानार्थत्वाद्घुषिरविशब्दनइतिनिष्ठायाइणिनषेधः। घोषिमनिटंकेचित्पठन्ति ॥ ६० ॥

मन्दाक्षमन्दाक्षरमुद्रमुक्त्वा तस्यांसमाकुञ्चितवाचिहंसः। तच्छंसितेकिंचनसंशयालुर्गिरामुखाम्भोजमयं युयोज ॥ ६१ ॥

मन्दाक्षमिति ॥ अयंहंसस्तुच्छांसितेतस्यावचनेअप्रकटस्वल्पोक्तत्वादेव किंवनसंशयालुःसंदिहानःसन्मुखाम्भोजंप्रशस्तंमुखद्भिरावाचायुयोजवद तिस्मेत्यर्थः । कस्यांसत्यांमन्दाक्षलज्जयामन्दास्वल्पाअक्षरमुद्रावर्णविन्यासोयस्यांक्रियायांतद्यथाभवत्यासमाकुञ्चिताग्रपालूकृताभूतायांसत्यां मुखाम्भोजंप्रशंसावचनैश्चेतिसमासः ॥ ६१ ॥

करेण वाञ्छेव विधुं विधर्तुं यमित्थमात्थाऽऽदरिणी तमर्थम् । पातुं श्रुतिभ्यामपि नाधिकुर्वे वर्णं श्रुते वर्णइवान्तिमः किम् ॥ ६२ ॥

करेणेति ॥ हेभैमिकरेणविधुंचन्द्रंविधर्तुं गृहीतुंवाञ्छेवस्पृहेवनतुतात्त्विकीस्पृहा इत्यमनेनैवगेण्याकारेणआदरिणीआदरयुक्ताअदरिणीनिर्भयाअकम्पावायमर्थंप्रयोजनमात्थब्रूषे अहंतमर्थंश्रुतिभ्यांकर्णाभ्यांपातुंसादरंश्रोतुमपिकिंनाधिकुर्वेनाधिकारीभवामिकर्त्तुंयद्यपिनसमर्थस्तथापिश्रोतुंशक्तएवेत्यपिशब्दार्थः । कर्तुंसप्यधिकारीवाकिम्पुनःश्रोतुमित्यपिशब्दार्थोवा अन्तःकरणेनज्ञातएवश्रोतुमपिनाधिकुर्वेऽपितुअधिकुर्वएवेतिवा कःकिमिव अन्तिमोवर्णःशूद्रःश्रुतेर्वेदस्यवर्णमक्षरमिववेदाक्षरश्रवणेशूद्रस्याधिकारोनास्तितथाममनेतिभावः।आत्थेतिभूतेपिवर्तमानसामीप्यइतिवर्तमानवत्प्रत्ययः । अक्तिमइतिअन्ताच्चेतिवक्तव्यादिमन् ॥ ६२ ॥

अवाप्यते वा किमियद्भवत्या चित्तैकपद्यामपि विद्यते यः । यत्रान्धकारः किल चेतसोऽपि जिह्मेतरैर्ब्रह्म तदप्यवाप्यम् ॥ ६३ ॥

अवाप्यतइति॥हस्तेनचन्द्रधारणवद्दुष्प्रापत्वयदुक्तंतन्नकिंचिदित्याह । यश्चित्तैकपद्यामन्तःकरणलक्षणेकमगम्येऽतिसूक्ष्ममार्गेपिविद्यते सभवत्या अवाप्यतेप्राप्यते वानिश्चये चन्द्रधारणदृष्टान्तेनयत्तस्यअर्थस्यदुष्प्रापत्वमियत्किमियद्भीरवंकिमर्थंतत्रनकार्यमित्यर्थः । अर्थंपरांचत्तगोचरोविषयःसुखेनज्ञायतेइयद्गोपनंतस्यकिमर्थंत्वयाज्ञातइत्यर्थः । एकमार्गस्थितंवस्तुसर्वैरपिज्ञायतेएतद्दृष्टान्तेनदृढयति । किलेति । श्रुतौ यत्रब्रह्मणिचेतसोपिअन्धकारः"यतोवाचोनिवर्तन्तेअप्राप्यमनसासहेति„श्रुतेर्यन्मनोगोच

रोमभवतितदपिस्वप्रकाशब्रह्मजिह्मेतरैरनलसैरवाप्यंप्राप्यतइत्यर्थः।किं पुनर्मनोगोचरस्तलश्चसूक्ष्मदर्शिनामथातत्त्वाभिप्रायोप्यातएवत्वयाकिमिति गोप्यतइतिभावः। वर्त्मन्येकपदीतिच,जिह्मस्तुकुटिलेलस,इतिचामर.। एकपदीसन्ध्यासुपूर्वस्येत्यम्ललोपेपादोन्यतरस्यामितिङीपिपद्‌देशः।अ वाप्यंशकिलिङ्चेतिकृत्यः॥ ६३॥

ईशाणिमैश्वर्यविवर्तमध्ये लोकेशलोकेशयलोकम- ध्ये। तिर्यञ्चमप्यञ्चमृषानभिज्ञरसज्ञतोपज्ञस मज्ञमज्ञम्॥ ६४॥

मदुक्तमजानन्नेवाभिमानेनज्ञातमितिवदसीत्याशङ्कायामाह। ईशेति। ईशस्येश्वरस्याष्टविधैश्वर्यमध्येऽणिमलक्षणंयदैश्वर्यंतस्यविवर्तस्तात्त्विकोन्य थाभावस्तत्त्वतोणिमैश्वर्यमेवजातोनव्योयम्।लोकस्वबुद्धिर्ब्रह्मेदरिवंलो केशोब्रह्मातत्लोकेशयालोकवर्तिनो लोकाजनास्तेषांमध्येऽज्ञंमूर्खंतिर्य ञ्चमपिमामेवंभूतमज्ञजानीहिपूजयवा।किंभूतंमांमृषाऽसत्यंतस्यानभिज्ञा अज्ञातारःसत्यवादिनोरसज्ञाःसहृदयास्तेषामुभयेषांभावस्तत्तासत्यवादि तासहृदयताचतद्विषयेउपज्ञाऽऽद्यज्ञानंयस्यएवंविधश्चासौसमज्ञश्चसमश ब्दस्यसर्वपर्यायत्वात्सर्वज्ञस्तमेवंविधस्वरूपंमामज्ञमलीकभाषिणमहृदयं मूर्खंचयथातवेच्छातथाजानीहीत्यर्थः। सत्यवादिनांसहृदयानांसर्वज्ञाना ञ्चमध्येप्रथमगणनीयोहंमिथ्याभाष्यहृदयोमूर्खश्चकथंस्यामितिभावः।मृषा नभिज्ञासत्यवादिनीरसज्ञाजिह्वायेषान्तेषांभावःसत्यवादिता।उपज्ञायतइ त्युपज्ञाआद्यंज्ञानंमृषानभिज्ञरसज्ञातायाउपज्ञामृषानभिज्ञरसज्ञतोपयज्ञ तेनसमज्ञाकीर्तिर्यस्यएवंसत्यवादिताप्रथमंकस्मादुत्पन्नेति जिज्ञासायान्त स्याःप्रथमोत्पत्तिकारणत्वेन अहमेवख्यातइत्येवंरूपोपज्ञमांजानीहीति वा। लोकेशयेतिअधिकरणेशेतेरित्यचिशयवासवासिष्विति अलुक्। रसज्ञ तोपज्ञमित्यत्रपत्नआतश्चोपसर्गइत्यङ्किउपज्ञोपक्रममित्यादिनानपुंसकत्व म्। समैःसर्वैर्ज्ञायतइतिसमज्ञाकीर्तिः। घञर्थेकविधानमितिकः॥ ६४॥

मध्ये श्रुतीनांप्रतिवेशिनीनां सरस्वतीवासवती मुखे नः। ह्रियेव ताभ्यश्चलतीयमद्धा पथाऽनस रसंगगुणेन नद्धा॥ ६५॥

सत्यवादित्वमेवप्रकटयति॥मध्यइति॥ हेभैमिमोत्साकंसुखेवर्तमानास रस्वतीआवीप्रतिवेशिनीनांलिङ्गद्वयदृष्टिंनीत्वांश्रुतीनांवेदानांमध्येवास वतीस्थितिमतीयस्मात्तस्मात्वाक्यःश्रुतिन्योक्तिर्येषुवल्लजयवाहाशिवयेलङ्ग पथात् अपथंकुमार्गंप्राप्य स्वस्तोपेपत्त्नी नचलतिनव्यभिचरतियत स्ततासहसङ्गःसम्बन्धःसएवगुणस्तेनबद्धाससंवद्धा सत्संगेनबद्धाकाचिद्यथा नव्यभिचरति वेदसाष्टचर्यानांद्वारयपिसत्येवेत्यर्थः सत्येत्वद्धांजसाद्वयंश्र पथान्नुमार्गात्प्रतिनचलतिनगच्छतिकिन्तु समीचीनमार्गात्प्रत्येवगच्छ तीतिवा लिङ्गमभिव्यंलोकाश्रयत्वाल्लिङ्गस्येत्यपथंनपुंसकमित्येतत्राश्रीय ते अथवाअद्धापथादित्येकमेवपदम् अद्धापथात्सत्यमार्गान्नचलतीतिवा अथवसुनशोभनः सुंगःसत्सिर्थं स्वतेनगुणेनदृढयारसनयावद्धाकाचिद्यथा नचलतितथैयमपि मद्वाणयाःश्रुतयःप्रतिवेशिन्योभवन्तिअतएवतत्सदृश सेवव्यवहरंतिनान्यथा ॥ ६५ ॥ हि॑य स्मृनैरम

पर्यङ्कतापन्नसरस्वदङ्को लङ्कापुरीमप्यभिलाषिचि त्तम् । कुत्रापिचेद्वस्तुनि न प्रयाति तदप्यवेहि स्वशये शयालुम् ॥ ६६ ॥

स्वनभिलाषकथयेतिप्ररोचनार्थंस्वसामर्थ्यंद्योतयति ॥ पर्यङ्केति ॥ हे भैमितेचित्तंमनःलङ्कांपुरीमपिअभिलाषिदृष्टुगन्तुंवा अभिलाषुकंसतकुत्रा पिअन्यत्रकस्मिंश्चिल्लङ्कायाः सकाशाद्दतितरांदुष्प्रापेवस्तुनिविषयेचेत्प्र यातिगच्छति त्वंतदपितदुभयमपिस्वशयेस्वहस्तएवशयानंविद्यमानमवेहि जानीहि कुत्रापिवस्तुनिअभिलाषि तवचित्तं । लङ्कायांविद्यमानव स्तुप्राप्त्यर्थंसंकामपिप्रयातितदपीतिवायोजना दुष्प्रापवस्तुनःसाधकोहं सेवेसितत्कथयेतिभावःकिंभूतांलङ्कांसरस्वतःसमुद्रस्यांकोमध्यःपार्श्वःस वेदिनुअङ्कतांचिह्नतांपरिवेष्टनमापन्नप्राप्तःसरस्वदङ्कोयस्याःसातां पर्य ङ्कतांमंचतां समुद्राङ्केसुखेनतिष्ठतीत्यर्थः पर्यङ्कतांयोगपट्टत्वंप्राप्तःसमु द्रोंकश्चिह्नंयस्याइतिवा पर्यङ्कतांवृत्तीत्वंवासमुद्रमध्येतिष्ठतीत्यर्थइतिवा सर्वथालङ्कायादुष्प्रापत्वंसूचितं याएवंविधादुष्प्रापातामपिहस्तगताम वेहिकिंपुनरन्यां कुत्रापिकोःपृथिव्याःत्राणांत्राःतानाप्नोतीतिकुत्रापृक्षिप् वेतिक्षिप्तस्मिन्राजलवणेवस्तुनिवा पर्यङ्केतिविकल्पत्वाक्षत्वाभावःअ

धिःपद्यार्थेतिसंभावनायांसमुच्चयेवा कर्मप्रवचनीयत्वात्क्कामितिद्वितीया अभिलाषस्यगम्यादिपाठाद्वा तदितिसाधलङ्काचञ्च वस्तुतत् नपुंसकम नपुंसकेनेतिएकशेषःपाक्षिकमेकत्वंच ॥ ६६ ॥

इतीरिता पत्त्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी। चेतो न लङ्कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम् ॥ ६७ ॥

इतीति।तेनपत्त्ररथेनपक्षिणाइतिपूर्वोक्तप्रकारेणेरितोक्ताह्रीणालज्जिताभिलाषकथनप्रस्तावेनलज्जिताक्त्वाभिलाषस्यप्रापकोऽहमिति तेनोक्तत्वाद्धृष्टा हृष्टाहृष्यत्ताविस्मितेतियावत् भैमीइतिबभाणअवोचत्इतिकिं मदीयंचेतो लङ्कांनकामयतेप्राप्नोतिअभिलषतीत्यर्थः अन्यत्रवान्यत्रकुत्रापिराजनिवा वचनेनैवसाभिलाषंअथवनलंनलनामानंराजानंकामयते तदतिरिक्तेऽन्यत्र वस्तुनिनैवसाभिलाषं इतिश्लिष्टमेवावोचत्।पतत्पत्त्ररथाण्डजाइत्यमरःह्री णानद्विदेतिनिष्ठानत्वं अप्राप्यवस्तुप्रापकोऽहमितिहंसोक्तिंश्रुत्वाहृष्टास रोमांचा ततश्चहर्षेर्लज्जाहर्षविषयत्वाद्धर्षेर्ह्रीमोक्तित्येवेद्विकल्पःएवंसर्वत्र श्लेषंतिचेक्तित्यनेनग्लहयायोरेवबृद्धिगुणवृध्योः प्रतिषेधात्कामयतइत्यत्र त्वनिग्लक्षणत्वाद्प्रतिहतप्रसराणिङ्वृद्धिरितिशेयम् ॥ ६७ ॥

विचिन्त्यबालाजनशीलशैलं लज्जानदीमज्जदनङ्गनागं। आचष्टविस्पष्टमभाषमाणामेनां स चक्राङ्गपतङ्गशक्रः ॥ ६८ ॥

विचिन्त्येति ॥ चक्राङ्गसंज्ञकानांपतङ्गानांपक्षिणांशक्रःराजाहंसोविस्पष्टंप्रकटमभाषमाणामेनां भैमींजगादोक्तवान् किंकृत्वाबालाजनस्यशीलं स्वभावएवदुर्लङ्घ्यत्वाद्लिगहनत्वाच्चशैलःपर्वतस्तंलज्जारूपायांनद्यांम ज्जननङ्गःकामस्तन्नयत्रोनागोहस्तीयत्रएवंविधंविचिंत्यविचार्य कामपी डितोपिबालाजनोलज्जयाकाममाच्छाद्यपृष्टंक्काभिलाषंनकथयतीतिविचा र्यविस्पष्टवादनार्थमेनामाहस्मेत्यर्थःअथचपर्वतनद्यांहस्तीमज्जतीत्युक्तिः चक्राङ्गामानसौकसइत्यमरः ॥ ६८ ॥

नृपेणपाणि गृहणस्पृहेति नलेमनः कामयते म

मेति । आश्लेषि न श्लेषकवेर्भवत्याः श्लोकद्वयार्थःसुधिया मया किं ॥ ६९ ॥

नृपेणेति ॥ श्लेषैर्निश्लेषकवेः पूर्वराजवत्सोऽपरिग्रहइत्यसमर्थवाच्येतिश्रमत्वरोमलमलभिलषतीति चश्लिष्टकवित्वकारिण्याभवत्यास्तवक्रमेण कालान्तराशा चेतोनलङ्घामयत्वस्यादेः श्लोकद्वयस्यार्थोऽभिप्रायःसुधिया विदुषापिकेनचिन्नाश्लेषिनाज्ञातुंसन्दर्भश्लेषेनमयानाज्ञायीतिकिंवाच्यन्न्यश्च विदुषाश्लेषाद्विविवरणेपटुनामयानाज्ञायिकिमपितुज्ञातएव श्लिष्टार्थगो प्राग्रसीतिप्रायःस्वधियेतिपाठेस्वीयबुद्ध्यैवनत्वन्यबुद्ध्या ॥ ६९ ॥

त्वच्चेतसःस्थैर्यविपर्ययन्तु संभाव्यभाव्यस्मि तदज्ञएव । लक्ष्येहिबालाहृदिलोलशीले परापराद्धेषुरपिस्मरःस्यात् ॥ ७० ॥

यदिमयाभिप्रायोज्ञातएवतर्हिस्वजात्याजयित्वामांपुनः किमित्थंबाध्यसीत्याशङ्क्याह ॥ त्वच्चेतसइति ॥ तुःपुनरर्थेअहंबालभावात्त्वच्चेतसःत वमनसःस्थैर्यविपर्ययंचाञ्चल्यंसंभाव्यसञ्चिन्त्यपुनस्तमज्ञइवतथाभिप्रायमजानानएवभाव्यस्मि तदज्ञइतिपाठेश्लोकद्वयार्थस्याज्ञइतिवा एवकारइवार्थेवाज्ञातोप्यर्थःकिमित्यज्ञातइत्युच्यतइत्याशङ्क्याह हियस्माद्बालत्वादेवलोलशीलेचञ्चलस्वभावेबालाहृदिबालाहृदयलक्षणेलक्ष्येविषयेस्मरोपि दरमीषदपराद्धेषुश्च्युतसायकःस्यात्संभवेदितिसंभाव्यते कामस्यापिमनोभवत्वात्तेनापियत्नज्ञातुंनशक्यतेतत्रान्यस्यकाकथा बालानांचित्तचाञ्चल्याल्लाभिलषणनिश्चयाभावादज्ञएवजातोस्मीतिभावःअतोनिश्चयार्थंपुनर्बोधयामीत्यर्थः अथचबालानामल्पत्वात्कामबाणास्तन्नानपीडयन्ति यथातरुणीमानितितस्यच्युतसायकत्वंयुक्तंअन्योपिधानुष्कश्चञ्चललक्ष्येच्युतसायकोभवति भाव्यस्मिभवामीतिधातुसंबन्धेप्रत्ययःअपिःसम्भावनायाम् ॥ ७०॥

महीमहेन्द्रःखलुनैषधेन्दुस्तद्बोधनीयः कथमित्थमेव । प्रयोजनंसांशयिकंप्रतीष्टुक् पृथक्जनेनेव समाद्वयेन ॥ ७१ ॥

निश्चयाभावेमादृशेनराजाबोधयितुंशक्योनेत्याह ॥ महीति ॥ सनैषधेंदुः

निषधदेशोद्भवजनानामिन्दुरालह्लादकः खलु यस्मात् मह्यांमहेंद्रइवतस्मा न्महिषेणविश्वास्येनपृथक्जनेनेवनीचजनेनेवतनलः इत्यमेवबालाहृदयच न्द्रस्त्वसमर्थेनप्रकारेणसांप्रयिकंसंदेशंमद्भसंपृदङ्नलाभिलाषलक्षणंप्रयो जनंकार्यमित्यसेवशावकार्यवकाकथंबोधनीयःकेनप्रकारेणज्ञापनीयः यथा विश्वास्येनमूर्खेणभयंत्यत्द्वाराशोग्रे ऽथिचार्यमर्त्यक्किंचिदुच्यतेतथामयानिश्चि तंवक्तुंनशक्यतइत्यर्थः इत्यमेवबालयात्वयाहंयथाबोधितस्तथासमयाक थंबोध्यइतिवा पृथग्जनःस्मृतोनीचेमूर्खेचेतिविश्वः मह्यांमहेंद्रइवसप्तमी तियोगविभागात्समासः षष्ठीसमासोवा गतिबुद्धीतिकर्मत्वेबोधनीयइति कर्मणिकृत्यः ॥ ७१ ॥

पितुर्नियोगेन यदृच्छयावा युवानमन्यं यदि वा वृणीषे । त्वदर्थमर्थित्वकृतप्रतीतिः कीदृङ्मयि स्यान्निषधेश्वरस्य ॥ ७२ ॥

पूर्वोक्तमेवदृढयति ॥पितुरिति ॥ पितुर्नियोगेनाज्ञयानिजेच्छयावास्वे च्छयावात्वंयदिअन्यंनलव्यतिरिक्तंयुवानंतरुणंवृणीषेतर्हित्वदर्थंतुभ्यंत्व यामेमीपरिणेतव्येतिअर्थित्व कृतियाञ्चाकारिणिमयिनिषधेश्वरस्यनलस्य कीदृक्कीदृशीप्रतीतिर्विश्वासःस्यात् प्रतारकोयमितितस्यबुद्धिःस्यात्नि श्चयंविनातस्याग्रेवक्तुंनयुक्तमित्यर्थः यद्यर्थेयदिवेति कीदृग्वेतिवाशब्दो योजनीयःअर्थित्वकृतिङ्जःक्षिपितुक ॥ ७२ ॥

त्वयापि किं शङ्कितविक्रियेऽस्मिन्नधिक्रियेवा विषयेनिधातुम् । इतः पृथक्प्रार्थयसे तु यद्यत्करवै तदुर्वीपतिपुत्रि सर्वम् ॥ ७३ ॥

संदिग्धेकार्येत्वयापिनाहंनियोज्यइत्याह॥त्वयेति।त्वयापिशङ्कितविक्रि येसंभावितवरांतरलक्षणविकारेऽस्मिन्विषयेविवाहलक्षणेनिधातुंनियोक्त पितुंकिंवाकिमितिअहंअधिक्रियेअधिकारीक्रियेअस्मिन्नधिकारेनाहंनि योज्यइत्यर्थः हेउर्वीपतिपुत्रित्वंइतोविवाहकार्यात्पृथक्अन्यत्यद्यत्प्रार्थ यसेअहंतत्सर्वमपिकुर्वेसाधयेयंप्रार्थयसेकुर्वेइतिवर्तमानसामीप्येलट्॥७३॥

श्रवःप्रविष्टाइवतद्गिरस्ता विधूयवैमत्यधुतेनमू

दध्रौ । ऊर्चे ह्रियोपि श्लथितानुबन्धा पुनर्धरित्रीपु रुहूतपुत्री ॥ ७४ ॥

अवहेलिं । धरत्रीपुरुहूतपुत्री पृथ्वीन्द्रपुत्री पुनरूचे किंकस्मात् अवः कर्णप्रवि ष्टाकर्णोत्तंसगर्भात् स्मा: पूर्वोक्तावाणी: वैमत्येन असंमत्या धुतेन कम्पितेन मूर्ध्ना विधूयेव निरस्येव किंभूतायाह्रियोलज्जायाअपिश्लथीकृतः अनुबंधोनुसंधानं यया अवः प्रविष्टा इवेतिकेचित् तदाप्रतिकूलत्वादश्रुता इतिइवेत्युक्तं अन्ये नापिकर्णं प्रविष्टस्य कीटादेर्निराकरणार्थंशिरश्चालनं क्रियते यालज्जासर्वथा त्यक्तुमशक्यासापित्यक्ता त्यपिशब्दार्थः वैमत्यं दृढादिपाठात्ष्यञ् । कर्मधारयाद्वा स्वार्थेज्ञापकात्ब्रूमोजिह्वेत्ततक् ॥ ७४ ॥

मदन्यदानं प्रतिकल्पनाया वेदस्त्वदीये हृदि तावदेषा । निशोपि सोमेतरकान्तशङ्का मोङ्कारमग्रे सरमस्य कुर्याः ॥ ७५ ॥

दृष्टान्तद्वयेन पितृकर्तृकन्दानान्यपरिणयं श्लोकद्वयेन निराकरोतीति ॥ मदिति । ममअन्यस्मै मद्व्यतिरिक्तायवरायपितृकर्तृकंदानं प्रतिदिश्यपितु र्नियोगेनेत्यादियाकल्पनाशङ्कातर्कः एषातावत्कल्पनात्वदीये हृदि वेदइव प्रमाणभूताइतिचेत्तर्हित्वंनिशोपिसोमाच्चन्द्रादितरेभ्यः कांतः प्रियस्त स्यशंकाअस्यवेदस्यअग्रेसरंपुरोवर्तिनमोंकारं कुर्याः अंगीकुरु वेदस्याग्रेस रआदावोङ्कारोभवतिरात्रेश्चन्द्रादन्यः कांतोनतथामत्तातिरिक्तोममेत्यर्थः मत्कर्तृकंदानंवा अग्रेसरंपुरोग्रतोग्रेषुसर्तेरितिठः अजाद्यदन्तमितिपूर्वनि पातमकृत्वाअग्रशब्दस्य परनिपातकरणं समस्य कथनेनविगृह्य एदंतत्वार्थे सूयंतदग्रसरमित्यादयः प्रयोगा अग्रतः सरतिअग्रेएवेतिसमर्थनीयाः ॥७५॥

सरोजिनीमानसरागवृत्तेरनर्कसम्पर्कमतर्कयित्वा । मदन्यपाणिग्रहशंकितेयमहोमहीयस्तव साहसिक्यम् ॥ ७६ ॥

सरोजिनीति ॥ हेहंससरोजिन्याः कमलिन्याः मानसरागः अन्तःकरणानुराग स्तस्यवृत्तेः सद्भावस्यस्थितेः अर्केणसूर्यादन्येनसहसंपर्कं संबंधमतर्कयित्वा अ विचार्यतवेयंममान्येनमव्यतिरिक्तेनत्वरपाणिग्रहः परिणयस्तच्छङ्किता

लायतयनह्वीयो ऽतीवमहत्साहसिक्यंसाहसिकत्वंग्रहोआश्चर्यंसूर्योतिरि क्तः:कान्तः:कमलिन्याश्चेत्तर्हिनलातिरिक्तोममेतिभावः:सहसा ऽविचार्यैववर्त्ते तेसाहसिकः:ओजः:सहोम्भसावर्त्तंतइतिदृक्ततोत्रास्यणाद्दिरवाल्प्रज्ञ॥७६॥

साधुत्वयातर्कितमेतदेव स्वेनानलंयत्किलसंश्र यिष्ये। विनामुनास्वात्मनितुप्रहर्तुं मृषागिरं त्वांनृपतौनकर्त्तुम् ॥ ७७ ॥

पुनरपिद्वितीयंपक्षंनिराकरोति॥साध्विति। हेहंसएतत्त्वयासाधुसम्यक् तर्कितंऊहितं किलचपहासे यत्स्वेनात्मनैवस्वेच्छयाअनलंनलादन्यंसंश्र यिष्येकिलचेदित्यर्थेवानलादन्यंदेवंसंश्रयिष्ये तर्हितुपुनःअमुनानलेनवि नानलप्राप्त्यभावेस्वात्मनिविषयेस्वप्रहारंकर्तुंअनलमग्निमेवसंश्रयिष्ये न तुत्वांनृपतौनलेमृषागिरंमिथ्यावाणीकंकर्तुं नलादन्यंसंश्रयिष्येत्वन्वेतां नांगीकरोमितर्हिअग्नावात्मघातंकरिष्यतीतित्वस्यपुरस्तात्कथयेतिभावः:स्वा त्मनीतिकर्मोविवक्षयांसप्तमी ॥ ७७ ॥

मद्विप्रलभ्यं पुनराहयस्त्वां तर्कःसकिंतत्फलवा चिमूकः। अशक्यशङ्काव्यभिचारहेतु र्वाणीनवे दायदिसन्तुकेतु ॥ ७८ ॥

एतद्वचनंप्रतारणामात्रंनतुसत्यमतआह॥मदिति। हेहंसयस्तर्कस्त्वांपु नर्मद्विप्रलभ्यंमयाप्रतारणीयंआहसतर्कः तस्यप्रतारणस्यफलंप्रयोजनंत द्विषयिण्यांवाचिकिंमूकः प्रतारणस्यफलंकिमितिनवदति नवदतिचेत्त्व रस्येपतत् ततश्चअशक्याशंकायेषामेवंविधाव्यभिचारहेतवोऽज्ञानादयोय स्याःव्यभिचारकारणंशङ्कितुंनशक्यते एवंविधाव्यभिचारिणीवाग्यदिवेदा दिवेदवत्प्रमाणभूतानभवेयुस्तर्हिकेपुनर्वेदाःसंतु अव्यभिचरितत्वात्कमे ववेदत्वं एवंविधायाअपिवाचोप्रामाण्येवेदस्याप्यप्रामाण्यंस्यादित्यर्थः तत श्चपूर्वश्लोकोक्तंमद्वचःअन्यथाशङ्कांविहायसत्यमेवज्ञातव्यं विप्रलभ्यंपोरद्- पथादितियत् शक्येतिशकिसहोश्चेतियत् ॥ ७८ ॥

अनैषधायैवजुहोतितातः किंमांकृशानौन शरीर शेषाम्। ईष्टेतनूजन्मतनोःसनूनं मत्प्राणनाथ

स्तुनलस्तथापि ॥ ७९ ॥

पुनरपिपूर्वोक्तं पितुर्नियोगेत्यादिपद्यद्वयंयुक्त्यानिराकरोति ॥ अनैषधा येति। तातः पिताचेत्शरीरशेषांशरीरमात्रावशेषांमांअनैषधायनलव्यतिरिक्तायजुहोतिददातितर्हिकथामावेवअग्नावेवकिंनजुहोतिवह्नावेवमांकिन्नक्षिपतिवदेतिकिमः प्रश्नार्थत्वेननञोनिषेधार्थत्वेनैवव्याख्येयमङ्गीकृत्याप्याह यद्यप्यन्यस्मैदास्यतितथापिममप्राणानांनाथस्तुनलएव तुरेवार्थः यतःनूनंनिश्चितंसपितातनूजस्यअपत्यंतस्यतनुःशरीरंतस्यैवइष्टेस्वामीतदधीनस्यशरीरस्यपरिकिंचित्करोतुप्राणास्तुनलाधीनाएव पितृकर्तृकान्यदानेनलोद्देशेनाग्नौजन्मांतरेपितत्प्राप्त्यर्थंप्राणांस्त्यक्ष्यामि। "यंयंवापिस्मरन्भावमिति„ कृष्णवचनात् जन्मतमोरितिअधीगर्थेतिषष्ठी ॥ ७९ ॥

तदेकदासीत्वपदादुदग्रे मदीप्सितेसाधु विधित्सुतातः । अहेलिनाकिंनलिनीविधत्ते सुधाकरेणापिसुधाकरेण ॥ ८० ॥

इतःपृथक्प्रार्थयेत्युक्तं दूषयति ॥ तदिति। तस्यनलस्यैकंकेवलंदासीत्वंतल्लक्षणंपदंवस्तुतस्मात्सकाशात्उदग्रे उत्कृष्टेमदीप्सितेममाभिलाषेविधित्सुःकर्तुकामस्त्वंतत्साधूचितंनाज्ञानसाध्वितिवानलदासीत्वादन्यन्नप्रार्थयेइतिभावःनलदासीत्वंसम्यगन्यस्यमहिषीत्वंनेत्याह नलिनीकमलिनीसुधायाअमृतस्याकरेणालयेनापिअहेलिनाहेलिःसूर्यःतस्मादन्येनसूर्यव्यतिरिक्तेनसुधाकरेणचन्द्रेणकिंविधत्तेकुरुतेअपितुनकिमपि सूर्येऽनुरागबाहुल्याचन्द्रे तदभावादमृतपूर्णोपितस्यैनरोचतेतथाममेत्यर्थः सुधाकरपदं प्रथमंयौगिकन्द्वितीयमयौगिकमितिनपुनरुक्तिः तदेकदासीत्वपदाद्वस्तुनः सकाशादधिकेमदीप्सितेतेविधित्सुतासोसियत्तत्साध्वपिअनुचितंस्यादुग्रस्यमदीप्सितस्याभावादित्यर्थइतिवा ॥ ८० ॥

तदेकलुब्धेहृदिमेस्तिलब्धुं चिन्तानचिंतामणिमप्यनर्घ्यम् । चित्तेममैकःसकलत्रिलोकीसारोनिधिःपद्ममुखःसएव ॥ ८१ ॥

एतदेवद्रढयति॥ तदिति। तस्मिन्नेवएकंकेवलंलुब्धमभिलाषुकं एवंभू

तेमेहृदिअनर्घ्यंअमूल्यंचिंतामणिमपितदाख्यरत्नविशेषमपिलब्धुं प्राप्तुंचि
न्तामनोरथोनास्ति किंपुनर्युवान्तरमितर्थः यतःसममचित्तेसकलत्रिलोक्यां
सारःश्रेष्ठभूतःचतुःषष्टिकलासहितः त्रैलोक्यश्रेष्ठश्चेतिवा पद्मरमणीयान
नःसएवनलएवएकोनिधिःसएवैकोनिधिःकरणेमयाध्रियतेनचिन्तामणिः अथ
चपद्मोनिधिर्मुखमादिर्यस्यसएवम्भूतोनिधिः सएवनवनिधिरूपः किञ्चि
न्तामणिनेतिभावः । निधीयतइतिनिधिःकर्मणिउपसर्गेघोःकिः ॥ ८१ ॥

श्रुतश्चदृष्टश्चहरित्सुमोहा द्ध्यातःसनीरन्ध्रितबुद्धि
धारम् । ममाद्यतत्प्राप्तिरसुव्ययोवा हस्तेतवास्ते
द्वयमेकशेषः ॥ ८२ ॥

मभाभिलाषः कर्तव्यश्चेन्मदुक्तं अवश्यमेवकर्त्तव्यमितिस्वानुरागपूर्वकं
श्लोकद्शकेनहंसंप्रवर्त्तयति ॥ श्रुतइति । सोऽनिर्वचनीयस्वरूपोनलःमया
दूतद्विजादिमुखाच्छ्रुतःतथाहरित्सुसर्वासुदिक्षुमोहादुन्मादवशाद्दृष्टश्च स
र्वंजगत्तन्मयमेवदृष्टमितियावत् तथानीरन्ध्रिताविजातीयज्ञानेनाव्यवहि
तानिरन्तरबुद्धिधाराबुद्धिप्रवाहोयस्यांक्रियायांतथाध्यातःध्यानेनगोचरी
कृतश्च एवंचानुरागाद्योनवावस्थायथायथंमयानुभूताःइदानींममतत्प्राप्ति
र्नलप्राप्तिरसुव्ययोदशमावस्थारूपःप्राणनाशोवावाशब्दश्चार्थेवा एतद्द्वयंत
वहस्तेआस्तेत्वदधीनमेवविद्यतइत्यर्थः परंतुएकस्यशेषःएकशेषोशेषव
तिवा एकशेषरूपेणद्वयमिष्टमित्यर्थःयदानलप्राप्तिस्तदानाऽसुव्ययःयदा
ऽसुव्ययस्तदातत्प्राप्तिर्नत्वत्प्रकाशात्कलंवाप्राप्तिंवाआप्स्यामीतिभावःएक
तरनिश्चयाभावाद्द्वयमित्युक्तम् एकशेषःसरूपाणांभवतिनतुविरूपाणाम्
अत्रतुविरूपयोरप्येकशेषइतिचित्रम् अथच"श्रोतव्यः श्रुतिवाक्येभ्योमन्त
व्यश्चोपपत्तिभिः॥मत्वाचसततंध्येयमेतद्दर्शनहेतवइति"वचनात् अथवा
दिनापूर्वंविषयीकृतस्यतस्यमयैवेतिश्रुतीतरब्रह्मवाच्यस्यब्रह्मणःप्राप्तिः,क
स्यचिदेवसुकृतिनोभवति तथाममनलप्राप्तिस्त्वत्प्रसादादेवेत्यर्थःअस्मा
पिअद्वयम् अथचएवंविधोयएकस्यशुद्धस्यैवब्रह्मणः शेषोवस्थानमद्वयत्व
मद्वयत्वेत्युक्तिः अत्रवाशब्दश्चार्थःद्वयमेवेतिपाठोवा ध्यातःनध्यातश्चेतिन
त्वनिषेधःनीरन्ध्रकृतानीरन्ध्रितेतिव्यन्तात्ताक्तिष्ठा ॥ ८२ ॥

सञ्चीयतामाश्रुतपालनोत्थं मत्प्राणविश्राणनजंच पुण्यम् । निवार्यतामार्यवृथाविशंका भद्रेपिमुद्रेयमये भृशङ्का ॥ ८३ ॥

ममकार्यसाधनेतवमहान्लाभइत्याह ॥ सञ्चीयतामिति ॥ तदूष्यवेहि स्वशुश्रूषयालुरितिश्राश्रुतस्यप्रतिज्ञातस्यपालनंतस्मादुत्पन्नंजनितंपु ण्यंतथाममप्राणानांसन्तमेवविश्राणनंदानंतज्जनितञ्चपुण्यंत्वयासञ्चीय तांपरिपुष्टीक्रियतांप्रतिश्रुतकरणेनमहान्धर्मस्तेनमत्प्राणरक्षणाद्धर्मोभवि ष्यतीत्यर्थःप्रतिश्रुतादानेचाधर्मः मत्प्राणहानिश्चेतिस्त्रीहत्यालक्षणश्चाध र्मःएतद्द्वयंयथानभवतितथाकर्तव्यमितिभावःनिश्चयाभावेकथंकार्यमित्यत आह आर्यश्रेष्ठवृथानि ष्कारणिकापितुर्नियोगेत्यादिविशङ्काविरुद्धासम्भाव नानिवार्यतांदूरतस्त्यज्यतांअयेहंसभद्रेपिअसन्दिग्धेपिपदार्थेविषयेभृशम तिशयेनकेयंमुद्रानूकीभावःकिमितिनाङ्गीक्रियतइत्यर्थःभद्रेशुभरूपेश्रेष्ठेसा धौवात्वयिइयंकामुद्रास्थितिरितिवा ॥ ८३ ॥

अलंविलंघ्यप्रियविघ्नयाञ्चांकृत्वापिवाम्यंविविधंविधेये । यशःपथादाश्रवतापदोत्थात् खलुस्खलित्वास्तखलोक्तिखेलात् ॥ ८४ ॥

अलमिति ॥ हेप्रियविघ्नप्रियश्चासौविघ्नश्चविघ्नरूपक्षिणमध्येरूपश्रेष्ठइ तिवाहंसयाञ्चांमत्कृतांप्रार्थनांविलङ्घ्यअतिक्रम्याऽलंनातिक्रमणीयाप्रि यस्यसतोविघ्नस्यमलस्ययाञ्चांविलङ्घ्यालमितिवातथाविधेयेकरणीयवि षयेविविधंवाम्यवक्रत्वमपिकृत्वाऽलंतकरणीयमित्यर्थःअपिरन्यकालत्व द्योतनार्थःउभयमपिनकार्यमित्यर्थः तथोआश्रवतापदंदातृत्वलक्षणंपदम् त्तमंस्थानंतस्मादुत्पन्नउत्पन्नस्तस्माद्यशः पथात्कीर्तिमार्गात्स्खलित्वाप तित्वापिखलुपूर्यतांपतनमपिनकार्यमपिशब्दोत्रापियोज्यः किंभूतात्अ स्तःक्षिप्तः खलोक्तीनांखलदुर्वचनानांखेलोविलासोयस्मिन्हंसतुल्यउपका रीअन्योनास्तीति दुर्जनाअपियथातवकीर्तिंगायन्तितथाकुर्वित्यर्थःआश्र वतावचनकारितापूर्तिश्रुतकारित्वमितिवा पन्थाहिपदोत्थोभवति विघ्ने तिइगुपधेतिकःविलङ्घ्यकृत्वा स्खलितश्चेतिअलंखल्वोःप्रतिषेधयोरिति

रक्कापूत्ययःआपृणोतीत्याश्रवःपचादिषु। यजयाचेतिनङ्यिाञ्चा॥८४॥

स्वजीवमप्यात्तमुदेददद्भ्यस्तव त्रपानेदृशबद्धमुष्टेः । मह्यंमदीयान्यदसूनदित्सोर्द्धर्मःकराद्भ्रश्यतिकीर्तिधौतः ॥ ८५ ॥

सोपहासम्नूते। स्वेति। हेहंसमदीयानसूनलक्षणान्प्राणान्मह्यमेवादित्सोर्दातुमनिच्छोरीदृशबद्धास्तौमुष्टिस्वकृपणशिरोमणेस्तवात्र्तमांदीनानांमुदेहर्षायस्वजीवमपिस्वंप्राणमपिददद्भ्योजीमूतवाहनादिभ्यः सकाशाद्यस्मादत्रपालज्जानभवतितस्मात्तवकरात्कीर्तिधौतोयशोधवलोधर्मःभ्रश्यतिअधुनैवविनश्यति यशोनश्यतिधर्मोपीत्यर्थः अन्यदीयंगृहीत्वातस्मैयोनददातितस्यस्वजीवदातृभ्यःसकाशल्लजाकथंनस्यात् यदिस्यात्तर्हिदद्यादेव तस्मादुभयमपितवनष्टम् तेतुजीवमपिददुःत्वंतुतदीयमपिधनंनददासिकिंपुनःस्वजीवितम् तस्माद्येनधर्मोयशश्चभवतितदेवकुर्वितिभावः बद्धमुष्टेःकरात्पततीतिविरोधाभासःनेतिकाकुर्वा कर्णःस्वर्णशिबिर्मांसंजीवंजीमूतवाहनः। ददौदधीचिरस्थीनिकिमदेयंमहात्मनामितिवचनंजीवदानेप्रमाणं। नलोकेतिनिषेधादसूनितिद्वितीया धौतःधावेर्निष्ठायामूठिवृद्धिः ॥ ८५ ॥

दत्वात्मजीवंत्वयिजीवदेऽपि शुद्ध्यामिजीवाधिकदैतुकेन । विधेहितन्मांत्वदृणान्यशोहुममुद्रदारिद्र्यसमुद्रमग्नाम् ॥ ८६ ॥

त्वयामत्कार्यंकृतेप्रत्युपकर्तुमशक्यत्वेनाहंनधमर्णायथास्यांतथाकुर्वित्याह ॥ दत्वेति ॥ हेहंसजीवदेत्वयिआत्मनोजीवंदत्वापिशुद्ध्यामिअनृणीभवामिजीवाधिकंनलंददतित्वयिकेनपुनः प्रकारेणशुद्ध्यामिकेवलजीवदत्वेतुजीवदानेनानृणीभवनंयुक्तं जीवाधिकदत्वेतुजीवेदत्तेऽपिअनृणीभवितुंनशक्यते जीवादधिकमन्यत् किमपिनविद्यतइतिभावः यतस्तस्मात्वदृणात्यशोदभुमनपाकर्तुमानमुद्रोनिमर्यादः दारिद्र्यसमुद्रस्तत्रमग्नांअतिदरिद्रांविधेहितवाधमर्णायथास्यांतथाकुर्वित्यर्थः जीवाधिकदोभवेतिभावःऋणशब्दस्त्वत्रोपकारपरःअशोधनंप्रत्युपकाराकरणम्अत्रभेजीजीवएवजीवशब्देनगृह्यतेप्राणेभ्योप्यधिकंनलंददातीतिजीवाधिकदःएवंवि

धेजीवदेनलदानएवममप्राणानंयतएवंविधेत्वयिआत्मनः प्राणान्दत्त्वापि आत्मजीवव्ययसाध्यमुपकारंकृत्वापिकेनपुनः प्रकारेणानृणीभवाम्यपितु प्राणव्ययसाध्येउपकारेकृतेपिसमानृणःस्वयंयथाभवेदितिवाक्ययोजना ॥ ८६ ॥

क्रीणीष्वमज्जीवितमेवपण्यमन्यन्नचेदस्तितदस्तु पुण्यम् । जीवेशदातव्यंदितेनदातुं यशोपिता वत्प्रभवामिगातुं ॥ ८७ ॥

अस्मिन्कार्येकृतेफलसद्भावेमत्वयैतत्करणीयमित्यतआह ॥ क्रीणीष्वेति ॥ हेहंसत्वंमज्जीवितंजीवनमेवपण्यंविक्रेयंवस्तुक्रीणीष्व प्रियदानमूल्येनेतिभावः। मह्यमेवतत्क्रयेणयच्छनतुभ्यंक्रयेणजीवदानेममकोलाभइत्याशङ्क्याह अन्यद्धनादिकंचेद्यद्यपिनास्तितत्तथापिपुण्यमस्तुभवतुजीवितदानेजीवाधिकदानेनविनान्यन्मूल्यंयद्यपिनविद्यतेतथापितस्यस्थानेश्रेयएवभवत्वित्यर्थः। ननुपुण्यंपारलौकिकमहमैहिकमपिकिमपिवाञ्छामीत्याशङ्क्याह- हेजीवेशदातःप्राणनाथदातु- जीवाधिकतुल्यमूल्याभावेनयद्यपितेतुभ्यंदातुंनप्रभवामिसमर्थोस्मितथापितवयशस्तावत्साकल्येनअवश्यमसौगातुंसमर्थोस्मिनभवाम्येवेतितावच्छब्दोऽवधारणार्थोवाऐहिकंपारलौकिकंचफलंतवविद्यतेतद्रूपेणमूल्येनमह्यंजीवदानंकुर्वितिभावः यद्वातावत्तथैव यदितेदातुंनप्रभवामितर्हियशःपुनर्गातुंनप्रभवामिअपितुप्रभवाम्येव । पण्यंपणपादेत्यादिनाऽर्थेयत् ॥ ८७ ॥

वराटिकोपाक्रिययापिलभ्याल्लेभ्याःकृतज्ञानथवा द्रियन्ते । प्राणैःपणैःस्वंनिपुणंभणन्तः क्रीणन्ति तानेवतुहन्तसन्तः ॥ ८८ ॥

पूर्वोक्तफलद्वयाभावेपिसाधवउपकुर्वन्तीत्याह ॥ वराटिकेति ॥ अथवेतिपूर्वोक्तापरितोषे इभ्याःधनिकाःधनलुब्धाएवेत्यर्थः- वराटिकोपक्रियया कपर्दकदानमात्रोपकारेणापिलभ्यान्सुलभान्कृतज्ञान्साधून् नाद्रियन्तेनसम्भावयन्तिआदरंनकुर्वतीत्यर्थः तुःपुनरर्थेहन्ताश्चर्येसन्तस्तुसाधवःपुनः प्राणैरेवपणैर्मूल्येनैवकृतज्ञान् क्रयेणक्रीणन्तिकृतज्ञोपकारार्थंप्राणानपित्यक्त्वातानर्जयन्तीत्यर्थः किंभूताःसन्तः स्वमात्मानंनिपुणंकुशलंभणन्तोब्रुवन्तःमानयन्तः प्राणाधिकंमूल्यमर्हंतएतेस्माभिरल्पनप्राणमूल्येनल

लिसिक्ते सूष्टस्य वीरणनामकतृणविशेषस्य मूलं भूत्वा नलदत्वं उशीररूपतां प्राप्य सन्तप्तस्य हृदयस्य चन्दनलेपेन यत्कृत्यं शीतलत्वरूपं कार्यं किं न कर्तासि काकुः आक्षेपो वा तत्वापि नलदत्वात् हृदयचन्दनलेपकृत्यं युक्तमेव नलप्राप्ताविव हृदये चन्दनलेपं करिष्यामि नान्यथेति भावः स्याद्वीरणं वीरतृणं मूलेऽस्योशीरमस्त्रियाम् अभयं नलदं सेव्यमित्यमरः कृत्यमिति विभाषाकृवृषोरिति कृञः क्यपि तुक् ॥ ६० ॥

अलं विलंब्य त्वरितुं हि वेला कार्ये किल स्थैर्य्यसहे विचारः। गुरूपदेशं प्रतिभेव तीक्ष्णा प्रतीक्षते जातु न कालमार्त्तिः ॥ ९१ ॥

शीघ्रमेवैतत्कर्तव्यमित्याह ॥ अलमिति ॥ हि यस्मादियं त्वरितुं त्वरां कर्तुं वेला एतत्कार्यं कर्तुं शीघ्रं गन्तुमयं समयः अतो विलम्ब्य अलं विलंबो न कार्यः सर्वां विचार्य करिष्यामीत्यत आह किल यस्मात् स्थैर्यसहे विलम्बसहे कार्ये विषये विचारः क्रियत इति शेषः इदन्तु विलम्बसहं न भवतीति विचारो न युज्यत इत्यर्थः तत्र हेतुमाह आर्त्तिस्तीव्रापीडा प्रकृते विरहपीडा जातु कदाचिदपि कालं न प्रतीक्षते तत्र दृष्टान्तः कामिव तीक्ष्णा कुशाग्रतुल्या शिष्यस्य प्रतिभा प्रज्ञा गुरूपदेशमिव गुरूपदेशात् सर्वमेव शास्त्रार्थं गृह्णाति लोके पि यावद्विवाहादिसमयः समायाति तावत्पूर्वमेव त्वरा भवति शीघ्रमेतत्कार्यं साधयेति भावः त्वरितुं कालसमयवेलेति तुमुन् ॥ ९१ ॥

अभ्यर्थनीयः स गतेन राजा त्वया न शुद्धान्तगतो मदर्थम्। प्रियास्य दाक्षिण्यबलात्कृतो हि तदोदये दन्यवधूनिषेधः ॥ ९२ ॥

श्लोकचतुष्टयेन विज्ञापनावसरमुपदिशति ॥ अभ्यर्थनीय इत्यादिना ॥ इतो गतेन त्वया शुद्धान्तगतो अवरोधमध्यस्थितः स्त्रीसमूहगत इति यावत् स राजा भैमी त्वया नुग्राह्येति मदर्थं नाभ्यर्थनीयः मद्विषयं किमपि न वक्तव्यमित्यर्थः गतेन त्वयाभ्यर्थनीयः परं शुद्धान्तगतो नेति वा एवमग्रिमश्लोकत्रयेपि विशेषणस्य नञा सम्बन्धः कार्यः किमिति नेत्याशङ्क्याह हि यस्मात् तदा तस्मिन् समये प्रियाणां आस्यानां तेषु दाक्षिण्यस्यानुरोधस्य बलादाधिक्यात्कृतः अन्यवधूनिषेधः अन्यस्त्रीनिषेध उदये प्रादुर्भवेत् यद्यप्यन्यस्त्रीवसनाऽस्य

स्यात् तथापितस्त्वमत्रंप्रार्थितेतन्मुखावलोकनेनजनितयालज्जयाप्रीत्या वाएतान्यः सकाशादन्याकापिसुन्दरीनास्तीतिनिषेधउदयेत् इतिहेतोर्न प्रार्थनीयस्तदेत्यर्थः । शुद्धान्तस्त्ववरोधश्चेत्यमरःअर्थकृत्यापने ॥ ९२ ॥

शुद्धान्तसंभोगनितान्ततुष्टे ननैषधेकार्यमिदंनि
गाद्यम् । अपांहितृप्रायनवारिधारा स्वादुःसुग
न्धिःस्वदतेतुषारा ॥ ९३ ॥

शुद्धान्तेति ॥ त्वयाशुद्धान्तसम्भोगेनान्तःपुरस्त्रीसुरतेननितान्ततुष्टेअति शयेनसन्तुष्टेप्राप्तकामइतियावत् नलेइदंपूर्वोक्तंकार्यंननिगाद्यंनवक्तव्यं सतिसम्भोगा ह्रियस्मादपांअद्भिस्तृप्रायपुरुषायस्वादुः सुरसासुगन्धिःक र्पूरादिना तुषाराशीतलापिवारिधारा उदकधारानरोचतेपिपासायाअभा वात् पीतादुदकादुत्कृष्टमप्युदकंयथातस्मैनरोचतेतथासंभोगेनप्राप्तमद नत्वात्तद्वधूभ्योप्यधिकाहंतस्मैनरोचेयंतस्मात्तदापिनवक्तव्यमितिभावः निगाद्यं सोपसर्गाद्वदतेर्ण्यत् सुहितार्थयोगेपूरणगुणेतिषष्ठीसमासनिषे धादेवापामितिषष्ठी तृप्त्यर्थानांकरणेषष्ठीवेतिवा तृप्रायइव्यर्थानामिति चतुर्थी सुगन्धिरितिगन्धस्येत् तुषारेतिअभिधेयलिङ्गता ॥ ९३ ॥

त्वयाविधेयानगिरोमदर्थाः क्रुधाकदुष्णेहृदि
नैषधस्य । पित्तेनदूनेरसनेसितापि तिक्तायते
हंसकुलावतंस ॥ ९४ ॥

त्वयेति ॥ हेहंसकुलावतंसहंसवंशविभूषणनैषधस्यहृदिक्रुधाक्रोधेनक दुष्णेईषदुष्णेसतिमदर्थामत्प्रयोजनागिरोवाचः त्वयानविधेयाःकर्तव्याः यतः पित्तेनपित्तदोषेणरसनेरसनेन्द्रियेदूनेदुष्टेसतिसितापिशर्करापिति क्तायते तिक्तेवाचरतिनिम्बतुल्यरसाभवति अहंशर्करातुल्यातिक्ताकिमि त्यर्थः । शर्करासितेत्यमरःकवंचोष्णेइतिचकारात्कदुष्णम् रस्यतेऽनेनेति रसनं तिक्तेवाचरतीतिकर्तुः क्यङितिक्यङ्तिक्ताभवतीतीवार्थेलोहितादि त्वात्क्यष् वाक्यषइत्यात्मनेपदम् ॥ ९४ ॥

धरातुराहिमदर्थयाञ्चा कार्यानकार्यान्तरचुम्बि
चित्ते । तदार्थितस्यानवबोधनिद्रा बिभर्त्यवज्ञा

चरणस्यमुद्राम् ॥ १५ ॥

चरेति ॥ हेसंसत्वयाधरायांतुराषाडिन्द्रस्तस्मिन्पृथ्वीन्द्रेनलेपूर्वोक्तस्य
तिरिक्तकार्यान्तरचुम्बिकार्यमात्रासक्तंचित्तंयस्यएवंभूतेसतिमदर्थयाच्ञा
नकार्याविधेया यतस्तदाकार्यांतरसक्तिसमयेअर्थिलस्ययाचितस्यअनव
बोधअनाकर्णनंतन्नत्वानिद्राअवज्ञायाअवहेलनायाःआचरणंकरणंतस्य
मुद्रांसादृश्यंबिभर्तिधारयतिअसमयेकार्यांतरासक्तस्यातवविज्ञापनांयदि
नशृणुयासदाइदंकार्यमस्मैनरोचतइतिविचार्यतत्रापिपुनर्विज्ञापनायांबु
द्धिर्नोद्भियादितिभावः । तुराषाडितिप्रयोगोभाषायांछंदसिसहइतिण्विप्र
त्ययस्यछन्दसिविहितत्वान्निन्द्यः लोकेतुतुरंत्वरांसाहयतीतिण्यन्तात्क्वि
पृत्रोध्यःअन्येषामपिदृश्यतइतिपूर्वपदस्यदीर्घः गिरिशादिवन्महाकविप्र
योगादस्यापिछान्दसत्वस्यप्रायिकत्वाद्वापरिहर्तव्यम् प्रकारान्तरंतुधरातु
राषरावत् पृथ्वीवदतुराअनुत्तालाअवेगावासापूर्वोक्ताप्रसिद्धावा याच्ञावि
धेयवंद्विनिशतमन्यत्पूर्ववत् धरवत्पक्षेतवदतुरावा स्वस्येनसमयंदृष्ट्वाक
र्तव्यानसोत्तालेनेत्यर्थः।यद्वाहेअहिमदर्थअहीन्मथ्नातीतिअहिमत् गरुड
स्तमर्थयसेमित्रत्वेप्राप्तुं प्रार्थयतेतत्संबोधनंगरुडतुल्यपराक्रमेत्यर्थः । अ
न्यत्पूर्ववत् ॥ १५ ॥

विज्ञेनविज्ञाप्यमिदंनरेन्द्रे तस्मात्त्वयास्मिन्समयंसमीक्ष्य । आत्यन्तिकासिद्धिविलम्बिसिद्ध्योः कार्यस्यकार्यस्यशुभाविभाति ॥ १६ ॥

निगमयति ॥ विज्ञेनेति । हेहंसतस्मात्कारणादस्मिन्नरेन्द्रेविज्ञेनविशे
षज्ञेनत्वयासमवसरंसमीक्ष्यदृष्ट्वाइदङ्कार्यंविज्ञाप्यंविज्ञापनीयं । समयप्र
तीक्षणेकार्यविलम्बःस्यादित्याशङ्क्याह ।अस्यकार्यस्यआत्यन्तिकीसर्वथा
असिद्धिस्तथाविलम्बिनीसिद्धिस्तयोर्द्वयोर्मध्येआर्यस्यपूज्यस्यबुद्धिमतस्तव
कासिद्धिः शुभासमीचीनाविभातिप्रतिभातिकथयेतिशेषः । असमयेविज्ञा
पितस्यकार्यस्यसर्वथाअसिद्धिरेव समयंविचार्यकृतस्यविलम्बेनसिद्धिःश्रे
यस्यायसीतस्मात्समयंप्रतीक्ष्यविज्ञप्तिंकुर्विंतिभावः।आत्यन्तिकीचासावसि
द्धिश्चेतिकोपधत्वेपिपुंवत्कर्मधारयेतिपुंवत् लक्षणहेत्वोरितिज्ञापकाद्ल्या

चतरमित्यस्यानित्यत्वादात्यंतिकाशिद्धिविलम्बसिद्धोरित्यत्रपरनिपातःस मर्थनीयः ॥ ८६ ॥

इत्युक्तवत्यायदलोपिलज्जा, सानौचितीचेतसि नप्रकास्तु । स्मरस्तुसाक्षीतददोषतायामुन्माद्य यस्तामदूवीवदत्ताम् ॥ ९७ ॥

बालायास्तस्यांवल्लज्जात्यागोनयुक्तइत्याशङ्क्यपरिहरति ॥ इतीति ॥ विनामुनास्वात्मनीत्याद्युक्तवत्याभैम्यायल्लज्जाअलोपित्यक्तासाअनौचितीअनौचित्यंनोस्माकङ्कवीनांचेतसिचकास्तुप्रकाशतां । बालायाःलज्जयाभाव्यमेवेतितद्त्यागेस्मत्सिद्धांतातिक्रमादस्माकञ्चेतसिअनौचित्यंस्फुरतुनामेत्यर्थः तुःपुनरर्थे तस्याअदोषतायांनिर्दोषत्वेपुनःस्मरःसाक्षीसाक्षाद्द्रष्टा कथंसाक्षित्वमित्यतआह यःकामउन्माद्यउन्मादावस्थांकृत्वातांभैमीतत्तद्विनामुनेत्यादिबालायायुक्तमयुक्तंअवीवदत्वादयतिस्मतेनैववलाद्वादितासेतितस्यानदोषः कवीनांवर्णनेऽनौचित्यं प्रातिभासिकंनतुतात्त्विकंअनुवादत्वादितिभावःशब्दकर्मत्वाद्वदेरण्यंतकर्तुर्णाकर्मत्वम् ॥९७

उन्मत्तमासाद्यहरःस्मरश्च द्वावप्यसीमांमुदमुद्वहेते । पूर्वःपरस्पर्द्धितयाप्रसूनं नूनंद्वितीयोविरहाधिदूनं ॥ ९८

मदनेनापिसाकिमित्युन्मादितेत्यतआह ॥ उन्मत्तमिति ॥ द्वौउन्मत्तंउन्मत्तवस्तुंआसाद्यप्राप्यअसीमांनिर्मर्यादांमुदंहर्षंउद्वहेतेधारयतः । कौद्वौहरोमहादेवःस्मरश्च तयोर्मध्येपूर्वोहरःप्रसूनंधत्तूरपुष्पलक्षणमुन्मत्तंप्राप्यहर्षंधत्ते द्वितीयःकामःविरहाधिनाविरहपीडयादूनंदुःखितमुन्मत्तमुन्मादवंतंजनंप्राप्यहर्षंधत्ते नूनमुत्प्रेक्ष्ये उभयत्रहेतुःपरस्पर्द्धितयाअन्योन्यस्पर्द्धयाहरशत्रुःस्मरःहरस्यउन्मत्तंधत्तूरकुसुमंहर्षजनकंदृष्ट्वामयापिउन्मत्तंजनंप्राप्यहर्षितव्यं तथाहरेणापिकाममुन्मत्तंप्राप्यहृष्यति तच्चेन्मयापिकामायुधमुन्मत्तपुष्पंप्राप्यहर्षितव्यमितिअन्योन्यस्पर्द्धा शत्रोरश्वादिलब्ध्वासर्वोपितुष्यति कामोपिउन्मत्तंपिशाचंहरसेवकमासाद्यहर्षंधत्तेशत्रुवस्तुलाभादित्यर्थः उन्मत्तउन्मादवतिधत्तूरमुचुकुन्दयोरितिविश्वः वहेःस्वरितत्वादात्मनेपदम् ॥ ९८ ॥

तथाभिधात्रीमथराजपुत्रीं निर्णीयतां नैषधबद्ध रागाम्। अमोचि चञ्चूपुटमौनमुद्रा विहायसा तेन विहस्य भूयः ॥ ९९ ॥

तथेति ॥ अथानन्तरं तेन विहायसा पक्षिणा स्वामीप्सितसिद्धेर्विहस्य चञ्चूपुटस्य मौनमुद्रा मौनभङ्गिः भूयः पुनरपि अमोचि त्यक्ता। वक्तुमारब्धं किं कृत्वा तथाभिधात्रीं श्रुतश्च दृष्टश्चेत्यादि भाषमाणां तां राजपुत्रीं भैमीं नैषधे नले बद्धो रागः प्रीतिर्यया एवंभूतां निर्णीय निश्चित्य। विहायश्च शकुन्ते इत्यादि तिविश्वः ॥ ९९ ॥

इदं यदि क्ष्मापतिपुत्रि तत्त्वं पश्यामि तन्नस्वविधेयमस्मिन्। त्वामुच्चकैस्तापयता नृपं च पञ्चेषुणैवाद्य जनियोजनेयम् ॥ १०० ॥

इदमिति ॥ हे क्ष्मापतिपुत्रि राजपुत्रि यदि इदं पूर्वोक्तं सर्वं तत्त्वं सत्यं तत्तर्हि अस्मिन्कार्ये स्वस्य आत्मनः विधेयं करणीयं न पश्यामि मया करणीयं किमपि नावशिष्यते तर्हि त्वां विना स्वयमेव कथं भविष्यतीत्यत आह त्वां नृपं नलं च उच्चकैरतिशयेन तापयता उभयोरपि परस्पररागात् विरहपीडां जनयता पञ्चेषुणैव कामेनैवेयं योजना घटना अञ्जलिजनिता अत एवं मद्व्यापारोऽत्र नावशिष्यत इत्यर्थः। तप्तयोः सन्धिरिति लोहादौ दृश्यते ॥ १०० ॥

त्वद्बद्धबुद्धेर्बहिरिन्द्रियाणां तस्योपवासव्रतिनां तपोभिः। त्वामद्य लब्ध्वामृततृप्तिभाजां स्वदेवभूयं चरितार्थमस्तु ॥ १ ॥

नैष्यवस्थाः श्रुत्वा नलस्यापि काश्चिदवस्थाः सूचयन्नाह ॥ त्वदिति ॥ हे भैमि तपोभिः पुण्यैरद्य त्वां लब्ध्वा प्राप्य अमृततृप्तिः पीयूषपानजनिततृप्तिस्तत्तुल्यतृप्तिभाजां तस्य नलस्य बहिरिन्द्रियाणां चक्षुरादीनां केवलानां स्वं देवभूयं „ आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशदित्यादिश्रुतिसिद्धं स्वीयं देवत्वं चरितार्थं कृतकार्यमस्तु एतावत्कालं शब्दमात्रेणैतेषां देवत्वमभूदिदानीं त्वल्लाभेनामृततृप्तितुल्यत्वाद्देवत्वं सार्थकं भविष्यतीत्यर्थः। किंभूतस्य तस्य त्वय्येव बद्धा निवेशिता बुद्धिर्मनो येन अनशनलियमव्रतश्च किंभूतानामिन्द्रियाणा

वांमनसस्त्वयिलीनत्वाद्विषुमनोव्यापाराभावात् उपवासव्रतंविद्यतेयेषां अन्यस्यापिआकृष्टेन्द्रियस्यानशननियमवतः परब्रह्मध्यायतः पुरुषैस्तद्वे वब्रह्मलब्ध्वामोक्षलक्षणानंदभाजोदेवत्वं सार्थकम्भवतीत्युक्तिः बहिरि न्द्रियाणांनिजव्यापारेष्वप्रवृत्तिःतपः " विषयभोगाभावश्चोपवासः ,, अ मृतपानेहिदेवानादेवत्वं तथात्वञ्चाभेतदिन्द्रियाणामपिदेवत्वं कृतार्थम स्तु । देवभूयंभुवोभावेक्यप् उपवासश्चासौव्रतंचेतिकर्मधारयाद्दिनिःसम र्थनीयः उपवासेनव्रतिनइतिवासमाधिः ॥ १०१ ॥

तुल्याऽऽवयोर्मूर्त्तिरभून्मदीया दग्धापरंसास्यन ताप्यतेति । इत्यभ्यसूयन्निवदेहतापं तस्यातनु स्त्वद्विरहाद्विधत्ते ॥ २ ॥

नलस्यतद्विरहेणकामजनितंविरहज्वरमाह ॥ तुल्येति ॥ हेभैमिअत नुःकामःत्वद्विरहात्तस्यदेहतापंविधत्ते करोति किकुर्वन्निव इतिपूर्वोक्तप्र कारेणअभ्यसूयन्निवईर्ष्यां कुर्वन्निवइतीतिकिं आवयोःकामनलयोःमूर्तिः शरीरंपूर्वंतुल्यासमानाअभूत् अनन्तरंमदीयासामूर्तिर्दग्धा अस्यनलस्य सामूर्तिः परंअतिशयेनताप्यतेपिनएतच्छरीरस्यदाहोनक्रियत एवपरंसं तापोपिकेनचिन्नक्रियतेइतिअनंगस्तद्विरहादेवदेहतापंकरोतिनाभ्यस्मा दित्यर्थःममचतस्यचआवयोः त्यदादीनांमियइतिएकशेषः ॥ १०२ ॥

लिपिंदृशाभित्तिविभूषणन्त्वांनृपःपिबन्नादरनि र्निमेषः । चक्षुर्भरैरर्पितमात्मचक्षूरागं सधत्ते रचितंत्वयेव ॥ ३ ॥

दृशावर्णयति ॥ लिपिमिति ॥ नृपोनलःदृशादृष्ट्याभित्तेर्विभूषणमलं कारभूतांलिपिंचित्रनिर्मितांत्वांआदरेणतात्पर्येणनिर्निमेषः नेत्रसंकोचर हितः सन्पिबन्सादरमवलोकयन्चक्षुर्भरैर्निर्निमेषत्वादनुरागवशाच्चजा तैर्नेत्रवाष्पप्रवाहैरर्पितंजनितंआत्मचक्षूरागंस्वीयनयनयोर्लौहित्यमानंध त्ते उत्प्रेक्षतेत्वयारचितमिवजनितमिव अयंबाष्पजनितलौहित्यमानभ वतिकिन्तुत्वद्विषयकोनयनानुरागःप्रथमावस्था ॥ १०३ ॥

पातुर्दृशालेख्यमयींनृपस्य त्वामादरादस्तनिमी

लयास्ते । ममेदमित्यश्रुणिनेत्रवृत्तेः प्रीतेर्निमेष छिद्याविवादः ॥ ४ ॥

तामेवपुनराह॥ पातुमिति॥ आलेख्यमयींचित्रलिखितांत्वांआदरादस्त निमीलयानिर्निमेषयादृशापातुंसादरमवलोकयितुं यस्यअश्रुणिविषये नेत्रवृत्तेर्नयनवर्तिन्याःप्रीतेरनुरागस्यनिमेषस्यछिद्याविच्छेदेनसहममेद मितिइदमश्रुमज्जन्यमिदंमज्जन्यमितिअहमहमिकयाविवादःआस्तेभव ति।अनुरागवशान्निमेषाभावस्तस्माच्चाश्रुभवति नयनानुरागजन्यंनिमेषछि दाजन्यमेवबातदश्रुइतिलोकः संदिग्धइतिभावःनिमेषेछिद्येत्यप्रधानेतृ तीयाप्रधानंनयनप्रीतिरितिद्योतितं भिदादिपाठात्छिदासाधुः ॥१७४॥

त्वंहृद्गताभैमिबहिर्गतापि प्राणायितानासिकया स्यगत्या। नचित्रमाक्रामतितत्रचित्र मेतन्मनो यद्भवदेकवृत्तिः ॥ ५ ॥

द्वितीयामाह ॥ त्वमितिहेभैमिबहिर्गतापिबहिः प्रदेशेवर्तमानापिअनु रागवशादंतः करणेविद्यमानात्वंकयागत्याकेनप्रकारेणप्राणायिताजीवा पितानासि अपितुसर्वप्रकारेणजीववत्प्रियासि अथचबहिर्गतात्वंनासि नासिकया आस्यगसामुखगत्याऽपिहृद्गतामनोरमाऽतएवप्राणयिताप्राणा वल्लिया। तवनासिकामुखसौंदर्यंचित्रादौदृष्टातेनहृदयेधारितेत्यर्थः । बहिर्गतापिहृद्गतेति विरोधाभासःतत्परत्वात्परिहारः प्राणाअपिनासि कामुखमार्गेणद्वादशांगुलपर्यंतंबहिर्गत्वापुनरंतःप्रविशंति प्राणाख्यांचल भंते तथात्वमपिभवतीत्वमेकाकेवलावृत्तिर्जीवनोपायोयस्यैवं । एतन्म नोमलांतःकरणंचित्रमालेख्यं यन्नाक्रामतितच्चित्रमिवभवति तत्रविषये आश्चर्यविरहव्यथयाहिचंचलेनभवितव्यं तच्चयदाचित्रमिवलिख्यांप्रारंजातं तत्राश्चर्यमित्यर्थः ॥ त्वदायत्तत्वात्त्वदन्यत्किमपितस्यचित्तेनलगतीति त्वंप्राणवत्प्रियेत्यर्थः चित्रंकर्तृएतन्मनःकर्म यन्नस्वाधीनंकरोतितत्रचित्र मपितुनेतिकाकुःयतस्त्वदेकवृत्तिइतिवा भवदेकवृत्त्येतन्मनोयच्चित्रंनाक्रा मति आर्थान्नावलोकयतितत्रचित्रम् चित्रंहिसर्वैरवलोक्यते अनेननेत्या श्चर्यमितिवा एतन्मनोयच्चित्रमाक्रामति अवलोकयतितत्रचित्रंन यद्यपि

विरहिणश्चित्रंदुःखदंतथाप्याश्चर्यंन यतश्चित्रंभवदेकवृत्ति भवत्याएवैकावृत्तिरवस्थानंयत्रएवंविधं यत्रत्वमेवलिखितासितदेवचित्रमवलोकयतीति अत्रकिमाश्चर्यमितिवा. चित्तमितिपाठेव्याख्या. तत्रभाणाभवनेलोकस्यचित्तं आश्चर्यंनगच्छतियस्मात्तदेतन्मनस्त्वदेकवृत्तित्वदासक्तम् यत्रयस्यासक्तिस्तत्तस्यप्राणवद्भवति अत्रकिमाश्चर्यमिति द्वितीयावस्थाऽऽक्रामतीतिवाच्चाशेतिशयन् विकल्पःभवत्याएकावृत्तिर्यत्र सर्वनाम्नोवृत्तिमात्रइति भवतीशब्दस्यपुंवत् ॥ १०५ ॥

अजस्रमारोहसिदूरदीर्घां संकल्पसोपानततिंतदीयाम् । श्वासान्सवर्षत्यधिकंपुनर्यद्ध्यानात्तवत्वन्मयतांतदाप्य ॥ ६ ॥

तृतीयामाह ॥ अजस्रमिति ॥ त्वंदूरदीर्घामतिमहतींतदीयां नलसम्बन्धिनींसंकल्परूपांसोपानपरम्परांमैसी, प्राप्तिः कथभवेत् प्राप्तौसत्यांअहमेवंकरिष्यामिसाएवंकरिष्यतीत्येवंरूपांनानसविचारलक्षणां अजस्रंनिरन्तरंमारोहसित्वत्प्राप्त्युपायादिसर्वदाविचारयतीत्यर्थः यत्पुनःसनलःअधिकमत्यर्थंश्वासान् निश्वासान् वर्षतिमुञ्चतितत्तवध्यानाच्चिन्तनात्वन्मयतांत्वत्सायुज्यं आप्यप्राप्यत्वत्प्रधानोभूत्वात्वय्यनुरागवाहुल्यात्त्वच्चिन्तनात्त्वत्प्राप्तेरभावाद्दुःखवशात्दत्यर्थंनिश्वासान्मुञ्चतीत्यर्थः योतिदीर्घासोपानपङ्क्तिमारोहतिसनिश्वासान्मुञ्चति अत्रतुविपरीतमित्याश्चर्यं तच्चतवध्यानात्त्वन्मयत्वप्राप्तौसत्यांअधिकरणत्वाभावात्संगच्छतेत्वद्धर्मानलेयुज्यन्ते तस्मात्वत्सायुज्यंतस्यजातमित्यनुमीयतेइतिभावःअथचयोयंध्यायतिसतन्मयोभवति योगप्रभावात्प्रह्लादोजातोविष्णुमयोसुर इतिविष्णुपुराणम् आरोहणंस्यात्सोपानमित्यमरः आप्येत्यत्राह्रासमासः तृतीयावस्थानेनानुभूयतइति ॥ १०६ ॥

हृतस्ययन्मंत्रयतेरहस्त्वां तद्व्यक्तमान्त्रयतेमुखं यत् । तद्वैरिपुष्पायुधमित्रचन्द्र सख्योचितेसा खलुतन्मुखस्य ॥ ७ ॥

संकल्पमेवाह ॥ हृदिति ॥ तस्यनलस्यहृदन्तःकरणंरहःएकान्तेयत्त्वां

न्मन्त्रयते त्वामुद्दिश्य गुप्तं यद्भाषते मैर्मीमाप्यतां प्रत्येवं वदिष्यामि आलिङ्गना दिकं देहीति गुप्तं विचारं करोति। मुखं नल मुखं कर्तृ तद्गुप्तं जापयन्कर्म व्यक्तं यत आमन्त्रयते भाषते मुखस्य पाण्डुता म्लानतादि गुणं दृष्ट्वा त्वामेव ध्यायतीति व्यक्तं ज्ञायत इत्यर्थः। शालन्मुखस्य नलमुखस्य तद्वैरी नलवैरी पुष्पायुधः काम स्तस्य मित्रं चंद्रस्तेन सह यत्तस्य मैत्री तस्यौचित्ती खलु निश्चयेनोत्प्रेक्षायां वा। चंद्रतुल्यत्वान्नलमुखं चन्द्रमित्रं, नलः कामस्य शत्रुः पीड्यमानत्वात्, चन्द्रो पि मदनमित्रं तद्वृद्धिकरत्वात्, मित्रं च मित्रस्य कार्यं करोति नलो मंत्रलक्षणां शक्तिं प्रयुङ्क्ते। नल एवं विधं मित्रं करोतीति नलशक्तं मदनस्याग्रे मदनमित्रेणाक थनीयं। नीतिज्ञा हि मित्रमित्रेणापि रिपुमन्त्रभेदं कुर्वन्ति, तच्चन्द्रमित्रेण न लमुखेन कृतमिति भावः॥ मुखेन पाण्डुत्वादिगुणदर्शनादतिशयेन त्वद्विषयां चिन्तां करोतीति रपष्टं ज्ञायत इत्यर्थः। खल्वभ्यर्थे रहोऽव्ययमित्यमरः। मन्त्र गुप्तभाषणे॥ १०७॥

**स्थितस्य रात्रावधिशय्य शय्यां मोहे मनस्तस्य निम ज्जयन्ती॥ आलिङ्ग्य याचुम्बति लोचने सा निद्रा धुना न त्वदृते ङ्गना वा॥ ८॥**

क्रमसुप्तं इत्यलाघवार्थं नैकप्रयत्नेनैव चतुर्थीं षष्ठीं चावस्थामाह॥ स्थितस्ये ति॥ रात्रौ शय्यामधिशय्याधिरुह्य स्थितस्य तस्य मनो मोहे वैचित्र्ये सुखविशे षे च मोहो मदनयुद्धं तत्र वा निमज्जयन्तीत द्रूपं कुर्वती सती या आलिङ्ग्याङ्गा नि श्लथायित्वा लोचने चुम्बति तत्र सम्बद्धा भवति। अथ च लतावेष्टिताद्यालि ङ्गनादीनि कृत्वा यानेत्रचुम्बनं करोति सैवंविधा निद्रां गना वा त्वदृते त्वां विना अधुनाइदानीं न विद्यते। त्वद्विरहान्नलस्य न निद्रा त्वद्व्यतिरेकेणैवंविधाङ्गनापि न रोचत इति भावः। श्लेषप्रयत्नेन निद्राच्छेदविषयनिवृत्तिलक्षणे अवस्थे प्रो क्ते। क्रमो नाङ्गुनं दोपायनेति ज्ञेयम्॥ शय्यां अधिशीङ्स्थेति कर्मत्वं, त्वत् अन्याराद् इति पञ्चमी॥ १०८॥

**स्मरेण निस्तक्ष्य वृथैव बाणैर्लावण्यशेषं कृशतामनायि॥ अनंगतामप्ययमाप्यमानः स्पर्द्धां न साद्धं विजहाति तेन॥ ९॥**

पञ्चमीमाह ॥ स्मरेणेति ॥ सनलः स्मरेणबाणैर्निस्तत्त्वनिर्विद्यलावण्यंसौन्दर्यमेवशेषंयस्यास्तांकृशतांवृथैवानायिनीतः प्रापितः। लावण्यस्थितशरीरंक्षीणं, यतः अनङ्गतामतिकृशता मङ्गरहिततांमदनत्वंनीयमानोप्ययंतेन मदनेनसहस्पर्द्धांसाम्यंनत्यजति । रूपसाम्यात्कृद्धेनकामेनातिकृशत्वंनीतः,, तत्रश्लेषदङ्गोनङ्गः नञ्समासईषदर्थेऽनुदराकन्योतिवत्, कृतेपिकृशत्वे सुतरांसाम्यमेवाभूदितिभावः ॥ अतएवलावण्यशेषामित्युक्तं तथैवेतिपाठेलावण्यशेषामेवकृशतांतथानीयियथानंगतामाप्यमानोपितेन सहस्पर्द्धां नत्यजतीति व्याख्या ॥ १०९ ॥

**त्वत्प्रापकात्त्रस्यतिनैनसोवा त्वय्येषदास्येपिनलज्जतेयत् ॥ स्मरेणबाणैरतितक्ष्यतीक्ष्णै लूनः स्वभावोपिकियान्किमस्य ॥ १० ॥**

सप्तमीमाह ॥ त्वदिति ॥ एषःनलः त्वांप्रापयतिदापयतीतित्वत्प्रापकंतस्मादेनसोपिपापादपि, राक्षसायुद्धहरणादित्यादिरूपान्नत्रस्यति नबिभेति । यच्चत्वयिविषयेदास्येपिनलज्जतेततोहेतोः स्मरेणतीक्ष्णैर्बाणैः अतितक्ष्या तिशयेनास्यशरीरंतनूकृत्यकियानल्पः स्वभावोपिलूनःछिन्नःकिमितिसहेतुकोत्प्रेक्षा । धर्मशीलत्वादयंसर्वदापातकाद्बिभेति दासत्वेचराजत्वाल्लज्जतेइत्यस्यस्वभावः सतुत्वत्प्राप्तिलोभेननदृश्यते शरीरस्यातिकार्श्यात्स्वभावस्यापिकार्श्यंजातमित्यनुमीयतइत्यर्थः। त्रपानाशावस्थोक्ता, त्वत्प्रापकादित्यादिनात्वदन्यविषयपरित्यागेन विषयनिवृत्तिरेवतामयंभृत्यावर्ण्यतइति श्लोकतात्पर्यम्॥अतितक्ष्येति स्वभावापगमेहेतुत्वार्थमुक्तं नतुतनुतावस्थाप्रतिपादनार्थं, शरीरस्याततक्षणेस्वभावलूनत्वंसंभाव्यतइति द्योतनार्थमतिशब्दतीक्ष्णशब्दप्रयोगौ। एनसःभीत्रार्थेतिपञ्चमी॥११०॥

**स्मारंज्वरंघोरमपत्रपिष्णोः सिद्धागदंकारचयेचिकित्सौ ॥ निदानमौनादविशद्विशाला साङ्क्रामिकीतस्यरुजेवलज्जा ॥ ११ ॥**

पुनः त्रपानाशमेवाह ॥ यद्वाप्रथमतस्त्रपानाशंवर्णयितुमाह ॥ स्मारमिति ॥ तस्यनलस्यविशालामहतीलज्जा सिद्धेचिकित्सासमर्थेऽगदंकार

चयेवैद्यसमूहेनिदानमौनात् आदिकारणस्याज्ञानात् अविशतप्रविष्टा । किंभूतस्य अपत्रपिष्णोः लज्जाशीलस्य । किंभूतेस्मारंमदनजनितंघोरंदारुणज्वरंचिकित्सौप्रतिकुर्वाणे । कैव सङ्क्रमणजनितासाङ्क्रामिकीसंसर्गजनितारुजेवरोगइव,,यथादिव्याधिः क्षयिणंपरित्यज्ययथान्यंसंसर्गिणंप्रविशति तथालज्जाशीलस्यनलस्यलज्जयाज्ञवितव्यं, साचतंविहायवैद्यसमूहेदृश्यते कार्श्यनिदानाज्ञानात् अक्षिरोगोज्वरःकुष्ठंतथापस्मारएवच । सहभुक्त्यादिसंबधात्सङ्क्रामन्तिनरान्तरमितिवैद्यैः पृष्टेनतेनलज्जांविहायनिदानंयदैवकथितंतदैवा स्माभिर्ज्ञातमित्युत्कालज्जितं । लज्जाशीलोपत्रपिष्णुरित्यमरः । उकनलोकेतिषष्ठीनिषेधाद्द्वितीया, अपत्रपिष्णोः अलंकृञितिइष्णुच्, अगदंरोगरहितंकरोतीत्यगदंकारः, कर्मण्यणन्तेकारशब्देउत्तरपदेकारेसत्यागदस्येतिमुम्, सांक्रामिकी आध्यात्मादित्वाट्ठञ् अनुशतिकादित्वादुभयपदवृद्धिः ॥ १११ ॥

बिभेतिरुष्टासिकिलेत्यकस्मा त्स त्वांकिलापेतिहसत्यकाण्डे ॥ यान्तीमिवत्वामनुयात्यहेतोरुक्तस्त्वयैवप्रतिवक्तिमोघं ॥ १२ ॥

अष्टमीमाह ॥ बिभेतीति ॥ सनलःहंभैमित्वंरुष्टासिकुपितासिकिलेति संभाव्या कस्मात्वत्कोपेनविनैवबिभेति भयंप्राप्नोति । तथाकिलमिथ्याभूतांत्वां आपप्राप्तवानितिकृत्वाअकाण्डेऽभयएवत्वत्प्राप्तिं विनैवसुखातिशयाद्धसति । तथायांतीमिवगच्छंतीमिवत्वां अनुलक्षीकृत्याहेतोःनिष्कारणंयाति । तथ त्वयाउक्तइवसम्भाषितइव आगच्छामित्वदादिष्टंनयापूर्वमेवकृतमित्यादिमोघंनिष्फलप्रतिवक्तिप्रतिवचनंददाति उन्मादावस्था ॥ ११२ ॥

भवद्वियोगाच्छिदुरार्तिधारा यमस्वसुर्मज्जतिनिःशरण्यः ॥ मूर्छामयद्वीपमहान्ध्यपंङ्के हाहामहीभृद्भटकुञ्जरोयम् ॥ १३ ॥

नवमीमाह ॥ भवदिति ॥ भवत्यावियोगेनविरहेणजनिताऽच्छिदुरासंततायाआर्तिःपीडातस्याधाराप्रणालीपरंपरासैवयमस्वसायमुनातस्याः नू

र्छामयंमूर्छारूपंयद्द्वीपञ्जलमध्यावकाशःतस्मिन्महान्ध्यलक्षणोमहाज्ञान लक्षणःपङ्कःकर्द्दमस्तस्मिन्निःशरणयोरक्षितृरहितो ऽयंनलःमहीभृद्द्रटोरा जश्रेष्ठएवकुञ्जरोहस्तीनिमज्जतिबुडति, हाहाखेदातिशये । अन्योपि कुञ्जरोहस्तिपकंविनानद्याद्वीपपंकेबुडति,, पङ्कमग्नोगजोनोद्धर्तुंशक्यते इ ति मूर्छावस्था एवंनवावस्थासूचकाःश्लोकाःलिपिमित्याद्योयथायथमू ह्याः । भवत्यावियोगइति सर्वेनाम्नोवृत्तिमात्रइति पुंवत् । अच्छिदुरेति विदिभिदीतिकुरच् ॥ ११३ ॥

सव्यापसव्यत्यजनाद्द्विरुक्तैः पञ्चेषुबाणैःपृथगर्जितासु ॥ दशासुशेषाखलुतद्दशाया तयानभःपुष्पितकोरकेण ॥ ११४ ॥

उक्तिविशेषेणदशमीमवस्थामाह ॥ सव्येति ॥ सव्यापसव्याभ्यांत्यजनं मोचनंतस्माद् द्विगुणैर्द्दशभिःपञ्चेषुबाणैः कामबाणैः पृथक्प्रत्येकंआर्जि तासुरचितासुदशास्वर्जितप्रायासुमध्ये शेषा ऽवशिष्टायालद्दशामृतिलक्षणा तयाकोरकेणकलिकयानभोगगनंखलुनिश्चितपुष्पितपुष्पितंभवतु।सादशमी दशाखपुष्पातुल्यासर्वथाभवतीत्यर्थः । एकैकेनमदनबाणेनान्येषांदशाव स्थाभवंति,,अस्यतुनवदशमीनेतितस्याअवसर,, अस्याःकोरकत्वमननुभू तत्वात्,,तवलाभश्चेन्नजविष्यतितर्हिसापिदशाभविष्यति साभूत्वत्प्राप्ति रेवभवत्वितिभावः ॥ दशायाअशुभत्वान्नामग्रहणानर्हत्वाद्यत्तच्छब्दप्रयो गः । द्विरुक्तशब्दोलक्षणयाद्विगुणपर्यायः,, शेषशब्दःस्त्रीलिङ्गः अभिधेय लिङ्गत्वात्,, पुष्पविकसनेआशिषिलोट् । चक्षूरागःप्रथमंचित्तासंगस्ततोथ संकल्पः ॥ निद्राच्छेदस्तनुताविषयनिवृत्तिस्त्रपानाश १ उन्मादोमूर्छामरणं चेतिदशावस्थाः ॥११४ ॥

त्वयिस्मराधेःसततास्मितेन प्रस्थापितोभूमिभृतास्मितेन ॥ आगत्यभूतःसफलोभवत्या भावप्रतीत्यागुणलोभवत्याः ॥ ११५ ॥

प्रकृतमाह. त्वयीति॥स्मराधेःकामजनितपीडातःसततंनियतमस्मितेनहा सरहितेनतेनभूमिभृताराज्ञात्वयिविषयेअहंप्रस्थापितोस्मि।भैमीभद्यंत्व

याविज्ञापनीयेत्यत्र मिहागत्य गुणेषु लोभवत्या अनुरागिण्याभवत्यास्तवभा वप्रतीत्याप्रेमपरिक्षानेन सफलं कृतकार्यीभूतः जातः। नलसदृशोगुणीत्वंच गुणानुरागिणीत्वंतएवतस्मिन्ननुरक्तेतिज्ञात्वाकृतार्थोजातोस्मीतिभावः ११५

धन्यासिवैदर्भिगुणैरुदारै यंयासमाकृष्यतनैषधो पि ॥ इतःस्तुतिःकाखलुचंद्रिकायायदब्धिमप्युत्त रलीकरोति ॥ १६ ॥

धन्यासीति ॥ हेवैदर्भि भैमि सात्वंधन्या दैवाधिकासि । यंयात्वयाउदारैर तिरमणीयैर्गुणैः सौन्दर्यादिभिः कृत्वानैषधो धीरोदात्तोनलोपिसमाकृष्यत स्ववशीकृतः याइद्दृशंधीरंवशीकरोति तत्परा का धन्येत्यर्थः। दृष्टान्तेनधन्य त्वंसमर्थयते खलुयस्याश्चन्द्रिकायाइतःपरा का स्तुतिरस्तियद्यागम्भीरमपिअ ब्धिंसमुद्रंतत्तरलीकरोतिअतिशयेनचचलीकरोति,, तद्वत्तद्वशीकरणमेवत वस्तुतिर्धन्यता अपचवैदर्भीकाव्यकारीतिःगुणैश्लेषादिभिरलङ्कारैः,, अन्य दपिविशालैर्दारकैराकृष्यते ॥ ११६ ॥

नलेनभायाःशशिनानिशेव त्वयासभायान्निशया शशीव ॥ पुनःपुनस्तद्युगयुग्विधाता योग्यामुपा स्तेनयुवांयुयुक्षुः ॥ १७ ॥

नलेनेति ॥ हेभैमि त्वंनलेनकृत्वाभायाःशोभस्व। केनकेव पूर्णेनशशिना निशेव । सनलस्त्वयाकृत्वाभायात्शोभतां । कयाकइव निशयाशशीव । उभयोःसमागमेउभावपिव्यतिभातामित्यर्थः । नुउत्प्रेक्षते पुनः पुनःप्रति मासंतद्युगंचन्द्रनिशालक्षणंयुग्मंयुनक्तीतियुक्एवंविधोविधाता ब्रह्मायुवां उभावपियुयुक्षुःयोक्तुमिच्छन्सन्योग्यामभ्यासंउपास्तेकरोतिशिल्पीसमयं वस्तुसंघट्टयितुमभ्यासंकरोति,, अन्यथाचन्द्रनिशयोः पुनःपुनर्योजनंव्यर्थं स्यादित्यर्थः यतिःप्रमाणं स्वभ्यासमास्तेइतिपाठेअभ्यासस्यसमृद्ध्यर्थंसमृद्धाव भावेचतुर्थ्याअव्ययीभावः॥ योग्याभ्यासार्कयोरितिविश्वः ॥ ११७ ॥

स्तनद्वयेतन्विपरंतवैव पृथौयदिप्राप्स्यसिनैषध स्याप्रनल्पवैदग्ध्यविवर्द्धिनीनांपत्रावलीनांरचना समाप्तिम् ॥ १८ ॥

स्तनद्वयइति ॥ हेतन्विकृशाङ्गि नैषधस्यनलस्यानल्पबहुतरवैदग्ध्यंकौश लंतस्याविवर्द्धिनीनांज्ञापिकानांपत्रावलीनांपत्र वल्लीपङ्क्तीनांवलनारच नासमाप्तिंयदिप्राप्स्यसि,,तर्हिपरकेवलंपृथौविशालेतवैवस्तनद्वये अतिपी नत्वात्नान्यस्याल्पकत्वात्अपृथुशब्दोभाषितपुंस्कः ॥ ११८ ॥

एकः सुधांशुर्नकथंचनस्या त्तृप्तिक्षमस्त्वन्नयनद्व यस्य ॥ त्वल्लोचनासेचनकस्तदस्तु नलास्यशीतद्यु तिसद्वितीयः ॥ १९ ॥

एकइति । एकोऽसहायःसुधांशुश्चन्द्रोऽ तिविशालस्यत्वन्नयनद्वयस्यक थंचनकेनापि प्रकारेणतृप्तिक्षमःसंतर्पणसमर्थोयतोनस्यान्नभवेत् । तत्त तःकारणात्सचन्द्रोनलास्यलक्षणोयःशीतद्युतिश्चन्द्रस्तेनसद्वितीयः ससहा यःसन्त्वल्लोचनयोस्तुवनेत्रयोरासेचनकोनिर्मर्यादतृप्तिकारीअस्तु भवतुच कोरतुल्यस्यत्वन्नेत्रद्वयस्यैकेनचन्द्रेण तृप्त्यभावात् चन्द्रद्वयेनभवितव्यंतत्र चन्द्रसहकारीनलास्यचन्द्रोभवत्वित्यभिप्रायः तत्प्राप्त्यर्थंयत्नःकार्यइतिभा वः त्वदासेचनकंतृप्तेर्नास्त्यं तोयस्यदर्शनमित्यमरः ॥ ११९ ॥

अहोतपः कल्पतरुर्नलीय स्त्वत्पाणिजाग्रस्फुरदं कुरश्रीः ॥ तद्भ्रूयुगंयस्यखलुद्विपत्रीतवाधरोरज्य तियत्कलंबः ॥ २० ॥

अहोइति ॥ यस्तइतियुग्मम् नलीयोनलसंम्बन्धीतपोतरुः कल्पवृक्षः अहोआश्चर्यरूपः आश्चर्यरूपत्वमेवविशेषणैः प्रकटयति कीदृशःकल्पत रुःत्वत्पाणिजाग्राणितवनखाग्राण्येव स्फुरन्तीप्रकाशमाना अङ्कुरश्रीरङ्कुरशो भायस्यखलुनिश्चये अङ्कुरानन्तरंत्वद्भ्रूयुगमेवयस्य कल्पवृक्षस्यद्विपत्रीपत्र द्वयी तवाधरओष्ठएवयस्यकलंम्बः मध्यमांकुरोनालमित्यर्थः रज्यतिआर क्तोभवति प्रथमाङ्कुरापेक्षयामध्यमांकुरस्यतिरक्तत्वात् यस्तेकराभ्यांनवभू तनः पल्लवयुक्तोविद्यते मध्यमांकुरापेक्षया अतिरक्तत्वात्तवहस्तावेवपल्ल वौजातौयस्तवस्मितेनकोरकितः कलिकायुक्तआस्तेपल्लवानंतरंकोरकाभ वन्ति स्मितस्यसितत्वात्कोरकत्वं कोरकापेक्षयाविकस्वराणांपुष्पाणांमृदु त्वात् ॥ १२० ॥

यस्तेनवःपल्लवितःकराभ्यां स्मितेनयःकोरकित स्तवास्ते ॥ अङ्गम्रदिम्नातवपुष्पितोय स्तनश्रिया यःफलितस्तवैव ॥ २१ ॥

यइति ॥ यःतवअंगम्रदिम्नाशरीरमार्द्दवेनपुष्पितः पुष्पयुक्तोविभाति अतिमृदूनितवांगानियस्यपुष्पस्यानेजातानि यस्तवैवस्तन श्रियाफलितः फलयुक्तः तवस्तनावेवयस्यफलस्यानेजातौ अतीवाश्चर्यजनकोयंनलीय स्तपःकल्पवृक्षः एवंविधांत्वांप्राप्तुंतेनैवतपस्तप्तंनान्येनेतिभावः अन्यस्य तरोरेतेपदार्थाः क्रमेणभवन्तिएतस्यतुएककालमेवेति अहोशब्दआश्चर्यं द्योतयति कलम्बःसायकेनीपेनालेशाकेकलंब्यपीतिविश्वः नलीयःवा ना मधेयस्येतिवृद्धसंज्ञायावृद्धाच्छः रव्यति कुषिरंजोरितिकर्मकर्तरिश्यन्पर स्मैपदे पल्लवितस्तारकितः ॥ १२१ ॥

युग्मम् ॥ कांसीकृतासीत्खलुमंडलीन्दोःसंसक्त रश्मिप्रकरास्मरेण ॥ तुलाचनाराचलतानिजैवमि थोनुरागस्यसमीकृतौवाम् ॥ २२ ॥ रूपक

कांसीति ॥ खलूत्प्रेक्षे हेभैमिवांतवनलस्यचमिथः परस्परंयोनुरागस्त स्यसमीकृतौसमीकरणेनलस्यत्वयियावाननुरागस्तावानेवतवनले ऽनुराग इति उभयोरनुरागस्यतुलनार्थंस्मरेणइन्दोश्चन्द्रस्य मण्डलीकांसीकृता परि मेयवस्तुधारणार्थंकांस्यपात्रमिवकृतासीत् किंभूतासंसक्ताः सम्बद्धाः र श्मिप्रकराः किरणसमूहाःरज्जुसमूहाश्चयस्याः सा निजैवस्वीयैवनाराचल ताशालाकातुलाचतुलादण्डश्चकृता कंसायपात्रविशेषायहितंकंसीयंतस्मै हितमितिप्राक्क्रीताच्छः तस्यविकारःकंसीयपरशव्ययोरितियञ्छस्यलुक् कां सं अकांस्यंकांस्यंसंपन्नंकांसीकृतं चौक्यश्चयोश्चेतिइत्वमस्यआदेः पर स्येतिचकांस्येतियकारमात्रस्यलोपः अवर्णस्यअस्यच्वाविति इत्वं कंसीकृते तिपाठे कंसोद्रैत्यांतरेपिच कांस्येचकांस्यपात्रेचेतिविश्वः किरणप्रग्रहौर श्मीत्यमरः ॥ १२२ ॥

सत्त्वस्रुतस्वेदमधूत्थसांद्रे तत्पाणिपद्मेमदनोत्सवे षु ॥ लग्नोत्थितात्वत्कुचपत्रलेखायन्निर्गतास्तंप्र

विशन्तुभूयः ॥ २३ ॥

सत्वेति ॥ हेभैमिमदनोत्सवेपुनस्पाणिपद्मेनलहस्तकमलेपूर्वंलग्नाः पश्चादुत्थितास्त्वत्कुचयोः पत्रलेखापत्रावलयः तन्निर्गताः नलपाणिपद्मे नैवलिखिताभूयस्तमेवपाणिपद्मंप्रविशन्तु किंभूतेपाणिपद्मे सत्वेनसत्वभावेनश्रुतोजनितः स्वेदःघर्मोदकंतज्जनर्णसधूत्यसिक्यकत्तेनसान्द्रे निबिडे इतोत्सववशात्पत्रावल्यामार्जनंभवत्वित्यर्थः कारणेकार्यस्यलयउचितइतिभावः मधूत्थेयथालिखितमेतीतिमधूत्थपदं पद्म पुल्लिङ्गेपि ततः तस्मिन्तियुज्यते ॥ १२३ ॥

वंधाढ्यनानारतमल्लयुद्धप्रमोदितैःकेलिवनेमरुद्भिः प्रसूनवृष्टिंपुनरुक्तमुक्तां प्रतीच्छतंभैमियुवां युवानौ ॥ २४ ॥

बंधाढ्येति ॥ हेभैमियुवांनौतरुणौयुवांकेलिवनेक्रीडावनेमरुद्भिर्वायुभिः पुनरुक्तंपुनःपुनर्मुक्तंत्यक्तं प्रसूनवृष्टिंप्रतीच्छतांगृह्णीत किंभूतैस्मैरुद्भिःबंधैःपङ्कजासनादिसुरतबंधैराढ्यंविस्तृतंनानारतं अनेकप्रकारंरततदेवमल्लयुद्धंतेनप्रमोदितैःप्रकर्षेणपरिमलंप्रापितैः सम्भोगेनपुष्पेपुच्युतेषुपुनः पुनर्मोचनंमङ्गलं अथच मल्लयुद्धदृष्टैर्देवैर्मुक्तांपुष्पवृष्टिमल्लौगृह्णीतः मरुतौपवनामराविल्यमरः युवतिश्चयुवाचपुमान् स्त्रियेत्येकशेषः ॥ १२४ ॥

१३५६ अन्योन्यसंङ्गमवशादधुनाविभातांतस्यापितेपिमनसोविकसद्विलासे ॥ स्रष्टुंपुनर्मनसिजस्यतनुप्रवृत्तमादाविवद्व्यणुककृत्परमाणुयुग्मम् ॥ २५ ॥

अन्योन्येति ॥ अधुनाऽन्योन्यसङ्गमवशात्परस्परसंयोगवशात् विकसन्विलासोविभ्रमोययोस्तेतस्यापि नलस्यापितेपितवापिमनसीपरमाणुयुग्ममिवविभ्रातांशोभेतां ॥ किंभूतंपरमाणुयुग्मं मनसिजस्यकामस्यतनुंशरीरंपुनः स्रष्टुंप्रवृत्तं अतएवादौद्व्यणुकङ्करोतीतिद्व्यणुककृत् सक्रियाभ्याद्वाभ्यापरमाणुभ्यांएकंद्व्यणुकमारभ्यते एवंक्रमेणमहत्कार्यमारभ्यतइति सिद्धान्तः दग्धस्यकामस्यमनोजन्यत्वान्मनसिजत्वं ततश्चतदुत्पत्त्यर्थमनो

द्वयेनद्वयाणुकमारब्धव्यं तत्तुयेनकेनचिन्मनोद्वयेनकर्तुंनशक्यते एतादृशपर स्परानुरागस्यकुत्रचिदप्यभावात् ततश्चयुवयोरेवमनोद्वयेनकर्तुंशक्यं नान्ये नेतिभावः युवयोःपरस्परानुरागरूपसूत्राद्बुल्यात्कामः शरीरीस्यादितिभावः ॥ १२५ ॥

कामः कौसुमचापदुर्जयममुंजेतुंनृपंत्वांधनुर्वल्लीम व्रणवंशजामधिगुणामासाद्यमाश्वत्यसौ ॥ ग्रीवा लंकृतपट्टसूत्रलतया पृष्ठांकियल्लंबयाभ्राजिष्णुंकषरे खयेवविलसत्सिंदूरसौंदर्यया ॥ २६ ॥

कामइति ॥ असौकामः कौसुमेनचापेनदुर्जयंजेतुमशक्यं अमुंनृपंनल जेतुं अव्रणेतिद्रोषेवंशेजातां अथचघुणादिजन्यव्रणरहितवेणुजाताम धिगुणांअतिशयितसौन्दर्यादिगुणयुक्तां आरोपितमौर्वीकांत्वचांत्वन्मयीं धनुर्वल्लींधनुर्लतां आसाद्यप्राप्यमाश्वलि अधुनानलज्जेष्यामीतितुष्य ति किंभूताधनुर्वल्लींधनुर्वल्ल्यांनिवसताविद्यमानेनसिन्दूरेण सौन्दर्यलो हितिमायस्यातयाधनु पृष्ठभागेअथचपश्चाद्भागेकियल्लंवयाकियद्दीर्घया ग्रीवामध्यकण्ठश्चतस्याः अलङ्कृतिरलङ्कारभूतापट्टसूत्रलताद्दीर्घेणपट्टसूत्रे णेत्यर्थः तयाभ्राजिष्णुंशोभमानां कयेव कषरेखयेवपरीक्षारेखयेव कषण धारयाधनुर्योग्यवेणुपरीक्षायांनिघृष्यमाणां सिन्दूरंचलतिचेत्तदापरिपाको ज्ञेयः इतिधानुष्कप्रसिद्धिः कामस्त्वांविनानलवशीकरणकारणंकिमपिन विद्यतइत्यर्थः भ्राजिष्णुभुवश्चेतिचकारादिष्णुच् ॥ १२६ ॥

त्वद्गुच्छावलिमौक्तिकानिगुलिकास्तेराजहंसंवि मोर्वेध्यविद्धिमनोभुवः स्वमर्पितामंजुधनुर्वल्लमूरी यन्निल्यांक्रमितासलालितमध्याभुज्यमुनंलसल्ला भीमध्याविलटिविलासमखिलंरोमालिरालंबते २७

त्वयिति ॥ हेभैमित्वंविभोर्मनोभुवः कामस्यत्वद्गुच्छावलेस्तवहारविशेष पद्क्तेमौक्तिकान्येवगुलिकाः सूक्ष्मामृद्गोलकान्विद्धिजानीहि तथातंराज हंसंनृपश्रेष्ठंनलस्वेष्यं अथचतंनलमेवराजहंसाख्यंपक्षिविशेषंकामस्यवे ध्यलक्ष्यंविद्धि तथास्वमात्मानमर्पितांवद्यमानागुणयुक्तांमञ्जुंमनोज्ञांध

नुर्मञ्जरीधनुर्लतां जानीहि तवरोमावलिः रोमराजिःयस्याः धनुर्लतायाः नित्यंसर्वदाअङ्कनिवासोमध्यवसतिस्तयालालितया अतिशयेननर्तिताशोभमानात्युमौर्वीतयामुल्यमानंसेव्यमानं भुज्यमानमनुभूयमानंवाऽखिलं विलासस्थापनध्यवर्तिशोभमानमौर्व्याः सम्पूर्णलीलामालम्बते अङ्गीकरोति रोमराजिरेवमौर्व्याः स्थानेजातेत्यर्थः किंभूतारोमालिःलसन्ती नाभ्येवमध्यंविलयस्याः साङ्गुलिकाधारणछिद्रस्थानेनाभिरेवजातेत्यर्थः गुलिकाधनुरितिनाम त्वद्रूपेणशस्त्रेणनलः कामस्यजय्योनान्येनेतिभावः धनुर्मौर्वीमध्येगुलिकारोपणस्थानेविलम्बवति तद्वन्नाभिरेव रोमालि मौर्वी अङ्कयति धनुः राजहंसोवेध्यइत्यर्थः विभुस्तुगुलिकाधनुः क्रीडांकरोति हारभेदायष्टिभेदागुच्छगुच्छार्द्धगोस्तनाइत्यमरः राजहंसोनृपश्रेष्ठेकादम्बकलहंसयोरितिविश्वः ॥ १२७ ॥

पुष्पेषुश्चिकुरेषुतेशरचयंस्वंभाल मूलेधनूरौद्रेचक्षु-
षितज्जितस्तनमनुश्रेष्टंचयश्चिक्षिपे ॥ निर्विघ्ना
श्रयदाश्रमंसविततनुस्त्वांतज्जयायाधुना पत्राली
स्त्वदुरोजशैलनिलयातस्यर्णशालायते ॥ २८ ॥

पुष्पेषुरिति ॥ तेनलेनसौन्दर्यादिनागुणेनजितोऽतएवनिर्विद्धवैराग्यंप्राप्यः पुष्पेषुःकामःते तवचिकुरेषुकेशपाशेषुपुष्पेषुत्वात्स्वंशरचयं वाणसमूहंचिक्षिपेत्यक्तवान् तवभालमूलेललाटमूलेभ्रूस्थानेस्वंधनुस्त्यक्तवान् रौद्रंरुद्रसम्बन्धिनिदाहकेचक्षुषि अनुस्वार्द्धतृतीयनेत्रलक्षणेऽञ्जनपात्रेस्वीयान्तनुंचचिक्षिपे जितवान् सकामोधुनाविततनुः शरीररहितोऽथ चविशेषेणकृशःसन्तज्जयायतंनलंजेतुंत्वामेवाश्रमं आश्रयत् तथातवउरोजौस्तनावेवशैलौतावेवनिलयः स्थानंयस्याः सातत्रविद्यमानापत्रालिः पत्रवल्लीपंक्तिस्तस्यकामस्यपर्णशालेवाचरतिभवति मैमीकेशपाशपुष्पाणां कामजनकत्वात् कामवाणत्वंभ्रुवोरपिकामजनकत्वाद्धनुष्ट्वं स्तनपर्वतनिमयपत्रवल्लीनामपितज्जनकत्वात्गृहत्वं त्वय्येवशत्रोरकामेनसमेतव्योनान्यत् किञ्चित्तज्जयायेतित्वदाश्रयेणमदनंतं पीडयतीत्यर्थः अन्योपिजितः शत्रादित्यक्ताशस्त्रजेतुंपर्वतेपर्णशालांचित्रयतमस्यति अनुस्वाद्रुमहत्यर्थे सादृश्येवाव्ययीभावः क्षिपेःस्वरितत्वात्तङ् ॥ १२८ ॥

नंप्रापतंसज्वलद्दसमशरेषुरपाद्धंपुष्पार्द्धमौले ३३॥

सरसीति ॥ सहंसःयत्रसंरसिनृपंपूर्वं अपश्यत्तस्यसरसस्तीरंभजति तस्य अशोकानोकहस्य अशोकवृक्षस्यउपमूलंमूलसमीपेतंनलंप्राप किंभूतं स्मरतरलंमदनजनितपीडयाचञ्चलं तथाकिसलयानामग्रपल्लवानान्दलानि कोमलाङ्कुरास्तेषान्तल्पंशय्यातस्यामपिग्लायिनंग्लानशीलं किंभूतस्यज्वलन्तोदेदीप्यमाना असमशरेषवः कामबाणास्ते सदृशाइतेएवं शीलानि पुष्पाणितेषामृद्धिः समृद्धिःतद्युक्तोमौलिरग्रभागोयस्य विरहव्यथयाहंसं प्रतीक्षमाणस्तत्रैवस्थितोयत्रपूर्वंहंसेनदृष्टः अशोकपुष्पाणां रक्तत्वाज्ज्वलत्कामबाणतुल्यत्वम् ॥ १३३ ॥

परवतिदमयन्तित्वां नकिंचिद्वदामिमतमुपनद्रुकिं मामाहसाशंसहंस । इतिवदति नलेसौतच्छ्रासोपनम्रः प्रियमनुसुकृताहिस्वस्पृहायाविलम्बः॥३४॥

परवतीति ॥ नलेउन्मादवशात्इति वदतिसति असौहंसःउपनम्रः समीपमागतः सन्तद्वैसीवृत्तान्तसर्वंशंसकथयतिस्म इतीतिकिंचित्तेप्रत्यक्षीकृतानैमीमित्याह एवहमनपि हेपरवतिपित्राद्यधीनत्वात्परतन्त्रेदमयति अहत्वांप्रति अद्यापिनागच्छसीत्यादि किञ्चिदपिनवदामिस्वातंत्र्याभावात् हेहंसत्वंद्रुतंशीघ्रमुपनमसमीपमागच्छ सानैमीमामुत्संश्यकिमाहाब्रवी तच्छ्रुतसकथयेतिवाक्यार्थः । कर्मतद्वचनानंतरमेवअयंगत्वाकथं कथितवानित्याशंक्याह प्रियमिति हियस्मात्सुकृतांधार्मिकाणांप्रियंस्वाभीष्टमनुलक्षीकृत्यस्वस्पृहायाएवविलम्बः नत्वन्यस्य यदैवतेषांवस्तुप्राप्तिच्छाभवतितदैवपुण्यवशात् प्राप्नुवन्तीतिभावः कस्पृहायाइतिक्वचित् स्पृहायाविलम्बःक्वेतियोजनीयम् सुकृतांपुण्यकर्म पापमन्त्रपुण्येषुकृञइतिक्विप् आहेतिविभक्तिप्रतिरूपकमव्ययम् भूतार्थे ॥ १३४ ॥

कथितमपिनरेन्द्रैः सशयामासहंसंकिमितिमिति किंपृच्छन्भाषितंसप्रियायाः ॥ अधिगतमपिसांद्रानंदमाध्वीकमत्तः स्वयमपिशतकृत्वस्तत्तथान्वाचचक्षे ॥ ३५ ॥

कथितमपीति ॥ सनरेंद्रोनलः हंसेनकथितमपिप्रियायाः भैम्याःभाषितंवचनकिमिति २ कीदृक् २ इत्येवं आदरातिशयेनहंसंपृछन् पुनरपिहंसमग्रापयामासवादयतिस्म अथअनन्तरंसान्द्रोनिविडः आनन्दएवमाध्वीकंमधुतेनमत्तोहृष्टःसन् अधिगतंज्ञातार्थंतद्भैमीभाषितंस्वयमपिशतकृत्वः अनेकवारहंसेनयथोक्तंतथैवेदृक्भैम्योक्तमीदृग्भैम्योक्तमितिशिरः कम्पादभिनयेनान्वाचचक्षे अनूदितवान् अत्यादृतस्येयंजातिः मद्यविशेषश्चोक्तमपिपुनर्वादयति स्वयमपिपुनर्वदतिमधुमाध्वीकमद्ययोरित्यमरः मार्द्वीकमितिपाठे मृद्वीकायाद्राक्षायाविकारोमार्द्वीकं रासे शब्दकर्मत्वाद् णौकर्तुर्यन्तेकर्मसंज्ञा शतवाराञ्छतकृत्वः संख्यायाःक्रियाभ्यावृत्तिगणन इति कृत्वसुच् ॥ १३५ ॥

**श्रीहर्षंकविराजराजिमुकुटालंकारहीरःसुतंश्रीहीरःसुषुवेजितेन्द्रियचयमामल्लदेवीचयं तार्तीयीकतयामितोयमगमत्तस्यप्रबन्धे महाकाव्ये चारुणिनैषधीयचरिते सर्गोत्रिसर्गोज्ज्वलः ॥**

श्रीहर्षमिति ॥ तार्तीयीकेतिद्वैतीयीकवत् ॥ इति श्रीवेदकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृतेनैषधीयप्रकाशेतृतीयः सर्गः ॥३॥

**अथ नलस्य गुणं गुणमात्मभूः सुरभितस्य यशःकुसुमंधनुः ॥ श्रुतिपथोपगतंसुमनस्तयातमिषुमाशु विधाय जिगाय ताम् ॥ १ ॥**

श्रीगणेशायनमः ॥ अथेति । अथहंसगमनानन्तरमात्मभूः कामःश्रुतिपथंकर्णमार्गंउपगतंप्राप्तमपकर्णितंनतथानलस्य सौन्दर्यादिगुणंगुणांमौर्वीविधायकृत्वातथाकर्णितसुरभिख्यातसुगन्धिचतस्ययशोलक्षणकुसुमधनुः विधाय तथाश्रुतिपथोपगतंश्रुतमाकर्णाकृष्टंचतमेवनलंसुमनस्तयामनोषितयाकुसुमत्वेनचइषुंबाणंविधाय आशुतांभैमींजिगायजितवान् अन्यस्यान्यत्वकरणादिषुत्वेनसंभाव्यते ।ः हंससमुखात्तंश्रुत्वाझटितिकामपीडा

सहितालजातेतिभावः । नलेतदनुरागपोषार्थं विप्रलम्भवर्णनमनेनसर्गेण क्रियते । निर्वेदादयोविभावाश्चालस्यादयश्चविप्रलम्भशृंगारपोषार्थंयथाय थ मूहनीयाः । सुगन्धेचमनोज्ञेचसुरभीति विश्वः । जिगायसलिलटोऽजैरि तिकुत्वम् ॥ १ ॥

यदतनुज्वरभाक्तनुते स्म सा प्रियकथासरसीरस मज्जनम् ॥ सपदितस्य चिरान्तरतापिनी परि णतिर्विषमा समपद्यत ॥ २ ॥

यदिति । यद्यस्मादतनुज्वरभाक्कामजनितसन्तापभाक्सा भैमी प्रिय कथानलगोष्ठ्यस्तल्लक्षणासरसीतस्याः विप्रलम्भाख्य शृङ्गाररूपेरसेमज्जनं तस्यांरसेनप्रीत्यामज्जनं तासादरमाकर्णनमित्यर्थः । तनुतेस्मचकार । तस्ययमज्जनस्यसपदिपरिणतिःपरिपाको विषमादुःसहासमपद्यतजाता। चिरंचिरकालमान्तरंमनस्तापयति एवंशीलानलगुणाकर्णनेनकामपीडाश न्त्यर्थंतत्कथयाविरहपीडानाशोभविष्यतीति बुध्यासादरंतथाऽऽमाकर्णि तायांप्रत्युततस्याउद्दीपकत्वात्तस्याः पूर्वापेक्षयाऽतितमासाकथाविरुद्धा र्थजनिकाजातेतिभावः । योपिज्वरीसरोजलस्नानकरोतितस्यविषमाख्यो ज्वरोभवतिज्वरिणस्तदास्नान मपिविषमजनकं भवतिसरसीस्नानंतुसुत रामितिसरसीपदं ॥ २ ॥

ध्रुवमधीतवती यमधीरतां दयितदूतपतत्रिवेग तः ॥ स्थितिविरोधकरीं खणुकोदरी तदुदितः स हि योयदनन्तरः ॥ ३ ॥

ध्रुवमिति । खणुकोदरी अतिकृशोदरीइयंभैमीदयितस्यनलस्यदूतो हंसस्तस्यपतत्रौ पक्षाभ्यांगतोयोवेगस्तस्माद्दयितदूतस्यपततोः पक्षयो र्गतेर्गजेयोवेगस्तस्माद्वापक्षाभ्यांगतंगमनंयस्यसपक्षीदयितदूतश्चासौपत त्रीचेतितस्यवेगस्तस्मात्सकाशात्स्थितिः स्त्रीमर्यादातस्याविरोधकरीविरो धिनीमधीरतांधैर्याभावश्चैव्यं वाधीतवतीपठितवती स्वीचकारध्रुवमुत्प्रे क्षाअध्ययनेन्यायंप्रमाणयतिहियस्मात्योयस्मादनन्तरएवव्यवहितः सत दुदितस्तस्मादेवोत्पद्यते । यदनन्तरमेवयदुत्पद्यतेतत्तस्यकारणमितिगौत

मः । तस्मिन्हंसेगतमात्रएवतस्या १ अधीरताजातेतितस्मादेवाधीनेनि सहेतुकोत्प्रेक्षा । वेगतश्चाख्यातोपयोगइत्यपादानत्वम् । विरोधकरीहेतौ टः ॥ ३ ॥

अतितमां समपादि जडाशयं स्मितलवस्मरणेपि तदाननम् ॥ अजनि पङ्गुरपाङ्गनिजाङ्गणभ्रमिकणेपि तदीक्षणखञ्जनः ॥ ४ ॥

अतीति । भैमीमुखंस्मितलवस्यहास्यलेशस्यस्मरणविषयेपि अतितरां जडाभिप्रायंसमपादिजातं ॥ विरहपीडयास्मितलेशमपिनाकार्षीत्स्मितं नाकरोदित्यत्रकिंवाच्यंतदीक्षणखञ्जनस्तस्यानयनरूपःखञ्जरीटोऽपाङ्गे नेत्रप्रान्तलक्षणेनिजाङ्गणेभ्रमिकणेपिविलसगमनलेशेपिपाङ्गुः खञ्जोऽज निजातः । अन्योपिनिजाङ्गणेसुखेनभ्रमतितथायत्यङ्गनेभ्रमतिश्चयंनतु त्राप्यसमर्थोभूत्खञ्जयति अन्यान्विलोकनमात्रेणपङ्गून्करोतिसुखीगमने प्रिपङ्गुर्जातइत्याश्चर्यम् । विरहपीडयाकटाक्षावलोकनमपिविसस्मार । अतितमांस्वार्थेतमप् । समपादिकर्तरिचिण् अङ्गणत्वमपपाठः । अजि रंत्वङ्गनंतस्मात्कामिन्यामङ्गनामतेश्वतिविश्वः ॥ ४ ॥

किमु तदन्तरुभौ भिषजौ दिवः स्मरनलौ विशतःस्म विगाहितुम् ॥ तदभिकेन चिकित्सितुमाशु तां मखभुजामधिपेनानियोजितौ ॥ ५ ॥

किम्विति । स्मरनलौतदन्तस्तस्याअन्तर्हृदयंविगाहितुमालोडयितुंवि शतःस्मप्रविष्टौ । उत्प्रेक्षते । तदभिकेनतस्याःभैम्याःकामुकेनमखभुजांदे वानामधिपेनइन्द्रेण आशुशीघ्रंतांभैमींचिकित्सितुंनिरोगांकर्तुंशरीरस्थि तिंविचारयितुंचनियोजितौ आज्ञप्तौभीदिवोश्चिषजौस्वर्वैद्यौ अश्विने यौकिमु । नलोनलविषयोमदनश्चभैम्यन्तःकरणेअधितिष्ठतः स्मे तिभा वः । अनुकाभिकेत्यभिकशब्दःसाधुः । नियोजितौचौरादिकाद्युजेःक्तः ५

कुसुमचापजतापसमाकुलं कमलकोमलमैक्षत तन्मुखम् ॥ अहरहर्वहदभ्यधिकाधिकां रविरुचिग्लपितस्य विधोर्विधाम् ॥ ६ ॥

श्लोकप्रपञ्चकेनताषमाह ॥ कुसुमेति । तन्मुखंरविरुचाग्लपितस्यविधो श्चन्द्रस्यअहरहः प्रत्यहमभ्यधिकाधिकांपूर्वेदिनापेक्षयापरेदिनेमहतींवि धांअवस्थांवहत्तदेतन दृष्टंसखीजनेनेत्यर्थः । किंभूतंकुसुमचापजःकाम जस्तापोज्वरस्तेनसमाकुलंम्लानमित्यर्थः ॥ यतःकमलवत्कोमलंसुकुमारं विरहव्यथयासूर्यकिरणम्लानंचन्द्रसदृशंजातमितिभावः । अहरहर्वीप्सा यांद्विर्वचनम् । याअत्यन्तसंयोगेद्वितीया अभ्यधिकाअधिकामहती यस्मादधिकमितिज्ञापकात्पञ्चमीतियोगविभागात्समासः ॥ ६ ॥

**तरुणतातरणिद्युतिनिर्मितद्रढिमतत्कुचकुम्भयुगंत दाऽनलसंगतितापमुपैतुनोकुसुमचापकुलालवि लासजम् ॥ ७ ॥**

तरुणेति ॥ तस्याःकुचावेवकुम्भयुगंतदातस्मिन्समयेऽनलसंगत्यानलप्रा प्त्यभावेनअथचवन्हिसंगत्यातापंतज्जनितज्वरमौष्ण्यंचनोपैतुनप्राप्नोतु । अपितुकिंभूतंकुसुमचापःकामःसएवकुलालः कुम्भकारस्तस्यविलासःक्रीडा तयाजातंविरचितं तथाप्रशान्तत्वात्तरुणतातारुण्यंतदेवतरणितरणिद्युत्या सूर्यदीप्त्यानिर्मितःकृतोद्रढिमादार्ढ्यं यस्यकुलालोपिघटंकृत्वाआतपेशुष्कं कृत्वाअग्नौप्रक्षिपति विलासजमितिपापविशेषणंवा द्रढिमइत्यत्रवर्णदृ ढादिभ्यः ष्यञ्चेतीमनिचिरऋतइतिरः ॥ ७ ॥

**अधृतयद्विरहोष्मणिमज्जितं मनसिजेनतदूरु युगंतदा ॥ स्पृशतितत्कदनं कदलीतरुर्यदिम रुज्ज्वलदूषरदूषितः ॥ ८ ॥**

अधृतेति ॥ तदातस्मिन्समयेमनसिजेनकामेनविरहोष्मणिअधिजनि तेदाहेनमज्जितंयत्तदूरुयुगमधृतजीवशेषमतिष्ठत् । कदलीतरुस्तत्कदनं तस्योरुयुग्मस्यकदनसाम्यमवस्थांवातर्हिस्पृशति प्राप्नोतितदूरुयुगसमानः स्यात् यदिसकदलीतरुर्मरौधन्वदेशेज्वलद्वन्हिदग्धऊषरंक्षारमृत्तिकास्य संतेनदूषितः पीडितःस्यादतिमृदोःकदलीतरोः वन्हिदग्धेऊषरेयदिस्थि तिःस्यात्तर्हितदूरुयुगदुःखंकदलीतरुणाप्यनुभूयते तदूरुयुगमतितरांसंत प्तमभूदितिभावः मनसिजेतिसप्तम्यांजनेर्डः । हलदन्तादितिसप्तम्या अलुक् । स्पृशतीतिकालसामीप्येलट् । स्यादूषःक्षारमृत्तिकाअस्त्यर्थे

उपसुपिलुर्क्तिरः । अधृतधृक्त्वस्याने ॥ ८ ॥

स्मरशराहतिनिर्मितसंज्वरं करयुगं हसतिस्मद
मस्वसुः ॥ अनपिधानपतत्तपनातपंतपनपीतस
रःसरसीरुहम् ॥ ९ ॥

स्मरेति । दमस्वसुर्भैम्याःकरयुगंस्मरशरैराहतिर्हननंतयानिर्मितःकृतः सज्वरःसंतापोयस्यएवं भूतंसत् तपेनग्रीष्मेनपीतंसरस्तस्मिन्विद्यमानंस रोरुहं कमलंहसतिस्मतत्तुल्यंजातमित्यर्थः । किंभूतंकमलमनपिधानो निष्प्रतिबन्धः पतन्तपनातपःसूर्यतापोयस्मिन् ग्रीष्मसंबन्धिकमलवदति तरंसंतापोनुभूयतइत्यर्थः ॥ ९ ॥

मदनतापभरेण विदीर्यतो यदुदपादि हृदादम
नस्वसुः ॥ निविडपीतकुचद्वययन्त्रणो तमपरा
धमधात्प्रतिबध्नती ॥ १० ॥

मदनेति । दमनस्वसुर्हृदाहृदयेनमदनतापभरेणमदनजनितज्वरबाहु ल्येनकृत्वाविदीर्यस्फुटित्वायन्नउदपादि उत्पत्तिलंनिविडंनिरन्तरंपीनंपीव रंकुचद्वयंतेनकृतायन्त्रणाबन्धनंप्रतिबध्नतीसतीतुंविदीर्यानुत्पतनलक्षणम पराधमधाद्दधार विरहसन्तापभयाभैमीहृदयंविदीर्यगन्तुकामंजातमपि स्तनद्वयेनतमपराधंसोपिरक्षितुमन्यथागतंमेवस्यात् । स्तनद्वयस्यायमपरा धोमनुहृदयस्य अथचतमपराधमधात्पीतवती उत्पतनशीलस्यवस्त्रादेः पाषाणादिनाकृतायन्त्रणाप्रतिबद्धंकरोति पूर्वनिपातभियापूर्वपीनशब्द स्योत्तरेणसमासंकृत्वानिविडपदेनसमासःकर्तव्यः । अधःदूधाञ्धेटोरपि लुङिगातिस्थेतिसिचोलुकिरूपम् ॥ १० ॥

निविशते यदि शूकशिखा पदे सृजति सा कि
यतीमपि नव्यथाम् ॥ मृदुतनोर्वितनोतुकथ न्न
तामत्रनिभृत्तु निविश्य हृदि स्थितः ॥ ११ ॥

चिन्तामाह । निविशतइति । शुकोस्तीसूक्ष्मतीक्ष्णाग्रोशूकशिखाधान्य कण्टकाग्रमात्रंपदेचरणेयदिनिविशतेप्रविशतिसाशूकशिखाकियतीमिवव्य थांपीडांनसृजतिकरोति अपितुमहतींपीडांकरोति । अतःकारणान्मृदु

तनोरतिसुकुमार्यो वैम्या हृदि निविश्य प्रविश्य स्थित अवनिजृत्यवेतो नलस्तु पुनस्तां व्यथां कथं न विलनोतु करोतु किंतु करोत्येव नलस्तु तस्या । हृदयं प्रविश्य स्थितः परतयान प्राप्नोवेतस्तं सर्वदा चिन्तयन्त्यास्तस्या भूयसी व्यथा जातेति भावः । इवशब्दो वाक्यालङ्कारे । निविशति । नेर्विशइति तङ् ॥ ११ ॥

मनसि सन्तमिव प्रियमीक्षितुं नयनयोः स्पृहयां तरुपेतयोः । ग्रहणशक्तिरभूदिदमीययोरपि न सन्मुखवास्तुनि वस्तुनि ॥ १२ ॥

चिन्तया विषयान्तराग्रहणमाह ॥ मनसीति ॥ इदमीययोरेतदीययो र्नयनयोः सन्मुखे अग्रं वास्तुस्थानं यस्यैवं भूते पुरोवर्तिन्यपि वस्तुनि घटादौ ग्रहणशक्तिर्ज्ञानसामर्थ्यं नाभूत् कथं भूतयोर्मनसि सन्तं स्थितं प्रियं नलमीक्षितुमपि वस्तुं स्पृहयेव अन्तर्हृदयं प्रविष्टयोरिव उपेतयोः प्रविष्टयोः विरह व्यथया नेत्रयोर्निमीलदेशत्वेन निःसहत्वात्पुरः स्थितमपि वस्तु ताभ्यां गृहीतुं न शक्यते । तत्रान्तरङ्गत्वे प्रियालोकनवाञ्छाया कारणत्वेनोत्प्रेक्षा । इदमीययो त्यदादित्वाद्वृद्धाच्छः ॥ १२ ॥

हृदमस्त्रसुरश्रुपरिप्लुते प्रतिफलद्विरहोन्नमुखानतः ॥ हृदयभाजमराजत चुम्बितुं नलमुपेत्य किलागमि तन्मुखम् ॥ १३ ॥

चिन्तानुभावं रोदनं मुखानतिश्चाह ॥ हृदीति ॥ विरहेणाज्ञास्वीकृतामुखानतिर्मुखनम्रता यया तस्या दमस्वसुर्भैम्या अश्रुपरिप्लुते बाष्पप्रवाहपरिपूर्णे हृदि वक्षसि प्रतिफलत् प्रतिबिम्बितं तस्याः दूगानन्नं मुखं कर्तृ हृदयमध्यवर्तिनं नलं चुम्बितुमुपेत्य समीपगत्वा हृन्मध्यादागमि किल आगमिष्यदिव अराजत शुशुभे उपेत्य चुम्बितुमागमिष्यतीति वा विरहवशान्मुखं नम्रं जातं अश्रुनिर्गतमित्यर्थः । विरहेणाज्ञाया मुखानतिस्तस्या हेतो प्रतिफलादिति वा । आगमिभविष्यतिगम्यादयः इति साधुः ॥ १३ ॥

हृदमग्निमुदंचयितुं स्मरं मनसि गंधवहेन मृगीदृशः ॥ अकलि निश्वसितेन विनिर्गमानुमितमिन्दु

तवेशनमादिता ॥ १४ ॥

चिन्तानुभावनिश्वासमाह । सुहृदमिति ॥ मृगीदृशोभैम्याः निःश्वसितेनतिश्वासलक्षणेनगन्धवहं नमलयानिलेनमनसिविद्यमानसुहृदं स्मरंसरलक्षणमग्निमुदञ्चयितुमुत्तेजयितुंविनिर्गमेननिः सरणेनानुमितमनुमानज्ञानविषयीकृतनिह्नुतवेशनंयस्यसचासौमायीचतस्य भावस्तत्तांसख्यकलिध्यक्षीकृताभ्यस्तेत्यर्थः । विरहान्निश्वासवायुर्बहिर्निःसरतिबहिर्निः सरणान्यातः प्रवेशनंविनानुपपद्यमानंतमनुमापयति वायुनाखमित्रस्यस्मरःग्नेर्वर्द्धनार्थमन्तः प्रवेशकृतइतिलुप्तोत्प्रेक्षावाक्येनवायुनान्तः प्रविश्य निश्वासरूपेणबहिर्निर्गतमिवेत्यर्थः । विरहवशाद्दृश्निश्वासेतिभावः । अन्योपिमायीदुर्गमध्येस्थितस्यमित्रस्यबहिर्निर्गमनार्थंगुप्तंप्रविशतिनिर्गमनानन्तरंचतस्यगुप्तप्रवेशोदुर्गस्थैरनुमीयते पद्मिनीत्वान्निश्वासस्यगन्धवहत्वम् । व्रीह्यादित्वान्मायी ॥ १४ ॥

विरहपाण्डिमरागतमोमषीशितिमतन्विजपीतिमवर्णकौ ॥ दशदिशःखलुतद्दृगकल्पयल्लिपि करीनलरूपकचित्रिताः ॥ १५ ॥

विरहेति । तद्दृक् भैमीदृष्टिलक्षणालिपिकरीचित्रकारिणीविरहेणजनिता पाण्डिमापाण्डुत्वंतथारागोलोहितिमाचतमोमूर्च्छातल्लक्षणामषीतस्या शितिमाकृष्णतासम्बद्धोनिजस्वीयः पीतिमागौरत्वंतद्रूपैर्वर्णैः कत्वाखलुअप्यर्थः दशापिदिशःनलरूपकैर्नलप्रतिच्छन्दकैः चित्रिताश्चित्ररूपाअकल्पयत् पाण्डिमातुरःखत्वप्रकटः । अन्यत्रतुपीतिमासचासौनिजश्चेति विग्रहः । निजोद्भूतत्वंतत्पीतस्याः भैम्या सहजोयःपीतिमेतिवाविरहवशात्पाण्डिमादयोवर्णाजातास्तन्मदवशाद्दृशम्वपिदिक्षुनलमेवा पश्यदितिभावः । खलुइवार्थोवा । लिपिकरीवेत्युत्प्रेक्षा । लिपिकरीदिवाविभेतिटः, टित्वान्ङीप् ॥ १५ ॥

स्मरकृतां हृदयस्य मुहुर्दशां बहु तदान्तिव निश्वसितानिलःव्यधित वाससि कम्पमदःश्रितेत्रसति कःसतिनाश्रयबाधने ॥ १६ ॥

स्मरकृतामिति । निश्वसितानिलः श्वासवायुर्भैम्याहृदयस्य स्मरकृतां दशां पीडां मुहुर्बहूतिशयेन सखीजनस्य पुरस्ताद्वदन्निव कथयन्निव अदोहृदयं श्रिते आश्रितेवाससिकम्पव्यधिदचकार विरहवशान्निश्वासानां बाहुल्यात्तस्याहृदयं चकम्पे । तत्कम्पवशाद्वस्त्रमपि चकम्पइत्यर्थः । उचितमेतत् । आश्रयस्य बाधने पीडायां सत्यामाश्रितः को न बिभ्रेति अपि नु सर्वोपि बिभ्रेत्येव कम्पितहृदयाश्रितस्य वस्त्रस्यापि कम्पोयुक्तः । वदन्निति वदितुमिति हेतौ शता । या विचारं बहु वदति स अधरादिकम्पं करोति ॥ १६ ॥

करपद्माननलोचननामभिः शतदलैः सुतनोर्विरह ज्वरे ॥ रविमहो बहुपीतचरं चिरादनिशतापमिषादुदसृज्यत ॥ १७ ॥

संप्रतमन्तर्ज्वरमाह ॥ करपद्मेत्यादि । सुतनोर्भैम्या विरहज्वरे वियोगजनितेज्वरे करपद्माननलोचनानि नामानि संज्ञा येषां तत्संज्ञैः शतदलैः कमलैः दिनेबहु अपरिमितं पीतचरं पूर्वं पीतं रविमहः सूर्यतेजोऽनिशतापमिषादसंततसंतापव्याजाच्चिरकाल उदसृज्यत उत्सृज्यते स्म करकमलं चरणकमलं मुखकमलं लोचनकमलं मित्यादि संज्ञम् ॥ १७ ॥

उदयन्ति स्म तदद्भुतमालिभिर्धरणिभृद्भुवि तत्र विमृश्य यत् ॥ अनुमितोऽपि च बाष्पनिरीक्षणाद्व्यभिचचार न तापकरोऽनिलः ॥ १८ ॥

अश्रुपातमाह ॥ उदयतीति । आलिभिः सखीभिस्तत्र तस्यां धरणिभृद्राजा भीमस्तस्माद्भूरुत्पत्तिर्यस्यास्तस्यां भैम्यां विमृश्य विचार्य बाष्पनिरीक्षणादश्रुदर्शनादपि तापकरोनुमितोनलो यत्नव्यभिचचार तदेव व्यभिचार लक्षणं यदद्भुतमुदयति स्म उदितः अपिश्चकारार्थौवा अकथितेप्यश्रुदर्शनमात्रादेवनलं विरहजनितमेवेदं दुःखमिति यत्तासां निश्चयज्ञानं तदाश्चर्यमित्यर्थः ॥ पूर्वपर्वतुल्यादिनानलस्य तापकारित्वमनुमितमश्रुदर्शनादपीति अपिचेति समुच्चयार्थौवा पर्वतेवाष्पदर्शनाद्वह्न्यनुमितिरास्थर्यकारिणी जवति तद्वद्बाष्पदर्शनानुमितवह्नेर्यत्तापकारित्वं तदाश्चर्यम् । बाष्पं नेत्रजलोष्मणोरिति विश्वः । उदयतिद्वयगतौभीर्वादिकस्यरूपम् ॥ १८ ॥

हृदि विदर्भभुवः प्रहरञ्छरैरतिपतिर्निषधाधिपतेः कृते ॥ कृततदंतरगःस्वदृढव्यथःफलदनीतिरमूर्च्छदलंखलु ॥ १९ ॥

हृदिति । रतिपतिः कामः निषधाधिपतेर्नलस्यकृतेनलवधार्थंविदर्भजा याभैम्या हृदिशरैः प्रहरन्प्रहारंकुर्वन् नलनिमित्तंभैमीपीडयन्स्वयमेवा लमत्यर्थमर्च्छतमूर्च्छांप्रापयत । किंभूतस्तदन्तरगस्यभैमीहृदयवर्तिनः स्वस्यात्मनोदृढव्यथाताडनंयेनसः । खलुएवंविधइवातएवंफलदनीफल दाअनीतिर्यस्यकामोनलश्चभैम्या हृदयमध्यवर्तिनौस्ववैरिणोनलस्यप्रहा रकुर्वन्भैमीहृदयंप्रहृतवान् । ततश्चात्मानमेवप्रहृतवाकनलं योबाह्या स्मानंरक्षित्वाअपरंप्रहरति अनेनतुनलार्थंभैमीहृदयंप्रहृततेनफलदनीति नास्वयमेवमूर्छितम् । अथमदनोमूर्च्छन्नधिकीभवंस्तामतितरांपीडयति स्मेतिभावः । नलव्यथालक्षणाऽनीतिःफलदाइतिवा । अन्यवधायेनन्य स्यप्रहारइत्यनीतिः । मूर्छामोहसमुच्छ्राययोः । कृतेतादर्थ्येविभक्तिप्रति रूपकमव्ययम् ॥ १९ ॥

विधुरमानि तयायदि भानुमान् कथमहो स तु तद्धृदयं तथा ॥ अपि वियोगभरास्फुटनस्फुटीकृतदृपत्त्वमतिज्वलदंशुभिः ॥ २० ॥

शङ्कामाह । विधुरिति ॥ तयाभैम्याविधुश्चन्द्रोयदिभानुमान् सूर्योमानि । दाहकत्वाच्चन्द्रएवसूर्यत्वमारोपितं चेत्तर्हिसतुपुनःसूर्योवियोगभरे णविरहवाहुल्येनापियदस्फुटनमविदीर्णत्वंतेनस्फुटीकृतंदृपत्त्वं पाषाण त्वं यस्ययेनवाएवंविधमतिकठिनमपितस्यास्तद्धृदयमंशुभिः कृत्वाकथंतथा ऽनिर्वाच्यमतिज्वलद्दाहनत्वारोपितेऽग्नित्वेऽग्नितुल्योयमितितस्यदाह सामर्थ्यंदृष्टंपाषाणदाहेत्वनिर्वाच्यमतएव अहोआश्चर्यंमानितेपिसूर्यत्वे नविरहिणाःसूर्यस्यचपरस्परमित्रत्वात्यदाहकत्वमत एवाश्चर्यंयदिचन्द्रः सूर्योमानितोनतुतात्विकस्तर्हितापातिभारा स्फुटनलक्षणेनसाम्येनप्रकटो कृतसूर्यकान्तत्वंयेनएवंविधभैमीहृदयंकरैः कृत्वाकथंतथा ज्वालितवल्लच न्द्रस्यकुत्रापिदाहकत्वमदृष्टचरमश्रुतपूर्वंच सूर्यस्यतुप्रसिद्धमतोयंतात्वि

कः सत्यएवअन्यत्रसूर्यकान्तज्वलनंसूर्यएवकरोतिनत्वन्योतस्तात्विकः सूर्य एवमत्वारोपितः । आरोपितत्वाद्‌दग्धमित्यर्थः विरहितत्वाच्चन्द्रकिरणासह्यानसोढाइतिभावः ॥ २० ॥

हृद यदत्तसरोरुहया तया क्व सदृगस्तु वियोग निमग्नया । प्रियधनुःपरिरभ्य हृदारतिः किमनुमर्तुमशेत चितार्चिषि ॥ २१ ॥

द्वाभ्यांमृतिंसूचयति ॥ हृदयेति । वियोगनिमग्नयाविरहाग्निपीडितत्वाद्धृदयदत्तसरोरुहयाज्ञीत्यार्थं हृदयेदत्तंकमलंययातयाजैम्यासदृक्तुल्याक्वकस्मिन्देशेअस्तुअपितुतत्तुल्यान्याकुत्रापिकापिनास्तिरतिर्भवेदित्याशङ्क्यदूषयति । रतिःप्रियधनुः हृदापरिरभ्यालिङ्ग्यानुमनु मदनस्यपश्चान्मरणार्थंचितार्चिषिचितान्नौकिमशेतनिद्रिता अपितुनतस्माद्रतिसमाना जाता क्षत्रियाणांदेशान्तरेमृतानांस्त्रियोधनुरालिङ्ग्यानुम्रियन्तेइत्याचारः । विरहसंतप्तत्वाच्छीतलत्वोपचारः । विप्रयोगस्यवन्हित्वंव्यङ्ग्यंचितार्चिषीत्यनेनतदारतिपाठः समीचीनः । सदृक्समानान्ययोश्चेति । त्यदादिष्विति क्विन्टक् दृशवतुदुइतिसभावः ॥ २१ ॥

अनलभावमियं स्वनिवासिनो न विरहस्य रहस्यमबुध्यत ॥ प्रशमनाय विधाय तृणान्यसून्ज्वलतितत्रयदुज्झितुमैहत ॥ २२ ॥

अनलेति । इयंजैमीस्वनिवासिनः स्वीयस्यविरहस्यरहस्यंतात्विकमनलभावमग्नित्वंनअबुध्यतनाजानात् यद्यस्मात्तत्रविरहेज्वलतिदीप्यमाने सति असून्प्राणान्तृणानीवविधायकृत्वाप्रशमनायविरहवन्हिशान्त्यर्थमुज्झितुत्यक्तुमैहतऐच्छत् विरहस्यवन्हित्वंमेज्ञातंस्यात् तर्हितच्छान्त्यर्थं तृणवत्प्रक्षेपंनकुर्यादतोविरहस्यवन्हित्वंनाजानादित्यर्थः । किंचस्वीयविरहस्य अनलभावंनलभावोनलप्राप्तिस्तदभावंनलप्राप्त्यसंभवलक्षणंरहस्यं मूलकारणनाज्ञासीत् ॥ अपितुजानातिस्मैवनलविरहेमरणमेव ज्यायोन तुजीवितमित्यैच्छेदितिभावः । यतःस्वविरहस्यरहस्यत्वेनज्ञायतेतस्मात्स्वीयान्प्राणान् प्रशमनायोद्घाटायमायतृणतुल्यान्कृत्वात्यक्तुमैच्छत् ॥ एतदुः सहत्वज्ञानेनविनानघटतेविरहस्याग्निवद्दुःसहत्वंजातमितिभा-

वः ॥ शमनोयमराडयमद्वयमरः ॥ २२ ॥

प्रकृतिरेतु गुणः स नु योषितां कथमिमां हृदयं मृदुनामयत् ॥ तादृशैः कुसुमैरपि दुन्वता सु विवृतं विबुधेन मनोभुवा ॥ २३ ॥

प्रकृतिरिति । नामप्रसिद्धौ योषितां हृदयमन्तः करणं मृदुकामेनालभि तियः साप्रकृतिर्योषितामेवस्वाभाविकोगुणः इमां योषितं भैमीं कथं कुतोनैतु नप्राप्नोत्वपितुप्राप्तः । इमां प्राप्त इत्यस्मिन्नर्थे प्रमाणमाह । विबुधेन देवेन विदुषा च मनोभुवा कामेन कुसुमैरपि पुष्परूपैरपि इषुभिर्बाणैः हृदयं दुन्वता पीडयता । तन्मृदुत्वलक्षणं प्रमेयं सुविवृतं सुतरां स्पष्टीकृतं प्रदिसगुणोनस्या तर्हि पुष्पबाणैः पीडानस्यात्सातु जाता तस्मात्सगुणः समायात इति श्रुत रोमदनबाणैः पीडितेतिभावः । दुर्बोधं प्रमेयं विदुषा विक्रियते ॥ २३ ॥

रिपुतरा भवनाद्वविनिर्यती विधुरुचिर्गृहजालवि लैर्नु ताम् ॥ इतरथात्मनि वारणशङ्कया ज्वल यितुं विसवेषधरा विशत् ॥ २४ ॥

निर्वेदानुभावं बहिर्निर्गममाह ॥ रिपुतरेति ॥ विधुरुचिश्चन्द्रकान्तिर्भ वनाद्गृहाद्विनिर्यती बहिरनिर्गच्छन्ती तां भैमीं ज्वलयितुं संतापयितुं गृहग वाक्षच्छिद्रैरविशत् । किंभूता यतो विरहित्वादतिवैरिणी तया विसवेषधरा विसरूपधारिणी ॥ विसरूपधारित्वे हेतुमाह । इतरथा अन्यथा आत्म निवारणशङ्कया आनिषेधक्रियो वैरिण्या चन्द्रदीप्त्या वैरिणी भैमीवध्यासाच तक्रियां बहिर्न निर्गच्छति अतः पद्मदण्डसमाना चन्द्रदीप्तिस्तां हन्तुं संताप शान्त्यर्थं शरीरे स्थापितानां विसानां रूपेण जालमार्गेण अन्तरेव प्रविष्टा वैरि णीमुख्यमार्गप्रवेशाभावाद्गवाक्षैरेव प्रविष्टा न तु स्वीयरूपेण अन्तर्गतवैरिमा रणार्थमियमेवरीतिरन्येनाप्यनुष्ठीयते । अविनिर्यतीति द्वयोः शतरिरूप म् ॥ २४ ॥

हृदि विदर्भभुवोऽश्रुभृति स्फुटं विनमदास्यतया प्रतिबिम्बितम् । मुखदृशोरुमरोऽपि मनोभुवा तदुपमाकुसुमान्यखिलाः शराः ॥ २५ ॥

अतिरिक्तां मृशानतिमाह ॥ हृदीति । मनोभुवाकामेनतदुपमाकुसुमानिमुखनयनौष्ठोपमानयोग्यानिकुसुमानिकमलनीलोत्पलबन्धूकानि अखिलाः शराःपूर्वोक्तकुसुमरूपाः पञ्चापिबाणा अश्रुभ्रुतिअश्रुपूर्णेविदर्भसुवोजैम्याहृदिद्रु.खवशाद्विनमदास्यतयानम्रमुखस्येनप्रतिविम्बितंप्रतिफलितंमुखदृगोष्ठमेवारोपिआरोपितं स्फुटमुत्प्रेक्ष्यतेप्रकटंप्रतिविम्बितमितिवा । प्रतिविम्बितं जैमीमुखदृगोष्ठमेव जैमीवधार्थंकामेनपञ्चापिवाणाः प्रायेणसमारोपिताइत्यर्थः । पीडावशाद्धश्रुनम्रमुखत्वंचतस्य जातमितिभावः । मुखदृगोष्ठंशराइतिव्यस्तरूपकम् । प्रायशब्दत्वादिकवद्भावः ॥ २५ ॥

विरहपाण्डुकपोलतले विधुर्व्यधितभीमभुवः प्रतिविम्बितः ॥ अनुपलक्ष्य सितांशुतया मुखं निजसखं सुखमङ्कमृगार्पणात् ॥ २६ ॥

विरहेति । विधुश्चन्द्रोऽसौभमसुवोभैम्याः विरहेणपाण्डुनिकपोलतलेप्रतिविम्बितः सन्जैमीमुखमङ्कमृगार्पणाद् अङ्केमुखेवामृगस्यारोपणात्सुखमनायासेननिजसखंस्वीयमित्रंव्यधितचकार, कथा अनुपलक्ष्याविवेकेनज्ञातुमयोग्याः सितांशवःकिरणायस्यचन्द्रस्यभावस्तत्तातया चन्द्रकपोलयोः पाण्डुत्वात्प्रतिविम्बितस्यापिचन्द्रस्यानुपलब्धिः कलङ्कस्यश्यामत्वादुपलब्धिः । ततश्चमृगाङ्कलाञ्छनत्वाद्वदनस्यनिजमित्रत्वंयुक्तमित्यर्थः । सवर्णेस्थितंसवर्णशङ्खदुग्धादिवन्नलक्ष्यते विरहात्पूर्वंमुखस्यगौरत्वा त्प्रतिविम्बितश्चन्द्रःपृथक्लक्ष्यतेस्म । विरहेतुपाण्डुनिमुखेसवर्णत्वाच्चन्द्रोनदृश्यतेऽतोभैमीमुखंचन्द्रएवेतिसर्वस्यापिप्रतीतिरभूत् पूर्वमतिचन्द्रंमुखमासीदधुनातुचन्द्रतुल्यपाण्डुरंजातमितिभावः । अन्येनचतुरेणकिंचिदुत्कृष्टंवस्तुदत्वासख्यंसंपादनीयमित्युक्तिः । दुष्टोनिर्दोषेपिसंसर्गेणस्वदोषसंक्रमणसाम्यंकरोति । निजसखंराजाहेतिटच् ॥ २६ ॥

विरहतापिनि चन्दनपांसुभिर्वपुषि सार्पितपाण्डुममण्डना ॥ विषधरावत्रिसाभरणा दधे रतिपतिं प्रति शंभुविभीषिकाम् ॥ २७ ॥

विरहेति ॥ साभैमीरतिपतिंकामंप्रतिशंभुसंबन्धिनींविभीषिकांभयान कर्ताद्दधेऽङ्गीकृतवती । किंभूतां विरहतापिनिविरहसंतप्ते हृदिवपुषिसं तापिनिशुभ्रत्वाच्चन्दनपांसुभि श्चन्दनरजोभिरर्पितंविरचितंपाण्डिमापाण्डु त्वमेवमण्डनमलङ्कारोयस्याः सा तथादैर्घ्याच्छुभ्रत्वाच्चविषधराभानिवा सुक्यादिसर्पतुल्यानिबिसाभरणानिविलासकरणानियस्याः सा,प्रसपाण्डु रंविलासकरणंसदीर्थंवपुषिदृष्ट्वाशंभुभ्रान्त्याभीतः कामोमांनपीडयिष्यतीति बुध्याचन्दनंबिसानिधृतानीतिभावः ॥ २७ ॥

विनिहितं परितापिनि चन्दनं हृदितयाप्यघृतबु द्बुदमाबभौ ॥ उपनमन् सुहृदं हृदयेशयं विधु रिवोङ्गगतोडुपरिग्रहः ॥ २८ ॥

विनिहितमिति ॥ परितापिनिविरहसंतप्तेहृदितयाभैम्याविनिहितंनि क्षिप्तंधृतबुद्बुदंधृतचन्द्रकंचन्दनंविधुरिवचन्द्रइवाबभौशुशुभे किंभूतोवि धुर्हृदयेशयहृदिविद्यमानसुहृदंकाममुपनमन्नुपागच्छन्नथाङ्कगतः समी पमागतः उडूनिनक्षत्राण्येवपरिग्रहोयस्य तथासखीत्वादुत्सङ्गवर्त्तिनक्षत्र समूहोघनसचन्दनस्यचन्द्रतुल्यत्वंबुद्बुदानांचनक्षत्रतुल्यत्वम् । अन्योपि परिग्रहोमित्रमुपागच्छति ॥ हृदयेशयंशयवासेतिसप्तम्याअलुक् ॥ २८ ॥

स्मरहुताशनदीपितयातया बहु मुहुः सरसं सर सीरुहम् । श्रयितुमर्धपथे कृतमन्तरा श्वसितनि र्मितमर्मरमुज्झितम् ॥ २९ ॥

स्मरेति । स्मरएवहुताशनोग्निस्तेनदीपितयातयाभैम्याबहुअनेकसरसं रसयुक्तंसरसीरुहंकमलंश्रयितुमाश्रयितुंमुहुर्मुहुर्वारंवारमर्द्धपथेऽर्द्धमार्गेकृतं श्वसितेननिश्वासवायुनानिर्मितोमर्मरःशुष्कपर्णध्वनितंयस्य एवंभूतंनिरुप योगित्वादन्तरामध्यएवनिकटमानीत्येवउज्झितंत्यक्तं, संतापाधिक्यंसूचि तम् । अथमर्मरः स्वनितेवस्त्रपर्णानामित्यमरः । अर्द्धंपथेअर्द्धंनपुंसकमि तिसमासः । ऋगादिनासमासान्तः । अर्द्धपथमिति अत्यन्तसंयोगेद्विती या ॥ २९ ॥

प्रियकरग्रहमेत्रमवाप्स्यति स्तनयुगं तव ताम्य

ति किं त्विति ॥ जगदुतुर्निहिते हृदि नीरजेद्व थुकुड्मलनेन पृथुस्तनी ॥ ३० ॥

प्रियेति । हृदिनिहितेस्यापितेनीरजेकतृणिद्वथुनासंताप्रेनकुड्मल नंसंकोचस्तेनकृत्वापृथुस्तनीजैमीप्रतिष्ठतिजगदतुरिव । इतिकिं हेभैमि तवस्तनयुगमस्मन्मुकुलकृतग्रहणंममरीत्याएवंअनेकप्रकारेणमयथासंकोचोजायतेतथातदाकारेणप्रियकरग्रहंनलसंबंन्ध भावाप्स्यतिकिन्तुताम्यति ग्लायति तुप्रश्नेग्लानिर्नकार्येत्यर्थः । संतापवशात्कमलसंकोचः ॥ ३० ॥

त्वदितरोऽपि हृदा न मयाधृतः पतिरितीव नलं हृदयास्थितम् ॥ स्मरहविर्भुजि बोधयति स्म सा विरहपाण्डुतया निजशुद्धताम् ॥ ३१ ॥

त्वदिति । साहृदयेस्थंनलंविरहेणापाण्डुतातयास्मर एवहविर्भुजिव ह्नौनिजशुद्धतांस्वीयपातिव्रत्यमितिबोधयतिस्मेवज्ञापयतिस्म । इतिकिं हेप्रियमयात्वदितर·त्वत्तोन्यःपतिः हृदापिमनसापिनधृतः । कनुहस्ता दिनेतिनैश्चन्तःकामः पाण्डुताचविद्यतइति अन्यापिसतीवन्हौस्वीयशुद्धतांपतिंबोधयति । नलंबुध्यर्थत्वादणिकर्त्तुर्णौकर्मत्वम् ॥ ३१ ॥

विरहतप्ततदङ्गनिवेशिता कमलिनी निमिषद्भिमुष्टिभिः ॥ किमपनेतुमचेष्टत किं पराभवितुमैहत तद्वथुं पृथुम् ॥ ३२ ॥

विरहेति ॥ विरहेणतप्तेतदङ्गैभैम्यङ्गेनिवेशितानि तस्याकमलिनीनिमिषन्तिसंकुचन्तिदलानिपर्णान्येवमुष्टयस्तैः कृत्वापृथुंमहान्तंतद्वथुंभैमीसन्तापनेतुंदूरीकर्त्तुमचेष्टतकिमुद्योगंचक्रे । अथवापराभवितुंताडयितुमैच्छत्किमन्यदपिदुःखदंमुष्टिभिरपनीयते । संतापवशात्कमलिनीसंकुचितेतिभावः ॥ ३२ ॥

इयमनङ्गशरावलिपन्नगक्षतविसारिवियोगविषावशा ॥ शशिकलेव खरांशुकरार्दिता करुणनीरनिधौ निदधौ नृकम् ॥ ३३ ॥

विवशतामाह । इयमिति ॥ इयंभैमीखरांशोःसूर्यस्यकरैरह्निंतापीडि ताश्शिकलेवकरुणनीरनिधीकरुणासरसमुद्रं कंनजिद्धीचिक्षेप अपितुस र्वमपि । किंभूता अनङ्गशरावलिलक्षणाःपन्नगास्तैः क्षतंदशनंतेनविसारि प्रसरणशीलवियोगएवसंतापकारित्वाद्विषंतेनावशाविह्वला एवंविधांतां दृष्ट्वासर्वोपिशुश्रुषुरन्योपिसर्पदष्टोविषविह्वलः सर्वलोकंकरुणायांक्षिपति अथचसर्पदंष्टएवविषनिरासार्थंजलाशयेक्षिप्यते, तयात्वन्यएवनिक्षिप्तइ त्याश्चर्यंकलाशब्देनभैम्या अतितनुत्वंसूचितं । पन्नगक्षताचासौविसारि वियोगविषवशाचेतिवा ॥ ३३ ॥

ज्वलति मन्मथवेदनया निजे हृदि तयार्द्रमृणाल लतार्पिता ॥ स्वजयिनोस्त्रपया सविधस्थयो र्मलिनतामभजद्भुजयोर्भृशम् ॥ ३४ ॥

ज्वलतीति ॥ तयामन्मथवेदनयामदनजनितपीडयाज्वलतिसंतप्ते नि जेहृदि अर्पितानिहिता आर्द्रंमृणाललतासरसामृणालवल्लीस्वजयिनोः कान्त्यामृणालजैत्रयोःसविधस्थयोर्हृदयसमीपस्थितयोर्भुजयोः सकाशा त्त्रपयालज्जयाभृशमतितमांमलिनतामभजत् । संतापशान्त्यर्थंसरसामृ णाललताहृदयेस्थापितातदङ्गवशान्म्लानताजाता मृणालजैत्रहृदयस्थित मृणालसमीपस्थयोर्भैमीभुजयो र्लज्जयाश्यामत्वजातमिति प्रतीयमानो त्प्रेक्षा । अन्योपिस्वजयिनासहैकत्रस्थितौसत्यांतन्मुखंपश्यन्मलिनोभव ति । भुजयोः सविधस्थयोरितिसन्निसमीवा । अर्थात्ताभ्यामेवत्रपा ॥ ३४ ॥

पिकरुतश्रुतिकम्पिनि शैवलं हृदि तया निहितं विचलद्बभौ ॥ सततहृद्गतहृच्छयकेतुना हतमिव स्वतनूघनघर्षिणा ॥ ३५ ॥

पिकरुतेति । पिकरुतेश्रुत्याविरहित्याश्रावणेनोत्कम्पिनि हृदितयासंतापनिवृत्त्यर्थंनिहितंनिक्षिप्तहृदयस्यकम्पत्वा द्विचलद्विशेषेणाक म्पमानंशैवलंसततंहृद्गतोनिरन्तरंभैमीगतोहृद्गतोशाद्दू लयः कामस्तस्यके तुनाध्वजेनाहतमिवबभौशुशुभे । किंभूतेनकेतुना स्वतनुंशरीरंघनंनिबिडं घर्षयतीत्येवंशीलेन मत्स्योपिशैवलेघर्षणंकरोतीतिजातिः । घर्षणस्यघन

स्वकम्पबाहुल्यसूचनार्थं निशिशिशिरेपिवसन्तेकोकिलालापस्तादुनोतिस्मेतिभावः । दुच्छयेत्यत्रग्रयवादेतिविकल्पितत्वान्नुक् ॥ ३५ ॥

न खलु मादवशेन तदाननं नलमनःशशिकान्तम
बोधियत् ॥ इतरथा शशिनोभ्युदये ततःकथम्
सुस्रुवदश्रुमयंपयः ॥ ३६ ॥

कान्त्यातिरेकमाह ॥ नेति । नलस्यमनोनलान्तःकरणंतत्सुन्दरमथवाय स्सर्वदातदुन्मादवशेनपश्यतिसत्तदाननं भैमीमुखंकर्म उन्मादवशाच्छशिव स्कान्तंरमणीयंचन्द्रकान्तमणिविशेषरूपंनखलुनवाऽबोधि । अबुद्धेतिकाकुः । किंतुसम्यगेवाबोधीत्यर्थः । किंतुतस्वतएवचन्द्रकान्तत्वतएवान ज्ञातमित्यर्थः । इतरथापूर्ववदधुनापिभ्रान्तमेवचेत्तस्यचन्द्रकान्तत्वंतर्हिशशिनोऽभ्युदयेसतितस्तोमुखादश्रुमयंबाष्परूपंपयउदकंकथमसुस्रुवत् । स्रवतिस्म । चन्द्रोदयेचन्द्रकान्तादुदकंस्रवतिनान्यस्मात् चन्द्रोदयेमुखाश्रुजलंस्रवतितर्हितात्विकमेवचन्द्रकान्तत्वंनतुभ्रान्तमित्यर्थः । चन्द्रवत्कान्तमितिपक्षेवैरिणाचन्द्रेणासहस्पर्द्धमानत्वात्तदुदयेदुःखवशात्ततोऽश्रुरूपंनिस्सृतवैरिणउदये ऽन्यस्यापिदुःखादश्रुनिर्गच्छति । नत्वन्यस्य तस्माच्चन्द्रस्पर्धीहिइति सत्यज्ञातं चन्द्रवत्कान्तं चन्द्रःकान्तोयस्येतिवोक्तेचन्द्रमित्रत्वप्रतीतिस्तसश्चमित्रोदये आनन्दाश्रुनिर्गच्छतीतिवा चन्द्रोपितांज्ञात्वापीडयदित्यर्थः । अशुस्रुवदितिणिश्रिद्रुस्रुभ्यः कर्तरिचङ् ॥ ३६ ॥

रतिपतेर्विजयास्त्रमिषुर्यथा जयति भीमसुतापि
तथैव सा ॥ स्वविशिखानिवपञ्चतया ततोनिय
तमैहत योजयितुं स्तताम् ॥ ३७ ॥

रतीति ॥ रतिपतेःकामस्य इषुर्यथाविजयास्त्रंदिग्जयसंबन्धिविजयसाधनमस्त्रंजयति । तथैवकामवाणवदेवसाभीमसुतापिविजयसाधनमस्त्रंसर्वोत्कर्षेणवर्तते । कुतोज्ञातमित्यतआह । ततएवहेतोःसकामः पञ्चतयापञ्चत्वसंख्ययास्वविशिखानिवस्वबाणानिवतांभैमीं नियतनियमेनपञ्चतयाजयितुमैहत,पञ्चतयायोजनयुक्तमितिच्छलना । अत्रकुमूर्पतोक्ता । पञ्चतापञ्चभावः । स्यात्पञ्चतामरणेतिविश्वः ॥ ३७ ॥

शशिमयं दहनास्त्रमुदित्वरं मनसिजस्य विमृश्य वियोगिनी ॥ झटिति वारुणमस्त्रमिषादसौ तदुचितं प्रतिशस्त्रमुपाददे ॥ ३८ ॥

शशिमयमिति । वियोगिनीविरहपीडिता असौभैमीमनसिजस्यकामस्यशशिमयंचन्द्रलक्षणंदहनार्थं आग्नेयास्त्रमुदित्वरमुद्गमनशीलंविमृश्य विचार्यझटितिशीघ्रमस्त्रुमिवाष्पव्याजात् तदुचितमाग्नेयास्त्रविघातसमर्थंवारुणंवरुणदैवतंप्रतिशस्त्रमाग्नेयास्त्रशत्रुभूतमस्त्रमुपाददे ऽङ्गीचकार । चन्द्रोदयेऽसह्यत्वादश्रूण्यमरोदीदित्यर्थः । वारुणंसास्यदेवतेत्यण् ३८

अतनुना नवमम्बुदमाम्बुदंसुतनुबद्धमुदस्तमवेक्ष्यसा ॥ उचितमायतनिश्वसितच्छला च्छ्वसनशस्त्रममुञ्चदमुं प्रति ॥ ३९ ॥

अतनुनेति ॥ सासुतनुर्विरहवशात्तन्वीभैमीनवमम्बुदंमेघमेव आम्बुदंवारुणमस्त्रमतनुनाकामेनउदस्तंस्वंप्रतिक्षिप्तमवेक्ष्य दृष्ट्वा आयतस्यदीर्घस्यनिःश्वसितस्यच्छलान्मिषादुचितमाम्बुदास्त्रनिवारणार्थं श्वसनमस्त्रंवायव्यास्त्रममुंकामंप्रतिउद्दिश्य अमुञ्चत् । सुतनुत्वात्स्वस्या अतनुत्वाद्वैरिणः किमपिकर्तुमशक्यत्वात्प्रावृट्कालेनवमेघदर्शनमात्रेणदीर्घनिश्वासंत्याक्षेतिभावः । बाधानांज तिः । वैयंस्त्रघातार्थिनःअत्यस्त्रंक्षिपन्तीति ३९

रतिपतिप्रहितानिलहेतितां प्रतियती सुदतीमलयानिले ॥ तदुरुतापभयान्मृणालिकामयमियंभुजगास्त्रमिवाददे ॥ ४० ॥

रतीति । सुदतीशोभनदन्ताइयंभैमीमलयानिलेदक्षिणपवनेरतिपतिनाकामेनप्रहितानिलहेतितां प्रेषितवायव्यास्त्रतांप्रतियती प्रतिजानती अयंमलयानिलोनभवति किंतुमांप्रतिकामेनक्षिप्तंवायव्यास्त्रमितिजानती तदुरुतापभयान्मदनजनितसुतापभयेनतापशान्त्यर्थमेवानाङ्गीकृतायामृणालिकातन्मयंतद्रूपंभुजगास्त्रमिवपन्नगास्त्रमिवाददेस्वीचकार । वसन्तेमलयानिलेवातिसतिसतापवाहुल्यात्तच्छान्त्यर्थमङ्गेषु मृणालानिनिहितानीति भावः । पन्नगाकारत्वात्पवनाशनत्वाच्चमृणालिकानांपन्नगास्त्रत्वम् ॥४०॥

व्यधित तद्धृदि शल्यमिव द्वयं विरहितां च तथापि च जीवितम् ॥ किमथ तन्न निहृत्य निखातवान् रतिपतिः स्तनबिल्वयुगेन तत् ॥ ४१ ॥

व्यधितेति । रतिपतिःकामस्तद्धृदितस्या हृदयेद्वयंशल्यमिवशङ्कुद्वयमिव व्यधितनिहितवान् । किंतद्द्वयं विरहितांवियोगित्वंतथापिवियोगित्वेसत्यवचयज्जीवितंजीवनंविरहितांचजीवितंचेति । चौचावन्योन्यसमुच्चये । अथतत्रहृदयोपरिशल्यद्वयस्थापनानन्तरंतच्छल्यद्वयंस्तनलक्षणेनबिल्वयुगेनबिल्वद्वयेनकृत्वानिहृत्यनितरांहृत्वातत्रहृदिनिखातवाञ्शैथिल्यनिरासाय दृढंरोपयामास किमितिवितर्कः । विरहवशात्स्वल्पकालमपिजीवनं दुःखदंजातमितिभावः । अत्रोत्तरत्रचग्लानेरनुभावोस्फुटोज्ञेयः ॥ ४१ ॥

अतिशरव्ययता मदनेनतांनिखिलपुष्पमयस्वशरव्ययात् ॥ स्फुटमकारिफलान्यपि मुञ्चतातदुरसि स्तनतालयुगार्पणम् ॥ ४२ ॥

अतीति । मदनेनतदुरसितस्याहृदयेस्तनलक्षणंतालफलयुगंतस्यार्पणमकारिस्फुटमुत्प्रेक्षे । किंभूतेन तांतस्यामतिशरव्ययता अतितरांवेध्यंकुर्वता तथापुनर्वेध्यकरणादेवनिखिलाः पुष्पमयाःस्वशरास्तेषांव्ययान्नाशात् फलान्यपितांप्रतिमुञ्चता वृक्षाणामन्येषांकुसुमाज्ञावेनफलवत्त्वात्तालद्वयस्यसाम्यादङ्गीकृतेत्यर्थः । अन्योपिधानुष्कोबाणव्यये पाषाणादिनावैरिणं हन्ति । अतिशरव्ययंकरोतीत्यर्थेतत्करोतीतिण्यन्तात् शतानुक्लिपातलक्षणमितिनयलोपः ॥ ४२ ॥

अथ मुहुर्बहुनिंदितचंद्रया स्तनभिन्नघुंतुदयाच तया मुहु. ॥ पतितया स्मरतापमये गदे निजगदेऽश्रुविमिश्रनुखी सखी ॥ ४३ ॥

अथेति । अथतयासखीनिजगदेवक्ष्यमाणमुक्ता । किंभूतया स्मरतापमयेकामजनितसंतापज्वरेपतितयानिमग्नया अतएवमुहुर्वारंवारंनितरांवक्ष्यमाणप्रकारेणनिन्दितः कामनिमित्रंचन्द्रोययो तथामुहुस्तुतोविधुन्तुदोराहुर्यया । किंभूतासखीसंतापविलोकनादेवाश्रुविमिश्र बाष्पमिश्रमुखंयस्याः

सा । अन्योपिराग्र-नोऽसाधुंस्तौति । साधुनिन्दति । विधुन्तुदइतिवि
ध्वरुषोस्तुदइतिखशिमुम् ॥ ४३ ॥

**नरसुराब्जभुवामिव यावता भवति यस्य युगं यदनेहसा ॥ विरहिणामपि तद्रतवद्युवक्षणमितं न कथं गणितागमे ॥ ४४ ॥**

त्रिभिःश्लोकैर्विरहस्यदुःसहत्वमाह । नरेति । तदितिसंबन्धाद्यदिति लभ्यते । यावतायत्परिमाणेनयदनेहसायेषांनरसुराब्जभुवामनेहाः काल स्तेन यद्वायेनानेहसाकालेननरसुराब्जभुवांनराणांमनुष्याणांसुराणांदेवा नामब्जभुवोब्रह्मणस्तेषांमध्येयस्यदेवस्यब्रह्मणोवायद्युगंभवति तन्नरसु राब्जभुवांयुगमिवविरहिणामपिवियोगिनांस्त्रीपुंसानांसंबन्धियुगंगणिता गमेज्योतिःशास्त्रे रतवन्तःसुरतयुक्ता युवानःस्त्रीपुंसास्तत्संबन्धिमानिमे षचतुर्थांशलक्षणेनक्षणेनमितंसमीकृतंकथंकिमितिनभवति अपितदपिज्यो तिःशास्त्रेगाणितिकैरतवद्युवक्षणेनमितंसमंगणनीयं तत्तुनकृतमनुचितमे तदित्याक्षेपः । प्रश्नोवा । यद्वायावतायदनेहसायस्ययुगंभवति तद्युगर तयुक्तयोर्यूनोःक्षणेनमितंगणितशास्त्रेविरहिणामपिकथंनभवति । येषामि वनरसुराब्जभुवामिवषष्ट्यधिकदिनानांत्रिशतीमनुष्याणांवर्षं तद्देवानाम होरात्रमेवंसाद्वादशसहस्रीचतुर्युगंतावतीरात्र स्तद्देवानांचतुर्युगसहस्रं ब्रह्मदिनंतावत्येवरात्रिर्ब्रह्मणः पञ्चाशतावर्षैःपरार्द्धंपरार्द्धद्वयपरमायुर नधारीत्यायुगादिकल्पनामनुष्यादीनांज्योतिः शास्त्रेयथागणिता तथावि रहिणांसंयुक्तानांचगणितशास्त्रेयुगगणनाकथंनकृता । संयुक्तानांक्षणोवि युक्तानामनतिक्रमणीयत्वाद्युगतुल्योजायतइत्यर्थः इतियथामतियोज नीयःश्लोकः । युगगणनायांनरकालस्यमुख्यत्वादभ्यर्हितत्वेननरशब्दस्य पूर्वनिपातः । एवंब्रह्मणोपेक्षयासुराणांकालस्य । विरहिणां रतवद्युवेति पुमान्स्त्रियेत्येकशेषः ॥ ४४ ॥

**जनुरधत्त सती स्मरतापिता हिमवतो न तु तन्महिमादृता ॥ ज्वलति भालतलेलिखितः सती विरह एव हरस्य नु लोचने ॥ ४५ ॥**

जनुरिति । सतीदाक्षायणीदक्षकन्यास्मरतापितासतीहिमवतः सका

शात्जनुर्जन्मअाधन्ना ऽङ्गीचकार । तस्यहिमालयस्यमहिम्निदेवस्वरूपोय मिति महत्त्वेआदृताआदरयुक्तानिवजन्माधत्त । हिमाकरत्वात्काऽनतापशा न्त्यर्थंजन्मान्तरकृतंनतुदेवत्वात् । किंच । हरस्यभालतलेललाटेत्रक्षणा लिखितः सतीविरहएवज्वलति । नतुलोचनंतृतीयनेत्रं । भविष्यद्विषया दैवीलिपिर्ललाटेलिख्यते । ज्वलतीत्यसहनत्वंसूचितम् । यौजगतोमा तापितरौतयोरपिविरहेणेदृशीअवस्था । मादृशांकथंजाताऽनविष्यतीति भावः । जनुर्जननजन्मानीत्यमरः । हिमवतोनित्ययोगेऽतिशयेवामतुप् ४५

दहनजा न पृथुर्दवथुर्व्यथा विरहजैव पृथुर्यदि नेदृशम् ॥ दहनमाशु विशन्ति कथं स्त्रियः प्रिय मपासुमुपासितुमुद्धुराः ॥ ४६ ॥

दहनेति । दहनजावन्हिजातादवथुर्व्यथादाहपीडानपृथुर्नगुर्वीकिन्तु विरहजैवदाहव्यथापृथुरतिशयितेत्यर्थः । अत्रार्थेऽन्यथानुपपत्तिं प्रमाण यति । यदीदृशंनस्याद्विपरीतमेवचेत्स्यात्तर्हि अपगताअसवःप्राणाय स्यतंमृतप्रियमुपासितुंसेवितुमुद्धुराउत्सुका सोल्लासाःस्त्रियःआशुझटिति कालविलम्बमकृत्वैवदहनमग्निंकथंविशन्तिप्रविशन्ति । तादृतस्माद्वन्हेर पिसकाशाद्विरहपीडैवपृथुरिति । तयेतियुक्तःपाठः ॥ ४६ ॥

हृदि लुठन्ति कला नितराममूर्विरहिणीवधपङ्क कलङ्किताः ॥ कुमुदसख्यकृतस्तु बहिःकृताः सखि विलोकय दुर्विनयं विधोः ॥ ४७ ॥

हृदीति । हे सखिएतादृशंविधोश्चन्द्रस्यदुर्विनयमविनीतत्वंविलोकय । कीदृशंतदाह । नितरांविरहिणीवधएवपङ्कः पातकंतेनकलङ्कितामलिनि ताअमूःदृश्यमानाःकलाहृदिलुठन्तिक्रीडन्ति । पुनर्विज्ञेयेवा कुमुदसख्य कृतः कुमुदमैत्रीकारिण्यः परोपकारशीलास्तावहिष्कृताःयाः पातकिन्यः परापकारएवपरास्ताहृदिलुठन्ति । यस्तुविनीतोभवतिसतूपकारिणं हृद येधारयतिपापिनंबहिरेवस्थापयति पापीतुविपरीतंकरोति । अभ्रीपं कपुमान्पाप्माइत्यमरः ॥ ४७ ॥

अयि विधुं परिपृच्छ गुरोः कुतः स्फुटमशिक्षत

दाहवदान्यता ॥ ग्लपितशंभुगलाद्गरलात्त्वया किमुदधा वतवाडवानलात् ॥ ४८ ॥

अयीति । अयि सखि त्वं विधुं इति स्फुटस्पष्टं परिपृच्छ । इति किं हे च न्द्र त्वया कुतः कस्माद्गुरोर्दाहवदान्यतादाहदातृत्वमशिक्षत अभ्यस्तम् । हे जड अनुचिताऽभ्यस्तकारिन् दुर्मते ग्लपितोदग्धः शीतलः शंभुगलोये न तस्माद्गरलाद्विषात् किमशिक्षत । तन्मस्तके स्थित्वाइदमभ्यस्तं वा । अ थवा उदधौ स्थित्वाभ्यस्तं विद्यमानाद्वडवानलाद्वडवाग्नेर्वा ईश्वरतएव उत्पन्नत्वाच्च वडवाग्नेस्तत्रैवस्थितत्वात्संभाव्यतइतिवा । चन्द्रस्त्वामत्य धिकं पीडयतीत्यर्थः । तस्य सतापकारित्वमनन्यसंयोगवद्विषमग्निर्वाक एपतीतियुक्तमूलोवितर्कः । गुरोरिति आख्यातोपयोगे इत्यपादानत्व म् ॥ ४८ ॥

अयमयोगिवधूवधपातकैर्भ्रमिमवाप्य दिवः खलु पात्यते ॥ शितिनिशादृषदि स्फुटदुत्पतत्कणगणाधिकतारकिताम्बरः ॥ ४९ ॥

अयमिति । अयं चन्द्रः अयोगिन्यो वियोगिन्यो वध्वः स्त्रियस्तासां व धस्तद्रूपैः पातकैः कर्तृभिर्भ्रमिं भ्रमणमवाप्य प्राप्य दिवः स्वर्गादाकाशाद्वा शि तिनिशा कृष्णरात्रिस्तल्लक्षणायां दृषदि शिलायां पात्यते खलूत्प्रेक्षे । शिला- यां पातनादेवस्फुटन्तो विदीर्यमाणा उत्पतन्त उच्छलन्तः कणगणा लेशसमू हास्तैरधिकमतिशयेन तारकितं संजाततारकमम्बरमाकाशं यस्मात् शुक्लपक्षे परिपूर्णत्वाच्चन्द्रेण विरहिण्यस्तारकाश्च पीड्यन्ते परिभूयन्ते कृष्णपक्षे चन्द्र क्षयाद्विरहिणां तादृशी पीडा न भवति तारकाश्च स्पष्टतरा भवन्ति । भ्रमणं तस्य स्वतः सिद्धं शिलायां पातितश्चूर्णीभूतो यद्यपि तथापि स्वभावं न त्यजति उत्प्रेक्षा । अन्योऽपि पातकी पातकैर्भ्रामयित्वातिकठोरशिलायां स्वर्गान्नि पात्यते कणाश्चोर्ध्वं गच्छन्ति । शितीधवलमेचकेइत्यमरः । अवाप्येतिय त्वस्य, तारकितं तारकादित्वादितच् ॥ ४९ ॥

त्वमभिधेहि विधुं सखि मद्गिरा किमिदमीदृगधिक्रियते त्वया ॥ न गणितं यदि जन्म पयोनिधौ

हरशिरःस्थितिभूरपि विस्मृता ॥ ५० ॥

त्वमिति । हे सखि त्वं मद्विरा भैमीत्वामेवं पृच्छतीति विधुमभिधेहिवद । हे चन्द्र विशिष्टकुलोत्पन्नेन त्वया इदं विरहिणीवधलक्षणमीदृग्विधं कर्म किमिति अधिक्रियते अङ्गीक्रियते एवं कर्म कर्त्तुं युक्तं न भवतीत्यर्थः । परापकाराकरणे कारणमाह । लक्ष्मीन्दुजनकत्वादतिकुलीने पयोनिधौ रत्नाकरे जन्म यद्दिनगणितं विचारितं तर्हि हरशिरः स्थितिलक्षणभूरपि विस्मृता काकु । यस्तु कुलीनो भवति सदा सत्सन्निधौ वर्त्तते स परापकारं न करोति । त्वया कुलीनत्वं स-सन्निधिमत्वं चोभयमपि विस्मृतम् । पापिना सह सङ्गात् भयानोच्यते इति मद्गिरेत्यनेन सूचितम् ॥ ५० ॥

निपततापि न मन्दरभूभृता त्वमुदधौ शशलाञ्छन चूर्णितः ॥ अपि मुनेर्जठरार्चिषि जीर्णतां बत गतोसि न पीतपयोनिधेः ॥ ५१ ॥

निपततेति । शशलाञ्छननिन्दितकर्मन् चन्द्र उदधौ निपतता मन्दरसंज्ञकेन भूभृता पर्वतेनापि समुद्रे स्थितस्त्वं न चूर्णितः तथा पीतपयोनिधेर्मुनेरगस्त्यस्य जठराचिषि उदराग्नावपि जीर्णतां नाशं वातापिवन्न गतोसि प्राप्तोसि । यत इतित्वं भयत्रापि खेदः । जीर्णतामपीति वा । अस्मद्भाग्येनैव दूषणं पितवन जातम् । अतिदाहकत्वात्ताभ्यामपि परित्यक्तः ॥ ५१ ॥

किमसुभिर्ग्लपितैर्जड मन्यसे मयि निमज्जतु भीमसुतामनः ॥ मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः ॥ ५२ ॥

किमसुभिरिति । हे जड मूर्ख चन्द्र किमिति मन्यसे । इति किम् । ग्लपितैः खेदितैर्गतैरित्यर्थः एवंविधैरसुभिः प्राणैः कृत्वा भीमसुतामनो भैम्यन्तःकरणं मयि निमज्जतु निलीयतामिति । मनश्चन्द्रे निलीयते इति श्रुतेः । प्राणेषु गतेषु भैमीमनो मयि निलीनं भविष्यतीति चित्ते माकार्षीरित्यर्थः । श्रुतिप्रमाणमित्यपि न मन्तव्यमित्याह । किल यस्माद्विबुधो वेदव्याख्यानसमर्थो देवः स्मरो मेधावी कामश्च मम संबन्धिनीं तदर्थिकां चन्द्रे मनो निलयनप्रतिपादिकां श्रुतिं नलमुखेन्दुपरां नैषधवदनचन्द्रपरामाह वदतिस्म । प्राणेषु

तेनकामेनसामान्यापि श्रुतिर्विशिष्टविषयीकृताअतिपीडायामपि अहत्व द्धीनानभवामि । किंतुनलाधीनैवेतितात्पर्यं । मूर्खत्वमापाततः श्रुतेरर्थं गृह्णासि । पूर्वापरानुसंधानवान्पण्डितोनतु श्रुतेरन्यार्थत्वंब्रूते ॥ ५२ ॥

मुखरय स्वयशोनवडिण्डिमंजलनिधेःकुलमुज्ज्वलयाधुना ॥ अपि गृहाण वधूवधपौरुषं हरिणलाञ्छनमुञ्चकदर्थनाम् ॥ ५३ ॥

मुखरयेति । त्वमधुनाऽस्मिन्समये स्वयशः संबन्धिनवंनूतनंडिण्डिमनामकंवाद्यंमुखरयवादय स्त्रीवधात्त्वनाशनेनतवमहती कीर्त्तिर्भविष्यतीति स्वपितुर्जलनिधेः कुलंवंशमुज्वलयोज्वलंकुरुवधूवधपौरुषमपिगृहाण जडनिधेर्वंशेतात्स्यैवैतत्सर्वंयुक्तंनत्वन्यस्य । अथवसुष्टुयशः संबन्धिनंनवडिण्डिमंवादयजलनिधेः कुलंदह एतत्सर्वं कुरु परन्तुहरिणलाञ्छनशशकलङ्ककदर्थनांपीडांमुञ्चमाकार्षीः । पीडायाअसह्यत्वात् झटितिमारये त्यर्थः ॥ ५३ ॥

निशि शशिन्भज कैतवभानुतामसतिभास्वतितापयपापमाम् ॥ अहमहन्यवलोकयितास्मितेपुनरहर्पतिनिर्धुतदर्पताम् ॥ ५४ ॥

निशीति । हेशशिन्निशिरवकैतवभानुतांकपटसूर्यत्वं भजाऽङ्गीकुरु । हे पापरूपभास्वतिसूर्ये सतिविद्यमानेमातापयज्वालय । निशिसूर्येचाविद्यमानेइत्युभयत्रापियोजनीयम् । तत्सुखेनकुरु । अहमहनिप्रभातेपुनस्तेऽहर्पतिनासूर्येण निन्हुतोनिराकृतोदर्पोगर्वोयस्य तस्यभावस्तत्त्वमवलोकयितास्मिद्रक्ष्यामि । सूर्यसमक्षंत्वयाभयमपि कर्त्तुं नशक्यते तेन यद्यत्तवकरिष्यते तन्मयैवद्रक्ष्यते इतिलौकिक्युक्तिः पुनर्मुहुरित्यर्थः ॥ तापयचुरादावाधृषाद्वेत्यत्रपठितस्य तपदाहइत्यस्य । अवलोकयितास्मीति लुट् । अहर्पतिरिति अहरादीनामितिरेफः ॥ ५४ ॥

शशाङ्कलङ्कभयङ्कर मादृशां उत्तलसि यन्निशिभूनपतिंश्रितः ॥ तदमृतस्य तवेदृशभूततादृभुतकरी परमूर्ध्वविधूननी ॥ ५५ ॥

शशेति । शशकलङ्कमादृशांविरहिणां भयंकरपीडाकरत्वं निशिभूतपतिं पृथिव्यादिमहाभूतानांपतिमाकाशंश्रितआश्रितवान् । अपितुंकृतप्रारम्भो वासन्यच्चपलसितप्यसे । ततस्मादमृतस्यामृतमयस्यतवेदृशभूतताईदृशो भूतस्तस्य भावोज्वलनवद्दू जातिकान्तिमत्ताच अद्भुतकरी चमत्कारिणी । अतएव परेषांमूर्द्ध विधूननीशिरःकम्पनकारिणी । अमृतस्यशीतलस्यदाह कत्वंनदृष्टमित्याश्चर्यम् । रुकलङ्कस्य परपीडकस्यामृतरूपत्वादिकमाश्चर्य कारीतिच । ईदृशंमादृशजनोद्वेगजननलक्षणंप्रकारंभूतःप्राप्तस्तत्तेतिवा । अथच भूतपतिंशिवमाश्रितोयज्ज्वलसि अमृतस्यकस्यामृतस्यतवेदृशभूत ताश्चाश्चर्यकारिणी भूतानामस्मदादीनांप्रतिपालकस्तदाश्रितस्यस्वतःसु धारूपस्यचतवयत्पीडाकरत्वं तदाश्चर्यकरंयुक्तंनभवतीत्यर्थः । अथच भूतपतिंभैरवरूपंमहादेवमाश्रित्यरात्रौयज्ज्वलद्रूपोभवसि तदमृतस्यजी वतएवदृष्टशपिशाचताआश्चर्यकारिणी, मृतस्यैवभूतत्वंदृष्टं , भूतोहिमृतः सन्स्त्रीबालकादीनां भयंकरोभवति । रात्रौज्वलतियमभिभवतितस्य मूर्द्धानमपि कम्पयति ।अथवा ऽमृतस्योदकस्यज्वलनरूपताआश्चर्यकारि णी । उदकस्यज्वालकत्वंकुत्रापि नदृष्टमित्यर्थः । भयंकरमेघा तेभयेभ्रि तिखच्मुम् । श्रितःकर्मश्रितवत् । श्रितोगत्यर्थत्वात्कर्त्तरिक्त । अद्भुत करी । कृञोहेतुताच्छील्येइतिटः ॥ ५५ ॥

श्रवणपूरतमालदलाङ्कुरं शशिकुरङ्गमुखे सखि निक्षिप ॥ किमपि तुन्दिलितः स्थगयत्यमुं सय दितेनत दुच्छ्वसिमि क्षणम् ॥ ५६ ॥

श्रवणेति ॥ हे सखित्वं तवसमच श्रवणपूरंकर्णभूषणभूतंतमालदलाङ्कु- रंतमालपत्राङ्कुरंशशिनःकुरङ्गोमृगस्तस्यमुखेघासार्थं निक्षिपार्पय । प्रयोज नमाह । तेनाङ्कुरेणतुन्दिलितोबृहत्कुक्षिः सन् समृगो यद्यमुंचन्द्रं किमपि स्वल्पमपिस्थगयत्याच्छादयति तत्तर्हिसर्वांक्षणमात्रमपि उच्छ्वसिमिउच्छ्वा समोचनमपि कर्तुंसमर्थास्मि । अङ्कुरभक्षणपुष्टेनानेन चन्द्रश्चेत् पिहितःस्या त् तर्हि तद्दर्शनाभावात्क्षणमात्रंममपीडाभाव इत्यर्थः । स्थगयतिउ- च्छ्वसिमि । आशंसस्य वर्त्तमानवत्प्रत्ययः । तुन्दशब्दादस्त्यर्थेतुन्दादित्वा दिलच्तित्करोतीतिणिचिनिष्ठा ॥ ५६ ॥

असमये मतिरुन्मिषति ध्रुवं करगतैव गता यदियं कुहूः ॥ पुनरुपैति निरुध्य निवास्यते सखि मुखं न विधोः पुनरीक्ष्यते ॥ ५७ ॥

असमयइति ॥ ध्रुवंनिश्चितंमतिर्बुद्धिरसमये ऽप्रस्तावेएवोन्मिषतिस्फुरतीत्यर्थः । कुतोयद्यस्मादियंकुहूरमावास्याकरगतैवहस्तप्राप्तैवातिसन्निहितैवगता यदिसमयेस्फुरितास्यात् तर्हि तदैवनिरुद्धास्यात् । तदाचन्द्रो दृष्टो न भवेद् तदेयंबुद्धिर्नोत्पन्ना । पुनर्वदति साकुहूर्यदिपुनरुपैति आगमिष्यति । तर्हि निरुध्यनिर्बन्धंकृत्वात्वयात्रस्थातव्यमिति संप्रार्थ्य निवास्यते स्थापयिष्यते । पुनरुपैष्यतीतिकाकुर्वा । यथाविधोश्चन्द्रस्य मुखंपुनर्नेक्षतेसदाअमावास्यास्थितौ चन्द्रावलोकनंकदापिनस्यादित्यर्थः । करगतागत्यर्थत्वात्कर्तरिक्तः द्वितीयाश्रितेतिसमासः । उपैति । वर्तमानसामीप्येवर्त्तमानवत्प्रत्ययः ॥ ५७ ॥

अयि ममैष चकोरशिशुर्मुनेर्व्रजति सिन्धुपिबस्य न शिष्यतां ॥ अशितुमब्धिमधीतवतोऽस्य वा शशिकराः पिबतः कति शीकराः ॥ ५८ ॥

अयीति । चन्द्रादर्शनेहेत्वन्तरसूचनार्थंचशब्दः अयिहेसखिममैषचकोरशिशुः सिन्धुपिबस्यसमुद्रपानकारिणोमुनेरगस्त्यस्यशिष्यतां नव्रजति नगच्छतिपृच्छेतिशेषः । बालत्वेप्यन्यायः सुकर शिष्यत्वेतत्रकिंफलमत आह । तच्छिष्यत्वेनाब्धिंसमुद्रमशितुंपातुमधीतवतः समुद्रपानसमर्थस्य चकोरशिशोः पिबतः पानंकुर्वतोस्यशशिकराः कतिशीकराःविन्दवोभविष्यन्ति । अपितु स्वल्पाएव यःसमुद्रंपातुमिच्छति तस्यचन्द्रकिरणपानमतिसुकरमित्यर्थः । एवं सतिकदापि चन्द्रोनदृश्येतेति भावः । कति वेतिसम्भावनार्थोवावाशब्दो वायसादितिवा । सिंधुपिबस्यपाघ्रेत्यनेनशः ॥ ५८ ॥

कुरु करे गुरुमेकमयोघनं बहिरितो मुकुरं च कुरुष्व मे ॥ विशति तत्र यदैव विधुस्तदा सखि सुखादहितं जहि तं द्रुतम् ॥ ५९ ॥

कुर्विति । हे सखि गुरुभारवन्तमेकमयोघनंलोहमुद्गरंकरेकुरुस्थापय । इतो मद्गृहाद्बहिर्मेमुकुरंदर्पणंकुरुस्थापय । किमर्थमित्यत आह । विधुस्त अमुकुरेयदेव विशतिप्रतिविम्बरूपेण प्रविशति तदेवसुखादेनायासेनैव तमहितंचन्द्रवैरिणंद्रुतंशीघ्रंजहिमारयचूर्णीकुर्वित्यर्थः । ततःपीडाशान्तिर्भविष्यतीतिभावः । उन्मादोक्तिः । दर्पणेमुकुरादर्शाइत्यमरः । अयोहन्यतेऽनेनेत्ययोघनः करणेयोविद्रुष्विति्यप्रत्ययेघनादेशः ॥ ५९ ॥

उदर एव धृतः किमुदन्वता न विषमो वडवानलवद्विधुः ॥ विषवदुज्झितमप्यमुना न स्मरहरः किममुं बुभुजे विभुः ॥ ६० ॥

उदरइति ॥ उदन्वतासमुद्रेण विषमोदुःसहो अथच विषेणमीयतेसमीक्रियतइति विषमोविधुश्चन्द्रोवडवानलवदुदरएव किंनधृतोनिक्षिप्तः । एवं कर्तुयुक्तं यथापरोपतापी बडवाग्निर्लोकोपकारार्थमुदरएवधृतस्तथायमपि किमिति नधृतइतिव्यतिरेकदृष्टान्तः ॥ अन्यच्चामुनासमुद्रेण विषवत् विषमिवोज्झितं विषादिना विभुः समर्थः परोपकारायप्रसिद्धः स्मरहरोमहादेवोऽमुंचन्द्रं किमबुभुजेनखादितवान् । विषंभुक्तवान्विषवत् त्वांकिमिति नभुक्तवान् । तस्माद्विषवद्विषमोनततोपि विषमइति । उदन्वानुदधौइतिसाधुः । भुजभुजोनवनइतितङ् ॥ ६० ॥

असितमेकसुराशितमप्यभून्नपुनरेव विधुर्विशदं विषम् ॥ अपि निपीय सुरैर्जनितक्षयं स्वयमुदेति पुनर्नवमार्णवम् ॥ ६१ ॥

असितमिति । सामुद्रंविषंद्विविधंकृष्णंश्वेतञ्च । असितंकृष्णंकालकूटाख्यमार्णवंसामुद्रविषमेकेन सुरेणमहादेवेननाशितं भक्षितंपुनरपिनाभूत् न बभूव । एषचन्द्रःपुनःसामुद्रंविशदंश्वेतंविषसुरैर्देवैरिन्द्रादिभिःप्रतिपदादितिथिषु निपीयनिःशेषंपीत्वाजनितक्षयमपि कृतनाशमपि पुनर्नवंनूतनंस्वयमेवसर्वोनगणयित्वोदेतिसमुत्पद्यते । क्षययुक्तमपिबहुभिः बहुधेवजग्धितमपि श्वेतंविषंपुनरुत्पद्यते, एकदैवएकदेवभक्षितंकृष्णंविषंपुनर्नोत्पन्नं, बहुदेवभक्षितमपि श्वेतंविषंपूर्वापेक्षयाधिकं तस्मात्कालकूटाख्यादप्यधिकंदृढमित्यर्थः ॥ ६१ ॥

विरहिवर्गवधव्यसनाकुलं कलय पापमशेषकलं वि
धुम् ॥ सुरनिपीतसुधाकमपापकं ग्रहविदो वि
परीतकथाः कथम् ॥ ६२ ॥

विरहीति । हे सखि विरहिणश्च विरहिण्यश्च विरहिणस्तेषां वर्गस्य समूहस्य
वध एव व्यसनं तस्मिन्नाकुलं केनोपायेनैते वध्या इति चिन्ताकुल मशेषकलं
परिपूर्णं विधुं परापकारित्वात्पापं पापरूपं कलय जानीहि व्यसनेन हेतुना ऽ
कुलं कुलरहितपापं जानीहि कुपुत्रेण कुलनष्टमिति न्यायात् तथा सुरैर्देवाद्भि
र्निपीता सुधाऽमृतं यस्य एवंविधमसावास्यश्चन्द्रं विरहिणामतापकारित्वा
दपापकं पुण्यवन्तं जानीहि ग्रहविदो ज्योतिर्विदः कथं कुतो विपरीताक
थाज्ञावचा येषां पूर्णेन्दुं शुभग्रहं कथयन्ति क्षीणं च पापग्रहं । क्षीणेन्दुर्कंकुजाः
पापाइति, तन्न ज्ञायत इत्यर्थः । विपरीतं कथयन्तीति वा । अथ च तु पष्टिकला
वान्सविद्यो परोपकारी पाप एव विद्यारहितः परोपकारी पुण्यवानित्यु
क्तिः । विरहीति पुमान्स्त्रियेत्येकशेषः निपीतसुधाकं शेषाद्विभाषेति कपि
आपोन्यतरस्यामिति विकल्पाद्ध्रस्वाभावः ॥ ६२ ॥

विरहिभिर्बहुमानमवापि यः सबहुलः खलु पक्ष
इहाजनि ॥ तदमितिः सकलैरपि यत्र तैर्व्यरचि
सा च तिथिः किममाकृता ॥ ६३ ॥

विरहिभिरिति । खलूत्प्रेक्षे विरहिभिर्यः पक्षो बहु अत्यन्तं मानं संमानम
वापि प्रापित स्तत्र चन्द्रक्षयात्स पक्ष इह लोके बहुलः कृष्णपक्षोऽजनि जातः
युक्तमेवैतत् । यः सम्पक्षो वा लोके बहुमानं पूजाप्रमाणं च लभते सप्रवृद्धो बहु
लश्च भवति । बहुलातिथ्यादत्तेइति । इह बहुलपक्षे यस्यां तिथौ सकलैः सम
स्तैरपि तैर्विरहिभिस्तस्य बहुमानस्यामिति रपरिमितता व्यरचि सा च सैव ति
थिरमाकृता किममावास्याकृतेत्यर्थः । अमावास्यायां सर्वथ चन्द्राभावादपरि
मितो मानं कृत स्तथा च मानपरिमाणराहित्यादन्वर्थेसा जाता नत्वमास इव स
तोऽस्यां सूर्याचन्द्रमसाविति व्युत्पत्त्येत्यर्थः । विरहिणां कृष्णपक्षः सुखद
स्तत्राप्यमावास्येत्यर्थः । बहुलः आतोनुपसर्गेकः । अमीकृतेति पाठः
क्लिष्टकल्पनयोपेक्ष्यः ॥ ६३ ॥

स्वरिपुतीक्ष्णसुदर्शनविभ्रमात् किमु विधुं ग्रसते न विधुंतुदः ॥ निपतितं वदने कथमन्यथा बलिकरम्भनिभं निजमुज्झति ॥ ६४ ॥

स्वरिपुरिति । सम्प्रति स्नेहो विधुन्तुदो राहुः स्वस्य रिपुर्विष्णुस्तस्य तीक्ष्णं सुदर्शनं तस्य तु सत्त्वेन विभ्रमाद्भ्रान्तेर्विधुं ग्रसते । किंस्विदित्युत्प्रेक्षा । अन्यथा चन्द्रस्तु यैवचेत् खादे यो वदने निपतितं निजं स्वीयं स्ववशं वा बलयं पूजार्थं गुरुत्वात्करम्भ निभं दधिसक्तुतुल्यं चन्द्रं कथमुज्झति तच्चेत्त्यजति । तावदतः सुदर्शनबुद्ध्या पूर्ववदनानीयमानमपि च्छेदभियैवेति भाव्यते राहोरुपहारः करम्भो भवति ॥ ६४ ॥

वदनगर्भगतं न निजेच्छया शशिनमुज्झति राहुरसंशयम् ॥ अशित एव गलत्ययमत्ययं सखि विना गलनालबिलाध्वना ॥ ६५ ॥

वदनेति । हे सखि राहुर्वदनस्य गर्भमध्ये गतं शशिनमसंशयं निःसंदेहं निजेच्छया स्वाभिलाषमात्रेण नउज्झति । किन्तु राहुणाऽशित एवायं चन्द्रोऽत्ययविनाशं विना गलनालबिलाध्वना कण्ठकदलविवरमार्गेण गलति निःसरति । जठराग्नेरभावादमृतरूपत्वाद्वा नाशाभावः ॥ ६५ ॥

ऋजुदृशः कथयन्ति पुराविदो मधुभिदं किल राहुशिरश्छिदम् ॥ विरहिमूर्धभिदं निगदन्ति न क्व नु शशी यदि तज्जठरानलः ॥ ६६ ॥

ऋजुदृश इति । ऋजुदृशो यथादृष्टार्थग्राहिणः पुराविद ऐतिहासिका मधुभिदं श्रीकृष्णं राहुशिरश्छिदं कथयन्ति । किलेति श्रुतौ । विरहिमूर्धभिदं वियोगिशिरश्छेदकं न निगदन्ति यः एतद्वचनं युक्तं परं तीक्ष्णप्रज्ञत्वाभावादन्यथा वदन्ति । तत्र संबन्धे सति तस्य राहोर्जठरानलो जठराग्निः स्यात् तदा शशी चन्द्रः क्वाऽपि तु कुतो पि राहोः शिरश्छेदेन धृतश्चन्द्रो जठराग्निं विना गलति तत्र चन्द्रस्य विद्यमानत्वाद्विरहिणामपकारित्वाच्च विधायं सा क्षेविष्णुरेव विरहिमूर्धभिदित्याशयः ॥ ६६ ॥

स्मरसखौ रुचिभिः स्मरवैरिणा मखमृगस्य यथा द-
लितं शिरः ॥ सपदि संदधतुर्भिषजौ दिवः सखि
तथा तमसोपि करोतु कः ॥ ६७ ॥

स्मरेति । हे सखि रुचिभिः स्मरसखौ कान्त्या मदनसदृशौ दिवो भिषजौ स्वर्वैद्यौ दस्रौ स्मरवैरिणा शिवेन दलितं खण्डितं मखमृगस्य यज्ञमृगस्य शिरो यथा सपदि तत्क्षणमेव सन्दधतुर्घटयामासतुः । तथा तमसोपि राहोरपि कः करोतु । एतत्कृपः कोपि नास्ति मदनारिणा यत्कार्यं कृतं तन्मदनमित्रेण मदनेन वामो घीकर्त्तव्यम् । ततः स्मरमित्रत्वादश्विभ्यां कामारिणाच्छिन्नं मृगशिरस्तत्स्कन्धेन मेलितं तथा विरहवैरिणा विष्णुनाच्छिन्नं राहुशिरः कः संघटय तु विरहिमित्रस्याभावादिति भावः । तात्कालिकसंधानदृढं भवति इति सपदीत्युक्तम् । तमस्तु राहुः स्वर्भानुरित्यमरः ॥ ६७ ॥

नलविमस्तकितस्तरणेरिपोर्मिलति किं न कबन्धग-
लेन वा ॥ मृतिभिया भृशमुत्पतत स्तमोग्रहशिर
स्तदसृक्दृढबंधनम् ॥ ६८ ॥

नलेति । वाऽथवा स्तमो मृतिभिया मरणाद्भयेन दिवमाकाशं भृशमतितरामुत्पततवद्गच्छत आकाश एव नलेन विमस्तकितस्य च्छिन्नमूर्ध्नो रिपोर्नलशत्रोः कबन्धगलेनापमूर्द्धकलेवरकण्ठेन सह तमोग्रहशिरो राहुशिरस्तस्य कबन्धगलस्यासृग्रक्तं तेन रक्तेन दृढं बन्धनं यस्य एवम्भूतं सत् किन्न मिलति । मिलने हि वदनमध्यगते चन्द्रे राहुजठराग्नौ जीर्णेऽतितरां पीडा न भविष्यतीति भावः । आकाशे स्थितस्य राहुशिरः कबन्धगलेन सह संबन्धार्थं भृशमुत्पततइत्युक्तम् । दृढबन्धनमिति क्रियाविशेषणं वा । धृतिभियेति पाठे मलभारस्य भियेत्यर्थः ॥ ६८ ॥

सखि जरां परिपृच्छ तमःशिरः सममसौ दधता
पि कबंधताम् ॥ मगधराजवपुर्दलयुग्मवत्किमिति
नव्यतिसीव्यति केतुना ॥ ६९ ॥

सखीति । हे सखि त्वं जरां राक्षसीं परिपृच्छ असौ जरा कबन्धतामपमूर्द्धकलेवरत्वं दधता केतुना समं तमः शिरोपि राहुशिरोपि मगधराजस्य जरासन्ध

स्ववपुषःशरीरस्यदलयुग्मंखखण्डयुगलंतद्धृतकिमितिकुतोहेतोर्नव्यतिसीव्य तिसंयोजयति । यथामगधराजः सन्धितस्तथाराहुरपिसन्धेय इतिजरां मतित्वमावक्तव्यमेकस्यैवदेहस्यशिरसोराहुत्वंकबन्धस्यकेतुत्वम् ॥ ६९ ॥

वद विधुंतुदमालि मदीरितैस्त्यजसि किंद्विजराजधिया रिपुम् ॥ किमु दिवं पुनरेति यदीदृशः पतित एष निपेव्य हि वारुणीम् ॥ ७० ॥

वदेति । हेआलिसखित्वंमदीरितैर्वचनैर्विधुंतुदंराहुंवद । हेराहोत्वं रिपुंचन्द्रं द्विजराजधियाब्राह्मणबुद्ध्यात्यजसिकिं ब्राह्मणोनहन्तव्यइति श्रुतेः । डित्थादिवत्संज्ञामात्रेणद्विजराजोनतुश्रेष्ठत्वेनेत्यर्थः । ब्राह्मण त्वेन्यथानुपपत्तिंप्रमाणयति । यदिईदृशः ओत्रियोब्राह्मणःस्यात्तर्हिएष वारुणींमदिरांवारुणींदिशंच निषेव्यपीत्वाप्राप्यचपतितोमहापातकी अ स्तंगतश्चसन् पुनर्दिवंस्वर्गमाकाशंचकिमुकथमेति पतितो ब्राह्मणःस्वर्गं गच्छति अयंपुनरेतितस्मात्संज्ञामात्रेणद्विजराजोनत्वन्वर्थत्वेन अतोहन्त व्यएवायमितिस्पष्टम् ॥ ७० ॥

दहति कण्ठमयं खलु तेन किन्नरुडत्र द्विजत्रासन योज्झितः ॥ प्रकृतिरस्य विधुंतुद दाहिका मयि निरागसि का वद विप्रता ॥ ७१ ॥

द्विजमात्रोपिनहन्तव्यइत्यतआह । दहतीति । खलुप्रायेणायंचन्द्रोभ क्षितःसन्कण्ठदहति । मामिवतेनहेतुनाद्विजत्रासनयाब्राह्मणबुध्योज्झित स्त्यक्तः किंकिनेव गरुडवद्यथागरुडेननिषादतोगत कण्ठदहनविप्रोब्रा ह्मणबुध्यात्यक्तइतिभारते तथात्वयाकिमितित्यज्यते । हेविधुंतुदराहोऽ स्यविधोःप्रकृतिः स्वभावोदाहिकाम्तुब्राह्मणशक्तिः साहिसागसिकोपरा धेप्रभवतिनत्वन्यत्र एवंचेन्नतर्हि निरागसिनिरपराधायांमयिविषयेकाकी दृक्विप्रताब्राह्मण्यंवद निरपराधांकादहतिद्विति ब्राह्मणोनभवति अत स्त्वयाहन्तव्यइत्यर्थः । दाहिकेतिकर्तरिण्वुल् ॥ ७१ ॥

सकलया कलया विलदंष्ट्रया समवधाय यमाय विनिर्मितः ॥ विरहिणीगणचर्वणसाधनं विधुर

ता द्विजराज इतिश्रुतिः ७२ ॥

अथोत्करेण तस्य द्विजराजश्रुतिं समर्थयति । सकलेति । सकलयाक-लयादष्टया जाता विकल वचनैः सर्वाभिः कलाभिरेव दष्टाभिः कृत्वा तमवधायस्य मगवधानकृत्वा संगीत्येत्यर्थः । धमाधर्मार्थयोर्द्विराद्विगोगेर्यायच्च वेवांभ तथान्तेद्विषयेसाधनंकारणानिमिगः । अतोद्विजानान्दृत्तानां मध्ये राजाश्रेष्ठत्वाद्विजराजोयमितिश्रुतिर्जनैर्वदिनतुद्विजानांराजेति । एककाल मेवसर्वासांवधायमहत्साधनमर्थंति निमित्तइति भावः । द्विजराजोराजाइ इतिदष्ट् ॥ ७२ ॥ मीमांसक श्रीधरभट्टानामेतेश्लोकाः

(सखिजलैः परिपूर्य निर्मलैरथ निवेश्य कुम्भमिमं बहिः बहिरियं जगतां तरितोयथा त्रिपुरमुष्य वधेनितथाम् खम् ॥ १ ॥ सखिकलङ्कमनः शिमुसंचितौ विरहिणीव धसंभवकल्मषैः । इतरदङ्गमघं द्वलितंयतो यदनमात्रम तःखलुदृश्यते ॥ २ ॥ हिमतनुर्हिमबिन्दुमिषादिमामनु भवन्गलितांस्वतनुंतनुम् । यदपि कर्मफलं लभतेघृण स्तदपि मेज्वलयत्यधिकंतनुम् ॥ ३ ॥ सखिवियोगिजना न्तकरो विधुर्यदि निमज्जति पातकनीरधौ । तदपि यद्विवमेति निरन्तरं तदतुलं कुरुते मम कौतुकम् ॥ ४ ॥ द्विज पतिग्रसनाहितपातकप्रभवकुष्ठसितीकृतविग्रहः॥ विरहिणीवदनेन्दुजिघत्सया स्फुरति राहुरयं न निशाकरः ५)

। श्लोकपञ्चकंक्षेपकमिदम् ।

स्मरमुखं हरनेत्रहुताशनाज्ज्वलदिदं विधिना च कृपेविधुः ॥ बहु वधेन वियोगिवधागसां शशमि षादथ कालिकयाङ्कितः ७३ ॥

स्मरेति । विधिनात्र ह्मणा विधुरेवेदंपुरोवर्तिस्मरमुखंहरनेत्रहुताशनाद्ध हरनेत्राग्नेः सकाशाद्दुज्वलदह्यमानंवकृपेसमाकृतम् । अथ बहुविधिना नेकप्रकारेणवियोगिनांविरहस्त्रीपुंसयोर्वधोमारणं तज्जन्यैनसांपातके

रतीति ॥ हे अनात्मपर आत्मानं रत्यं परं चारत्यं न जानातीत्यनात्मपरस्तत्सम्बुद्धिस्त्वं रतिवियुक्तां मामिव रतिवियुक्तं स्वमप्यात्मानमपि किमिति तापितवान् दग्धवानसि । आत्मनः प्रतिकूलं कोऽपि नाचरेदिति किं तु शत्रोरेव वर्तूनं योरित्यनात्मपरोऽभवसीत्यर्थः । एवं कुतो ज्ञातमित्यत आह । इतरया त्वया आत्मन्यतापिते सति अतापत्ततः सन्तापरहितस्य तव सकमात्सम्बन्धान्मम हृदयं कथं कस्माद्धेतोस्तप्यते दह्यते । परापकारार्थमात्मानमपि सन्तापितवानेवंविधः परापकारकस्त्वमित्यर्थः । संसर्गजा दोषगुणा भवन्तीति मन्मनः सम्बन्धात्सन्तप्तत्वं युक्तं । दह्यत इति कर्मकर्तरि यक्ले ॥ ७८ ॥

अनुममार न मार कथं नु सा रतिरतिप्रथितापि पतिव्रता । इयदनाथवधूवधपातकी दयितयापितयासि किमुज्झितः ॥ ७९ ॥

अन्विति ॥ नु प्रश्नानायां सम्बोधने वा हे मार काम सा रतिः पतिव्रता पतिव्रतात्वेन अतिप्रथिता अतिविख्यातापि रतिस्त्वं प्रियामृतं त्वामनु कथं न ममार पतिव्रतयानुमरणं कर्तव्यमिति धर्मः । मृते म्रियेत या पत्याविति उक्तेः । न कृतं चेत्तन्मेदं कारणं तया दयितयापितया इयतीनां बह्वीनामनाथानां रक्षितृरहितानां वियोगिनीनां वधूनां वधेन पातकी त्वमुज्झितोऽसि किम् आशुद्धेः संप्रतीत्यो हि महापातकदूषित इति वचनात् । अत एवानुमरणं न कृतमित्यर्थः । ममार म्रियतेर्लुङ्लिङोश्चेति नियमात् परस्मैपदम् ॥ ७९ ॥

सुगत एव विजित्य जितेन्द्रिय स्त्वदुरुकीर्त्तितनुं मदनाश्रयत् ॥ तव तनूमवशिष्टवतीं ततः समितिभूतमयीमहरद्धरः ॥ ८० ॥

सुगत इति ॥ सुगत एव बुद्ध एव त्वां विजित्य पराभूय तवोरुं महती कीर्त्तिरेव तनुः शरीरमनाश्रयत् नाश्रितवान् । यतो यस्मात् जितेन्द्रियो मन्मंमारबलं येनेत्यादिवचनात् ततोऽनन्तरं जितेन्द्रियो हरोऽवशिष्टवतीं भूतमयीं पञ्चमहाभूतनिर्मितां तव तनुं शरीरं समिति संग्रामेऽहरद्ददाहेत्यर्थः । कीर्त्तिरूपं शरीरं सुगतश्चेन्नानाश्रयिष्यत् तर्हि सर्वहर्ता हरो हर्तुं नाशक्ष्यत् स्मात्सर्वेषां वध्य इत्यर्थः । अयच भूतमयीमिति निन्दावाक्यम् ॥ ८० ॥

फलमलभ्यत यत्कुसुमैस्त्वया विषमनेत्रमनङ्ग निगृह्णता ॥ अहह नीतिरवाप्रभयात्ततो न कुसुमैरपि विग्रहमिच्छति ॥ ८१ ॥

फलमिति ॥ हे नङ्ग कुसुमैर्विषमनेत्रनिगृह्णतास्त्वयायत्फलमलभ्यंततः फलाद्भवाप्रभयाप्राप्तभयान्नीतिः कुसुमैरपिविग्रहंयुद्धंनेच्छति । पुष्पैरपिनयोद्धव्यं किंपुनर्निशितैःशरैरितिनीतिः । अनङ्गेतिनिन्दाविरोधस्तु अङ्गसहितेनक्रियनेत्वंपुनः स्वयमनङ्गोविषमनेत्रोनेतानायकस्तेन दुःसहेनविरोधंकृतवतस्तवमहन्मौढ्यं मित्यर्थः । नेत्रोनेतरिभिद्यतेइतिविश्वः ८१

अपि धयन्नितरामरवत्सुधां त्रिनयनात्कथमाप्थतां दशाम् ॥ भणरतेरधररसादरादमृतमाप्नुथ्न खलु नापिबः ॥ ८२ ॥

अपीति ॥ इतरामरवदिन्द्रादिवत्सुधामृतंधयन्पिबन्नपिस्त्वंत्रिनयनात्सकाशात्तांभस्मसाङ्गावरूपांदशांकेनप्रकारेण कथमाप्तवानसि । अमृतपानेनेन्द्रादिवत्त्वमप्यमरः कथनाभूदित्यर्थः । रतेरधरस्याधरोष्ठस्यरसेस्वादेआदरादतिसरामासक्तेर्हेतो रमृतसदृशमाधुर्याभावादाप्तासाधृत्वाणुगुण्यायेनैवंभूतः सन्खलुप्रायेणामृतंनापिबोनपीतवानसीतिभयाब्रूहिइति वाक्यार्थः । कर्मंखलुसंभावनायां याञ्ञोत्तमाधुर्यंलम्पटेनत्वयामारकत्वयामृतंनपीतं तेनेदृशीदशानङ्गत्वरूपाप्राप्ता । आपिथेति । थलिक्रादिनियमादिट् ॥ ८२ ॥

भुवनमोहनजेन किमेनसा तव परेतभुवपि शाचता । यदधुना विरहादिमलीमसामभिभवन्भ्रमसि स्मरमादृशाम् ॥ ८३ ॥

भुवनेति । हे परेतप्राप्तमरण स्मरभुवनमोहनाज्जातेनेनसापातकेनतवपिशाचतावजूवकिंव देत्यर्थः । यद्यस्मादधुनाविरहाधिनावियोगपीडयामलीमसांमलिनांमादृशांमादृशींस्त्रियमभिभवन्पीडयन् भ्रमसि । अन्योपिपरेतःपातकवशात्पिशाचः सन्बालकादीन्पीडयन्भ्राम्यतीति त्रिभुवनापकारी त्वादृशःकोपिनास्तीत्यर्थः । भ्रमसिव भ्रातीतिश्यन्विकल्पाच्छप् ॥ ८३ ॥

बत ददासि न मृत्युमपि स्मर स्खलति ते कृपया न धनुः करात् ॥ अथ मृतोसि मृते न च मुच्यते न किल मुष्टिरुरीकृतबन्धनः ॥ ८४ ॥

बतेति । हे स्मर त्वं छिलं न करोषि परं मृत्युमपि न ददासि बत कष्टं मरणोस तिपीडा नानुभूयेतेत्यर्थः । कृपया हेतुना ते कराद्धनुरपि न स्खलति पतति । कृपया पतितु युक्तं बतकष्टम् । कृपया मृत्युं न ददासि चेद्धनुः किमिति न त्यजसीत्यर्थः । जीवत एव कराकृपया धनुः पतति त्वं तु मृतः सन्कथं पतेत कृपाया अभावात् । अकृपयेति वा । धनुः पतनाभावे कारणमाह । अथ त्वं मृतोसि खलु मृतेन निश्चितमुररीकृतमङ्गीकृतवन्धनं यये नैवंविधो मुष्टिर्न मुच्यतेऽतः कराद्धनुर्न भ्रमयति । मुष्टिरुभयलिङ्गः । बन्धूरं बन्धुरं च स्यादूरीकृतमुरीकृतमित्यनेकार्थध्वनिमञ्जरी ॥ ८४ ॥

दृगुपहत्यपमृत्युविरूपताः शमयते ऽपरनिर्जरसेविनो ॥ अतिशयोन्ध्यवपुःक्षतिपाण्डुताः स्मर भवन्तिभवन्तमुपासितुः ॥ ८५ ॥

दृगिति । हे स्मर अपरे त्वदन्ये ये निर्जरा देवाः सूर्यादयस्तेषां सेविता पुरुषः सेवको दृगुपहतिर्नेत्रयोरान्ध्यमपमृत्युरकालमरणं विरूपता कुष्ठादिना वैरूप्यं च शमयते शान्तिं नयति । भवन्तं कामदेवमुपासितु सेवितुरतिशयेनान्ध्यं प्रतिपत्तिराहित्यं नेत्राराहित्यं च वपुःक्षतिः शरीरकार्श्यमकालमृत्युश्च वपुषः पाण्डुता विरहजनितपाण्डुरोगश्च एते भवन्ति । सूर्यादिभक्त्याऽन्यसर्वरोगोपशमने सामर्थ्यं भवति वियोगोपशान्तौ तव सामर्थ्यं नास्ति त्वद्भक्तस्य नास्त्यत्र किं वाच्यमेवंविधस्त्वं देव इत्युपहासः । अपरनिर्जरान्सेवते तच्छीलस्तस्य भावस्तत्ता सा कर्त्री अन्यदेवसेवनमिति वा । अपमृत्युश्च विरूपता चेति पूर्वं द्वन्द्वः कार्यस्ततः पूर्वेण । शमयते णिच श्चेति तङ् । अमन्तत्वान्मित्वे ह्रस्वः । सेविता तृच् । अपरनिर्जरसेविनेति अवतरत्वबोधिकेति वत्समासः । द्वितीयपक्षे ताच्छील्ये णिनिस्तस्माद्भावप्रत्ययः । अतिशयपदस्य प्रत्येकं संबन्धः । क्षयश्च पाण्डुता च क्षयपाण्डुते इति षष्ठीसमासं कृत्वा पूर्वेण समासः । अन्यथा पाण्डुताशब्दस्य पूर्वनिपातः स्यात् । उपासितुरिति तृजन्तयोगाद्

वन्तमितिद्वितीया ॥ ७५ ॥

स्मर नृशंसतमस्त्वमतोविधिः सुमनसः कृत
वान् भवदायुधम् ॥ यदि धनुर्दृढमाशुग माय
सं तव सृजेत्प्रलयं त्रिजगद्व्रजेत् ॥ ८६ ॥

स्मरेति । हेस्मरत्वंनृशंसतमः अतिशयेनहिंस्रोऽतःकारणाद्विधिः सुमनसःपुष्पाणिभवदायुधंकृतवान् । अन्नायदितवधनुःदृढंकठिनमाशुगंबाणमयलोहमयंचेत् सृजेत्तर्हित्रिजगत्प्रलयंव्रजेत् । अथचतवदुष्टमनस्त्वाद्धभवदायुधस्यसुमनस्त्वंकृतंविधिना । नृशंसोघातुकःक्रूरइत्यमरः । हिंसार्थाच्छंसेः कर्मण्यण् । आयसंविकारेरजतादित्वादञ् । त्रयाणांजगतांसमाहारइति द्विगौरेकवचनेनंपुसकत्वे चत्रिजगदितिसाधुः ॥ ७६ ॥

स्मररिपोरिवरोपशिखी पुरां दहतु तेजगतामपि
मात्रयम् ॥ इति विधिस्त्वदिषून् कुसुमादि किं
मधुभिरन्तरसिञ्चदनिर्वृतः ॥ ८७ ॥

स्मररिपोरिति । हेस्मरतेतवापिरोपशिखीबाणाग्निर्जगतांत्रयंमादहतु । माधाक्षीदितिहेतोरनिर्वृतः सेविलःसन्शङ्कितोविधिः कुसुमानिइषून्मधुभिर्मकरन्दैरन्तर्मध्येऽसिञ्चत् सिक्तवान्किम् । कःकमिव स्मररिपोर्हरस्यरोपशिखीपुरत्रयमिवसयथापुरत्रयंददाह तथालवापीतिसिक्तंवपुर्दाहसमर्थंनभवतीतिभावः । मादहतुनिषेधार्थवाचिनिरनुबन्धकमाङ्योगेलोट् ॥ ८७ ॥

विधिरनंशमभेद्यमवेक्ष्यते जनमनः खलु लक्ष्य
मकल्पयत् ॥ अपि स्वजमदास्यत चेत्तदा त्व
दिषुभिर्व्यदलिष्यदसावपि ॥ ८८ ॥

विधिरिति । विधिरणुपरिमाणत्वान्निरंशं निरवयवमतएवा भेद्यंजेतुमशक्यंजनमनोवेत्यखलुनिश्चितं तेलक्ष्यंतेवेध्यमकल्पयत् । अपिः संभावनायांसब्रह्मावज्रमपीन्द्रायुधंहीरकंचेददास्यत अकल्पयिष्यत् । तदाऽसावपिवज्रोपित्वदिषुभिस्त्वद्बाणैर्व्यदलिष्यद्विदीर्णोऽभविष्यदितिसंभाव्यते । त्वादृशोहिंस्रःकोपिनेत्यर्थः । क्रियातिपत्तौलृङ् । वज्रोऽस्त्रीहीरकेपवाविस्यमरः ॥ ८८ ॥

अपि विधिः कुसुमानि तत्राशुगान्स्मरविधाय ननिर्वृतिमाप्तवान्॥ अदितपञ्चहिते स नियम्य तांस्तदपितैर्वत जर्जरितं जगत्॥ ८९ ॥

अपीति । हेस्मर विधिः कुसुमानितवाशुगान्विधायापिनिर्वृत्तिंसुखंना प्तवान् । अतःसत्रस्तान् कुसुमरूपान्बाणान्नियम्यगणयित्वा पुञ्चहि पञ्चैवतेतुभ्यमदित नत्वधिकान्स्तैरपि तथापि पञ्चसंख्याकैर्बाणैर्जगत्रि लोकीजर्जरितंखण्डितंतवकष्टमतिहिंस्रो ऽसीतिभावः ॥ ८९ ॥

उपहरन्ति न कस्य सुपर्वणः सुमनसः कति प ञ्चसुरद्रुमाः । तव तुहीनतया पृथगेकिकां धि गियतापि नतेऽङ्गविगर्हणा ॥ ९० ॥

उपेति । हेकामपञ्चसंख्याकाःसुरद्रुमाःमन्दारादयः कस्यसुपर्वणोदेव मात्रस्यविशिष्टस्यसुतरांकतिसुमनसः पुष्पाणिनउपहरन्तिउपायनानिकुर्व न्ति असंख्याताः सुमनसःप्रयच्छन्ति देवस्यापितवतुपुनर्हीनतयानिकृष्टत्वे नावज्ञया पृथक्प्रत्येकमेकिकामेकंपुष्पप्रयच्छन्ति । अतएवपञ्चबाणत्वम ङ्गस्योपहासमामन्त्रणे इयतापिधिक्कारेणतेविगर्हणाल्लज्जानअतएवधि क्कमित्यर्थः । निर्लज्जोनिःस्पृहस्त्वमित्यर्थः । अङ्गविदारणमितिपाठेहृदय स्फोटोनभवतीत्यर्थः । सुमनसःशब्दस्यस्त्रीलिङ्गबहुवचनान्तत्वेपि अर्था देकत्व.देकिकामित्येकवचनम् ॥ ९० ॥

कुसुममप्यतिदुर्णयकारिते किमु वितीर्य धनुर्वि धिरग्रहीत् ॥ किमकृतैष तवैकतदास्पदे द्वयमभू दधुना हि नलभ्रुवौ ॥ ९१ ॥

कुसुममिति । विधिःकुसुमरूपं धनुस्तेतुभ्यंवितीर्यदत्वापुनरग्रहीद्गृ हीतवान्किमु । यतोदुर्नयकारित्रिजगज्जयकारित्वादतिदुर्विनीतं कि ञ्चितिप्रश्नेसंभावनायांवास्वयमेवपुनराहृतेति- धनुर्विरपविधिस्तवकिम कृत । अपितुकिमप्यपकारंकर्तुंसमर्थोनाभूदित्यर्थः । हियस्मादधुनाधनुष्य पहृते प्येकतदास्पदेएकंचतच्चएककंतत्तस्यधनुषआस्पदेनलभ्रुवोर्द्वयमभू त् । तवधनुर्द्वयलाभात्तेनतवोपकारएवकृतो नत्वपकारोविधिनापरोपका

रार्थधनुष्टं तंपरंस्त्रीक्राभाग्येनविपरीतं जातमितिभावः । दुर्णयेइतिनयस गांद्समासेपीतिणत्वं यदिदुर्नयइतिपाठस्तदोपसर्ग प्रतिरूपकत्वाद्‌णा त्वाभावः ॥ ९१ ॥

पद्रुतवः कृपया स्वकमेककं कुसुममक्रमनन्दितनन्दनाः ॥ ददति यद्भवते कुरुते भवान्धनुरिवैः कमिपूनिव पञ्चतैः ॥ ९२ ॥

पदिति । अक्रमंक्रममुल्लङ्घ्यैवनन्दितंवर्धितं नन्दनमिन्द्रधामयैस्तेषड् पिऋतवःस्वकंस्वीयमेकमेकैकं कुसुमंपुष्पंकृपया नतुभीत्यानचप्रीत्याजय तेतुभ्यंददतिदत्तवन्तो भवांस्तैःपड्भिः कुसुमैः कृत्वाएकंपुष्पंधनुरिव पञ्चपुष्पाणिइषूनिवकुरुते भिन्नगणात्वयाऋतवःषट्पुष्पाणि याचितास्तै स्त्वयाविभज्यधनुर्बाणायकृताः । अनिर्दरिद्रेणजिनयाप्राप्तं स्वल्पमपिव स्तुविभज्यानेनैतत्कर्तव्यमनेनैतत्कर्तव्यमितिहिमनोरथः क्रियतइतिनी किक्युक्तिसूचनार्थमुभयत्रापीवशब्दप्रयोगः ॥ ९२ ॥

यदतनुस्त्वमिदं जगतेहितं क्व स मुनिस्तव यः सहतेहतः विशिखव्याश्रवणपरिपूर्यं चेद्विचलद्भुजमुज्झनुमीशिषे ॥ ९३ ॥

यदिति । हेस्मर यत्त्वमतनुःशरीररहितोमिदं जगतेभवंल्लोकायहितं शरीरत्वेतुत्वंविशिखंबाणमाश्रवणमाकर्णपरिपूर्याकृष्टंविचलद्भुजंयथास्या देवंबाणमुज्झितुंत्यक्तुमीशिषेसमर्थःस्याः तर्हियस्तवहननीयांतान सहते समुनिःक्वत्वद्बाणपीडामसहोमुनिरपिनविद्यते अन्योनास्तीतिकिंवाच्यं न स्मात्तवाशरीरत्वेलोकस्याग्यंकरणं । हितयोगेचतुर्थी, मम नविधानमाम ध्यांज्जगतइतितद्योगेचतुर्थी । ईशःसेइत्निइटिईशिषेइतिरूपम् ॥ ९३ ॥

सह तया स्मरभस्म झटित्यभूःपशुपतिं प्रतियामिषुमग्रहीः ॥ ध्रुवमभूदधुना वितनोः शरस्तव पिकस्वर एव स पञ्चमः ॥ ९४

सहेति । हेस्मरत्वंपशुपतिंप्रतिलक्षीकृत्यतद्वधार्थंयांमिषुमग्रहीस्तयाम हझटितिभस्माभूः । जीवपानकेनशिवेनास्मदादिहितायमवानस्मीकृत्य

इतिभावः । वितनोः शरीररहितस्यतवाधुनापिकस्वरएवकोकिलशब्द एवसः पञ्चबाणांपूरणः शरोऽभूत् । ध्रुवसुरप्रेङ्के । अशरीरत्वेपञ्चबाणत्वंत थस्थितमेवेत्यर्थः । पञ्चमंप्राहकोकिलइतिशब्दछलं हरेणादग्धेस्मरेतस्या नेपञ्चमस्वरएवजातः । पञ्चोरोपइषुद्वयोरित्यमरः ॥ ९४ ॥

स्मर-समहरितैरफलीकृतो भगवतोपि भवद्दह नभ्रमः ॥ सुरहिताय हुतात्मतनुः पुनर्ननु तनुर्द्वि वितन्द्वणमापिथ ॥ ९५ ॥

स्मरेति । हेस्मरसभगवतोपिहरस्यापि भवद्दहनेभवद्दाहेभ्रमोमहुरिति नेमैवपातकैरफलीकृतः । विफलत्वमेवाह । ननुयस्मात्सुराणांहितायहु तात्यक्तात्मतनुः स्वशरीरयेनैवंविध-स्त्वंतत्प्रसादात्तापणं तत्कालमेवदि विपुनर्जनुर्जन्मआपिथप्राप्तवानसि । नहिपापिनःस्वर्गेजन्म तवतुपरो पकारित्वात्स्वर्गेजन्म । सुरहितायचतुर्थीतदर्थंइतिसमासः ॥ ९५ ॥

विरहिणोविमुखस्यविधूदये शमजदिकपवनःसन् दक्षिणःसुमनसोनमयन्नटनोधनुः स्तवतुबाहुरसौ यदिदक्षिणः ॥ ९६ ॥

विरहिणइति । विधूदयेचन्द्रोदयेविमुखस्यदुःखितस्यविरहिणः सम मनदिकपवनोमलयानिलोदक्षिणः सुखकारीनकिन्तुवामोवक्रएव प्रथमंवि रहाद्दुःखंततश्चन्द्रोदयस्ततोमलयानिलादितिभावः । पूर्णचन्द्रस्यदुःखका रित्वाद्विमुखस्यपश्चिमाभिमुखस्य विरहिणोदक्षिणदिकपवनो दक्षिणःस व्योपि भवतिकिंतुवामएवपश्चिमदिङ्मुखस्यदक्षिणोवामएवेत्यर्थः । मल यानिलस्यप्रसिद्धंदक्षिणत्वं कथमपलप्यतइत्याशङ्क्याह । यद्यसौमलयानि लोदक्षिणएवेत्यभिमानस्तर्हि सुमनसोधनुःपुष्पमयचापमटनोऽग्रेनम यन्नम्रीकुर्वंस्तवबाहुरेवतुरेवार्थः । यथातवबाहुर्विरहिणोदुःसहस्तथा मलयानिलोपिविरोधिलक्षणायां उभावपिदुःसहावित्यर्थः । मलयानिलो प्यग्रेसुमनसःपुष्पाणिनमयति नमासूतितिवाशमयतेसर्वान्मारयति त द्विमबोवायुरपितथैव अथचदक्षिणःप्रहरणकुशलोधर्मयोद्धा नपराङ्मुख स्यापिहननमादतोदक्षिणत्वेनसिद्धो विरहिणांशत्रुरेवेत्यर्थः ॥ ९६ ॥

किमु भवन्तमुमापतिरेकमदमुदान्धमयोगिजनान्तकम् ॥ यदजयत्तत एव न गीयते स भगवान्मदनान्धकमृत्युजित् ॥ ९७ ॥

किम्विति । उमापतिः शिवो मदमुदान्धं गर्वहर्षाभ्यामन्धं अयोगिजनानां वियोगिजनानामन्तकं यमतुल्यं भवन्तं मदनं यदजयज्जितवांस्तत एव हेतोः किमु स भगवान्हरो मदनान्धकमृत्युजिन्न गीयते अपि तु तत एव कीर्त्यते । एकस्यैव जयान्मदनजिदन्धकजिन्मृत्युजिदिति नामत्रयं प्राप्तवान् मदनस्यान्धत्वं मृत्युत्वमिति धर्मत्रयं त्वयि विद्यते । अन्धकासुरमृत्युमदनानां जिदपकारस्त्वमित्यर्थः ॥ ९७ ॥

त्वमिव कोऽपि परापकृतौ कृती न ददृशे न च मन्मथ शुश्रुवे ॥ स्वमदहो दहनाज्ज्वलतात्मना ज्वलयितुं परितश्च जगन्ति यः ॥ ९८ ॥

त्वमिति । हे मन्मथ परापकृतौ परापकारविषये त्वमिव त्वत्सदृशः कोऽपि कृती कुशलो न ददृशे न दृष्टः । न च शुश्रुवे न श्रुतश्चोऽप्यर्थः । कथमित्यत आह । यस्त्वं ज्वलतात्मना स्वरूपेण जगन्ति त्रिभुवनानि परितः आलिङ्ग्य ज्वलयितुं दहनाद् हरनयनाग्नेर्हेतोः स्वमात्मानमदहोऽधाक्षीः । ज्वलतस्तव संबन्धात्त्रिभुवनं ज्वलतीत्यर्थः । परापकारार्थमात्मापि येन दग्ध एवंविधस्त्वं कुशल इत्युपहासः ॥ ९८ ॥

त्वमुचितं नयनार्चिषि शंभुना भुवनशान्तिकहोमहविष्कृतः ॥ तव वयस्यमपास्य मधुं मधुं हतवता हरिणा बत किं कृतम् ॥ ९९ ॥

त्वमिति । हे काम त्वं शंभुना नयनार्चिषि उचितं योग्यं भुवनशान्तिकहोमार्थं लोकपीडाशान्तिप्रयोजनकहोमार्थं हविष्कृतो महामायादिपीडाशान्त्यर्थं वह्नौ होमार्थं हविर्भवति । त्वज्जनितपीडाशान्त्यर्थं त्वं नयनवह्नावुचितं हविस्तेन प्रक्षिप्त इत्यर्थः । त्वं नयनवह्नौ हविष्कृतमेतदुचितं कृतमिति । शं भवत्यस्मादिति शंभुपदेन सूचितम् । हरिणा विष्णुना तव वयस्यं मित्रं मधुं वसन्तमपास्य परित्यज्य मधुं मधुनामानं दैत्यं हतवता किं कृतं न किम

पीत्यर्थः । अतिपीडाकारिणंवसन्तमुपेत्य दैत्यंहतवताहरिणाकिमपिनो कृतमितिभावः । बतकष्टंकिंकृतकुत्सितंकृतमितिवा । शान्तिःप्रयोजनमस्येतिशान्तिकः । प्रयोजनमितिठक् ॥ ९९ ॥

इतिविषद्वचसैवभृशंप्रियाधरपिपासुतदाननमाशु तम् ॥ अजनिपांसुलमप्रियवाग्ज्वलन् मदनशोषणबाणहतेरिव ॥ १०० ॥

इतीति । प्रियस्तनलस्याधरपिपासुअधरचुंबनाभिलाषितःप्रसिद्धं विरूपाक्षुरेतस्याआननमिति पूर्वोक्तेनकियद्वचसाल्पेनैववचनेन आशुशीघ्रं पांसुलमतितरांशुष्कमजनिजातं साकल्येनवक्तुंसमर्थनाभूदित्यर्थः । यद्वा पिपासुतदल्पवचनेनैवशुष्ककण्ठंभवति तत्प्रेक्षते अप्रियवाचासनिन्द्वचनेनज्वलनक्रुद्धोमदनस्तस्यशोषणबाणेन शोषणाख्येनशरेणयाहतिर्हननंतस्मादिवशोषणबाणहतं सच्छुष्कंजातमित्यर्थः । अधरपिपासुप्रभृतीनांगम्यादियोगात्समासइतिवामनाचार्यवचनाद्द्वितीयासमासः । पांसुशब्दःसिध्मादिः ॥ १०० ॥

प्रियसखीनिवहेनसहार्द्धया व्यरचयद्गिरमर्धसमस्यया ॥ हृदयमर्मणिमन्मथसायकैः क्षततमाबहुभाषितुमक्षमा ॥ १०१ ॥

वक्रोक्तिं जल्प्यातांव्यञ्जयितुमुपक्रामति । प्रियेति । अथानन्तरंसाभैमीप्रियसखीनिवहेनस्वरहस्यवादिस्निग्धस्त्रीयसमूहेन सहार्धयासखीभाषितसमस्यया प्रत्युत्तररूपेण उत्तरार्द्धपरिपूरणेनगिरव्यरचयत् । अर्द्धसख्यः पूर्वमूचुः । अनन्तरभैम्युवाचेत्यर्थः । एवंकिमित्युवाचेत्यतआह । किंभूतासाहृदयमर्मणिहृदयलक्षणमर्मस्थाने मन्मथसायकैः क्षततमातितरांविद्धातएवबहुभाषितुमक्षमाऽसमर्था । समस्यातुसमासार्थाइत्यमरः । अपूर्णत्वाद्विप्रिसमस्यतेनयेतिसमस्यावाहुलकात्संज्ञायासमजेतिक्यप् १०१ ॥

अकरुणादवसूनशरादसून् सहजयापद्विधीरतयात्मनः । असवएवममाद्यविरोधिनःकथमरीन्सखिरक्षितुमात्थमाम् ॥ १०२ ॥

अकरुणादिति । हेभैमित्वमकरुणान्निर्दयात् सूनशरात्कामात्सकाशा दापदिसहजयास्वाज्ञाविकयाधीरतया धैर्येणात्मनोऽऽवरक्ष विपदिधैर्यं वचनादितिसखीवचनम् । हेसखिसमाद्यसवएवप्राणाएव विरोधिनो वैरिणस्त्वमरीन् रक्षितुकथंसमात्यनूनवैरिणोरक्षणीयाइति उदासीनोप दिशतिकिंपुनर्मित्रमितिजैमीवचः प्राणेषुगतेषुमेमसुखंस्यादित्यर्थः । सून शराद्भीत्रेत्यपादानत्वम् ॥ १०२ ॥

हितागिरंनशृणोषिकिमाश्रवे प्रसभमप्यवजीवित मात्मनः ॥ सखिहितायदिमे भवसीदृशी मदरि मिच्छसियाममजीवितम् ॥ १०३ ॥

हितेति । हेसखिआश्रवेसर्वदाअस्मद्वचनकारिणिहितांमांमादृशीनां हितांगिरंकिंनशृणोषि । अपितुआकर्णय । यद्यप्यतिपीडाभवति । त थापिआत्मानंसर्वथागोपायेदितिश्रुतेः । प्रसभंबलात्कारेणापिधैर्यमवलं ब्यात्मनोजीवितमव्रति अन्यसखीवचः । हेसखियात्वंमदरिमच्छत्रुभूत ममजीवितमिच्छसिईदृशीयदि त्वं हितामेभवसि किं हितानभवस्येवस खीत्वादेतादृशंवक्तुमनुचितमितिभावः । मेषतुर्थीहितशब्दप्रयोगइति वा ॥ १०३ ॥

अमृतदीधितिरेषविदर्भजे भजसितापममुष्यकि मंशुभिः । यदिभवन्तिमृताः सखि चण्डिकाःश शभृतः कृतदापरितप्यते ॥ १०४ ॥

अमृतेति । हेविदर्भजेएषपुरोवर्ती अमृतदीधितिरमुष्यांशुभिः सुधा मयैःकिरणैस्तापदाहंकिंभजसि । इत्यन्यसखीवचः । क्लेनोत्तरमाह हे सखिशशभृतःकलङ्किनश्चन्द्रिकाः यदिमृताभवन्तिकस्तपवस्तदाककुतोहे तोः परितप्यतेसंतप्यतेकारणान्तराभावात्संतापोनभवेदितिजैमीवच १०४

व्रजेति । हेजैमीत्वं धृतिधैर्यंव्रजाङ्गीकुरु । सूर्यबुध्यानिन्द्यामहेतुकाम कारणिकांभीतिंत्यज । अयमचंडमरीचिश्चन्द्रचंद्रस्त्वतिउदेतीतिसखीव चः । उत्तरंहेसखिअयमातपमसुरैरुणरूपकरीपाग्निकणैः स्फुटमांज्वल यति । त्वं वचसानुभवलुम्पसि । वचनादनुभवोवलीयानित्यर्थः । मुर्मुर स्तुषवह्नौस्यादितिविश्वः ॥ १०५ ॥

व्रजधृतिं त्यज भीतिमहेतुकामयमचण्डमरीचिरुदञ्चति ॥ ज्वलयति स्फुटमातपमुर्मुरैरनुभवं वचसा सखिलुम्पसि ॥ १०५ ॥

अयि शपे हृदयाय तवैव तद्यदि विधोर्न रुचेरसि गोचरः । रुचिफलं सखि दृश्यत एव तत्ज्वलयति त्वचमुल्ललयत्यसून् ॥ १०६ ॥

अयीति । अयि सैमियदित्वं विधोश्चन्द्रस्य रुचेर्दीप्तेर्गोचरो विषयो न । स्थितर्हि तवैव हृदयाय शपे त्वद्धृदयं शपामि ॥ चन्द्र एवायं न तु सूर्य इति शपथः क्रियते । अपीति पाठे सत्यप्यर्थे तव विश्वासार्थं शपे शपथमपि करोमीत्यर्थः । छलेनोत्तरमाह । हे सखि रुचेः फलं दृश्यत एव त्वचं चलयति । असून् उल्ललयति उन्मूलयति त्वया सत्यमुक्तं रुचिफलं शरीरज्वलनं प्राणोन्मूलनञ्च लक्षणा रूपस्तेजसः स्वभाव इति भावः । शपे शपउपालम्भ इति वक्तव्यात् हृदयायेत्यत्र श्लाघह्नुङिति चतुर्थी ॥ १०६ ॥

विधुविरोधितिथेरभिधायिनीमपि न किं पुनरिच्छसि कोकिलम् ॥ सखि किमर्थगवेषणया गिरं किरति सेयमनर्थमयीमपि ॥ १०७ ॥

विधिवति । विधुविरोधितिथेश्चन्द्रशत्रुतिथेरमावास्याया अभिधायिनीमपि कुहूशब्दं कुर्वतीमपि कोकिलां पुनः किमिति नेच्छसि । अपितु चन्द्रशत्रुत्वात्माननीयेयम् । उत्तरं हे सखि कुहूशब्देनामावास्यायाता मा ह्वयते इत्यर्थगवेषणया अर्थविचारणया किम् अयस्मात्सेयं कोकिला समपि मह्यिपये अनर्थमयीममावास्यालक्षणार्थशून्यामथ दुःसहादुःखप्रचुरां गिरं किरति प्रवदति शब्दमात्रमेतत् नतु तामाह्वयतीति विज्ञेयमिति भावः ॥ १०७ ॥

हृदय एव तवास्ति स वल्लभस्तदपि किं दमयन्ति विषीदसि ॥ हृदि परं न बहिः खलु वर्त्तते सखि यतस्तत एव विपद्यते ॥ १०८ ॥

हृदयइति । हे दमयन्ति यद्यपि स वल्लभो हृदय एवास्ति तदपि तथापि किं विषीदसि खेदं कुरुषे अपि तु खेदो न करणीय इति सखीवचः । हे सखि यतः

सहृद्येवपरंवर्त्ततेबहिःखलुनिश्चयेननवर्त्ततेततएवतस्मादेवविपद्यनेविपादः क्रियतइत्युत्तरम् ॥ १०८ ॥

स्फुटति हारमणौमदनोष्मणाहृदयमप्यनलङ्कृतमद्यते॥ सखिहतास्मितदार्यदिहद्यपि प्रियतमःसममव्यवधापितः ॥ १०९ ॥

स्फुटतीति । मदनोष्मणामदनजनितवियोगानलेनहारेविद्यमानोयोमणिनायकस्तस्सहितइत्यर्थः । तस्मिन्स्फुटतिविदीर्यमाणेसति अद्यतेहृदयमपिअनलंकृतंनभूषितमलंकाररहितंजातमितिवासखीवचः । सुखादितुप्रागेवभूषारहितंजातमित्यपिशब्दार्थः । हेसखियदिसममप्रियतमोहृद्यपिअव्यवधापितोऽन्तर्धापितस्तर्हिहतास्मि । अनलंनलरहितंहृदयंकृतमितित्वयोक्तं । हृदयादप्यपाकृतः प्रेयानितिच्छलेनभैमीवचः । दधातेर्णावर्तीत्यादिनापुकिव्यवधापितः । निष्ठायांसेटीतिणिचोलोपः १०९॥

इदमुदीर्यतदैवमुमूर्छसा मनसिमूर्छितमन्मथपावका ॥ क्व सहतामवलंबलवच्छिदा मनुपपत्तिमतीमतिदुःखिता ॥ ११० ॥

मूर्छामाह । इदमिति । मनसिमूर्छितःप्राप्तवृद्धिर्मन्मथएवपावकोयस्याः साभैमीइदंपूर्वोक्तमुदीर्योक्त्वातदैवतत्कालमेवमुमूर्छनवमीमवस्थांप्राप । अनलंकृतमित्यत्रअलीकयानलरहितार्थप्रतीत्याकथंमूर्छांप्रापइत्याशङ्कार्थान्तरन्यासमाह । अतिदुःखितासानुपपत्तिमतीमघटमानामलीकामपि अवलम्बस्यनललक्षणस्यजीवनाधारस्ययोलवोलेशस्तस्यच्छिदात्रुटिस्तांक्वकुतः सहतांसोढुंशक्तास्यात् । नकुतोऽपि । दुःखितःस्वदुःखहेतोरलीकत्वंनविचारयति । अलीकमेवनलराहित्यंविचार्यैवमपिमूर्छांप्रापेतियुक्तमेवमपीतिपाठः ११० ॥

अधितकापि मुखे सलिलैः सखी प्यधितकापि सरोजदलैः स्तनौ । व्यधितकापि हृदि व्यजनानिलंन्यधितकापिबिसंसुतनोस्तनौ ॥ १११ ॥

अधितेति । कापिसखीसुतनोरतिकृशायाभैम्यामुखेसलिलमधितधि

क्षिपे । काचिकाचित्सखीसरोजदलैस्तनौव्यधितच्छादितवतीकाचिद्
दिव्यजनानिलंव्यधितचकार । काचिच्चहिमंचन्दनंतनौशरीरेन्यधितनि
क्षिप्तवती । चन्दनेचहिमंविदुरितिविश्वः । विसमितिपाठः ॥ १११ ॥

उपचचार चिरं मृदुशीतलैर्जलजनालमृणालदला
दिभिः ॥ प्रियसखीनिवहः स तथाक्रमादियमवा
प यथालघुचेतनाम् ॥ ११२ ॥

उपचचारेति । सप्रियोहित सखीनिवहः मृदुभिःकोमलैःशीतलैर्हिमैश्च
जलजैःकमलैःनालैःमृणाललताभिर्विंषैः जलचन्दनव्यजनानिलाद्यैरचिर
कालंक्रमात्परिपाल्याजैमींतथाउपचचार । यथेयंलघ्वीमल्पांचेतनामवा
पलघुशीघ्रम् ॥ ११२

अथ कले कलय श्वसितिस्फुटं चलतिपक्ष्मचलेप
रिभावय ।अधरकम्पनमुन्नयमेनके किमपिजल्प
तिकल्पलते शृणु ॥ ११३॥ रचय चारुमतिस्तनयो
र्वृतिं कलय केशयमसंयतमायतम् ॥ अवगृहाणतर
ङ्गिणिनेत्रयोर्भरभरावितिशुश्रुविरे गिरः॥११४॥

अथेति । रचयेतियुग्मं । अथानन्तरंकन्यान्तःपुरेइतिसखीनांपर
स्परगिरावाचोवहिर्देशस्थैः शुश्रुविरेआकर्णिताः । इतिकिं कलेइत्यादीनि
भैमीसखीनामानि हेकलेसखिइयंभैमीस्फुटप्रकटश्वसितिजीवतीति कल
यविचारय । हेचलेसखिपक्ष्माक्षिलोमचलतिपरिज्ञावयविचारय । पक्ष्मचल
नमपिजीवनचिह्नम् । हेमेनकेसखिअधरकम्पनमोष्ठस्फुरणमुन्नयतर्कय । क
ल्पलतेसखिइयंकिमपि अस्पष्टंस्वल्पचजल्पतिवदतिइतिशृणु । एवंजीव
नज्ञानानन्तरंहेचारुमते सखिस्तनयोर्विवृतिसावरणंरचयकुरु । तयोरे
वावृतत्वनजानाति । हेकेशिनिसखिअसयतं अनियद्धकेशयंकेशसमूहंक
लयबधान त्वंकेशकर्मजानासियतः । हेतरंगिणिसखिनेत्रयोर्भरभरौबाष्प
प्रवाहौअवगृहाणावग्रहंकुरु । तरङ्गिण्याजलचरावग्रहःसंभाव्यतइति ।
अभिनिरुदादिभ्यइतिइट् । कैशयकेशसमूहंकेशाभ्यामितियत् ॥ ११३ ॥
॥ ११४ ॥

कलकलः सतदालिजनाननादुदलसद्विपुलस्त्वरितैरितैः ॥ यमधिगम्य सुतालयमीयिवान्धृतदरः सविदर्भपुरंदरः ॥ ११५ ॥

कलकलइति । त्वरितैः कलेइत्यादिशीघ्रवचनैर्विपुलोमहान् कलकलःकोलाहलस्तस्याभैम्याआलीजनस्याननादुदलसत् । कुमार्याःकिंजातमितिधृतदरोजातभयःसविदर्भपुरंदरोभीमोयकोलाहलमधिगम्याऽकर्ण्य सुतालयमीयिवानागतवान् त्वरितानांबालकानामीरितैर्वचनैर्यमाकर्ण्येतिवा ॥ ११५

कन्यान्तःपुरबाधनाय यदधीकारान्नदोषा नृपं द्वौ मन्त्रिप्रवरश्च तुल्यमगदंकारश्च तावूचतुः ॥ देवाकर्णय सुश्रुतेन चरकस्योक्तेन जानेऽखिलं स्यादस्या नलदं विना न दलने तापस्य कोपिक्षमः ॥ ११६ ॥

कन्येति । तौद्वौतुल्यंसमकालंशब्दसारूप्यात्सामान्यं नृपंऊचुः । कौद्वौ । मंत्रिप्रवरश्चागदंकारोवैद्यश्च । तौकौययोरधीकारात्स्वास्थाननियोगात्पुरुषादिभ्योरोगादि यंकन्यान्तःपुरस्यबाधनायनिन्दायैअथचकन्याया अन्तःपुरस्यमध्येबाधन पीडाल्मैदोषाव्यभिचाराद्योरोगाश्च नसमर्थाभवन्तीत्यर्थः । किमूचतुस्तत्राह । हेदेवराजन्नाकर्णयत्वंशृणुसुश्रुतस्य अन्तःपुरस्यादिद्वाराविचारकस्यचरकइवचरकुस्तस्यदूतस्योक्तेनवचनेनाखिलंरहस्यजाने । किंरहस्यंनलदंविनानलनामकराजप्रदपुरुषविनाऽस्याःतापस्यसंतापस्यदलनेनाशेकोपिक्षमः शक्तोनस्यात् नभवति । इतिमन्त्रिवचोदूतमुखान्मयाश्रुततस्या नलेऽनुरागस्तदप्राप्तिजनितोयमस्याःसंतापस्तदप्राप्तौननश्येदित्युपायरचयेत्यर्थः ॥ अस्यास्तापस्यनवज्वरस्य शमनेनलदंविनोशीरंविनान्योपि क्वाथादिस्तापशमयितुंक्षमोनेति सुश्रुताख्यवैद्यकग्रन्थेनतथाचरकनाम्नश्चायुर्वेदवचनेन तत्प्रणीतवचनेनग्रन्थेन अखिलं निदानचिकित्साजाने इत्यगदंकारवचनम् । अथचकोपिन्नस्नापिनक्षम आकस्मिकश्रवणादाकुलस्यराज्ञोन्तःपुरेमन्त्रिवैद्ययोःप्रवेशोयुक्तइतिनका

पिञ्जनीरिति । पुरपुरिशरीरेचेतिविश्वः । कन्यायाःप्रथमवयोवाचित्वेपि कन्यायाः कनीनचेतिनिर्देशान्ङीबभावः । अधिकारात्तूपसर्गस्यघञ्य मनुष्यइतिदीर्घः ॥ ११६ ॥

ताभ्यामभूद्युगपदप्यभिधीयमानं भेदव्यपाकृति मिथःप्रतिघात एव । श्रोत्रे तुतस्य पपतुर्नृपते न किंचिद्भैम्यामनिष्टशतशङ्कितयाकुलस्य ॥ ११७॥

ताभ्यामिति ॥ ताभ्यांमन्त्रिवैद्याभ्यांयुगपदेककालमभिधीयमानभेदस्य शब्दस्वरूपविशेषस्य अपाकृतिर्निराकरणंयत्राभिन्नरूपमेवविधमपि वचनमिथःपरस्परप्रतिघातोयत्रैवविधंपरस्परमिश्रमेवाभूत । भैम्यामनिष्टशतशङ्कितयाअनर्थपरम्परासम्भावनयाआकुलस्य तस्य नृपतेःश्रोत्रेकर्णौतुपुनःकिञ्चिदेकस्यापि वचननपपतुःशुश्रुवतुः । भीमोभैम्यवस्थयातितरामाकुलोऽभूदित्यर्थः ॥ ११७ ॥

द्रुतविशसितविप्रयोगचिह्ना मपितनयां नृपतिः पदप्रणम्राम् ॥ अकलयदसमाशुगाधिमग्नांझटितिपराशय वेदिनोहि विज्ञाः ॥ ११८ ॥

द्रुतेति ॥ नृपतेःराज्ञआगमनमाकर्ण्यद्रुतंशीघ्रं विशसितदूरीकृतं विप्रयोगचिह्नं मृणालदलादियैवविधांपदप्रणम्रांचरणपतितांतनयामसमाशुगःकामस्तज्जनितआधिःपीडातत्रमग्नामकलयत् । चिह्नाज्ञावेकथज्ञातवानित्यत आह । हियस्माद्विज्ञालारोझटितिशीघ्रं परेषामाशयवेदिनोभिप्रायज्ञाज्ञवन्ति चिह्नं नविनापीत्यर्थः ॥ ११८ ॥

व्यतरदथ पिताशिषं सुतायै नतशिरसे सहसोन्नमय्यमौलिम् । दयितमभिमतं स्वयंवरे त्वं गुणमयमाप्नुहि वासरैः कियद्भिः ॥ ११९ ॥

व्यतरदिति ॥ अथ प्रणामानन्तरपिताभीमोनतशिरसेनतमूर्ध्न्यैसुतायैकन्यायैभैम्यैआदरातिशयात्सहसाशीघ्रं हस्ताभ्यां मौलिंमस्तकमुन्नमय्योच्चैःकृत्वा इतिआशिषव्यतरत् । इतिकिंहेस्वयंवरेस्वयंवृणुतइतिस्वयंवरातस्यसम्बोधनं हे पुत्रि अथच स्वयंव्रियतेऽस्मिन्नितिस्वयंवरोराजसमाज

स्तन्मध्ये वा त्वकियद्भिःस्वल्पैर्द्वित्रैरेव वासरैर्दिवसैर्गुणमयंबहुगुणमभि
मतस्त्वेप्सितंदयितवल्लभमाप्नुहिलभस्वेतित्वदिष्टएवगुणमयइत्यर्थः ११९

तदनु स तनुजा सखीरवादीत्तुहिनर्त्तुर्गत एव हीदृशीनाम् ॥ कुसुममपि शरायते शरीरे तदुचितमाचरतोपचारमस्याः ॥ १२० ॥

तदन्विति ॥ तदनुआशीर्वचनानन्तरंसराजातनुजासखीरित्यवादीत् । इतिकिं हे सख्यस्तुहिनर्त्तौशिशिरर्त्तौगतएव गतमात्रएवयस्माद्दृशीनांकोमलाङ्गीनांप्राप्ततारुण्यानां शरीरेकुसुममपिलग्नंसच्छरायते शरवदाचरति पीडांकरोति । अर्थंचेकामबाणायते । तत्तस्माद्अस्याभैम्यास्तदुचितंवसन्तसमयोचितमुपचारमाचरत कुरुतेति तुहिनर्त्तौऋत्यक इति प्रकृतिभावः । शरायतेकर्त्तुःक्यङितिक्यङ् ॥ १२० ॥

कतिपयदिवसैर्वयस्यया वःस्वयमभिलष्य वरिष्यते वरीयान् ॥ कृशिमशमनया तया तदामुं रुचिरुचिता थ भवद्भिधाविधाभिः ॥ १२१ ॥

कतिपयेति ॥ हे भैमीसख्योवोयुष्माकंवयस्ययाभैम्याअभिलष्यवरीयानतितरांश्रेष्ठोवरः स्वयमात्मनाकतिपयदिवसैर्वरिष्यते तत्तस्माद्अनया भैम्याकृशिमानंकार्श्यंशमंनयतिप्रापयतीतिकृशिमशमनया अथच रुचिः समग्रशोभाविरहात्पूर्वकालीनाभवद्विधानांभवादृशीनांविधाभिःप्रकारैरुपचारैरामुचितायोग्याअभिधाभिरितिपाठेवचनैरामुचितायोग्यां इयंयथापूर्वंरुचिंप्राप्नोतितादृशमुपचारंकुरुत यद्वातादृगेनाशिक्षयनेत्यर्थः। कृशिमशमनयेति भैमीविशेषणंवा । अथोअथच संप्रश्नमङ्गलारम्भयोरपि । अनन्तरेचकात्स्न्येचेति„ विश्ववचनाद्थशब्दःकात्स्न्यवाची । अथवाऽन्यत्रेत्यर्थे,"तिरश्शब्दाद्वाइयसुन् । कृशिमशमनयापक्षेनयतेःपचाद्यच् ततःपूर्वेणषष्ठीसमासः ततोपिपूर्वेणशमनापदेनन्द्यादित्वाल्ल्युः १२१

एवंयद्वदता नृपेण तनया नोऽपृच्छि लज्जास्पदं यन्मोहः स्मरभूरकल्पवपुषः पाण्डुत्वतापादिभिः ॥ यच्चाशीःकपटादवादि सदृशी स्यात्त्र

या सांत्वना तन्मत्वालिजनोमनोब्धिमतनोदा
नन्दमन्दाक्षयोः ॥ १२२ ॥

एवमिति ॥ एवं पूर्वोक्तं वदता नृपेणाभीमेन तया लज्जास्पदं यस्मिन्पृष्टे सति लज्जाऽवति तद्विरहकारणं यद्वनापृष्टिनपृष्टम् । लज्जापदेनपृष्टेति यावत् वपुषः पाण्डुत्वतापादिभिः शरीरस्य पाण्डिमकृशिमसन्तापादिभिः स्मराद्भवतीति स्मरभूः स्मरजन्यो मोहो मूर्छा अकल्पिपकल्पितः । यच्चाशीःक पटादाशीर्वचनव्याजाद्वचवादि आश्वासनसमर्थं दयितमञ्जिमतमित्यादि यदुक्तं तत्र सन्तापादिविषये सदृशी समुचितायासांत्वनाउपचारःस्यात्साऽ वादि आलिजनःसखिजनः तत्सर्वं मत्वाज्ञात्वा मनोन्तःकरणमानन्दश्च म- न्दाक्षं च लज्जा तयोरब्धिं समुद्रं अतनोत् चकार शीघ्रं भैम्याः स्वयंवरप्राप्ते- रानन्दातिशयः । राज्ञोविरहपीडाजनितं लज्जाधिक्यञ्चाभूदित्यर्थः १२२

तुर्यस्थैर्यविचारण प्रकरणभ्रातर्ययं तन्महाकाव्ये
चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ १२३ ॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीही
रः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ॥

नैषधस्य चतुर्थः सर्गः समाप्तः ॥

श्रीहर्षमिति ॥ पूर्वार्द्धं पूर्ववत् । स्थैर्यविचारणं तन्नामकं निराकरणं मस्थि रत्वस्य विचारणसूचकं प्रकरणं ग्रन्थस्तस्य भ्रातरि एककर्तृकत्वात् सोदरे म- हाकाव्ये तुर्यश्चतुर्थः सर्गः समाप्तः ॥ स्थैर्यविचारणाख्यो ग्रन्थः श्रीहर्षेण कृतः । चतुरश्छयतौ चलोपश्चेति चलोपे तुर्य इति सिद्धम् ॥ १२३ ॥

~~~
~~~

यावद्गा गमयतेथनरेन्द्रान्सस्वयंवरमहायमहीन्द्रः
तावदेवऋषिरिन्द्रदिदृक्षुर्नारदस्त्रिदशधामजगाम १

श्रीलक्ष्मीनृसिंहायनमः ॥ अथ व्यतरदितिश्लोकेपिचोक्तंस्वयंवरोपक्रम मुद्दिश्यतत्प्रसङ्गार्थंपञ्चमंसर्गमारभते ॥ यावदिति ॥ अथ भैमीसमाश्वासनानन्तरंसमहीन्द्रःभीमःस्वयम्वरएव महोत्सवस्तदर्थः यावन्नरेन्द्रान्राज्ञ आगमयतेप्रतीक्षतेआनाययतेवा स्वयम्बरार्थमाहूतानांराज्ञांप्रतीक्षांकरोति तावदेवतस्मिन्नेवकालेइन्द्रन्दिदृक्षु द्रष्टुमिच्छुर्नारदनामाऋषिस्त्रिदशधामस्वर्लोकंजगामगतवान् कलहद्वारानराणांसमूहोनारंनरसमूहद्यतीतिकलहप्रवर्त्तकइत्यर्थः । आगमयते । क्षमायामात्मनेपदमितिवक्तव्यात्तङ्देवऋषिऋत्यकः इन्द्रदिदृक्षुःशेषेषष्ठीसमासः बहुलग्रहणाद्योगविभागाद्वा अधर्मंजुगुप्सुरितिद्वितीयासमासोवा ॥ १ ॥

नात्रचित्रमनुतंप्रययौयत्पर्वतःसखलुतस्यसपक्षः
नारदस्तुजगतोगुरुरुच्चैर्विस्मयायगगनंविललंघे २

नात्रेति ॥ पर्वतएवतन्नामाऋषिःतंनारदमनुपश्चात्प्रययौअनुगतः । अत्रास्मिन्विषयेचित्रमाश्चर्यंनकुतः खलुयस्मात्सपर्वतस्तस्यनारदस्यसपक्षोमित्रभूतः यद्यपि कार्याक्षमस्तथापिमित्रत्वादनुगमनयुक्तमतोनाश्चर्यंतर्हि कुत्राश्चर्यमित्यतआह । उपदेष्टृत्वात्पूज्यत्वाच्चजगतोगुरुर्नारदस्तु गुरुरयं द्गगनमाकाशंलङ्घितवान्नदुच्चैरतितरांविस्मयायआश्चर्यायजातमितिशब्दार्थः । अर्थोन्तदो सम्बन्धःजगतोविस्मयायेतिवा भीमांपक्षिणांस्मयायवेगातिशयेनाद्भुतायेतिवा गगनलङ्घनविषयेविनास्मयोगर्वस्तमपनेतुमितिवा अथच पक्षसहितस्यगमनमाश्चर्यकारिनसकलस्यापि जगतोदुर्वहोजगतःसकाशाद्भारवान् यदाकाशंलङ्घतितदितरथामाश्चर्यायभवति । गुरुत्वात्पतनंयुक्तंउर्द्ध्वगमनमयुक्तमितिभावः । पर्वतःशैलदेवर्ष्योःस्मयोगर्वेद्भुतेपिचेतिविश्वः विस्मयायतादर्थ्येचतुर्थी पक्षेक्रियार्थेतिवलघिर्गतौभौवादिकोऽनुदात्तेत् ॥ २ ॥

गच्छतापथिथिनैवविमानंव्योमतेनमुनिना विजगाहे ॥ साधनेहिनियमोन्यजनानांयोगिनांतुतप

साखिलसिद्धिः ॥ ३ ॥

गच्छतेति ॥ विमानंविनैवपथिगच्छतातेनमुनिनाव्योमआकाशंविजगाहेआलोडितं । हियस्मात्साधनेउपकरणेऽश्वादौ अन्यजनानांयोगिव्यतिरिक्तजनानांनियमः वाहनविनागन्तुंनशक्नुवन्ति । योगिनांतपस्विनांतुपुनःतपसैवाखिलसिद्धिः समस्तकार्यसिद्धिः खिलंप्रतिबन्धस्तद्रहितासिद्धिर्गतिः तेषागमनादिसाधनंतपएवनान्यदश्वादि एवइवार्थः विनेवपथिविगवगच्छतेतिवा । किंभूतंव्योमविमानंविगतमानं इयत्तारहितंपरिमाणंयस्मादितिवा ॥ ३ ॥

खंडितेन्द्रभवनाद्यभिमाना लङ्घतेस्ममुनिरेषविमानात् ॥ अर्थितोप्यतिथितामनुमेनेनैवतत्पतिभिरह्रिविनम्रैः ॥ ४ ॥

खंडितेति ॥ एषमुनिर्नारदोविमानांल्लङ्घतिस्मातिचक्राम । किम्भूतान् खण्डितइन्द्रभवनादीनामभिमानोरमणीयत्वाहंकारोयैस्तान् इन्दुभवनेतिपाठेअत्युच्चत्वादभिदीप्तत्वाच्चत्याजितचंद्रनक्षत्रादिस्थानदर्पान् इन्दुभवनादीनाचन्द्रशालादीनावा ततोप्यूर्ध्वंगतइत्यर्थः । अथचानाहतवान् अंघ्रिविनम्रैश्चरणनिपतितैस्तत्पतिभिर्विमानस्वामिभिः आतिथ्यमङ्गीक्रियताम्विमानमारुह्यतामित्यादिभिरर्थितोपि अतिथितांनैवानुमेनेङ्गीचकार । विलम्बभियेतिभावः । विमानोऽस्त्रीत्यमरः ॥ ४ ॥

तस्यतापनभियातपनःस्वंतावदेवसमकोचयदर्चिः यावदेवदिवसेनशशीवद्रागतप्यतनतन्महसैव ॥ ५ ॥

तस्येति । तपनःसूर्यस्तस्यनारदस्यतापनंसन्तापनं तस्माद्भियाभयेन स्वंस्वकीयंअर्चिस्तेजः तावदेवप्रथममेववेलावत्कालमेवतावत्परिमाणमेववा समकोचयत्संकोचितवान् । सकलेनतेजसायद्यहंतपेयंतर्हिमत्संन्निधिमागतोमुनिःसंतप्तोभवेदितितस्मात्सूदितितेजःसंकोचितं । परंतावत्कालमेवयावदेवयावत्कालं तन्महसैवमुनितेजसैवकृत्वातपनोद्राक्शीघ्रंस्वयनअतप्यतसतप्तोनाभूत् । केनकइव । दिवसेनदिनतेजसाकृत्वाशशीव सूर्यस्तावदेवतावत्पर्यन्तमर्चिःसमकोचयत् । यावदेवयावत्पर्यंतमेव

तन्महसैवसूर्यतेजसैवकृत्वानारदोमातप्यतेतिवा । शापभीत्यास्वसतः तृकतापभीत्यावातावदेवतेजः प्रकटीकृतवान् । यावतातस्यकोधोनोत्प द्यतेसंतापोवानभवति । अल्पस्यसंकोचेस्वतेजसातस्याभिभवःस्यात् । अधिकसंकोचेस्वस्यैवतन्महसाऽभिभवःस्यात्तेनयुक्तमेव संकोचितवानित्यर्थः सूर्यसमतेजानारदइत्यर्थः अर्थांतरंतुसुधियाबोद्धव्यम् ॥ ५ ॥

पर्यभूद्दिनमणिर्द्विजराजंयत्करैरहहतेनतदातम् ॥ पर्यभूत्खलुकरैर्द्विजराजः कर्मकः स्वकृतमत्रनभुङ्क्ते ॥ ६ ॥

पर्यभूदिति । स्वागताछंदः । यद्यस्मात्कारणात् दिनमणिः सूर्यः द्विजराजं चन्द्रंकरैःकिरणैः कृत्वापर्यभूत्तिरस्कृतवान्तेनैवकारणेनद्विजराजोब्राह्मणश्रेष्ठो नारदःकरैःस्वतेजोभिःकृत्वा तदातस्मिन्कालेतंसूर्यं पर्यभूत्व्यजयत । अह हेत्याश्चर्ये । युक्तमेतत् । अत्रलोकेस्वेनकृतंकर्मशुभाशुभात्मकंकोनभुङ्क्ते । अपिसर्वोपि अत्युत्कटैःपुण्यपापैरिहैवफलमश्नुतइतिन्यायेन । सूर्येण निरपराधेद्विजराजेपराभूतेऽन्येनद्विजराजेनक्रोधवशाद्दिवसपराभूतः । सूर्यतेजसोपितत्तेजोऽधिकमितिभावः सूर्यःस्वतेजसापूर्वंनारदंपर्यतापयत् अतोनारदःक्रुद्धःसन्स्वतेजसा सूर्यंपर्यभूदितिवा ॥ ६ ॥

विष्टरंतटकुशालिभिरद्भिः पाद्यमर्घ्यमथकच्छरुहाभिः ॥ पद्मवृन्दमधुभिर्मधुपर्कंस्वर्गसिंधुरदितातिथयेस्मै ॥ ७ ॥

विष्टरमिति । अथानन्तरं स्वर्गसिन्धुर्मन्दाकिनी अतिथयेऽभ्यागताय तस्मैनारदाय तटकुशादिभिःतीरजातदर्भपंक्तिभिः विष्टरंकुशासनं अदित ददौ । तथाअद्भिरुदकैःपाद्यंपादार्थमुदकं । तथाकच्छरुहाभिःपुष्पलताभिःदूर्वादिभिःअर्घ्यं मर्घ्यार्थंवस्तु तथापद्मवृंदस्यमकरंदैःकृत्वा मधुपर्कं मधुमिश्रंदध्यादि अदितेतिसर्वत्रसंबध्यते । अतिथयेविष्टरादिकंदीयते । मंदाकिनीदृष्टातुतोपेत्यर्थः पाद्यंअर्घ्यंपादार्घाभ्यांचेतियत् । मधुना पृच्यतेमिश्रीक्रियतेमधुपर्कःकर्मणिघञ् । चजोरितिकुत्वं ॥ ७ ॥

सव्यतीत्यवियदन्तरगाधंनाकनायकनिकेतनमाप

संप्रतीयंभवसिन्धुमनादिंब्रह्मशर्मभरचारुयतीव ८

सम्प्रतीत्येति । सनारदोऽतर्मथ्यं अगाधंविशालंवियत्आकाशंव्यतीत्यातिक्रम्यस्वर्गेपिक्वचित्प्रदेशेवर्त्तमानं नाकनायकस्येंद्रस्यनिकेतनंगृहं आपप्राप्तवान् । कःकिमिव । यतीपरिव्राट्ब्रह्मेव । किंकृत्वा । अनादिंप्रवाहरूपतितंभवसिन्धुंसंसारसमुद्रं सम्यगतिशयेनप्रतीर्यतीर्त्वा । किंभूतं ब्रह्मशर्मणःसुखस्यभर.समूहस्तेनचारुसुन्दरं । आनंदंब्रह्मणोरूपमित्यादिश्रुतेः अनादीतिपाठेब्रह्मविशेषणं । यतयोयतिनश्चेत्यमरः यतंप्रयतनमस्यास्तीतियती नलोपःसुप्स्वरेतिनियमात्नवर्णादीर्घः ॥ ८ ॥

अर्चनाभिरुचिताच्चतराभि आरुतंसदकृतातिथिमिंद्रः ॥ यावदर्हकरणंकिलसाधोः प्रत्यवायधृतयेनगुणाय ॥ ९ ॥

अर्चनाभिरिति । इन्द्रःउचितास्योयोग्याभ्योपिसकाशादुच्चतराभिःश्रेष्ठाभिःअर्चनाभिःपूजाभिःतमतिथिंभाक्तविष्णु सुमार्गेण सदकृतपूजितवान् । अधिकपूजाकरणेकारणमाह । साधोरतिथेर्यावदर्हंयथोचितंयत्करणंआदरपूजादेःसंपादनं अतिथेर्यावतीपूजाउक्तास्तितावत्याःकरणंयावदर्हकरणंतद्धाप्रत्यवायधृतयेऽकरणजन्यप्रत्यवायपरिहारायैवनगुणायतदतिरिक्ताधिकफलप्राप्तयेक मैचित्फलायेति नारदयोग्यपूजाभ्योप्यधिकाःपूजाः कृतवान् । कर्मभूयस्त्वात्फलभूयस्त्वंइतिन्यायादधिकफलप्राप्तयेइतिभावः । दातृगृहीत्रोर्योग्याश्चताःउच्चतराश्चताभिःपूजाभिःपूजितवान् । यावदर्हमितियावदवधारणइत्यव्ययीभावः आदरानादरयोःसदसतीतिगतिसंज्ञा ॥ ९ ॥

नामधेयममतासखमद्रे रद्रिभिन्मुनिमथाद्रियत द्राक् पर्वतोपिलभतांकथमर्चां नद्विजःसविबुधप्रभुलंभी ॥ १० ॥

नामधेयेति । अथनारदपूजानन्तरं अद्रिभिदिंद्रःअद्रेःपर्वतस्यनामधेयेन पर्वतइति संज्ञयासमतामाम्यंतेनसखामित्रंतंमुनिंपर्वतनामानद्राक्शीघ्रंमाद्रियतपूजितवान् । अद्रिभिदःपर्वतपूजानुचितेत्याशंक्यछलेनाह । स

द्विजः ब्राह्मणरूपः पर्वतोपिविबुधप्रसंगद्दुर्लभीप्राप्तःसन् अर्घापूजांकथन लभतां । अपितुतेनपूजाप्राप्तुंयुक्ता । सन्तोगृहागतशत्रुमपिपूजयन्तीति भावश्छलिच्छलम् । नाममात्रेणपर्वतोनतुतत्कार्यकारी अयतुद्विज नतुवैरी पर्वतःतस्माद्युक्तमेवपूजनं । अथचपर्वतःपाषाणतुल्यःमूर्खोपिब्राह्मणो विप्रत्वादाश्रितत्वाच्चपंडितश्रेष्ठप्राप्तः पूजांकथंनलभतां । जातिमात्रेणापि ब्राह्मणःपंडितेनापिपूज्यः । नामधेयइति नामरूपभागादिभ्योधेयइति धेयः । समतामखंराजाहइत्यादिनाटच् ॥ १० ॥

**तद्भुजादतिवितीर्णसपर्यान् द्युद्रुमानपिविवेद मुनींद्रः ॥ स्वःसहस्थितिसुशिक्षितयातान् दान पारमितयैववदान्यान् ॥ ११ ॥**

तद्भुजादिति । परमस्यभावःपारमंदानस्यपारमंतद्विद्यतेयस्यासौदा नपारमीतस्यभावोदानपारमिता मुनींद्रोनारदः अतिशयेनवितीर्णाकृत सपर्यापूजायेनएवंभूतात्तद्भुजादिन्द्रभुजाद्धेतोःस्वःस्वर्गेयाइन्द्रेणवासहस्थि तिः तयाकृत्वासुशिक्षितयासुतरामभ्यस्ततयाएवंभूतयादानपारमितयाव दान्यान्तथाकृत्वातान्प्रसिद्धान् द्युद्रुमानपिकल्पवृक्षानपिवदान्यानेवदान शौण्डानेवविवेदअमन्यत । कल्पवृक्षाणांदानशूरत्वसहजंनकिन्तुतेइन्द्रभुजा च्छिक्षिताअतिवदान्याजाताइतिभावः व्याख्यानांतरंतुश्लिष्टत्वादुपेक्ष्यं । युवादेराकृतिगणत्वाद्भावेऽणिपारमः तस्मादतइनीयस्येतिवेनि तद्धितनिमित्तेऽलोपेपारमीतिसिध्यति ॥ ११ ॥

**मुद्रितान्यजनसंकथनःस न्नारदंबलरिपुःसमवा दीत् ॥ आकरःस्वपरभूरिकथानांप्रायशोपिसुहृ दोःसहवासः ॥ १२ ॥**

मुद्रितेति । मुद्रितनिवारितं अन्यजनेनान्यजनस्यवासंकथनंभाषणं येनै वंभूतःसन् बलस्यदैत्यस्यरिपुरिंद्रःनारदं समवादीत्सादरमवोचत् । ते नसहसंवादमकरोत् । अन्यसंभाषणनिवारणेहेतुमाह । हियत सुहृदो र्मित्रयोःसहवासःएकत्रस्थितिः प्रायश्च बाहुल्येनस्वस्वधिपरसंबधिभ्योभू रयोबह्व्यः कथागोष्ठ्यस्तासामाकरःखनिः तस्मादन्यकथांत्यक्तवान् । ख निःस्त्रियामाकरःस्यादित्यमरः ॥ १२ ॥

तंकथानुकथनप्रसृतायां दूरमालपनकौतुकितायां भूभृ तांचिरमनागमहेतुं ज्ञातुमिच्छुरवदच्छतमन्युः ॥१३॥

तमिति। शतमन्युरिन्द्रः आलपनेसंभाषणेकौतुकीतस्यजावस्तस्यातस्यां दूरमत्यर्थं कथानुकथनेनप्रसृतायांप्रवृद्धायासत्यां तंनारदंअवदत्तुवाच। किंभूतइन्द्र भूभृतांराज्ञां स्वर्गंप्रतिचिरंदीर्घकालंअनागतिहेतुमनागमनका रणंज्ञातुमिच्छुः पुनरुक्तोकारणम्। राजानोयुद्धेपराङ्मुखाः संतोयुद्धंकृत्वा सांप्रतंकिमितिस्वर्गेनागच्छतीतिज्ञातुमिच्छयाऽवददित्यर्थः ॥ १३ ॥

प्रागिवप्रसुवतेनृपवंशाः किंनुसंप्रतिनवीरकरीरा न् ॥ येपरप्रहरणैःपरिणामे विक्षताः क्षितितलेनि पतन्ति ॥ १४ ॥

प्रागिति। हेमुनेनृपाएववंशावेणवः वीराएवकरीरावंशांकुरास्तान् प्रा गिवपूर्वमिवसंप्रतीदानीं किंनुप्रसुवतेजनयंति किंन्विति प्रश्नेवितर्केवा। करिणःईरयतीतिकरीरास्तान्हस्तिपालनसमर्थान्वा। वीरायेतान्वाप्रश्ने ऽनागनहेतुःकिंतर्केच यथापूर्वंजनयन्तिसतथेदानींनेति। येवीरकरी राःपरिणामेपूर्णताख्येवार्द्धकेवांतकालेवा शस्त्रविद्यापरिणतौसत्यांवा परप्रहरणैःपरेषांवैरिणामन्येषांचशस्त्रैः कुठारादिभिश्चविक्षताहताः खं डिताश्चसतःक्षितितलेनिपतंतिनत्वतीसारादिना। करिणःईरयंतीति इ गुपधात्क द्वौवंशौकुलमस्करौ। वंशांकुरेकरीरोस्त्रीतिचामरः ॥ १४ ॥

पार्थिवंहिनिजमाजिषुवीरा दूरमूर्द्ध्वगमनस्यवि रोधि गौरवाद्वपुरपास्यभजन्तेमत्कृतामतिथिगौ रवऋद्धिम् ॥ १५ ॥

वीराएवकिमितिपृच्छ्यन्तइत्यतआह। पार्थिवमिति। वीराःपार्थिवर जोभूतंदृशुक्रादिक्रमेणपृथिवीजन्यनिजंस्वीयंवपुराजिषुसंग्रामेषु अपास्य त्यक्त्वादिव्यदेहंप्राप्यमत्कृतांमद्रचितां अतिथिगौरवऋद्धिंअतिथिसत्कार समृद्धिंप्रियस्पाङ्गजंतेप्राप्नुवंति। तत पृच्छ्यइत्यर्थः। किंभूतंवपु गौरवा त्पतनेहेतो गुरुत्वाच्च दूरमतितरांमूर्द्ध्वगमनस्यस्वर्गप्राप्ते विरोधिप्रतिबंध कं। अन्योपिदूरगमनविरोधिगुरुतरंवस्तुत्यक्त्वाजिगमिषति। गौरवादा

दूरातिशयाद्‌तिथिगौरवऋद्धिमितिवान्वयः गुरुवस्तुत्यक्त्वागुरुतरंगृह्णातितत्रापिस्वीयत्यक्त्वाऽन्यदीयंगृह्णातीतिसुतरामाश्चर्यं । गौरवऋद्धिमितिऋत्यकइतिप्रकृतिभावः ॥ १५ ॥

साभिशापमिवनातिथयस्ते मांयदद्य भगवन्नुपयन्ति ॥ तेननःश्रियमिमांबहुमन्ये स्वोदरैकभृतिकार्यकदर्याम् ॥ १६ ॥

साभिशापमिति । हेभगवन् तेवीरलक्षणाःअतिथयः साभिशापमिवकलंकमिवमांअद्ययद्‌नोपयन्ति । नप्राप्नुवंति । तेनतद्नागमनेनकारणेनइमांश्रियइंद्रलक्ष्मीं बहूतितरांनमन्येनसंभावयामि । अस्यास्तदातिथ्याद्यावदुपयोगोमेतावदस्याः निःप्रयोजनत्वान्मसंतोषोन । किंभूतां श्रियं । स्वोदरस्यात्मोदरस्यैवैकाकेवलायाभृतिर्भरणंसैवकार्यंप्रयोजनंयस्याः अतएवसाचासौकदर्याचकुत्सितानिंद्यामित्यर्थः । आत्मानंधर्मकार्यंचपुत्रदारांश्चपीडयेत् । लोभाद्यःपितरौभृत्यान्सकदर्यइतिस्मृतः अभिमिथ्याभिशंसनं । अभिशापइत्यमरः ॥ १६ ॥

पूर्वपुण्यविभवव्ययसृष्टाः संपदोविपदएवविमृष्टाः पात्रपाणिकमलार्पणमासां तासुशान्तिकविधिर्विधिदृष्टः ॥ १७ ॥

पूर्वेति । हेमुनेपूर्वंपुराकृतंयत्पुण्यंकृच्छ्रचान्द्रायणादि तस्यविभवोमाहात्म्यंतस्यव्ययेनविनियोगेननाशेनसृष्टेतियावत् । लब्धाःप्राप्ताःश्रीभराःलक्ष्मीविलासाः विमृष्टाविचारिताःसत्योविपदएव । बहुपुण्यक्षयकारित्वादुदर्कदुःखकारित्वाच्चविपद्रूपाएव । तासुसंपद्रूपासुविपत्सुसतीषुआसांसंपदांपात्रस्यप्राणिलक्षणेकमलेअर्पणंदानं शांतिकःशांतिप्रयोजनकः विधिर्होमादिःविधिनावेदेनशास्त्रेणब्रह्मणावादृष्टः उक्तः विपदुपहिशांतिःक्रियते । जलस्यदानजलस्यव पात्रेभ्योयावन्नदीयतेतावत्संपदोविपदएव । दानेनपुण्यवृद्धिःसंपदांसम्यग्रूपता । पात्रेदानंविनाभक्षेणोनतुष्यतीत्यर्थः नविद्ययाकेवलयातपसावापिपात्रता । यत्रवृत्तमिमेचोभेतद्धिपात्रंप्रकीर्तितमितियाज्ञवल्क्यः ॥ १७ ॥

तद्विमृज्यममसंशयशिल्पिस्फीतमत्रविषयेसहसा घम् ॥ भूयतामभगवतःश्रुतिसारै रघवाग्भिरघम र्षणऋग्भिः ॥ १८ ॥

तदिति ॥ हे मुनेश्रुतिसारैःश्रवणयोःसारैःसुधाभूतैर्वेदेषुश्रेष्ठभूतैश्च भगवतोवाग्भिःवचनैः अद्येदानीअघमर्षणस्यदुःखस्यपातकस्यचमार्जनस्य संबंधिभिःऋग्भिर्भूयतां । ऋतंचसत्यंचेत्यघमर्षणऋचःपापंनाशयन्ति अघमर्षणसम्बन्धिन्यःऋचः अघंमर्षयन्तिनाशयन्ति । नद्यादित्वात्‌ल्युः किंकृत्वा । तेममसाभिशापत्वादन्यहेतोर्वाऽत्रनागच्छंत्यत्रविषयेसंशयशि ल्पिसंदेहकारिस्फीतंप्रवृद्धंअघंदुःखंपातकंच सहसाझटितिविमृज्यापनी यभूयतामितिभावे लकारः ॥ १८ ॥

इत्युदीर्यमघवाविनयर्द्धिंवर्द्धयन्नवहितत्वभरेण ॥ चक्षुषांदशशतीमनिमेषां तस्थिवान्मुनिमुखेप्रणि धाय ॥ १९ ॥

इतीति ॥ मघवाइन्द्रःइतिपूर्वोक्तंउदीर्यउक्त्वा अवहितत्वस्यसावधा नत्वस्यभरेणाधिक्येन विनयर्द्धिंविनीतत्वसमृद्धिंवर्द्धयन्अधिकीकुर्वन् अ निमेषांनिमेषरहितांचक्षुषांदशशतींनेत्रसहस्रंमुनिमुखे प्रणिधायसंस्थाप्य तस्थिवान् । तूष्णींस्थितः अमरत्वात्सावधानत्वाच्चनिर्निमेषत्वं ॥ १९ ॥

वीक्ष्यतस्यविनयेपरिपाकं पाकशासनपदस्पृशतो पि ॥ नारदःप्रमदगद्गदयोक्त्याविस्मितःस्मितपु रःसरमूचे ॥ २० ॥

वीक्ष्येति ॥ नारदःप्रमदेनहर्षेणगद्गदयाऽस्पष्टयाउक्त्यावाचाकृत्वा स्मितपुरःसरंऊचे । महानुभावाःस्मितपूर्वभाषिणोहि । किंभूतः पाक शासनपदेस्पृशतोऽधिष्ठितोपि तस्येन्द्रस्यविनयेपरिपाकंप्रकर्षंवीक्ष्यवि स्मितःआश्चर्ययुक्तः अतिसमृद्धस्य विनीतत्वंदुर्लभं । इन्द्रे तुविद्यतइत्या श्चर्यम्अविनीतंदृष्ट्वाइन्द्रपदेस्थितइतिलोकिकयुक्तिः आख्यदितिपाठेअस्य तीत्यङ् ॥ २० ॥

भिक्षिताशतमखीसुकृतंयत्तत्परिश्रमविदःस्वविभू
तौ ॥ तत्फलेयदिपरंतवहेलाक्लेशलब्धमधिकादरदंतु ॥ २१ ॥

भिक्षितेति ॥ हे इन्द्रत्वयाशतमखीसुकृतंपुण्यंभिक्षितायाचितयाध्यर्थत्वाद्द्विकर्मकः यागशतंकृत्वायत्पुण्यमुपार्जिततस्याः भिक्षायाःपरिश्रमविदःआयासवेदिनःतव तस्यपुण्यस्यफलेकार्येस्वविभूतौस्वाराज्यलक्षणायांविभूतौस्वीयसम्पदियदिहेलवाकुनमन्येइतिवचनादवज्ञा।तर्हिभिक्षायासवेदिनः तवपरंकेवलंहेलानान्यस्यकस्यापि बहुक्लेशार्जितायांसम्पदिश्रन्योऽवज्ञांनैवकरोति । यस्मात्क्लेशेनप्रयासेनलब्धंवस्तुस्वस्यिअधिकंआदरददातिकरोतीति ज्योतिष्टोमादियज्ञजन्येकालान्तरभाविनिफलेस्वाराज्येऽवज्ञाऽतिथिषुचादरइतित्वय्येवदृष्टंनान्यत्रापीतिभावः । शतमखानांसमाहारःशतमखी हेलाऽवज्ञाविलासयोरितिविश्वः ॥ २१ ॥

संपदस्तवगिरामपिदूरा यन्ननामविनयंविनयंते ॥
श्रद्दधातिकइवेहनसाक्षा दाहचेदनुभवःपरमाप्तः ॥ २२ ॥

सम्पदइति ॥ इयस्तथावक्तुमशक्यत्वाद्गिरामपिवाचामपि दूराअगोचराअपि तवसम्पदःयत्नामनिश्चितंविनयंनम्रत्वंनविनयंतेनंदूरीकुर्वन्ति । इहात्रविषयेपरमाप्तः अतिमित्रंअव्यभिचारीचसाक्षादनुभवः प्रत्यक्षोपलब्धिश्चेत्यदिनाहनब्रूते तर्हि कइवश्रद्दधातिविश्वसितिश्रपितुनकोपि सम्पत्स्वविनयोनियतइतिसर्वेषांमतं तत्तुत्वयिप्रत्यक्षेणाविनयस्यदृष्टत्वाद्बाधितमितिभावः । साक्षात्स्वयमेवाहेतिवा नामसम्भावनायांवा अन्यत्रापिवस्तुनिसाक्षात्प्रतीत्याऽनुभवेनानुमानज्ञानेन परमाप्तवचनेनवा विश्वासोभवति । अत्र पूर्वोक्तविपर्ययेपरमाप्तोनुभवश्चेत्साक्षादाह तर्हि कोवानविश्वसतीतिवा । स्तुतेःप्रायेणालीकत्वात्सर्वेषामपिसर्वस्यस्तुतिःक्रियते । तवतुनतथा अनुभवश्चेन्नकथयतितदिहसुविशिष्टासुसम्पत्सुविषयेकइवविश्वसतीतिवा । विनयन्तीतिपाठःसाधीयान् ॥ २२ ॥

श्रीभरानतिथिसात्करवाणि स्वोपभोगपरतानहि

तेति ॥ पश्यतोऽबहिरिवांतरपीयं दृष्टिसृष्टिरधिका तवकापि ॥ २३

श्रीति ॥ हेइन्द्र अन्तरपिअन्तःकरणेऽपि बहिरिवबहिर्देशइवपश्यतो जानतोवलोकयतश्च तवैवेयंवर्णयितुमशक्याअधिकाभूयसीकाप्यनिर्वच नीयादृष्टिसृष्टिःज्ञानसृष्टिर्नेत्रसृष्टिश्च । इतिकिं अहं श्रीभवान्श्रीससूहान् अतिथिसात्कृत्यत्वेनातिथ्यधीनांकरवाणिकुर्याम् । तथास्वोपभोगपरताश्च स्वनएवोपभोगेतात्पर्यं । हितानश्रेयस्करंनभवति । यथाबहुभिर्नेत्रैःस र्वमवलोकयसि तथान्तःकरणेपिसर्वंकरणीयंज्ञानदृष्ट्याऽवलोकयसि एवं विधस्त्वमेवनान्यइतिभावः । दृष्टिर्ज्ञानेनेत्रदर्शनेइत्यमरः ॥ २३ ॥

आःस्वभावमधुरैरनुभावै स्तावकैरतितरांतरलाः स्मः ॥ दांप्रशाधिगलितावधिकालं साधुसाधुविजयस्वविडौजः २४ ॥

आइति ॥ हेविडौजःइन्द्रवयंस्वभावमधुरैर्निसर्गसुन्दरैस्तावकैस्त्वदी यैरनुभावैः स्वभावसूचकैःप्रभावैर्वा अतितरामत्यर्थम् आःतरलाःसाश्चर्याः स्मःभवामः ऋषीणामस्माकतरलत्वमनुचितमिति पीडायामाश्चर्येहर्षे वा।त्वंगलितोऽवधिर्मर्यादायस्यैवंभूतःकालोयस्यांक्रियायांयथातथानिरव धिकंद्यांस्वर्गं साधुसम्यक्विजयस्वसर्वोत्कर्षेणवर्त्तस्व अनुभावःप्रभावे स्यान्निश्चयेभावसूचनेइतिविश्वः अनुगतोभावइतिसमासः प्रशाधि शासः शास्त्राविति।आदेश।साधुसाधुइर्षाद्विरुक्तिर्वा विजयस्वविपराभ्यामितित ङ्वेवेष्टिविश्व्यापकंओजोयस्यविडौजाःपृषोदरादित्वाद्वृद्धिः ॥ २४ ॥

संख्यविक्षततनुस्रवदस्र क्षालिताखिलनिजाघलघूनाम् ॥ यस्त्विहानुपगमःशृणुराज्ञां तज्जगद्युत्रमुदन्तदुदन्तम् ॥ २५ ॥

संख्येति ॥ हेइन्द्र यत्पुनर्यस्माद्धेतोर्वाइहस्वर्गेराज्ञामनुपगमःअनाग मनं तत्प्रसिद्धं उदन्तराज्ञामनागमहेतुंवृत्तान्तंशृणु । किंभूतानांराज्ञांसं ख्येरणेविक्षततनुभ्यःनिहतशरीरेभ्यःस्रवन्निसृतमस्रंरुधिरंतेनक्षालितंअ- खिलसमग्रंनिजंसहजमघपापयेषांते अतएवलघवस्तेषा एवंभूतेनपातके

मानैषीः सकइतित्वयाऽहंनप्रष्टव्यइत्यर्थः पृच्छाजिदादित्वाद्ङिङित्वाद्ग्रहिज्येतिसंप्रसारणम् ॥ २८ ॥

**यत्पथावधिरणुःपरमःसा योगिधीरपिनपश्यति यस्मात् ॥ बालयानिजमनःपरमाणौ ह्रीदरीशयहरीकृतमेनम् ॥ २९ ॥**

तदकथनेकारणमाह ॥ यत्पथेति परमोऽणुःपरमाणुःयस्याःयोगिबुद्धेःपंथा मार्गस्तस्यअवधिर्मर्यादारूपः परमाणुपर्यंतंयोगिबुद्धेर्विषयोनतु तस्मात्परतःकिंचित्सायोगिनांमाहशामपिबुद्धिरेनंयुवानंयस्मात्कारणात्नपश्यति कारणमेवाह किंभूतमेनं बालयानिजमनःपरमाणौस्वीयमनोलक्षणेपरमाणौह्रीरेवलज्जैवदरीकंदरातस्यांशेतेशयोहरिःसिंहः सतत्स्वरूपंकृतं अणुपरिमाणंमनइतितार्किकाः मनएवयंगिबुद्ध्याग्रहृतेनतुतत्स्याह्रीस्तस्यां विद्यमानोदूरतइति सातंलज्जावशात्कस्याप्यग्रेनकथयतीत्यर्थः परमाणूनांनिरवयवरूपाद्याश्रयत्वंयथातथानिरवयवह्रियोपीत्यविरुद्धमित्यर्थः । कंदरायांसुप्तःसिंहः केनापिनज्ञायते सिंहरूपेणात्रश्रेष्ठत्वंसूचितम् शयवासवासिष्वितिविकल्पविधानाद्ह्रीःदरीशयेत्यत्रङेर्लुक् ॥ २९ ॥

**साशरस्यकुसुमस्यशरव्यं सूचिताविरहवाचिभिरङ्गैः ॥ तातचित्तमपिधातुरधत्त स्वस्वयंवरमहायसहायम् ॥ ३० ॥**

साभैमीस्वस्वयंवरोत्सवमहायस्वीयस्वयम्वरोत्सवाय तातचित्तमपि पितृचित्तमपि धातुर्ब्रह्मणः सहायंअधत्तकृतवती किम्भूताकृशिमपांडिमादिनाविरहवाचिभिर्विरहपीडांसूचयद्भिरङ्गैस्स्वावयवैः कुसुमरूपस्यशरस्य मदनबाणस्येत्यर्थः शरव्यं वेध्यंपितरंप्रतिसूचिताज्ञापिता ब्रह्मणातस्याः स्वयंवरश्चित्तेधृतः वियोगपीडादृष्ट्वापित्राप्यारब्धइत्यर्थः शृणातीतिशरुः हिंस्रस्तस्मैहिताशरव्या उगवादिभ्योयत्शरव्यमित्येवपाठेयुक्तः ॥ ३० ॥

**मन्मथाययदथादितराज्ञां दूतिदूत्यविधयेविधिराज्ञाम् ॥ तेनतत्परवशाःपृथिवीशाःसंगरंगरमिवाकलयन्ति ॥ ३१ ॥**

मन्मथायेति ॥ अथानंतरंविधिः राज्ञांदूतिदूत्यविषयेआकारणार्थंदूतत्वव्यापाराय मन्मथायआज्ञांमन्मथत्वंसर्वानाकारयेतिआज्ञांयच्छतः अदित्तद्वान् तेनहेतुनातत्परवशाः कामाज्ञापराधीनाः पृथिवीशाः सङ्गरंसग्रामंगरमिवविषतुल्यंमाकलयंतिमन्वते-अपकारित्वाद्विषंयथात्यज्यतेतथासंग्राममपित्यक्त्वाभैमीपरवशाजाताइतिभावः अथचसम्यक्सुलरागरोविषंगरंगूआतिनमेवनाशयतिसंगरस्तुसर्वान् दूत्येतिदूतवणिग्भ्यांचेतियः॥३१॥

येषुयेषुसरसादमयन्ती भूषणेषुयदिवापिगुणेषु तत्रतत्रकलयापिविशेषो यःसहिक्षितिभृतांपुरुषार्थः ॥ ३२ ॥

येष्विति दमयन्तीयेषुयेषुभूषणेषुयदिवाअथवायेषुयेषुगुणेषुऔदार्यादिषु सरसासादरा तत्रतत्रभूषणेषुगुणेषुवाकलयापिलेशेनापिपरस्परापेक्षयावा योविशेषः आधिक्यं सहिसएवक्षितिभृतांराज्ञांयस्मात्पुरुषार्थःधर्मादिरूपः भूषणगुणाधिक्यमेवपुरुषार्थत्वेनार्जयन्ति भैमींप्रतिहेतुत्वात्कतुंसंग्रामे वासनामितिभावः ॥ ३२ ॥

शैशवव्ययदिनावधितस्या यौवनोदयिनिराजसमाजे ॥ आदरादहरहःकुसुमेषो रुल्लासमृगयाभिनिवेशः ॥ ३३ ॥

तदेवाहशैशवेति ॥ कुसुमेषो कामस्यमृगयायामभिनिवेश आदराद्यौवनोदयिनियौवनोन्मुखेराज्ञांसमाजेसमूहेविषयेतस्याःभैम्याः शैशवव्ययदिनंबाल्यापगमदिनं अवधिर्यस्याक्रियायां तथायौवनोदयमारभ्यअहरहःप्रत्यहमादरादतितरामुल्ललासप्रकटीबभूव । आदरादहरहइतिकामपीडाधिक्यंतेषांसूच्यते । तत्प्राप्तिमेवपुरुषार्थत्वेनमन्यतइतिभावः ॥ ३३ ॥

इत्यमीवसुमतीकमितारः सादरास्त्वदतिथीभवितुंन ॥ भीमभूसुरभुवोरभिलाषे दूरमन्तरमहोनृपतीनाम् ॥ ३४ ॥

प्रकृतमुपसंहरन्नाह ॥ इतीति ॥ अमीवसुमतींपृथ्वीं कमितारोवांछाशीलाराजानःइतिकारणात् त्वदतिथीभवितुंतवातिथयोभवितुंसादरा न

भिलाषोन । अयं भावोस्वर्गेनागच्छतीत्यर्थः भैम्यैवसुमतीमेवक मितारीनस्वर्गमितिवा । अहोआश्चर्यं अभिलाषविषये भीमभूसुरभुवोभै मीदेवालययोर्दूरमतितरान्नृपतीनामन्तरंतारतम्यं महान्विशेषःयागादि भिःप्राप्यात्स्वर्गात्अपि भैमीप्राप्तिरधिकेतिमन्वतइत्यर्थः स्वर्गेसुरभूर्देवक स्यासाभोग्या भैम्यास्तस्याश्चमहान्विशेषः अथचभीमस्यभूःप्रदेशस्तत्रभैम्या विद्यमानत्वात्कुंडिनत्रिदिवयोर्महान्विशेषः अतःस्वर्गाभिलाषोनेत्यर्थः अथचकुंडिनभूमौविद्यमानत्वाद्राज्ञांभूमावेवनिवासात्कुंडिनमेवसमीपंन तुस्वर्गइतितयोर्महान्विशेषः कमितारितान्शीलयेतृन् तस्माद्धातुकत्वे पिपाक्षिकत्वात्सिद्धभावः तद्योगाद्वसुमतीमितिद्वितीया ॥ ३४ ॥

तेनजाग्रदधृतिर्हिवभागां संख्यसौख्यमनुसर्तुमनु त्वाम् ॥ यन्मृधंक्षितिभुजांनविलोकेतान्निमग्नम नसांभुविलोके ॥ ३५ ॥

तेनेति । हेइंद्र अहंतन्निमग्नमनसांभैम्यासक्तचित्तानां क्षितिभृतांभुवि लोकेभूलोकेमृधसंग्रामं यद्यस्मान्नविलोकेनपश्यामि । तेनहेतुनाजाग्रती स्फुरंतीअधृतिरसंतोषोयस्यैवंभूतःसन्त्वामनूद्दिश्यसंख्यसौख्यंयुद्धजनितंसु खंअनुसर्तुं अन्वेष्टुंप्रामुंदिवंगांआगतम् । किंभूतोहम् । जाग्रद्वर्तमानः तथानविद्यतेधृतिर्धैर्यंसुखंवायस्येतिवा । लक्षणेअनुःकर्मप्रवचनीयः ३५ ॥

वेदयद्यपिनकोपिभवन्तं हन्तहन्त्रकरुणंविरुणद्धि ॥ पृच्छ्यसेतदपियेनविवेकं प्रोञ्छनायविषयेरससे कः ॥ ३६ ॥

वेदेति । कोपिकश्चनीपिहंतृसघातकेषुअकरुणनिःकृपंभवन्तंनविरुणद्धि । त्वयासहविरोधनकरोति इतियद्यप्यहंवेदतदपितथापित्वं पृच्छ्यसेयुद्धम स्तिनवेति । यतोविषयेअभिलषणीयेवस्तुनि रसस्यानुरागस्यसेकआधिक्यं येनकारणेनविवेकप्रोञ्छनायनाशायभवति । अनुरागवशात्किमपि नज्ञायते हन्ताश्चर्ये । ज्ञानेसत्यप्येवंप्रश्नआश्चर्यहेतुः रससेकउदकसेकश्च आर्द्रमार्जनायभवतीत्युक्तिः ॥ ३६ ॥

एवमुक्तवतिदेवऋषीन्द्रे द्रागभेदिमघवाननमुद्रा ॥

उत्तरोत्तरशुभो हि विभूनां कोपि मञ्जुलतमः क्रमवादः ॥ ३७ ॥

एवमिति । देवऋषींद्रेनारदेएवंपूर्वोक्तमुक्तवतिसतिमघवाननमुद्रेन्द्रमुखमौनंद्र कृतटितिअभेदि । स्वयंजिन इन्द्रोवभाषेत्यर्थः पुनःकिमुवाचेत्यतआह । हियतोविभूनांप्रभूनांमञ्जुलतमः रम्यतमःकोपिलोकोत्तरः क्रमेणवादोवचनंउत्तरस्मोत्तरेण प्रत्युत्तरेणपुरस्तात्परस्तात्त्शुभः सुभंगोभवति । अतःपुनरप्युवाचेत्यर्थः अभेदिकर्मकर्त्तरि ॥ ३७ ॥

कानुजे मम निजे दनुजारौ जाग्रति स्वशरणे रणचर्चा यद्भुजाङ्कमुपधाय जयाङ्कं शर्मणा स्वपिमि वीतविशङ्कः ॥ ३८ ॥

केति । हेमुने स्वस्यममशरणेगृहेरक्षितरिच स्वआत्मैवराक्षितायस्यस्वरक्षार्थेपरानपेक्षेवानिजेस्वीयेसहजेवा ऽनुजेकनिष्ठभ्रातरि दनुजारौदैत्यदानवशत्रौतस्मिन्नुपेन्द्रे जाग्रतिसावधानेजागरूकेसतिममकारणस्यचर्चाविचारणा रणचिंतानास्तीत्यर्थः निजेऽनुजइत्यनेनाज्ञावशवर्त्तित्ववत्सलत्वात्स्वतःप्रवृत्तत्वंचसूचितम् । दनुजारावित्यनेनसामर्थ्यातिशयःसूचितः स्वस्यशरणेगृहविषयेजाग्रतीतिवा । परानपेक्षमात्मनोरक्षकइतिसर्वं वशेषणसार्थकम् । तस्मिन्कस्मिन् । जयाङ्कंजयचिह्नं यस्मिन्जयस्यचिह्नभूतंवा । यस्योपेन्द्रस्यभुजाङ्कंदक्षिणभुजोत्संगे उपधायोच्छीर्षकीकृत्य वीतशंकोऽगतभयःसन् शर्मणासुखेनस्वपिमिनिद्रामिपूर्वोक्तहेतोः ॥ ३८ ॥

विश्वरूपकलनादुपपन्नं तस्य जैमिनिमुनित्वमुदीये ॥ विग्रहं मखभुजामसहिष्णुर्व्यर्थतां यदशनिं स निनाय ॥ ३९ ॥

विश्वेति । हेमुनेतस्यमदनुजस्य विश्वरूपकलनात्सर्वंविष्णुमयंजगदितिश्रुतेर्विश्वेषांसर्वेषांरूपस्यस्वरूपस्यकलनात्स्वीकारात् सर्वात्मकत्वाङ्गीकरणादित्यर्थः उपपन्नंघटमानं जैमिनिमुनित्वंउदियेउत्पन्नम् । जैमिनिर्विश्वांतःपातित्वाद्धिजोऽश्वविश्वरूपत्वाज्जैमिनिमुनिरूपत्वंयुक्तमेवेत्यर्थः यतस्तस्यजैमिनिमुनित्वमतः जैमिनिरूपःसोनुजोमखभुजांदेवानां विग्रहंशरीरंदैत्यैः

सहयुद्धं वा । असहिष्णुरसहमानः सद्दर्शनिर्मभवज्रंव्यर्थतांवैयर्थ्यंनिनाय प्रापयत् । शत्रुमारणेनवज्रकृत्यंस्वयमेवकृतवानित्यर्थः वेदाद्यभिमतदेवतानांविग्रहेणाकर्मसमवायेङ्गीक्रियमाणेयुगपदनेकैर्यजमानैर्नानादेशेषुअनुष्ठीयमानेषुकर्मसुएकयागगतस्येन्द्रशरीरस्य तस्मिन्नेवक्षणेभिन्नदेशयागान्तरहविर्ग्रहणेशक्त्यभावाद्यागान्तरलोपप्रसंगेवेदस्याप्रामाण्यापातः नचैश्वर्यवशादनेकशरीरांगीकरणेएकोपियुगपत्कृत्स्नवस्तुसर्वत्रप्रयास्यतीतिवाच्यम् तस्यैवंविधैश्वर्यवत्त्वेप्रमाणाभावात् । अचेतनानामपिदेवतात्वांगीकारात्तेष्वैश्वर्यसंभावनायाअप्यभावाच्च । तथाचाहानुक्रमणिकाकारः याकाचित्तेनमंत्रेणोच्यतेसादेवताचेतनाऽचेतनावाभवतु । क्वचिद्ग्रावाणःक्वचिद्धनुःक्वचिन्मौर्वीति । निरुक्तकारोपि इमादेवताअनुक्रान्ताः सूक्तभाजोहविर्भाजःऋग्भाजश्चेत्याह । यायत्रभजतेहविःसादेवतेतिश्रुतिमात्रेणकर्मसमवायेत्वङ्गीक्रियमाणेइदमिन्द्रायेत्यादिचतुर्थ्यन्तपदरूपेणैवयुगपदनेकयागसम्बन्धोघटतइतिवेदप्रमाण्यसिद्धेः वज्रहस्तःपुरन्दरइत्यादेश्चार्थवादत्वसमर्थनात् । बहुभिर्युगपद्यागेसमारब्धेसमन्ततःपुरुहूतःसमाहूयतेहोतृभिःसमाहूतोनृभिःआगच्छतु इत्यादिग्रन्थसन्दर्भेणदेवताधिकरणेदेवतानांजैमिनिमुनिनामंत्ररूपेणैवकर्मसमवायस्यसमर्थनात् । स्वचक्रेणैवदानवनिवारणाच्चेत्यर्थः अथच कस्मिंश्चित्समयेसवज्रमिन्द्रवाहुंजैमिनिःस्तम्भितवानतोपिवज्रस्यवैयर्थ्यम् । अत्र जैमिनिश्चसुमन्तश्चवैशम्पायनएवच पुलस्तिःपुलहोविष्णुःषडेतेवज्रवारणाइतिवृद्धोक्तिःप्रमाणम् । मंत्रमयीदेवतेतिसर्वकर्मसुदेवतानांसत्त्वमितिजैमिनिः ॥ सर्वऽमंत्रसमवायिनीदेवतेतिअन्येइतिसमाधिः ॥ ३९ ॥

**इंद्रशानिमुनयेविनयाब्धिः स्तास्थिवान्सवचनान्युपहृत्य ॥ प्रांशुनिःश्वसितपृष्ठचरोवाङ् नारदस्य निरयायनिरोजाः ॥ ४० ॥**

इंद्रशानीति ॥ विनयस्याब्धिःसमुद्रोऽतिविनीतः सइन्द्रःइंद्रशानिपूर्वाणिवचनानिमुनयेउपहृत्योपहारीकृत्यतस्थिवान् । तूष्णींभावमापेत्यर्थः युद्धाभावजन्यदुःखेनप्रांशुदीर्घंनिःश्वसितंतस्यपृष्ठचरोपश्चात्संचारिणोप्रथमंनिःश्वस्यपश्चादुक्ताऽतएवनिरोजादीना नारदस्यवाक्निरयायनिर्गता

ईप्सितरणालाभेननिःश्वासोवाचोमिः प्रजल्पंच ॥ ४० ॥

स्वारसातलभवाहवशङ्की निर्वृणोमिनयसन्वसुम त्याम् ॥ द्याङ्गतस्यहृदिमेतदुदर्कः क्ष्मातलद्वयभटाजिवितर्कः ॥ ४१ ॥

स्वरिति ॥ हेइन्द्र वसुमत्यांभूलोकेवसन्नहंस्वर्गश्चरसातलंचस्वर्गपाताले तयोर्जवोजातः आहवः संग्रामस्तच्छंकाशीलःसन् ननिर्वृणोमिसुखीभवामि । पृथिव्यांयुद्धाभावात् स्वर्गेयुद्धदर्शनेच्छयाआगतोहमित्यर्थः द्याङ्गतस्यापिमेहृदि क्ष्माया.पृथिव्याःतलेस्वरूपाधोभागौतयोर्द्वयंयुगमूपातालयुगंतत्रस्थानांभटानांआजिःसंग्रामस्तस्यवितर्कः सम्भावना । तदुदर्कःदुष्टोत्तरकालोनिःष्फलइत्यर्थः । स्वर्गेपियुद्धाभावादत्रस्थितस्यममत्रविपातालेवाकेनचिच्छूरेणयुद्धंकृतस्यादितिमनीषयानसुखमित्यर्थः । अधःस्वरूपयोरधोतलमित्यमर उदर्कःफलमुत्तरमितिच स्वारसेतिद्वलोपेपूर्वस्येतिदीर्घः ॥ ४१ ॥

वीक्षितस्त्वमसिमामथगन्तुं तन्मनुष्यजगतेनुमनुष्व ॥ किंभुवःपरिवृढानविवोढुं तत्रतामुपगताविवदंते ॥ ४२ ॥

वीक्षितइति ॥ हेइन्द्र मयात्वंवीक्षितःदृष्टोसि अथमंगलेआनन्तर्येवा युद्धाभावादत्राप्यहनसुखी तस्मात्मनुष्यजगतेभूलोकायगन्तुंमांअनुमनुष्वअनुजानीहि तत्रयुद्धेकिप्रमाणमतआह । तत्रभूमौतांभैमीविवोढुपरिणेतुमुपगता.समागताभुवःपरिवृढाःप्रभवोराजान.किन्नविवदंते । अहमहमिकयापरस्परकलहंनकरिष्यन्तिकिमित्यर्थः । ततोयुद्धंततोममसुखस्यादित्याशांदेहीत्यर्थः जगतेगत्यर्थकर्मणीत्यादिनाचतुर्थी परिवृढइतिप्रभौपरिवृढइतिसाधुः विवदंतेभासनोपसम्भाषेतिविमतौतङ् वर्तमानेतिवर्तमानवत्प्रत्ययश्च ॥ ४२ ॥

इत्युदीर्यसययौमुनिरुर्वीं स्वर्पतिंप्रतिनिवर्त्यबलेन वारितोप्यनुजगामसयतं तंकियन्त्यपिपदान्यपराणि ॥ ४३ ॥

इतीति ॥ समुनिरित्युदीर्यपूर्वोक्तमुक्त्वाउर्वीं ययौ किंकृत्वावलेनवला-त्कारेणस्वर्पतिंनाकनायकंप्रतिनिवर्त्यपरावृत्यवारितोपिप्रपयादिनातिष्ठेतिनिषिद्धोपिसशक्रः सयत्नंयथातथाकियंत्यप्यपराणिद्वित्राणिपदानि तं नारदमनुजगामपश्चाद्गच्छत् यन्तनितिक्षिपित्पाठः तदासइन्द्रः अहरादित्वाद्रेफः पदानिअध्वगमनार्थत्वादत्यंतसंयोगेद्वितीया ॥ ४३ ॥

पर्वतेनपरिपीयगभीरं नारदीयमुदितंप्रतिनेदे ॥ स्वस्यंकश्चिदपिपर्वतपक्ष च्छेदिनिस्वयमदर्शिनि पक्षः ॥ ४४ ॥

पर्वतेनेति ॥ पर्वतेनमुनिना गम्भीरमर्थगम्भीरंस्थूलंच नारदीयंनारदस्यइदमुदितंवचनं परिपीयसादरंश्रुत्वाप्रतिनेदेसाधूक्तमितितस्याभिनन्दनंचक्रे । पर्वतंपक्षान्छिनत्येवंशीलेइन्द्रेविषये अथचपर्वतस्यपक्षंमतंछिनत्येवंशीलेइन्द्रे स्वस्यात्मनःकश्चिदपिपक्षोममैवंप्रतिभातीतिकिञ्चिदपिमतंस्वयंनअदर्शिनप्रदर्शितं अथचआपोनाराइतिप्रोक्ताइतिवचनान्नारंजदकंददातिनारदोमेघस्तदीयगर्जितंपरिपीयाद्रिणाप्रतिनंद्यतेप्रतिध्वन्यते गिरिगरुच्छेदिनिस्वपक्षंस्वगरुच्छेदनभयात्पर्वतेननप्रदर्श्यतइत्युक्तिः ४४

पाणयेबलरिपोरथमैमी शीतकोमलकरग्रहमर्हम् भेषजंचिरचिताश्मनिवास व्यापदामुपदिदेशरतीशः ॥ ४५ ॥

पाणयइति ॥ अथरतीशःकामःचिरंचितानांसंभृतानामश्मनिवासेनवज्रवासेनजन्यानांविशिष्टानामापदांरोगाणां अर्हंयोग्यंतदपनयनसमर्थंमैमीशीतकोमलस्यकरस्यग्रहंपरिणयनलक्षणंभेषजमौषधंबलरिपोःपाणये उपदिदेशसमादिष्टवान् । स्वरोगैमीविवाहोस्तवमिन्द्रंचकारेत्यर्थः भैमीप्राप्तौवज्रत्यागात्कठिनवज्रजन्यसन्तापःशाम्यतीत्यर्थः दाहशान्त्यर्थमन्यत्रापिशीतलंभेषजमुपदिश्यते ॥ ४५ ॥

नाकलोकभिषजोःसुषमायापुष्पचापमपिचुम्बतिसैव ॥ वेद्मितादृगभिषज्यदसौतद् द्वारसंक्रमितवैद्यकविद्यः ॥ ४६ ॥

मदनस्यौषधोपदेशे कुतः सामर्थ्यमित्यत आह । नाकेति नाकलोकस्य स्वर्गलोकस्य भिषजौ वैद्ययोर्याश्विनौ परमा शोभा सैव शोभा पुष्पचापमपि कामं सम्यक् चुम्बति स्पृशति तयोरेव शोभा मदने समागतेति वेद्मि यतो सौ मदनस्तादृक् स्ववैद्यरूपः सन् अभिषिज्यत् चिकित्सेत् किंभूतः सैषा शुभैवद्वारं तेन संक्रामिता संक्रान्तिं प्रापिता समा विशिष्टा वैद्यकविद्याऽऽयुर्वेदशास्त्रं यस्मिन् मदने शोभाद्वारेणाश्विनोरात्मनि संक्रांतिता वैद्यकविद्या येन वा । अतः कामस्य भिषक्त्वं सङ्गतमिति भावः अमनत्वात्क्रमो मित्वादृत्वात्संक्रमितेति रूपं साधुः तारकादेराकृतिगणत्वादितच् वा विद्यां वेत्तीति वैद्यः त्यदादित्वात्तस्य कर्मेति योपधाद्गुरूपोत्तमादिति वुञ् अभिषिज्यत् भिषग्भावो यत्तयनेकन्नादित्वाद्यक् ॥ ४६ ॥

**मानुषीमनुसरत्यथपत्यौ खर्वभावमवलंब्य मघोनि ॥ खण्डितं निजमसूचयदुच्चैर्मानमाननसरोरुहनत्या ॥ ४७ ॥**

इन्द्रे भैमीमभिलषति सति इन्द्राण्यादीनामिन्द्रपरित्यागजन्यामवस्थां बहुभिः श्लोकैराह । मानुषीमिति ॥ अथ पत्या विन्द्रे खर्वभावं नीचत्वमवलंब्याङ्गीकृत्य मानुषीं भैमीमनुसरति जिगमिषति सति मघोनीन्द्राणी आननसरोरुहस्य चिन्तावशान्नत्या नमनतया निजं स्वकीयं उच्चैर्महान्तं मानमहंकारं पूजनं वा खण्डितमसूचयत् । आननसरोरुहनत्याकृत्या खण्डितमिति वा अथवा खर्वत्वं ह्रस्वत्वं यो हि वामनत्वमङ्गीकरोति तस्यैव परिमाणेन न्यूनत्वं भवितुं युक्तं नान्यस्येति अत्र तु विपरीतम् मानुषी जातिवाचित्वान्ङीप् मघोनी पुंयोगेति ङीप् श्वयुवेति संप्रसारणम् ॥ ४७ ॥

**यो मघोनि दिवमुज्झरमाणे रम्भया मलिनिमा लम लम्भि ॥ वर्ण एव सखलूज्ज्वलमस्याः शान्तमान्तरमभाषत भङ्ग्या ॥ ४८ ॥**

य इति ॥ रम्भया देवाङ्गनया मघोनीन्द्रे दिवमुज्झरमाणे त्यक्त्वा गच्छति सति यो मलिनिमा मालिन्यमलमत्यर्थं सलम्भि प्राप्तः स मलिनिमा रूपो वर्ण एव खलु निश्चयेन तस्या रम्भायाः उज्ज्वलं हर्षयुक्तं आन्तरं हृदयं भङ्ग्याऽऽकार विशेषेण शान्तं निर्विषण्णं दुःखयुक्तमभाषताबोधत् ॥ उज्ज्वलस्य मालिन्यमनु

पपद्यमानंसद्योपत्याद्दीप्ततायाःशान्ततांब्रूते स्वत्यागदुःखवशात्क्षाम त्वंजातंसर्वैरपिज्ञातमित्यर्थः । अथवाऽस्याउज्वलंशृङ्गाररसप्रधानंआन्तर मन्तःशान्तंशान्तैकरसप्रधानंब्रूतेस्मतस्याअपिवैराग्यमजूदित्यर्थः । अथच शान्तंकोपरहितंतदीयमन्तःकरणंउद्दतिशयेनज्वलन्तीत्युज्ज्वलंदीप्तसको पमभाषत स्वत्यागात्तदानींक्रुद्धासाजातेत्यर्थः । कोपाच्चक्षामतामवति अत्रापिशान्तस्यदीप्तत्वंशान्तरसस्यचशृङ्गाररसत्वमिति उभयमप्याश्चर्यका रिश्यामवर्णस्यशृंगारकथनंयुक्तं तस्यतद्वर्णत्वात् उच्चरणाद्गोउदञ्चरःसकर्म कादित्यात्मनेपदम् ॥ ४८ ॥

जीवितेनकृतमप्सरसांत त्प्राणमुक्तिरिहयुक्तिमती नः ॥ इत्यनक्षरमवाचिघृताच्या दीर्घनिःश्वसित निर्गमितेन ॥ ४९ ॥

जीवितेनेति ॥ घृताच्यादेवाङ्गनयादीर्घनिःश्वसितस्यनिर्गमितेननिश्व सितेनकृत्वाइति अनक्षरंवर्णैर्विनैवाभादि अथवानक्षरमवाच्यमवाचि इ तिकिं अप्सरसांनोऽस्माकंइहसमयेजीवितेनकृतमलंइन्द्रस्य भैम्यनुरा गाज्जीवितंनिष्फलयतः तत्तस्मादस्माकंप्राणमुक्तिःप्राणत्यागएवयुक्तिम तीयुक्तेति . दुःखेनतादृग्दीर्घोनिःश्वासोमुक्तोययाप्राणाअपिवहिर्निर्गच्छ न्तीतिभावः । प्राणानिःश्वासरूपास्ततस्तन्निर्गमात्प्राणनिर्गमोयुक्तः अन क्षरमवाच्यंस्यादित्यमरः ॥ ४९ ॥

साधु नःपतनमेत्रमितःस्या दित्यभण्यततिलोत्त मयापि ॥ चामरस्यपतनेनकराब्जो द्विलोलन चलद्भुजनालात् ॥ ५० ॥

साध्विति ॥ तद्विलोलनेनचामरचालनेनचलन्चञ्चलोभुजएवनालो यस्यएवंविधात्करएवाब्जकमलंतस्माच्चामरस्यपतनेन कृत्वातिलोत्तमया देवाङ्गनयापि इत्यभण्यतअवादि । इतिकिं । इतोऽस्मात्स्वर्गाल्लोकात् कमाभरवत्पतनमेवयुक्तंस्यात् इतिदुःखवशादतिवैकल्यात्करकमलात् चामरंपतितमितिभावः । भणिकोक्तिरणाज्ञापकादनुदात्तेत्तोपिचल तेःपरस्मैपदता ॥ ५० ॥

मेनकामनसितापमुदीतं यद्विधित्सुरकरोदवहि
त्थाम् ॥ तत्स्फुटं निजहृदःपरिपाके पङ्कलिप्तिमसृ
जद्बहिरुत्थाम् ॥ ५१ ॥

मेनकेति ॥ मेनकादेवाङ्गनामनसिउदीतंजातंतापंविरहज्वरंविधि
त्सुर्विधातुमिच्छुः अवहित्थामाकारगुप्तिमकरोदितियत्तदाकारगुप्ति क
र्तृमेवकर्मभूतं निजहृदःस्वीयहृदयस्यपुटमध्येयःपाकस्तद्विषयेबहिरुत्थां
बहिर्जातांपङ्कलिप्तिंपङ्कलेपमिवअकरोत् । स्फुटमुत्प्रेक्षे । सन्तापाकार
गुप्तिभ्यांतदीयंहृदयमतितरांपीडितम् सन्तापस्याधःस्थितत्वाद्धृदयस्य
मध्येस्थितत्वादवहित्थायाश्चपरिस्थितत्वात्पुटपाकत्वपुटपाकेविनाशाभा
वाद्दुःखसहत्वंसूचितम् । साक्षात्पाकेझटितिविनाशएवभवेत् तथाचि
रंदुःखंनानुभूयेतेत्यर्थः । अन्योपिपुटपाकेबहिष्पङ्कलेपंकरोति । मेनके
तिपृषोदरादित्वात्साधुभाषायामपि ॥ ५१ ॥

उर्वशीगुणवशीकृतविश्वा स्तत्क्षणस्तिमितभाव
निभेन ॥ शक्रसौहृदसमापनसीम स्तंभकार्यमपुष
द्वपुषैव ॥ ५२ ॥

उर्वशीति ॥ गुणैःसौन्दर्यादिभिःवशीकृतंविश्वंययासाउर्वशीदेवाङ्गना
तस्मिन्नेवक्षणेस्तिमितभावस्यनिश्चलत्वस्यनिभेनव्याजेन शक्रसौहृदस्य इ
न्द्रसौहृदस्य समापनंसमाप्तिस्तस्य सीमायांमर्यादायांस्तम्भस्यकार्यंमर्यादा
ज्ञापकलक्षणम् वपुषैवअपुषत्ज्ञापितवती । इयत्कालंशक्रसौहृदंनातःपर
मितिअवधिज्ञापनंनिश्चलत्वात्स्तम्भतुल्येनशरीरेणैवकृतवतीत्यर्थः ॥ अ
त्यन्तांस्तब्धाजातेतिभावः ॥ सीमायामपिसमाप्तिज्ञापकस्तंभोभवति । सौ
हृदेत्यत्रहृदयेत्युभयपदवृद्धिर्न संज्ञापूर्वकोविधिरनित्यइतिपरिभाषया अ
न्येत्वर्थवत्परिभाषयासुहृद्दुर्हृदौमित्रामित्रयोरितिनिपातितस्य सुहृच्छब्द
स्यायोऽवयवोहृच्छब्दस्तदन्तस्यउत्तरपदस्यवृद्धिर्नभवतीतिव्याचक्षते समु
दायस्तत्रभिन्नवचनोऽवयवस्तुनिरर्थकइतिरक्षितोक्तेः । अपुषत्पुषादि
त्वादङ् ॥ ५२ ॥ -

कापिकाममपिबमाणवुभुत्सुं शृण्वतित्रिदशभर्तरि

किंचित् ॥ एषकश्यपसुतामभिगन्ता पश्यकश्यप सुतः शतयज्ञः ॥ ५३ ॥

अनुरागवशात्लोकप्रवादोपिसेनायंजात इतिश्लोकद्वयेनाह । कापीति । कापिदेवाङ्गना सर्वाअपिदेवाङ्गनाकिमित्येवंसचिन्ताः किंजातमितिशुभ्रु त्वंज्ञातुमिच्छुं । कामपिस्त्रियंत्रिदशभर्त्तरीन्द्रे किंचिच्छृण्वतिसतिप्रभाषा । उवाच । सोपहासम् ॥ एषकश्यपसुतः शतमन्युः शतयज्ञः इन्द्रः कश्य पसुतांपृथ्वीमभिगन्तासम्भोक्त्यगमिष्यति पश्येतिवाक्यार्थः कर्म । पृथ्वीं गच्छतीन्द्रः ततोहेतोः एताः सचिन्ताः । कश्यपमुनेः पुत्रोपिशतयज्ञोपिक श्चंमद्यंपिबतीतिमद्यपकन्यांगच्छतीत्यप्याश्चर्यम् पामरेणापिनक्रियते वि शिष्टकुलोत्पन्नेनानेनअनेकयज्ञकारिणापिमद्यपकन्यागमनंक्रियतइत्याश्च र्यम् अथचकश्यपपुत्रः कश्यपपुत्रींभगिनींगच्छतीत्याश्चर्यम् । यतःशतम न्युर्लसद्यायाऽनेकापराधी । मद्यपस्य निषिद्धकारित्वंनाश्चर्यकारि । मन्युः क्रोधेक्रतौदैन्येइतिविश्वः ॥ अभिगन्तेतिलुट् ॥ ५३ ॥

आलिमात्मसुभगत्वसगर्वा कापिशृण्वतिमघोनि बभाषे ॥ वीक्षणेपिसघृणासितृणांकिं यासिनत्व मपिसार्थगुणेन ॥ ५४ ॥

आलिमिति । आत्मनःसुभगत्वेसौन्दर्यविषयेसगर्वा । कापिदेवाङ्गना मघोनिशृण्वति आलिंसखींबभाषे । नृणांवीक्षणेपिकिमितिघृणासिजुगु प्सासहितासित्वमपिसार्थगुणेनसंगानुरोधेन यासिजुगुप्सांपरित्यज्यमनु ष्यावलोकनार्थंगच्छसि । गतानुगतिकोलोकइतिन्यायात् । येषामवलोक नेपित्वंजुगुप्सांकरोषितद्वरणार्थंविबुधेन्द्रः स्वनृंगच्छतीतियुक्तमुपहासः । इन्द्रादपित्वमेवसचिन्तेत्यर्थः ॥ ५४ ॥

अन्वयुर्द्युतिपथःपितृनाथा स्तंमुदाथहरितांकमि तारः ॥ वस्मकर्षतुपुरःपरमेक स्तद्गतानुगतिको नुमहार्घः ॥ ५५ ॥

अन्वयुरिति । अथद्युतिपथः पितृनाथाः वह्निवरुणयमा दिशांकमिता रःकामुकाःदिक्पालास्तंइन्द्रंजैमीदर्शनादिनिमित्तहर्षेण अन्वयुरनुजग्मुः ।

तस्मिन्निर्गतेपितेकिमिति निर्गताइत्यतआह । परंकेवलंएकःपुरः प्रथम
तःवर्त्मकर्षतुकरोतुप्रवर्त्तयतु पुरोमार्गंकर्त्तैवदुर्लभइत्यर्थः ॥ तस्यपुरोगच्छ
तःगतंगमनमनुलक्षीकृत्यगतिर्यस्य एवंविधःपुरुषोमहार्घोनदुर्लभोनुकिंतु
एकस्मिन्पुरोनिर्गतेऽन्योपितदनुयायीभवतीति इंद्रमनुसर्वेपिनिर्गताइत्य
र्थः ॥ अनुगतिकेतिशेषाद्विभाषेतिकप् कर्षतु प्रार्थनेलोट् कमितारः तृच्
प्रत्ययः ॥ ५५ ॥

प्रेषिताःपृथगथोदमयन्त्यै चित्रचौर्यचतुरानिज
दूत्यः ॥ तद्गुरुंप्रतिचतैरुपहाराः सख्यसौख्यकप
टेननिगूढाः ॥ ५६ ॥

प्रेषिताइति । अथोनन्तरंतैरिन्द्रादिभिः चित्रचौर्यैश्चित्तःकरणैश्चौर्यक
रणेचतुराःनिगूढाः स्वापेक्षयादूत्यपेक्षयाचपरस्परस्माद्गोपिताः पृथक्प्रत्ये
कंनिजदूत्यःस्वीयदूत्यः दमयंत्यैतस्यैप्रेषिताःनिगूढाः कुण्डिनवासिनाभव
श्या वातद्गुरुस्तत्पितरंप्रतिचद्दिव्यसंख्यसौख्यकपटेन संग्रामजनितसंतोष
व्याजेनपृथक्उपहाराः दिव्यरत्नान्युपायनानिऽऽचप्रेषिताः । त्वयावैरिणो
निहताः तेनवयंप्रसन्नास्तुभ्यंदिव्यरत्नादि अस्माभिःप्रेषितमङ्गीकरणीयमि
ति प्रीतेनस्वस्मैभैमीदयितेतितात्पर्यंसख्यसौख्यैरितिविशेषणं भैमीप्राप्तिं
प्रत्युपाधिराहित्यद्योतनार्थम् । निगूढाः उपहारविभूषणंवा ॥ ५६ ॥

चित्रमत्रविबुधैरपियत्तैः स्वर्विहायवतभूरनुसस्रे
द्यौर्नकाचिदथवास्तिनिगूढा सैवसाचलतियत्रहि
चित्तम् ॥ ५७ ॥

चित्रमिति । विबुधैःदेवैरथचपंडितैरपितैः स्वःस्वर्गंविहायभूरनुसस्रे
ऽनुसृतावतखेदे अत्रचित्रंस्वर्गप्राप्त्यर्थमन्यैरपियत्नःक्रियते एतैर्विबुधैरपि
स्वर्गएवत्यक्तइत्याश्चर्यम् अर्थान्तरन्यासमाह । अथवायुक्तमेतत् निरूढाप्र
सिद्धाकाचित्द्यौःस्वर्गोनास्ति किन्तुसद्यौर्यत्रचित्तमन्तःकरणंचलति यत्रा
नुरागःसएवस्वर्गः ततश्चभूमावनुरागात्तेषांभूमिरेवस्वर्गं इतितदनुसरणंयु
क्तमित्यर्थः ॥ ५७ ॥

शीघ्रलङ्घितपथैरथवाहै र्लम्भिताभुवममीसुरसाराः

वक्रितोन्नमितकन्धरबंधाः शुश्रुवुर्ध्वनितमध्वनि दूरम् ॥ ५८ ॥

श्रीग्रेति । अथ अमीसुरसारादेवश्रेष्ठाः अध्वनिदूरं दूरदेशोद्भवमतिशयितंवाध्वनितंशब्दं शुश्रुवुः । किम्भूताः शीघ्रं लंघितसूपन्यायैवाहैरश्वैः कर्तृभिः भुवंलंघिता प्रापिता । तथापूर्वंवक्रीकृतापश्चादुन्नमिता ऊर्ध्वीकृता कन्धराग्रीवायस्मिन्नेवंविधोबन्धःशरीरावस्थाविशेषोयेषां अध्वनिध्वनितं हितंयथातथाकथान्तरंपरित्यज्यशुश्रुवुरितितिवा वाहैर्वेमानैर्वा ५८ ॥

किंघनस्यजलधेरथचैवं नैवसंशयितुमप्यलमन्त ॥ स्यन्दनंपरमदूरमपास्य न्निस्वनश्रुतिसहोपनतन्ते ॥ ५९ ॥

किमिति । तेदेवाइदंघनस्यमेघस्यध्वनितमथवा समुद्रस्यकिमितिसंशयितुंसंदेहमपि कर्तुमशोत्समर्थानैवालमन्तकिंपुनर्निश्चेतुंनिःस्वनस्यश्रुतिराकर्णनंतयासहतस्याःसमयेउपनतंप्राप्तं अदूरंनिकटवर्तितेनंस्यन्दनंरथंपरंकेवलंअपश्यन् ददृशुः । शब्दाकर्णनसमयेरथोपिवेगादागतइत्यर्थः । नलस्याश्वहृदयवेदित्वंसूचितम् । प्रथमक्षणेघनध्वनिस्मरणंद्वितीयेजलधेस्तुक्रमेणाद्वयोः समानधर्मस्मरणावां पंचमक्षणेसंशयप्रथमक्षणएवरथेसमागतेकथंसंशय कथान्तरविचारः । कथान्तरस्यनिर्णयइत्यर्थः । रथध्वनेर्गाम्भीर्यंसूचितम् ॥ ५९ ॥

सूतविश्रमदकौतुकभावो भाववोधचतुरंतुरगाणाम् ॥ तत्रनेत्रजनुषःफलमेते नैषधंविबुधिरेविबुधेन्द्राः ॥ ६० ॥

सूतेति । एतेविबुधेन्द्राःनेत्रजनुषोनयनजन्मनः फलंनैषधंतत्ररथेविबुधिरेज्ञातवन्तः । किंभूतंसूतस्यसारथेः विश्रमंददातीतिविश्रमदःकौतुकिभावंकुतूहलित्वंयस्यसः तथातुरगाणांभावबोधेहृदयाशयज्ञानेचतुरं अत एवएवंविधस्यसुन्दरांतरस्याभावादेतस्यावलोकने नेत्रजन्मनःसाफल्यमित्यर्थः । सूतश्रमापमोदनेनास्माकमप्यभीष्टंकृत्वा श्रममपनेष्यतीतिसूचितम् पशूनांहृदयंजानाति सोस्माकंहृदयस्थमभिप्रायंकथंनज्ञास्यतीतिभाव

बोधपदेनसूचितम् । विशिष्टंश्रमंनुद्यतेनुदतीतिवा एतेनिकूनैलोयमिति तैर्ज्ञातमितिभावः ॥ ६० ॥

वीक्ष्यतस्यवरुणस्तरुणत्वंयद्बभारनिविडंजलभूयम् ॥ नौचितीजलपतेःकिमुसास्य प्राज्यविस्मयरसस्तिमितस्य ॥ ६१ ॥

वीक्ष्येति । तत्तस्मिन्समयेवरुणस्तस्यनलस्यतरुणत्वं वीक्ष्यत्यमिविडं जलभूयंजलत्वंबभारप्राप्तवान् एनंदृष्ट्वाभैमीमांवरिष्यति कथमितिचिन्तया ऽनिखिन्नोभूदित्यर्थः । अथचजडत्वंतयैवचिन्तयास्तब्धत्वमपिप्राप । सो पिनलसौन्दर्यतारुण्यावलोकनेन प्राज्योबहुतरोविस्मयरसश्चाश्चर्यरसस्ते नस्तिमितस्यनिश्चलस्यास्यजलपतेर्वरुणस्यकिमुनौचिती अपित्वौचित्यमे व । जलपतेरुदकरूपत्वंजडपतेर्मूर्खश्रेष्ठस्यचमन्दभूयत्वंचयुक्तमेव अन्य स्यापिविशिष्टगर्वरसयुक्तस्यजडपतेर्जडत्वंयुक्तमित्युक्तिः । तादृशंतमालो क्यातितरांसचिन्तोभूदित्यर्थः ॥ ६१ ॥

रूपमस्यविनिरूप्यतथापि म्लानिमापरविवंशावतंसः ॥ कीर्त्यतेयदधुनापिसदेवः कालएवसकलेनजनेन ॥ ६२

रूपमिति ॥ रविवंशोऽवतंसोभूषणंयस्यसोयमः अस्यनलस्यरूपंसौन्दर्यं निरूप्यविशेषेणसादरमवलोक्य तथातेनप्रकारेणातिम्लानिंआधिक्यंकालि मानमाप । यद्यनेनकारणेनसकलेनापिजनेनापिसदेवःकालःकालवर्णएव अथच कालसंज्ञकःकीर्त्यतेकथ्यते नलरूपावलोकनजनितकालिम्नोद्यापि वर्तमानत्वाद्यमस्यकालत्वमर्थवत्वंनतुनाममात्रेणेत्यर्थः । यमोपिसचि- न्तोभूदित्यर्थः । रविवंशावतंसस्यश्यामत्वमाश्चर्यकारि । तथानिर्वचनी यस्वरूपसौन्दर्यंविलोक्य यस्माद्यमोपिकालिमानंप्रापतस्माज्जनैर्भैमीकीर्त्य तइति ( रविवंशावतंसइत्यत्रशकन्ध्वादित्वात्पररूपम् ) ॥ ६२ ॥

यंचभारदहनःखलुतापं रूपधेयभरमस्यविमृष्य ॥ तत्रभूदनलताजनिकर्त्रीमातदप्यनलतैवतुहेतुः६३

यमिति ॥ दहनःअग्निःअस्यनलस्यरूपधेयस्यसौन्दर्यस्यभरंबाहुल्यंविमृश्यविचार्यदुःखात् सन्तापम्बभार । तत्र सन्तापेऽनलताखलुनिश्चितंजनिकर्त्रीजन्मकर्त्रीमाभूत् स्वेनस्वस्यतापकारणायोगादेकस्यैव कर्तृत्वकर्मत्वविरोधात् । तदपितथापितुपुनर्निश्चितंअनलतैवनलान्यत्वमेवहेतुकारणम् ॥ अहंचेन्नलोऽभविष्यन्तर्हिभैमीममैव अभविष्यत्तत्तुनाभूदितिदुःखवशात्सन्तप्तोऽभूदिति भावः ॥ ६३ ॥

कामनीयकमधःकृतकामं काममक्षिभिरवेक्ष्यतदीयम् ॥ कौशिकः स्वमखिलंपरिपश्यन्मन्यतेस्म खलुकौशिकमेव ॥ ६४ ॥

कामेति ॥ कौशिकइन्द्रः अखिलंस्वमात्मानंपरितोविलोक्यखलुनिश्चितंकौशिकमेवउलूकमेवमन्यतेस्म । किंकृत्वाअधःकृतोन्यक्कृतःकामोयेनतत्तदीयंनलसम्बन्धिकामनीयकंसौन्दर्यंअक्षिभिःसहस्रेणापिनेत्रैः कामतिरांनिपीयनलाग्रेअहमुलूकतुल्यएवेतिइन्द्रस्यबुद्धिरुदभूत् । अत्यवयवंस्वस्यनेत्रसद्भावाद्दिवसस्यलत्वादित्यर्थः । अक्षिभिरितिबहुवचनंतद्रूपावलोकनेसौकर्यसूचनार्थम् । कौशिकस्यकौशिकत्वयुक्तरूपेव । महेन्द्रगुग्गुलोलूकव्यालग्राहिषुकौशिकइत्यमरः कामनीयकंपूर्ववत् । भावेयोपधादितिवुञ् ॥ ६४ ॥

रामणीयकगुणाद्वयवादं मूर्तमुत्थितममुंपरिभाव्य विस्मयायहृदयानिवितेनुस्तेषुतेषुनसुराःप्रवभूवुः ॥ ६५ ॥

रामेति ॥ सुराःइन्द्रादयः अमुंनलंमूर्तंआकारवन्तं उत्थितंउदीतंरामणीयकंसौन्दर्यमेवलक्षणोगुणस्तस्याद्वैतवादःअद्वितीयतावादः तंपरिभाव्यविचार्यहृदयानिअन्तःकरणानि विस्मयायआश्चर्याय यतोवितेनुर्ददन्तः । आकारवत्सौन्दर्यमिदमेकमेवात्रदृष्टंनान्यत्रेत्याश्चर्ययुक्तोतोआ- ततस्तेनकारणेन तेषुतेषुहृदयेषुविषयेनबभूवुःसमर्थानाभूवन् आश्चर्यवशात्किंकरणीयमधुनेतिनस्फुरितमितिभावः । रामस्यस्वस्वत्वनिवृत्तिपरस्वत्वोपादानत्वात्विस्मयदानेषुहृदयेषुस्वामित्वंनाभूदितियुक्तमेव रामणीयकंगुणोयस्यतस्याद्वयवादएतादृशोयमेवनान्यइतिवा । रामणीयकं

कामनीयरूपवत् ॥ ६५ ॥

**प्रैयरूपकविशेषनिवेशैः संवदद्भिरमरोः श्रुतपूर्वैः एषएवसनलःकिमितीदंमन्दमन्दमितरेतमूचुः॥६६**

प्रैयेति । अमराःइतिएवंइदंइतरेतरंपरस्परंमन्दंमन्दंअल्पस्वरंयथात थाऊचुः । एवमिदकथं श्रुतपूर्वैःपूर्वैर्लोकमुखाच्छ्रुतैःसम्बदद्भिःयादृशागु णाःपूर्वंश्रुतास्तादृशाएवाधुनादृष्टाःइतिसम्वादंभजमानैः प्रैयरूपकस्यप्रि यरूपत्वस्ययोविशेषः अतिशयस्तस्यनिवेशैरवस्थानैःसौन्दर्यविशेषविन्या सैःकृत्वाचनलःएषएवकिं ।-श्रुतानुरूपगुणावलोकनेननलंव्यतर्कयन्नित्यर्थः प्रैयरूपकंमनोज्ञादित्वाद्भावेवुञ् । मन्दंमन्दंप्रकारेद्विरुक्तिः ॥ ६६ ॥

**तेषुतद्विधवधूवरणार्हंभूषणंससमयःसरथाध्वा ॥ तस्यकुण्डिनपुरंप्रतिसर्पन् भूपतेर्व्यवसितानिशशंसुः ॥ ६७ ॥**

तेष्विति । एतेपदार्थाःभूपतेर्नलस्यव्यवसितानितद्योगात् तेष्विन्द्रादिषु विषयेशशंसुः । अयंभैमीवरणार्थंगच्छतीतितेभ्यःकथयामासुः । एतेके । तद्विधातिसुन्दरीवधूर्भैमीतस्यावरणायार्हंयोग्यंभूषणमेकःपदार्थः । ससम यःस्वम्बरकालश्चैकः । कुण्डिनपुरंप्रतिगच्छन्सरथाध्वारथमार्गःएकः न लस्यभूषणादिविचार्यअयंभैमीवरणार्थं तत्रगच्छतीतिनिर्णीतमित्यर्थः ६७

**धर्मराजसलिलेशहुताशैः प्राणतांश्रितममुंजगतस्तैः ॥ प्राप्यहृष्टचलविस्तृततापैश्चेतसानिभृतमेतदचिन्ति ॥ ६८ ॥**

धर्मराजेति ॥ तैधर्मराजसलिलेशहुताशैःयमवरुणानलैः चेतसाकृत्वा निभृतंगुप्तंएतद्वक्ष्यमाणंअचिन्तिविचारितं । किंभूतैःजगतःसम्यक्पाल- नात् लोकस्यप्राणतांश्रितंजीवत्प्रियम् । अथच प्राणाख्यवायुभूतंचामुंप्रा प्य यथासङ्ख्यंहृष्टचलविस्तृततापैःजगत्प्रियत्वाद्धर्मराजत्वाद्यमोहृष्टः व- रुणोपिसलिलेशत्वाद्द्रवंयशादेवचञ्चलः वह्निरपिहुताशत्वाद्द्रवंयस्यादेव विस्तृततापपरिपुष्टोजातइत्यर्थः । असूनांप्राणीयमोहृष्यतिलोकप्राणहा रित्वाद् वायूनांप्राणौजवात्मकत्वान्मेघरूपत्वाद्वरुणश्चञ्चलोभवति तथा

वायूनांप्राप्तौवह्निरपिवदर्चिर्भवति । वचनंभङ्ग्यायमःक्रुद्धोभूद्वरुणोपि चिन्तावशाज्ज्वलोभूत् । वह्निरपिचिन्तावशादतिसंतप्तोभूदितिभावः ६८

नैवनःप्रियतमोभयथासौ यद्यमुंनवृणुतेवृणुतेवा॥ एकतोहिधिगमूमगुणज्ञा मन्यतः कथमदःप्रतिल म्भः ॥ ६९ ॥

यमचिन्तामाह । नैवेति । असौभैमीयदिअमुंनलंनवृणुतेवृणुतेवा उभयथापिवरणेऽवरणेचनोस्माकंप्रियतमाप्राणेश्वरीपत्नीहितकारिणीचनैव भवेत् कुतःहियस्मात्एकतोऽवरणपक्षेअमूंभैमीमगुणज्ञांधिक्मत्तोनलगु णाधिक्यंनजानाति साकथंवरणीया । वरणपक्षेगुणाधिक्यज्ञानेन वृतेन लेअदःप्रतिलम्भःअमुष्यालाभोममकथंतत्उभयथापि नप्रियतमेतिधर्मप्रेधा माचिन्ताकृता । एकतोन्यतःसमम्यर्थेतसिः ॥ ६९ ॥

मांवरिष्यतितदायदिमत्तो वेदनेयमियदस्यमहत्व म्॥ईदृशीचकथमाकलयित्री मद्विशेषमपरान्नृपपु त्री ॥ ७० ॥

वरुणचिन्तामाह । मामिति । इयंभैमीमान्तदावरिष्यतियदिमत्तःस- काशादियदतिबहु अस्यमहत्त्वंमाहात्म्यंनवेदनजानातिनत्वन्यथा ईदृ- शीचमत्तोनलस्यविशेषअजानानैवचेद्राजपुत्रीतर्हि अपरात्अन्यस्मात्स जातीयाद्वासकाशाद्मद्विशेषंमत्ताधिक्यं कथमाकलयित्रीज्ञास्यतिअपिनज्ञा स्यतीतिउभयथाअस्याअलाभइति वरुणेनचञ्चलंचिन्तितम । मत्तोनलंवि शेषापरिज्ञानवदन्यस्मान्ममाविशेषापरिज्ञानात्मामपिवरिष्यतीतिभा वइति वा ॥ ७० ॥

नैषधेवतवृतेदमयंत्या व्रीडितोनहिवहिर्भविता स्मि॥ स्वांगृहेपिवनितांकथमास्यं ह्रीनिमीलिख लुदर्शयिताहे ॥ ७१ ॥

वह्निचिन्तामाह नैषधइति । अहंदमयन्त्यांनैषधेवृतेसतिव्रीडितःसन्व हिर्भवितास्मि ॥ बतखेदे । गृहेपिस्वावनितांआस्यंमुखंकथंदर्शयिताहे दर्शयिष्ये खलुयस्माद्ह्रीनिमीलितलज्जासङ्कुचितं गृहेस्वस्त्रीभयंवहिर्लोक

दर्शनमयंतमथाकष्टमिति । वह्निना सन्तापेनचिन्तितं दर्शयिताहे चि चयैत्यात्मनेपदेसुध्यर्थत्वाद्गौकर्मत्वम् ॥ ७१ ॥

इत्यवेत्य मनसात्मविधेयं किंचनापि विबुधी बुबुधे न । नाकनायकमपास्य तमेकं सास्मपश्यदतिपरस्परमास्यम् ॥ ७२ ॥

इतीति । सा भैमी विबुधी दैवज्ञयोर्मनसाङ्गलिपूर्वोक्तं प्रवेत्याकलय्य किंच नात्मविधेयं किमपि स्वीयं कार्यं न बुबुधे न ज्ञातवती किन्तु तमेकं नाकनायक मिन्द्रं अपास्य विहाय परस्परमास्यवदनं पश्यति स्म किं कर्तव्यमिति मूढा भू दित्यर्थः । आत्मविशेषमिति पाठे तत्तापेक्षयात्मनोन्यूनत्वरूपं विशेषं मन सा विचिन्त्य किंचन न बुबुध इत्यर्थः ॥ ७२ ॥

किं विधेयमधुनेति विमुग्धं स्वानुगाननमवेक्ष्य नभुक्कः ॥ शंसति स्म कपटे पटुरुच्चैर्वञ्चनं समभिलप्य नलस्य ॥ ७३

किमिति । ऋभुक्षा इन्द्रः अधुना किं विधेयं किं करणीयमित्यस्फुरणाद्धि मुग्धं विशेषेणाज्ञं स्वानुगानामाननं समवेक्ष्य विलोक्य उच्चैरतितरां कैत वे पटुः कुशलः । नलस्य वञ्चनं प्रतारणं समभिलप्य शंसति स्म वक्त्य मारब्धवदति स्म ॥ ७३ ॥

सर्वतः कुशलवानसि कच्चित्त्वं हि नैषध इति प्रतिभा नः ॥ स्वासनार्द्धसुहृदस्त्वयि रेखां वीरसेननृपतेरविवक्षः ॥ ७४ ॥

सर्वत इति ॥ त्वं सर्वतः समग्रराज्यादौ कुशलवानसि कच्चित्कथय । क॰ च्चित्कामप्रवेदने । कामप्रवेदनं स्वाभिप्रायकथनम् । अपरिचितस्य कुशल प्रश्नोऽनयुक्तो इत्यत आह । त्वं प्रसिद्धो नैषधः त्वं इति नः अस्माकं प्रतिभा आनु मानिकी बुद्धिः कुत इत्यत आह । वयं स्वस्य मम आसनार्धे विषये सुहृदो ऽ तिमित्रस्य वीरसेननाम्नो नृपते रिव त्वयि विद्यमाना रेखां शोभां विद्मः जानी मः । वीरसेनतुल्यशोभत्वात्तत्पुत्रस्त्वं प्रायेणायितृसदृशः पुत्रो भवतीति । शोभामिति च पाठः । उपमानोपमानयाभूपत्यापि भूयत्वं प्रकृष्टाः कथ्यन्ते

रेखावलुःपीयूषवर्षिणीत्यालङ्कारिकाः ॥ ७४ ॥

क्वप्रयास्यसिनलेत्यलमुक्का यात्रयात्रशुभयाजनि
यन्नः ॥ तत्तयैवफलसत्वरयोत्वं नाध्वनोद्धमिद
मागमितःकिम् ॥ ७५ ॥

क्वेति । हेनलत्वंक्वप्रयास्यसिकिंप्रदेशमुद्दिश्यगमिष्यसिइत्युक्ताअलम् । प्रश्नोनैवयुक्तः । यद्वा नाकंअत्रपृथिव्याम् । मार्गविषयेयापृच्छानामार्गेच तांउद्दिश्ययायात्रातयाशुभयाअजनिजातम् । तत्तस्मात्फलेसत्वरयोन्मु ख्यातयैवयात्रयात्वंइदमध्वनोऽर्द्धनागमितःप्रापितःकिं अपितुतथैवप्रा- पितः अस्मत्कार्यार्थेनतुस्वकार्यवशादत्रसमागतोसीत्यर्थः । अथच गंता रंप्रतिक्वयास्यसीतिवक्तुंलोकेअनुचितम् ॥ ७५ ॥

एषनैषधसदण्डभृदेषज्वालजालजटिलःसहुताशः
यादसांपतिमवेहिचत्रेषं शासितारमधिगच्छसुरा
णाम् ॥ ७६ ॥

एषइति । हेनैषधएषपुरोदृश्यमानः सप्रसिद्धोदण्डभृद्यमः ॥ तथाएषः ज्वालाजालेनजटिलःपरीतः सहुताशनःअग्निःएषयादसांपतिर्वरुणःशे षसत्रेषंचमांसुराणांशासितारंइन्द्रंअधिगच्छजानीहि । दंडभृदादिवि शेषणंआदरायजयोत्पादनायच । वन्हेर्द्वयोर्ज्वालकीलावितिपुल्लिङ्गेपि ज्वालाशब्दः । पूर्ववाक्यत्रयेपिअधिगच्छेतिवाक्यार्थःकर्म । जटिलःमत्व र्थेइच्छादित्वादिलच् ॥ ७६ ॥

अर्थिनोवयममीसमुपेमस्त्वांनलेतिफलितार्थमवे
हि ॥ अध्वनःक्षणमपास्यचखेदं कुर्महेभवतिकार्य
निवेदम् ॥ ७७ ॥

अत्रागमनकारणमाह ॥ अर्थिनइति । हेनलत्वंफलितार्थतात्पर्यंअवे हिजानीहि । इतिकिंअमीवयंअर्थिनःसन्तःत्वांसमुपेमःयाचकत्वेनत्वां प्राप्ताःस्मकिलेति तद्विज्ञाप्यतामित्यतआह । अध्वनोजातंखेदंक्षणमात्रम पास्यभवतिजवत्समीपेकार्यनिवेदनंप्रयोजनज्ञापनंवयइदानीमेवकुर्महे ७७

ईदृशींगिरमुदीर्यविडौजाः जोषमासनविशिष्यव

भाषे ॥ नात्रचित्रमभिधाकुशलत्वे शैशवावधिगुरुर्गुरुरस्य ॥ ७८ ॥

ईदृशीमिति। बिडौजाः इन्द्रः ईदृशीं गिरं पूर्वोक्तां वदीयं वरकाजोर्वतूंमां सवस्त्रूववि शिष्यनवभाषे। भैमीवरणार्थमागतानांअस्माकंदूत्यंकुर्विति शिवि ष्यप्रकटंनावोचत्नैवेधभिप्रेतिभावः। एतावदेवमलवचनंश्रेयम् अत्रइदृशे अभिधाकुशलत्वेवचनकौशलविषयेचित्रमाश्चर्यं न। कुतोयतोगुरुर्बृहस्पति र्यस्येन्द्रस्यशैशवमवधिर्यथाभवतितथाशैशवमारभ्यगुरुःशिक्षकः। सएवंव दतीतिकिमाश्चर्यमित्यर्थः। आसेतिअसगतिदीप्त्यादानेषु तेनमकाप्यनु पपत्तिः ईदृशीत्यदादिदृशितिकञिटिड्ढेतिङीप् ॥ ७८ ॥

अर्थिनामहृषिताखिललोमा स्वंनृपः स्फुरकदंबकदंबकम् ॥ अर्चनार्थमिवतच्चरणानां सप्रणामकरणादुपनिन्ये ॥ ७९ ॥

कपटाभिप्रायमजानतोनलस्यधीरोदात्ततांपञ्चदशभिःश्लोकैराह ॥ अर्थीति इन्द्रस्यार्थित्वादर्थिनामाश्रुतेनहृषितानिविकसितानि अखिलानिलोमानियस्यसनृपोनलःप्रणामकरणात्भक्तिश्रद्धादिप्रकृष्टनमस्करणाद्धेतोस्तच्चरणानामर्चनार्थमर्चनायैवस्वमात्मानमुपनिन्येतच्चरणसमीपेउपहृतवान् कमिवस्फुटकदंबकदंबकमिवरोमांचितत्वाद्विकसितनीपकुसुमसमूहमिवेतिस्वपदविशेषणतुल्यमित्यर्थः। कदम्बपुष्पैरपिजनकेनदेवतार्चनाक्रियतेस्वमङ्गमेवपूजोचितकदम्बपुष्पसदृशकृत्वार्पयामसेत्यर्थः। हृषितेति। हृषेर्लोमस्विति इट् ॥ ७९ ॥

दुर्लभंदिगधिपैः किममीभिस्तादृशंकथमहोमदधीनम् ॥ इदृशंमनसिकृत्यविरोधं नैषधेनसमशायि चिराय ॥ ८० ॥

दुर्लभमिति। नैषधेननलेनइदृशंयाञ्चादानयोःपरस्परविरोधंमनसिकृत्यआस्तिकत्वेनविचार्यचिरायचिरकालंवक्ष्यमाणप्रकारेण समशायिसंशयितंइदृशंकथंअहोआश्चर्यं। अमीभिर्दिगधिपैःदिक्पालैःकिंवस्तुदुर्लभमपितुनकिमपि। तादृशयदिक्पालैर्दुर्लभंवस्तुतदन्याधीनंकथमहोआश्चर्यं

मीयतांकथमभीप्सितमेषा दीयतांकथमयाचित
मेव तंधिगस्तुकलयन्नपिवांछा मर्थिवागवसरंस
हतेय्रः ॥ ८३ ॥

मीयतामिति अथोद्यथातथेतिसंवच्यते । मया ऽयाचितमेवाप्रार्थितमे
वशीघ्रमेतेभ्योयथामयादीयतांतथैषामभीप्सितंवस्तुकथंमीयतांदीयताम्
अभीप्सितज्ञानेनविनादातुंनशक्यतेततो ऽकथितेप्यभीप्सितज्ञानंभवतिचे
त्तर्ह्य प्रार्थितमेवद्रुतंशीघ्रंदीयतामित्यर्थः । ज्ञातेप्ययाचितंकिमितिदातव्य
मित्यतआह।गत्वायद्दीयतेदानंतद्दानसकलंस्मृतम्। सहस्रगुणमाहूययाचि
तेतुतदर्धकमितिवचनप्रामाण्यात् । वाञ्छायाचकस्याभीष्टंकलयन्नपिजान
न्नपियएतद्याचनानन्तरंदास्यामीति अर्थिवाचोवसरसहतेप्रतीक्षतेतंवदा
न्यंधिगस्तुसोधम । वाञ्छांज्ञात्वापिप्रार्थनानन्तरन्दास्यामीतिविचारयति
सोधमइतिकिंवाच्यम्। तस्मादयाचितमेवदेयमितिभावः । एषांकस्यचवर्त
मानइतिषष्ठीअभीप्सितंमतिबुद्धीतिवर्तमानेक्तः । कलयन्निति हेतौशताः८३

प्रापितेनचटुकाकुविडम्बं लम्भितेनबहुयाचनल
ज्जाम् अर्थिनायदघमर्जतिदाता तन्नलुम्पतिवि
लंब्यददानः ॥ ८४ ॥

अपीति । दाताऽर्थिनाकृत्वायदघंपातकमर्जति विलम्ब्यचिराद्ददानो
दातातत्पातकंनलुम्पतिपरिमार्ष्टुंनशक्नोति। अधिकरणयुक्तस्यकाकर्थेरय
थं । किंभूतेनार्थिनाचटुप्रियवाक्यकाकुदीनवाक्यंताभ्यांविडम्बंपराभवंप्रा
पितेनस्वस्यप्रियंदैन्यंवधादिनेनतथाबहुअनेकवारंयाचमानं तेनकृत्वाया
लज्जातामपिलम्भितेनप्रापितेन प्रियवचनाद्यवादयित्वैवझटित्यर्थिनेदेय
म् अन्यथापातकंस्यादितिभावः । अर्जतिअर्जअर्जनेभ्वादिः । अर्जअर्ज
नेचुरादिः ॥ ८४ ॥

यत्प्रदेयमुपनीयवदान्यैर्दीयतेसलिलमर्थिजना
य ॥ सार्थिनोक्तिविफलत्वविशंका त्रासमूर्छदपमृ
त्युचिकित्सा ॥ ८५ ॥

यदिति । वदान्यैर्बहुप्रदैःप्रदेयंदातव्यंवस्तुउपनीयसमीपेस्थाप्यार्थिजनाययत्सलिलंदीयतेदेयसंकल्पार्थमुदकमर्थिहस्तेप्रक्षिप्यते सासलिदानरूपाक्रियाऽर्थिनोक्तिर्याचनवचनंतस्यविफलत्वविशंकावैकल्यविशंकातयाजातस्त्रासस्तर्कजन्यंभयंतेन मूर्छन्नतिशयेनवर्धमानोपमृत्युरकालमरणंतस्यचिकित्साप्रतिक्रिया सलिलदानेनयाश्वासाफल्यनिश्चयात् । मरणेयानिचिन्हानितानिचिन्हानियाचकेइतिवचनप्रमाणकोयाच्ञावैकल्यजन्योपमृत्युःशाम्यतीत्यर्थः । मूर्छोनोपमृत्युःसलिलप्रक्षेपेणशाम्यति अर्थिन्युपस्थितेदानविधिसिद्धयेजलदानेविलम्बोपिनकर्तव्यइतिभावः ॥ ८५ ॥

**अर्थिनेनतृणवद्धनमात्रंकिंतुजीवनमपिप्रतिपाद्यम् एवमाहकुसवज्जलदायि द्रव्यदानविधिरुक्तिविदग्धः ॥ ८६ ॥**

अर्थिनइति । कुशंचसलिलोपेतंदानंसंकल्पपूर्वकमितिवचनात्दर्भसहितंजलंदात्रार्थिनेदापयतीतिदर्भसहितसलिलदानेदातारंप्रयोजयतीतिकुशवज्जलदायीउक्तिविदग्धःश्लोकोक्तिचतुरश्चद्रव्यदानविधिर्दानप्रकारस्यज्ञापकंयच्छास्त्रंसएवमाहब्रूते । एवंकिं दात्राअर्थिनेतृणवत्तृणमिवकेवलंधनमात्रंकेवलंधनंनप्रतिपाद्यंअभिलाषमकृत्वानदेयकिंतुजीवनमपिप्राणाअपितृणवद्देयाःतृणदानेइवप्राणदानेपिविचारोनकर्त्तव्यः । अथतृणंदर्भस्तद्युक्तंवलधनंनदेयकिंतुजीवनमपिउदकमपिदेयमितिब्रूतेअतएवोक्तिविविदग्धः अर्थिनेप्राणाअपितृणवद्देयाःकिमन्यदितिभावः ॥ ८६ ॥

**पंकसंकरविगर्हितमर्हंनाश्रियःकमलमाश्रयणाय ॥ अर्थिपाणिकमलंविकलंतद्वा सवेश्मविदधीतसुधीस्तत् ॥ ८७ ॥**

पंकेति । पङ्कस्यसंकरेणसंबंधेनविगर्हितंनिन्दितंकमलंश्रियोलक्ष्म्याःसंपदश्चआश्रयणायार्हंयोग्यंनभवतिएकङ्किलस्यानङ्केनापिनाश्रीयते । अथवान्यदपिपातकंसम्बन्धनिन्दितस्थानमाश्रययोग्यंनभवतितस्मात्सुधीर्विद्वान् विमलअपङ्कम्पातकरहितश्च अर्थिपाणिलक्षणंकमलं तस्याःलक्ष्म्याःसम्पदश्चवासवेश्मवसतिगृहंविदधीतकुर्यात् । विदुषासम्पदर्थिभ्योदेयेत्यर्थः अन्येनापिविदुषाउज्वलंदेवतायतनंक्रियते ॥ ८७ ॥

याचमानजनमानसवृत्तेः पूरणायवतजन्मनयस्य॥ तेनभूमिरतिभारवतीयं नद्रुमैर्नगिरिभिर्नसमुद्रैः ॥ ८८ ॥

याचमानेति । यस्यपुरुषस्यजन्मउत्पत्तिः याचमानस्यजनस्यमानसवृत्तेः मनोरथस्यपूरणायसमर्थोनभवति तेनैवपुरुषेणेयंभूमिरतितरांभारवतीवतेकष्टं । नद्रुमैःनगिरिभिःनसमुद्रैः भारवतीतेनपुंसायावान्भूमेर्भारो भवतितावान्वृक्षादिभिर्न । एतेकथंचित्पुष्पादिनाऔषधादिनारत्नादिना चोपकुर्वन्तिनत्वदाता तस्मात्याचकाभिलाषपूरणंकरणीयमितिभावः ॥८८॥

माधनानिकृपणःखलुजीवन्स्तृष्णयार्पयतुजातुपरस्मै ॥ तत्रचैषकुरुतेममचित्रं यत्तुनार्पयतितानिमृतोपि ॥ ८९ ॥

मेति । कृपणोऽतिलुब्धःजीवन्तृष्णयातिलोभेन परस्मैअर्थिनेजातुकदाचिदपिधनानिखलुनिश्चितंमाअर्पयत्मास्मदात् । जीवत्त्वाल्लोभसद्भावाद्नददातीत्यत्रनाश्चर्यम् मृतोप्येषकृपणःयत्तुपुनस्तानिधनानिनार्पयतिनप्रयच्छतितत्रचपुनस्तत्रैवतद्विषयेममचित्रं आश्चर्यंकुरुते मृतस्यापिलोभसद्भावात् । अथचमृतःसन्नपिकृपणधनानिनृपसम्बन्धीनिराजायत्तानिनकरोतिनार्पयतितत्राश्चर्यंयोजीवन्कस्मैचिन्नददातिसमृतोपिराज्ञेददातीत्याश्चर्यं तस्माद्यावज्जीवतितावदेवन्नव्यम् । मृतेराजानेष्यतीतिभावः ॥८९॥

मामभीभिरिहयाचितवद्भि र्दातृजातमवमत्यजगत्याम्॥यद्यशोमयिनिवेशितमेत न्निष्क्रयोस्तुकतमस्तुतदीयः ॥ ९० ॥

मामिति इहजगत्यांभूतलेदातृजातंवदान्यमात्रं अवमत्यअनादृत्यमां याचितवद्भिर्याचमानैरमीभिरिन्द्रादिभिः मयियद्यशोनिवेशितमाहितंइन्द्रादयोयस्ययाचकाजाता इत्यसाधारणयेममकीर्तिःकृता एतस्याःकीर्तेः निष्क्रयोविनिमयःतदीयः इन्द्रसम्बन्धीकतमस्तुकःपुनःपदार्थः अस्तुभवतु इन्द्रादिभिःपूर्वमन्यः कोपिचेद्याचयिष्यत्तेनचतेभ्यः किञ्चिच्चेददास्यत्तर्हितदेववस्तुकीर्तेर्विनिमयःसमभविष्यत्नत्वेवंइत्येतत्कीर्तितुल्यंएते

श्योवितरणीयंविनिमयंवस्तुनास्तीतिभावः । यदेतद्यशइतिवा स्वर्लोके वर्त्तमानंकल्पवृक्षादिदातृवर्गइतिवादातृतावतिष्ठतुयशोवतरणस्यमूल्यम पिदातव्यमित्यर्थः ॥ ९० ॥

**लोकएषपरलोकमुपेता हाविहायनिधनेधनमेकम् ॥ इत्यमुंखलुतदस्यनिनीष त्यर्थिबन्धुरुदयद्दयचित्तः ॥ ११ ॥**

लोकइति । एषलोकोनिधनेमरणेप्राप्तेधनंविहायएकएव असहायएव परलोकंउपेतागमिष्यति हाकष्टम् इतिहेतोःखलुनिश्चितंउदयन्तीउदिता दयायस्मिन् एवंविधंचित्तंमनोयस्यसअर्थिबन्धुःयाचकलक्षणःसुहृत् अस्य दातृलोकस्यतद्धनंअमुंपरलोकंपरलोकगतंजनंवानिनीषतिनेतुमिच्छति ख लूत्प्रेक्षेवा अर्थिनेदत्तंपरलोकेतदधिकंउपतिष्ठतिइत्यर्थः । अन्योपिबन्धुः पूर्वस्थानंत्यक्त्वास्थानान्तरंप्रत्येकाकिनएवगच्छन्तः सुहृदोधनादितत्स्थानं प्रापयति । उपेताइणतृन् दुह्यादित्वाद्द्विकर्मकः ॥ ९१ ॥

**दानपात्रमधमर्णमिहैकग्राहिकोटिगुणितंदिविदायि साधुरेतिसुकृतैर्यदिकर्तुं पारलौकिककुसीदमसीदत् ॥ १२ ॥**

दानेति । इहभुविएकग्राहिएकसंख्यायुक्तं देयंवस्तुगृह्णातितच्छीलंदि विस्वर्गेकोटिगुणितंकोटिपरिमितंदायिददातिदास्यति वा एवंशीलं दान पात्रंअधमर्णंयाचकलक्षणंऋणग्रहीतारंसुकृतैःपुण्यैः कृत्वापारलौकिकंस्व र्गलोकभवंकुसीदंवृद्धिजीविकांअसीदद्विनश्वरंकर्तुंयदिएतिप्राप्नोति जा नातिवा तर्हि साधुःसज्जनएवनान्यः । एवंविधंदानपात्रंसाधुव्यतिरेके णकेनापिनलभ्यतेलब्धेच तस्मिन्साधुनातस्मिन्चिरकालंस्थीयते तस्मा- त्तेनमनोरथःपूर्णःकर्तव्यइति भावः । कुसीदंमसीदत्कर्त्तुं साधुर्यदैतित र्हिसुकृतैःकृत्वानान्येनप्रकारेणेतिवा । अन्योऽधमर्णोद्विगुणादधिकंनद- दाति दानपात्रमधमर्णस्तुएकगुणंगृहीत्वाकोटिपरिमितंददाति ततएव तादृशमधमर्णंसाधुरेवसुकृतैरेवप्राप्नोतिनान्योऽन्येनोपायेनेति वा । कुसी दंवृद्धिजीविकेत्यमरः । दायीभविष्यतिगम्यादयइतिभविष्यदर्थेणिनिः ।

आवश्यकाधमर्णयोरितिवाऽधमर्णेवा । तद्योगेश्यकेनोर्भविष्यदाधमर्ण्य योरितिषष्ठीनिषेधात् कोटिगुणितमितिकर्मणिद्वितीया । पारलौकिकं अध्यात्मादिषुलोकोत्तरपदाच्चेतिवक्तव्यादूठञिअनुशतिकादिपाठादुभयप दवृद्धिः ॥ ९२ ॥

एवमादिसविचिन्त्यमुहूर्तं तानवोचतपतिर्निषधा नाम् ॥ अर्थिदुर्लभमवाप्यसहर्षा न्याच्यमानमुख मुल्लसितश्रि ॥ ९३ ॥

एवमिति । सनिषधानांपतिर्नलः एवमाजीविलावधिइत्येवंप्रभृतिमु हूर्तंक्षणंविचिन्त्यविचार्यतानिन्द्रादीनवोचत किंभूतान् अर्थिनांदुर्लभंया च्यमानस्यजनस्य मुखंतत्प्रसितश्रितदिवशोभंअवाप्यसहर्षान् याचकैर्दा तातिप्रसन्नमुखोदुर्लभस्तंतुप्रसन्नमवाप्यकार्यसिद्धिर्भविष्यतीसहर्षैर्जातमि त्यर्थः ॥ ९३ ॥

नास्तिजन्यजनकव्यतिभेदः सत्यमन्नजनितोजन देहः ॥ वीक्ष्यवः खलुतनूममृतादांदृग्निमज्जन मुपैतिसुधायाम् ॥ ९४ ॥

नास्तीति । जन्यजनकयोःकार्यकारणयोःव्यतिभेदोतिशयितोभेदोना स्ति । तथाजनस्यदेहः अद्यतइत्यन्नंभक्ष्यंतेनजनितोजन्यः इत्युभयमपिस त्यम् उभयत्रापिसुवर्णजन्यंकुण्डलंदृष्टान्तः । खलुयस्मादमृतमन्नभक्षयती त्यमृतादांवोयुष्माकंतनूंवीक्ष्य ममदृक्सुधायाममृतेनिमज्जनमुपैति । अमृ तमज्जनेनयथासुखंभवति तथाभवद्दर्शनेनेतियतोभवन्तोऽमृतभक्षिणः अत्र पूर्वोक्तोहेतुः । यद्वाऽन्नजनितोजनदेहोनास्तिजन्यजनकयोर्यस्मिन्न सौनास्तिजन्यजनकभेदोऽन्नादभिन्नएवेतिसत्यं यस्मादितिपूर्ववत् । यद्वा न्नजन्योदेहिदेहोस्तिनासौनास्तिजन्यजनकभेदोऽन्नादभिन्नएवेति सत्यम् । यस्मादित्यादिपूर्ववत् यद्वाऽन्नंजन्यादेर्जनदेहोस्तिजन्यजनकयोर्व्यतिभे दोयस्मिन्नसावस्तिजन्यजनकव्यतिभेदः एवंविधोनभवति किन्तुअन्नाद भिन्नएवतत्सत्यं । यस्मादित्यादिपूर्ववत्- पूर्वव्याख्यानादेतद्व्याख्यानद्वयं न्यायः । अमृतादामितिपाठेऽदइत्यस्यहलन्तत्वादपितनूमित्यस्यविशेषे

त्वेनयोजना । नास्तीति । अत्रास्तिक्षीरादिनासमासंविधायपश्चान्न
ञ्समासः । अमृतादासितिश्चदोनञ्इतिविद् ॥ ९४ ॥

मत्तपः क्वनुतनुक्वफलंवा यूयमीक्षणपथंव्रजथेति
ईदृशंपरिणमंतिपुनर्नः पूर्वपूरुषतपांसिजयन्ति ९५

मत्तपइति ॥ तनुअल्पंमत्तपोममतपः क्वनुअद्भुस्याश्चपियूयंईक्षणपथं
दृष्टिगोचरंव्रजथइतिफलंवाक्व अपितुअसम्भावितमेतत् महत्तपोलाभस्य
फलस्याल्पेनैवतपसादुर्लभत्वात्तर्हीदंफलंकथमित्यतआह ईदृशंमवद्दर्श
नलक्षणंफलंपरिणमन्तिजनयन्ति । भवद्दर्शनफलरूपेणावापरिणतानिएत
द्वाकाराणिनोस्माकं पूर्वपूरुषाणांपित्रादीनांतपांसितदुपार्जितानिपुण्या
निपुनः जयन्तिसर्वोत्कर्षेणवर्तन्ते मत्पूर्वजपुण्यैर्जेवद्दर्शनंजातमित्यर्थः ।
जयन्तिसर्वोत्कर्षेणवर्तमानानितपांसिपुनरीदृशंपरिणमन्तीतिवा · ईदृशा
न्यपिददन्तीतिक्वचित्तत्रफलशब्दस्यविभक्तिपरिणामेनेदृशान्यपि दुर्लभा
न्यपिफलानिनोस्माकंददन्तिददानानि पूर्वपूरुषतपांसिपुनर्जयन्तीतिव्या
ख्या ददन्तिवानपुंसकस्येतिशतुर्नुम् । अस्मदोद्वयोश्चेतिएकत्वेनेतिषष्ठीब
हुवचनस्यनआदेशः ॥ ९५ ॥

प्रत्यतिष्ठिपदिलांखलुदेवीं कर्मसर्वसहनव्रतजन्म
यूयमप्यहहपूजनमस्या यज्जिजैः सृजथपादपयो
जैः ॥ ९६ ॥

प्रतीति । सर्वसहनंव्रतंसर्वभारादिसहनलक्षणोनियमः तस्माज्जन्मयस्य
तिर्यस्यएवंविधंकर्मव्यापारः सुकृतरूपंकर्तृ इलांभूमिंखलुनिश्चयेनदेवींप्रत्य
तिष्ठिपत्प्रतिष्ठापयामास खलूत्प्रेक्षायांवा सर्वसहावसुमतीत्यभिधानात्
भूमेःसर्वसहत्वंततः तेनसुकृतेनतस्यादेवीत्वंकृतमित्यर्थः । तत्रप्रमाणा
माह अहहाश्चर्येयद्यस्मात् यूयमपिदिङ्नाथाश्चपिभूमिमस्पृशन्तोपिनि
जैःस्वीयैःपादपयोजैःचरणकमलैःकृत्वाऽस्याःभूमेःपूजनमसृजथकुरुथ ।
भवन्तोयत्पूजांकुर्वन्तिसादेवीतिभवद्भिः देवीत्वेनप्रतिष्ठितेयंसर्वापरोपस
र्गापिदेवत्वंलभतेपूजांवापृथिव्यामागमनेकिङ्कारणमितिप्रश्नइतिभावः ।
प्रत्यतिष्ठिपत् णौचङ्तिष्ठतेरिदितीकारः ॥ ९६ ॥

जीवितावधिकिमप्यधिकंवा यन्मनीषितमितोन रडिम्भात् ॥ तेनवश्चरणमर्चतुसोयं ब्रूतवस्तुपुनरस्तुकिमीदृक् ॥ १७ ॥

जीवितेति । जीवितमवधिर्मर्यादायस्य तत्प्राणपर्यन्तंप्राणेभ्योप्यधिकंवायत्किमपिवस्तुइतोमत्प्रणान्नराडिम्भात् मनुष्यबालकाद्भवद्भिर्मनीषितं अभिलषितंसोयंनृबालःवःयुष्माकंचरणंतेनवस्तुनार्चतुपूजयतु ईदृग्वस्तुकिंपुनरस्तु ब्रूतवाक्यार्थःकर्म । बालोप्यहंप्राणाधिकमपिदास्यामियाचनशङ्कानकार्याईप्सितंचकथनीयमितिभावः । चरणद्वयपूजनेसामर्थ्याभावात् चरणमित्येकवचनेनविनीतत्वंसूचितम् । अर्चतुत्वादिः ९७

एवमुक्तवतिमुक्तविशङ्के वीरसेनतनयेविनयेन वक्रभावविषमामथशक्रः कार्यकैतवगुरुर्गिरमूचे ॥ १८ ॥

एवमिति । अथकार्यकैतवगुरुःकपटाचार्यःबृहस्पतिर्वाशक्रः नलंप्रतिस्वीयान्नलादीनपिवक्रभावेन वक्रत्वेनवक्रोक्त्याकुटिलाभिप्रायेणच विषमांदुष्टांदुर्बोधांचगिरमूचे । कस्मिन्सति । वीतागताविरुद्धाविशङ्काविंधावायस्माद्विरुद्धमेकमनेकंवा किंयाचयिष्यन्तीति त्यक्तभयेवीरसेनतनयेनलेविनयेनविनीतत्वेनैवं पूर्वोक्तंउक्तवतिसति ॥ ९८ ॥

पाणिपीडनमहंदमयंत्याःकामयेमहिमहीमिहिकांशो ॥ दूत्यमत्रकुरुनःस्मरभीतिं निर्जितस्मरचिरंस्यनिरस्य ॥ १९ ॥

पाणीति । महीपृथ्वीतस्यांमिहिकांशोहेचन्द्रनल वयंसर्वे दमयन्त्याःपाणिपीडनंविवाहः तल्लक्षणमुत्सवंकामयेमहिइच्छामः । कान्त्यावशितया चनितरांजितःस्मरोयेनतत्संबुद्धिः चिरस्यचिरकालं स्मराद्भीतिभयंनिरस्यविरहजन्यंदुःखंविहाय अत्र भैमीविवाहोत्सवेविषयेनोस्माकंदूत्यंकुरु । सायथाऽवृणीतेतथाप्रयत्नं कुर्वित्यर्थः ॥ जितस्मरत्वाद्भवतोभीतिर्नअतिसुन्दरस्यतवभैमींप्रतिदूत्यंयुक्तं नान्यंप्रति अथचस्वीयानपिवञ्चयतिअहंदमयन्त्याःकामयेकिंभूतंमहउत्सवोस्त्यस्मिन् इतिमहि नोस्माकंचतुर्णांमध्येममदूत्यंकुरुनत्वेषांस्मरभीतिंनिरस्य अयास्माभिर्जितस्मरंनि

रस्य । अस्यते लोडंतं मेदूत्यंकुरुचिरस्यविलम्बमितियावत् । निरस्यत्य जेतिवा दूत्यविलम्बोनकार्यइत्यर्थः । भीतिंस्मरजानीहि । दूत्याकरणेवि लम्बोवामतःशापादितिभीतिःस्मरणीया । भीतिंकर्मत्वविवक्षयाषष्ठ्या भावः । नःपक्षेअस्मदोद्वयोश्चेतिबहुवचनम् ॥ ९९ ॥

आसतेशतमधिक्षितिभूपास्तोयराशिरसितेखलु कूपाः ॥ किंग्रहादिविनजाग्रतितेते भास्करस्यक तमस्तुतुलास्ते ॥ १०० ॥

अस्मिन्विषयेराजान्तरंयाच्यतांनत्वहमित्याशंक्याह । आसतइति । हेनलअधिक्षितिपृथिव्यांशतंबहुसंख्याकाभूपाःराजानः आसतेतिष्ठन्ति परंभूपत्वेतुल्येपित्वमौदार्यादिगुणबाहुल्यान्महाशयत्वात्तोयराशिःसमुद्रो सितेभूपाःखलुनिश्चितंकूपाः । अगाधतात्ज्ञावारसमुद्रापेक्षयाकूपायथाल्पी नास्तथात्वदपेक्षयान्येराजानइति । तस्मात्त्वयाचिताइतिभावः । आधि क्यमेवसमर्थयते दिविस्वर्गेतेतेनेकसंख्याकाःप्रसिद्धाश्चशुक्रादयोग्रहाःन जाग्रतिस्फुरन्तिकिं अपितु प्रकाशंतएवपरंग्रहत्वेतुल्येसत्यपिभास्करस्यतु लयासाम्यत्वेनकतमोग्रहःपुनरास्ते अपितुसूर्यसदृशोग्रहमध्येकोपिना स्तियथातथात्वत्सदृशोन्योभूपोनविद्यते अतःत्वमेवयाच्यतेइत्यर्थः । भा स्करस्यकतमस्तुतुलास्तेइतिपाठेभास्करस्यतुलासमानः कतमआस्तेऽपितु नकोपि । अधिक्षितिसप्तम्यर्थेव्ययीभावः ॥ १०० ॥

विश्वदृश्वनयनावयमेव त्वद्गुणाम्बुधिमगाधमवेमः ॥ त्वामिहैवमनिवेश्यरहस्ये निर्वृतिंनहिलभेमहिसर्वे ॥ १०१ ॥

विश्वेति । विश्वंपश्यन्तिविश्वदृश्वानिसर्वसाक्षीणिनयनानियेषानेवंभूतायत स्तस्माद्वयमेवागाधंगम्भीरंत्वद्गुणांबुधिंत्वद्गुणसमुद्रमवेमःजानीमः । त्वद्गु णसमुद्रं ज्ञातुंनान्यस्यसामर्थ्यंविश्वदृश्वनयनत्वाज्ञानादित्यर्थः । सर्वेवयमि हभैमीपाणिग्रहणलक्षणेरहस्येगोप्यार्थेएवंदूतत्वप्रकारेणत्वामनिवेश्यदूत त्वमप्राप्यनिर्वृतिंपरमंसुखंनहिनैवलभेमहिप्राप्नुमः । इहैकमितिपाठे एकंत्वांमनिवेश्यानियुज्येत्यर्थः । त्वत्सदृशोन्योनास्तिअतोदूत्येनियुज्यसे त्वंमकरिष्यसिचेच्छापंदास्यामइतिभावः अयमेववक्रभावः । वयमपिगुणस

मुद्रमगाधमेवजानीमः । अतएवावगाहितुमसमर्थाइतिभावोवा । सर्वद्रिभिरस्माभिस्त्वद्गुणसमुद्रतुल्योन्योराजगुणसमुद्रोनदृष्टइतिवा सर्वइति श्लोककृतामपिसहचरवर्णनांद्योतयति दृश्वेतिदृशेःक्वनिप् ॥ १०१ ॥

शुद्धवंशजनितोपिगुणस्य स्थानतामनुभवन्नपिशक्रः ॥ क्षिप्नुरेनमृजुमाशुसपक्षं सायकंधनुरिवाजनिवक्रः ॥ १०२ ॥

शुति । शक्रःधनुरिववक्रःअजनिक्रूरःकुटिलश्चजातः ॥ किंभूतःशक्रोधनुश्चशुद्धवंशजनितोविशिष्टकश्यपकुलोत्पन्नोपिदृढवेणुजनितोपिच विवेकगुणस्यविवेकवीर्यौदार्यादेर्मौर्व्याश्चस्थानतामाश्रयं । अनुभवन्नाश्रयन्नपि आश्रयीभवन्नपिऋजुंशुद्धाशयंअवक्रंसपक्षंलोकपालांशजूतत्वाद्यशोहविर्दानाद्वासपक्षंमित्रंमैत्रीप्राप्तिरूपसमानसाध्यत्वादपिमित्रंपत्रसहितंसायकमिवनलंक्षिप्नुःप्रेरयितुकामःप्रतारयितुकामस्त्यक्तुकामश्च उत्तमवंशजस्यगुणाश्रयस्यचवक्रत्वंविरुद्धमिति । अपिशब्दौविरोधद्योतकौ । अथास्त्रियांधनुश्चापावित्यमरोक्तेर्धनुःशब्दःपुल्लिंगोपि क्षिप्नुःत्रसिगृधीतिक्नुःतद्योगेनलोकेतिनषष्ठी ॥ १०२ ॥

तेनतेनवचसैवमघोनः सस्मवेदकपटंपटुरुच्चैः ॥ आचरत्तदुचितामथवाणीं मार्जवंहि कुटिलेषुनतीतिः ॥ १०३ ॥

तेनेति । उच्चैरतितरांपटुःप्राज्ञःशेषवक्रोक्त्यादिचतुरःसनलःमघोनःइन्द्रस्यतेनतेनपाणिपीडनमर्हत्वामिहैवमनिवेश्येत्यादिवचसैवकपटंवेदस्मजानातिस्म । अथतदुचितांकपटयोग्यांवाणीमाचरत्ऊचे इन्द्रेणतथोक्तेपिनलःकथमुक्तवानित्यतआह हियस्मात्कुटिलेषुआर्जवमकापट्यं नीतिर्नभवतिकिंतुकपटिषुकपटिनैवभवितव्यमितिन्यायः । व्रजन्तितेमूढधियःपराभवंभवन्तिमायाविषुयेनमायिनइतिभारविणोक्तेः । नलेनापिकपटित्वमङ्गीकृतंयुक्तमित्यर्थः ॥ १०३ ॥

सेयमुच्चतरितादुरितानामन्यजन्मनिमयैवकृतानाम् ॥ युष्मदीयमपियामहिमानं जेतुमिच्छति

दृग्गोवितरितुं ॥ १०६ ॥

यद्भिति । येषांयुष्माकंमतौबुद्धावेवविमलायांनिर्मलायांदर्पणिकायां आदर्शेखलुनिश्चितं अखिलन्तत्वंयथार्थंकरणीयाकरणीयंवस्तुसन्मुखस्थंप्र त्यक्षंस्फुरद्रूपम् । तेपिईदृशाअपियूयंईदृशमेवंविधामाज्ञांतस्मैमह्यंकिंकथं वितरथेति।तांकांयाआज्ञायस्ययस्मैवितरीतुंदातुंसद्भीयुक्तान योजैम्याः क्रामुक्रोतिसुन्दरस्वतस्यजैमीदूत्यंकुर्वित्याज्ञांदातुंनैवयुक्तेतिभावः ॥१०६ ॥

यामित्रअमिहवरीतुमहोवो दूततांनुकरवाणिकथं वः ॥ ईदृशान्नमहतांबतजाता वञ्चनंममतृणस्यं घृणापि ॥ १०७ ॥

यामीति । इहास्मिन्समयेमार्गेवायांवरीतुमहंयामिगच्छामि अहोसो महासमाश्चर्यसम्बोधनेवा । वोयुष्मत्संबन्धिलक्षियांदूततांपुनः कथं कथङ्कारंकरवाणि अपितुनकुर्याम् । ईदृशांदिक्पालानांमहतामभव तांतृणस्यतृणप्रायस्यातिहीनस्यनलस्यमम वञ्चनेप्रतारणेविषयेघृणाकृपा जुगुप्सावानजातानोत्पन्नाबतखेदे महतांहिकृपयाभवितव्यं महद्भिर्महा नेवप्रतारयितुंयुक्तोनतुलघीयान् तस्यायोग्यत्वादित्यपिशब्दार्थः । कप टोक्तिश्च । महतामन्येषांसुराणांजातौसमाजेईदृशांपरप्रतारकाणांभवता मर्चनेविषयेतृणस्याल्पस्यममापिघृणाच अपितुअस्त्येवकिमुतमहतामित्य र्थः । अथचेदृशानांवञ्चकानांनमहतांनसमासेनसाधूनांभवतांतृणस्या पिजातौपूजनेतृणजातीयमन्येपिपूजनेममघृणाभवति भवद्भ्योपितृणजा तिरेवश्रेयसीतिममप्रतिभातीतिभावः ॥ १०७ ॥

उद्भमामिविरहात्खलुयस्या मोहमेमिचमुहूर्तम हंयः ॥ ब्रूतवः प्रभवितास्मिरहस्यं रक्षितुंसकथ मिदृगयस्थः ॥ १०८ ॥

उद्भ्रमामीति । योहंअसामैम्याःविरहान्मुहुः पुनःउद्भ्रमामिउन्मादयु क्तोभवामि पुनःमुहूर्तंक्षणमात्रंमोहंमूर्छांवरमिप्राप्नोमि । अन्याःसमा वस्याःमयानुभूताः अधाधुनामूर्छोन्मादलक्षणेऽवस्थे अनुभूयेतेइत्यर्थः । ईदृगवस्थाद्वययुक्तः सोहंवोयुष्माकंरहस्यंरक्षितुंगोपायितुंअन्तःकरणेऽ वधारयितुंकथंप्रभवितास्मिशक्तोभवितास्मिब्रूतकथयत अपितुनकथंचि

दित्यर्थः । वाक्यार्थःकर्म । भ्रान्तोरहस्यंगोप्तुं समर्थोनभवतिसर्वस्याग्रेक थयति । योपिमूकोलुमूकःश्रवणमनसिरहस्यंधारयितुंनशक्नोतिकिंतुविस्मर त्येवेति । दूत्ययोग्योनभवामीतिभावः ॥ १०८ ॥

**यांमनोरथमयींहृदिकृत्वा यःश्वसिम्यथकथंसतद ग्रे ॥ भावगुप्तिमवलम्बितुमीशे दुर्जयाहिविदुषा विषयाहि ॥ १०९ ॥**

यामिति । योहंमनोरथमयींसंकल्परूपांयांभैमींहृदिकृत्वाश्वसिमिजीवा मि । सोहंदूत्याङ्गीकारादथअनन्तरंतदग्रेतस्याःपुरः भावानांस्तम्भस्वेदा दिसात्त्विकानांगुप्तिंगोपनमवलम्बितुंकर्तुंमीशेसमर्थोस्मिअपितुनकथंचित् हियस्माद्विदुषापिपण्डितेनापिरूपादयोविषयादुर्जयाः जेतुमशक्याः अली कायाअपियस्याश्चिन्तनेनजीवामितस्याः साक्षात्कारेसात्त्विकाभावाः स्फु टमुत्पद्येरन्ततःकुतोयुष्मद्दूत्यमिन्तेति । अतोपीयमाज्ञाममानुचितेति भावः । श्वसिमीतिपाठेनिश्वासंकरोमि ॥ १०९ ॥

**यामिकाननुपमृद्यचमाद्दृ क्काविरीक्षितुमपिक्षम तेकः ॥ रक्षिलङ्घनजयचण्डचरित्रे पुंसिविश्वसितु कुत्रकुमारी ॥ ११० ॥**

यानिति । चअपरमाहकःअतिसुन्दरःकःपुरुषः यामिकान्प्रहरजागरू कान् अनुपमृद्यअनिष्पीड्याविनाश्यअन्तःपुरस्थान्तांभैमींनिरीक्षितुमपि क्षमतेशक्नोतिनकोपीत्यर्थः । वक्तुंहिदूरतइत्यपिशब्दार्थः । सुन्दरस्ययाम िकदर्शनेनविनान्तःप्रवेशोनघटतेइत्यर्थः । तर्हिशूरेणत्वयातेविमर्दनीया इत्याह । रक्षिणांलङ्घनंतस्यजयेनचण्डंदारुणंचरित्रंयस्यएवंभूतेपुरुषेकुमारी बालामृद्वङ्गीकोमलहृदया कुत्रकुतःविश्वसितिविश्वासम्प्राप्नोति । अपितु नकुतोपि एवंविधंचण्डमाकर्ण्यबालापलायिष्यतीत्यतोपिममदूत्यमयुक्त मितिभावः । एवंविधेकुत्रपुंसीतिवा रक्षणार्थंयामोस्यास्तीतियामिकः अ त्यर्थेठक् । कालवाचित्वाद्भवार्थेवाठञ् ॥ ११० ॥

**आदधीचिकिलदातृकृतार्थं प्राणमात्रपणसीमय शोयत् ॥ आददेकथमहंप्रिययोतत् प्राणतःशतगु**

णेनपणेन ॥ १११ ॥

आद्धीचिदिति । प्राणमात्रंजीवितमेवपणासीत्तमूल्यविधियंस्यैवंविधंय शः । आदधीचिदधीचिमिमामकवदान्यपर्यन्तंदातृभिः वदान्यैःकृतःअर्थो मूल्यंयस्यकिलंश्रूयते यशःप्राणेभ्योऽधिकंमूल्यंनार्हतीतियशोऽर्थंदधीच्यादि भिःप्राणाएवदत्ताःनत्वधिकंकिञ्चित् अद्यतद्यशःप्राणःप्राणेभ्यःअतगुणेना तितरांअधिकेनप्रिययाभैमीलक्षणेनपणेनमूल्येनकथमादद्वेऽङ्गीकुर्याम् । अ पितुनकथंञ्चित् यद्दत्तमेवमूल्येनलभ्यतेतद्धनुनाकेनापिनगृह्यते अतोवाञ्छ यापिजीवादधिकस्यादेयत्वात् भवतांभैमीप्राप्त्यर्थंमयायत्नोनक्रियतएवेति भावः । अतिथीभूयत्वयाप्राणास्यदधीचेरपिप्राणागृहीताकिंपुनः स्त्रि यस्येतिभावः ॥ १११ ॥

अर्थनामयिभवद्भिरिवास्यै कर्तुमर्हतिमयापिभव त्सु ॥ भीमजार्थपरयाचनवाचे यूयमेवगुरवःकर णीयाः ॥ ११२ ॥

अर्थनेति । मयापिभवत्सुअस्यैभैम्यर्थंअर्थनायाञ्चाकर्तुंनर्हतिउचिता । कैःकस्मिन्निवभवद्भिर्मयीव । यथाभवद्भिर्मयिभैम्यर्थंयाञ्चाक्रियतेतथाम यापिभैम्यर्थंभवत्सुयथासामांवरिष्यतितथात्वद्भिरपिकर्तव्यमितिस्वन्तो याच्यन्तइत्यर्थः । क्षत्रियस्यदातृत्वमेवयुक्तंनतुयाचकत्वमतआह । भीम जारूपोयोर्थःप्रयोजनंतत्रपरस्तत्परः याचनवाक्प्रार्थनप्रियंवचनंतस्मिन् यूयमेवगुरवःउपदेष्टारःकरणीयाः दिक्पालाअपिभूत्वायाचन्तेतर्हिमादृ शांकाकथा । भवतांचेदेतद्युक्तंतर्हिममापियुक्तमेव । गुरूपदिष्टमेवशि ष्यःकरोति । याचनवाचइतिपाठेप्रार्थनवचनाय अर्थनाशब्दस्यकर्तुंशब्द स्यचभाववचनत्वान्ममेत्यत्रानुक्तेकर्तरितृतीयानलोकेतिषष्ठीनिषेधात् । एवंभवद्भिरित्यत्रापि । कर्तुमित्यर्हतावुपपदेशकधृषेतितुमुन् । याचनेति भाषितपुंस्कः ॥ ११२ ॥

अर्थितांप्रथमतोदमयन्तींयूयमन्वहमुपास्यमया थ ॥ ह्रीर्नचेद्व्यतियतामपितद्वः साममापिसुत रांनतदस्तु ॥ ११३ ॥

अर्थितेति । मयायूयमन्वहंप्रतिदिनमुपास्यपूजांविधायप्रथममादा वेवदमयन्तीयदिअर्थितायाचिता, तद्भैमीयाचनंव्यतियतांअतिक्रमताम् मयिसांप्रतियाचनेनभैमीयाचनव्यत्ययंकुर्वतांवोयुष्माकंह्रीलज्जास्तितर्हि सालज्जामनापिसुतरांमास्तुमाभूत् । अतोमयापिभवन्तोभैमींयाचितुंयो ग्याः ॥ यत्रोभयोःसमोदोषःपरिहारोपिवासमः । नैकःपर्यनुयोक्तव्यस्ता दृगर्थविचारणेतिन्यायात् । अप्रधानेदुहादीनामितिवचनादप्रधानकर्म णिअर्थिताइतिनिष्ठा । व्यतिहारेसत्यपिनगतीतिवक्ष्योनिषेधात्कर्तरीणश ता ॥ ११३ ॥

कुण्डिनेन्द्रसुतयाकिलपूर्वं मांवरीतुमुररीकृतमा

स्ते व्रीडमेष्यतिपरंमयिदृष्टे स्वीकरिष्यतिनसाखलु

युष्मान् ॥ ११४ ॥

कुण्डिनेति । कुण्डिनेन्द्रसुतयाभैम्यापूर्वंकिलआदावेवमांवरीतुमङ्गीकृत मस्तिकिलश्रूयतेवा । साभैमीदूत्यर्थंगतेमयिदृष्टेसतिपरंकेवलंसात्विकभा ववशाद्व्रीडांलज्जांएष्यतिप्राप्स्यति युष्मान्खलुनिश्चयेननस्वीकरिष्यति मय्यनुरागवशात्मत्प्राप्तौभवद्दूतकथाकर्णनमपिकुलस्त्यमितिभावः । व्री डाशब्दस्यपुंल्लिङ्गत्वंवामनाचार्यवचनात् घञन्तोपि । व्रीडमावहन्नियमि तिरघुवंशेपि । व्रीडादिभ्याश्चपतैरितिमाघेमहाकविप्रयोगदर्शनादुररी कृतंज्ञावेक्तः ॥ ११४ ॥

तत्प्रसीदतविधत्तनखेदं दूत्यमत्यसदृशंहिममेदम्

हास्यतैवसुलभानतुसाध्यं ताद्विधित्सुभिरनौपयि

केन ॥ ११५ ॥

तदिति । हियस्मात्पूर्वोक्तप्रकारेणइदंदूत्यंममअत्यसदृशमतितरामनु चितंतत्तस्मात्प्रसीदतमनोपरिप्रसन्नाभवत खेदंअनेनास्मदीयंवचोनंकृत मितिदुःखंमाकुरुत अनौपयिकेनानुपायेनतद्दूत्यंविविधत्सुभिःविधातुमि च्छद्भिःभवद्भिर्हास्यतैवउपहास्यत्वमेवसुलभंनतुभैमीप्राप्तिरूपंसाध्यंसुलभं सदन्येनसाध्यंसाधनीयमित्यर्थः ॥ ११५ ॥

ईदृशानिगदितानितदानी माकलय्यसनलस्यवचः

लारिः ॥ शंसतिस्मकिमपिस्मयमानः स्वानुगाननविलोकनलोलः ॥ ११६ ॥

इंदृशानिति । बलारिरिन्द्रस्तदानीतस्मिन्समयेनलस्येदृशानियूयोक्तानिगदितानिवचनान्याकलय्यविचार्यंउपहासार्थंकिमपि स्मयमानः ईषद्धसन्शंसतिस्मवभाषे किंभूतः । अङ्गीकृतमपिपुनरनेनत्यज्यतइतिपश्यतिइतिज्ञापनार्थंस्वानुगानांअग्न्यादीनामाननविलोकनेलोलः ॥ ११६ ॥

नाभ्यधायिनृपतेभवतेदं रोहिणीरमणवंशभुवेव ॥ लज्जतेनरसनातववाग्म्या दर्थिषुस्वयमुरीकृतकाम्या ॥ ११७ ॥

नेति हेनृपतेनल रोहिणीरमणस्यचन्द्रस्यवंशेभवतिइतिभूस्तेनेवपुरुषेणेवभवता इदंसैषदुस्तरतेत्यादिकुपिह नैन्द्रसुतयेतिपर्यंतंनाभ्यधायिनोक्तम् । चन्द्रकुलोत्पन्नोह्यङ्गीकरोत्येव अङ्गीकृतंचपरिपालयत्येवत्वयातुसोमवंशोत्पन्नेनाप्यङ्गीकृतंसोमवंश्येनेवनपरिपाल्यत इत्यर्थः । अर्थिषु याचकेषुजीवनावधिमिनप्यधिकंचेत्यादिनास्वयमात्मनैव उरीकृतंअङ्गीकृतं काम्यंयाचकाभिलषणीयंययाएवंविधा तवरसनाजिह्वा वाग्म्यादुक्तत्वादङ्गीकृतस्यापरिपालनाद्धेतोः नलज्जतेलज्जांनप्राप्नोति । अपित्वङ्गीकृतत्यागाल्लज्जाप्राप्नुमुचिताअमयाङ्गीकृतंत्वयापरिपालनीयमेवेत्यर्थः । अथवेदं रोहिणीगौस्तस्यारमणोवलीवर्दस्तत्कुलोत्पन्नेनवलीवर्देनेव त्वयानोक्तं अपितुतथैवोक्तम् । योह्युक्तं नकरोतिसगोसदृशोमूर्खःपशुश्च । त्वमपितादृश इत्यर्थः । वलीवर्दोपिजिह्वयाभक्षितस्यतृणादेर्वमनान्नलज्जते । एवंजिह्वावाग्म्यान्नलज्जते । तस्मात्त्वमपिवलीवर्दोसीत्युपहासः । वाग्मस्य भावोवाग्म्यम् । पक्षेवमनंवमिर्वमिरेवाग्म्यंचातुर्वर्ण्यादित्वात्ष्यञ् ११७ ॥

भङ्गुरंनवितथंनकथवा जीवलोकमवलोकयसीमम् ॥ येनधर्मयशसीपरिहातुं धीरहोचलतिवीरतवापि ॥ ११८ ॥

भङ्गुरमिति । हे वीरत्वंइमंजीवलोकंप्राणसङ्घं भङ्गुरंस्वयमेवनश्वरंकथंन अवलोकयसिबुध्यसेवितथमलीकंवाकथंनबुध्यसेअपितु त्वयाएवंज्ञेयमत्र

हंजानामीत्यत आह । येनतवबोधलक्षणेनकारणेनधार्मिकस्य।तिधीरस्या पितवधीर्बाह्विरभङ्कुरअवितथेअपिधर्मयशसीस्वयान्ज्ञातव्येइत्यर्थः ११८॥

क.कुलेजनिजगन्मुकुटेवः प्रार्थकेप्सितमपूरिनयेन ॥ इन्दुरादिरजनिष्टकलङ्की कष्टमत्रसभवानपिमाभूत् ॥ ११९ ॥

कइति । येनप्रार्थकेप्सितंयाचकाभिलषितंनअपूरिनपूरितम् । एतादृक् कःपुरुषोजगन्मुकुटेलोकालङ्कारभूतेवकुलेअजनिप्रसूतः । अपितुनकोपि अत्रतुकुलेआदि.वंशादिरिन्दुः कलङ्कीअजनिष्टजातःकष्टं सप्रसिद्धोभवान पिकलङ्कीमाभूत् । अङ्गीकृतत्यागात्त्वमपिकलङ्कीभविष्यसितततोभाव्या मपिकुलंमलिनीकृतंस्यात् इत्युपहासः । तस्माद्यथातथाकुलस्यकलङ्कोन भवति तथाकार्यमितिभावः ॥ ११९ ॥

पापदृष्टिरपियामुखमुद्रा याचमानमनुयाचनतुष्टिः॥ त्वादृशस्यसकलःसकलङ्कः शीतभासिशशकःपरमंकः ॥ १२० ॥

पूर्वद्वाभ्यामपिकुलंकलङ्कितमित्युक्तं इदानींत्वय्येवेत्याह । पापेति । याचमानंयाचकमनुलक्षीकृत्य यापापदृष्टिःअनादरदर्शनंअदर्शनंवा याच मुखमुद्रामौनं याचनमनुतुष्टिरसन्तोषःसकलःसमस्तः त्वादृशस्यातिवदा न्यस्यवीरस्यचकलङ्कंअपयशः । शीतभासिचन्द्रेपरंकेवलंशशकःअङ्कश्चि ह्नम् । चन्द्रेकलङ्कोनकिन्तुचिह्नंशशस्तस्मात् पापदृष्ट्यादिनकरणीयमिति भावःशशकअल्पेतिकिन् ॥ १२० ॥

नाक्षराणिपठतांकिमपाठि विस्मृतोथभवतापठितोपि ॥ इत्यमर्थिचयसंशयदोलाखेलनंखलुचकारनकारः ॥ १२१ ॥

नाक्षराणीति । हेनल अक्षराणिवाल्येमातृकाःपठतात्वयानकारःनेत्य यंशब्दः नापाठिकिंनपठितङ्किम् । अथवा पठितोपिनकारःविस्मृतःन स्मृतःकिमुनकारःइत्यमेवंअर्थिचयस्ययाचकसमूहस्यशंसयएवदोलाह्निका वलम्बना तस्यांखेलनंक्रीडनंचकारखलूत्प्रेक्षायांनिश्चयेवा । त्वयापूर्वंयो

चकाङ्क्षिलाषोनेतिकदापिमोक्षं अद्यापिमवक्तव्यमितिभावः ॥ १२१ ॥

अब्रवीत्तमनलःक्नलेदंलब्धमुज्जृम्भसियशःशशिकल्प
म् ॥ कल्पवृक्षपतिमर्थिनमेनं दायकोपिशतमन्यु
मिहान्यः ॥ १२२ ॥

अब्रवीदिति ॥ अनलोग्निस्तंनलंअब्रवीत् । हेनलत्वंशशिकल्पंचन्द्रतु
ल्यंइदमेवंविधंलब्धं करस्थितंयशःक्वहेतोःउज्जृम्भसित्यजसि । इदंकिम् । इ
हभूलोकेअन्योनलादन्यःकोपिकल्पवृक्षस्यपतिशतमन्युंशतक्रतुमेनंपूर्वोक्त
प्रकारेणार्थिनंयाचकंनापनप्राप्तवान् । सर्वाभिलाषकरोयःकल्पवृक्षोपिय
स्यशःयश्वशतयज्ञकारीतमिन्द्रंयाचकंनलएवप्राप्तवान् नान्यइतियशोमत्या
ज्यमितिभावः । कल्पवृक्षोपियन्मनोरथंपूर्णंकर्तुंनसमर्थोभूत्त्वन्तुसमर्थःशत
मन्युरितिपात्रंचसूचितम् ॥ १२२ ॥

नव्यहन्यतकदापिमुदंयः स्वःसदामुपनयन्नभिला
षः ॥ तत्पदेत्वदभिषेकक्रताञ्चः सत्यजत्वसमतां
मदमद्य ॥ १२३ ॥

नेति ॥ अभीष्टसाधनात्स्वःसदादेवानांमुदंहर्षंउपनयन्प्रापयन्योभि
लाषःकदापिकेनापिनव्यहन्यतनव्यर्थीकृतः तत्पदेअभिलापस्थानेत्वदभि
षेकंतवाभिषेकंस्वाभीष्टसाधनायकृतांनोस्माकंसोभिलाषः तादृशःकामकर
णासमर्थः अन्योनविद्यतइत्यसमतामदंअसाम्यविषयंगर्वम् अद्यत्यजतुका
मपूरणेत्वमेवसमर्थ इत्यर्थः । व्यहन्यतकर्मणिलङ्कर्मकर्त्तरिवा ॥ १२३ ॥

अब्रवीदथयमस्तमहृष्टं वीरसेनकुलदीपतमस्त्वां
यत्किमप्य भिवभूषतितत्किं चन्द्रवंशवसतेःसदृ
शंते ॥ १२४ ॥

अब्रवीदिति ॥ अथयमः भैमीप्राप्तिविघ्नसम्भावनयाअहृष्टंदुःखितंतंन
लंअब्रवीत् । हे वीरसेनकुलस्यदीपप्रकाशकनल तमोमेयमन्धसिसम्भाव
नाजन्यंदुःखंयत्किमपिअनिर्वाच्यंवा अभिबुभूषतिअभिभवितुमिच्छतित
च्चंद्रवंशोत्पन्नस्यतेतवकिंसदृशंउचितंकिंत्वयुक्तम् । चन्द्रवंशोत्पन्नोहिमा
नानपिददाति तदुत्पन्नेनत्वयापितथैवभवितव्यं नत्वन्यथेतिभावः । अ-

यच्च दीपरूपत्वादन्धकारमभिवुभूषतिचन्द्रवंशवसतेस्तत्किमुचितं अपितु अयुक्तंदीपस्यतमसोभिभवः युक्तस्तत्रापिचन्द्रवंशवसतेःचन्द्रस्यान्धकारेणाभिभवोनयुक्तः अतस्तद्वंशोत्पन्नस्यतथापि । तस्मात्पराभवोनयुक्त इत्युपहासः ॥ १२४ ॥

रोहणःकिमपियःकठिनानां कामधेनुरपियापशुरेव ॥ नैनयोरपिवृथाभवदर्थी हाविधित्सुरसिव त्तकिमेतत् ॥ १२५ ॥

रोहिणइति । कठिनानांनिष्ठुराणांपाषाणादीनांमध्येयःकिमपिलोकोत्तरोनिष्ठुरोरोहणोपिदूरोद्रिःमेरुः । अथचनिष्कृपणानांमध्ये लोकोत्तरोकृपणोयोविदुराद्रिरचलःयापिकामधेनुःसोपिपशुरेवगौरेव । अत्रयोरेनयोःरोहणकामधेन्वोरपिसंबंधीअर्थीयाचकःवृथानिः फलोनाभवत्किन्तु सफलोजातः एतयोर्विषयेवा । हाकष्टम् । हेवत्सकिमेतदर्थिप्रातिकूल्यं विधित्सुःचिकीर्षुरसिअचेतनेषुकृपणावधिः कठिनावधिश्चरोहणःचेतनेषु पश्वावधिर्मूर्खावधिश्चकामधेनुः ताभ्यामपिअर्थनेऽभीष्टंदीयतेत्वंतुमृदुचित्तःबुधोपिततोदेयमेवइतिभावः । किमितिसामान्यनिर्देशात्रपुंसकत्वं एतयोरन्वादेशेएनादेशः । रोहणोवैदूर्यपर्वतोवा ॥ १२५ ॥

याचितश्चिरयतिक्कनुधीरः प्राणनेक्षणमपिप्रतिभूःकः ॥ शंसतिद्रिनयनीदृढनिद्रां द्राग्निमेषमिषघूर्णनपूर्णा ॥ १२६ ॥

याचितइति । धीरोयाचितःसन्क्कनुकुत्रचिरयतिकालविलंबंकरोतिअपितुन । कुतःक्षणमपिमुहूर्तमात्रंप्राणनेजीवनेकःप्रतिभूःलग्नकःअपितुनकापि । अथचकःब्रह्माप्रतिभूःविध्यधीनंजगत्कःब्रह्माप्रतिभूरितिकाकुर्वा । तत्कुतः द्राक्झटितिनिमेषमिषेणनेत्रसङ्कोचव्याजेनघूर्णमेनतन्द्रापूर्णाद्रिनयनीदृढनिद्रांमरणंकथयनिद्राक्दृढनिद्रमितिवा । यावत्ताकाले नपुनरपिनिमेषोभवतितावत्येवकालेमरण भवतीतिनिमेषतुल्यं मरणंतस्माद्दिदुषात्वयाअविचारितंशीघ्रमेवदातव्यम् । मरणस्यशीघ्रप्राप्तिभया दृश्यतिनिद्रितोपिघूर्णते ॥ १२६ ॥

अभ्रपुष्पमपि दित्सति शीतं सार्थिना विमुखतां यदि भाजि ॥ स्तोककस्य खलु चञ्चुपुटेन म्लानिरुल्लसति तद्धनसङ्घे ॥ १२७ ॥

अभ्रेति । स्तोककस्य चातकस्य अर्थिना याचकेन चञ्चुपुटेन साऽप्रसिद्धा विमुखता पराङ्मुखत्वं यद्भाजि आश्रिता तत्खलु तस्मादेव हेतोः तस्मादिव हेतोरित्युत्प्रेक्षा वा । म्लानिः चातकवैमुख्यजनिता अकीर्तिः घनसंघे मेघसमूहे उल्लसति शोभते, किंभूते घनसंघे शीतं शीतलम् अभ्रपुष्पं जलं दित्सति दातुमिच्छति अपि चातकेन याचितजले कालविलंबात् मेघानां श्यामत्वं तन्मयशोजातमित्यर्थः । अथच स्तोक एव स्तोककः अतिनिकृष्टः । तस्यार्थिना मुखेन पराङ्मुखत्वं यदाश्रितं तस्मान्मेघतुल्या पुरुषे म्लानिरुल्लसति यतः शीतलं वारि दद्यात् अभ्रपुष्पमपि खपुष्पतुल्यमपि वस्तु दित्सति न ददात्येवं भूतेपु रूपे नैव तस्य अकीर्तिश्च प्रकाशते । अतिनिकृष्टस्याप्यर्थिनः पराङ्मुखत्वेन तस्मात्त्वया शीघ्रमेव देयमिति भावः । यद्वि॰ ऽपि विमुखतया मेघेऽपि म्लानिर्भवति किंपुनरन्यत्रेति भावः । तस्मादिन्द्रादीनां त्वत्तो विमुखत्वेऽपयशोभावी इति किं वक्तव्यमिति भावः । मेघपुष्पं घनरस इत्यमरः ॥ १२७ ॥

ऊचिवानुचितमक्षरमेनं पाशपाणिरपि पाणिमुदस्य ॥ कीर्तिरेव भवतां प्रियदारा दाननीरसरमौक्तिकहारा ॥ १२८ ॥

ऊचिवानिति ॥ पाशपाणिः वरुणोऽपि पाणिमुदस्योद्यम्य एनं नलं उचितं अक्षरं वचनं इत्यूचिवान् । इति किं । भवतां भवादृशां राज्ञां दाने क्रियमाणे नीरसरः जलप्रवाहः एव मौक्तिकहारो यस्याः सा कीर्तिरेव प्रियदाराः प्रेयस्यः स्त्रियो न तु राजकन्याः अतः कीर्तिरेव त्वया ऽर्जनीया नाकीर्तिः पाणिमुदस्येति याचकजातिः ॥ १२८ ॥

चर्म वर्म किल यस्य न भेद्यं यस्य वज्रमयमस्थि च तौ चेत् ॥ स्थायिनाविह न कर्णदधीची तन्न धर्ममवधीरय वीर ॥ १२९ ॥

चर्मेति ॥ यस्य कर्णस्य चर्म त्वक् न भेद्यं अभेद्यं वर्म कवचं किल श्रुतौ । येन

कवचनिर्माणार्थंत्वग्दत्ता । यस्यास्थिवज्रमयंवज्रनिर्माणार्थंयेनदधी-
चिनास्वीयमस्थिदत्तावेवंविधौवदान्यौकर्णदधीचीअपिइहलोकेचेत् ।
यस्मात्स्थापिनौनकिंतुमृतावेव तत्तस्माद्देवीरप्राचुर्त्वंघनेनावधीरयनोम
त्वासीः । धर्मएवस्थिरतरः । ननुरूपादिसुखंचेतिभावः ॥ १२९ ॥

अद्ययावदपियेननिविष्टौ नप्रभूविचलितुंबलिविन्ध्यौ ॥ आस्थितावितथतागुणपाशस्त्वादृशास विदुषादुरपाशः ॥ १३० ॥

अद्येति । येनसत्यप्रतिज्ञत्वगुणलक्षणपाशेननिबद्धौबलिविन्ध्यौदैत्यांचलौअद्ययावदपि एतावन्तमपि कालंविचलितुंप्रतिज्ञातमनिर्वोढुंनप्रभूसमर्थौनजातौ । किन्तुताभ्यामङ्गीकृतंयद्वशेनप्रतिपालितं । एकःपाताले स्थितः । अन्यश्चयद्वशेननवर्धतइत्यर्थः । स आस्थितस्याङ्गीकृतस्यावितथतासत्यतातल्लक्षणोगुणः सूत्रंचतल्लक्षणःपाशोरज्जुः । सत्यवादितागुणःत्वादृशेनत्वद्विधेनविदुषापण्डितेनदुरपास्योदुर्लङ्घ्यः । अङ्गीकृतंपरिपालयेत्यर्थः । दैत्यपाषाणाभ्यामपिअङ्गीकृतंदत्यंकृतंअतस्त्वयाप्यङ्गीकृतंनिर्वोढव्यमितिभावः ॥ १३० ॥

प्रेयसीजितसुधांशुमुखश्रीर्यानमुञ्चतीदिगन्तगतापि ॥ भङ्गिसंगमकुरङ्गदृगर्थे काकदर्थयतितामपिकीर्तिम्॥ १३१ ॥

प्रेयसीति । प्रेयसीप्रियतमा तथाजितातिरस्कृताउज्वलत्वात्सुधांशुमुखानांसुधांशुश्चन्द्रस्तत्प्रमुखानांतारकादीनांश्रीःयस्यांएवंविधायाकीर्तिःदिगन्तगतापिदिक्प्रान्तंगतापिनमुञ्चतिनत्यजति । तामेवंविधामपिकीर्तिंभङ्गीविनश्वरःसङ्गमोयस्याःसा भङ्गिसङ्गमासवंभूताकुरङ्गदृक्मृगाक्षीतस्यार्थेनिमित्तम् । अथच कुत्सितोरंगोरचनायस्याएवंविधादृक्यस्यास्तत्कृतेकः कदर्थयतिपीडयति । अपितुनित्याङ्कीर्तिंविहायअनित्यांप्रेयसींकोपिनवाञ्छति तस्मात्कीर्तिरेवत्वयाप्युपार्जनीयेतिभावः । अथचकलिप्रजावभङ्गिसङ्गमत्वंजैन्याःसूचितम् । अन्योपिदुष्टस्वपत्न्याःकृतेगुणवतींपत्नींनपीडयति । स्त्रियःकृतेकीर्तिर्नत्याज्यावृत्यर्थः । कुत्सितोदुः-

स्वरूपोर्थःकदर्थः कोःकदादेशेअर्थआद्यर्थिनतुपिचतरकरोतीतिणिचिणा विष्टवदितिटिलोपेसुतुक्लोपेचपीडयतीतिसात्यथार्थः । एवंकदर्थनायेत येत्यादावपिज्ञेयम् ॥ १३१ ॥

**यान्वयंप्रतिपरेर्थयितार स्तेपि यंवयमहोसपुन स्त्वाम् ॥ नैवनःखलुमनोरथमात्रं शूरपूरयदिशो पियशोभिः ॥ १३२ ॥**

यानिति । परेन्येपुरुषाः यानस्मान्प्रत्युद्दिश्यवरसमीष्टमर्थयितारः या चनशीलाः वरमुद्दिश्यास्मानर्थयितारइतिवा तेपिवयंत्वामर्थयितारः अहोआश्चर्यं येन्यस्मैवरंदातुंसमर्थाः तेपिवयंतवयाचकाजाताः सएवं भूतस्त्वंपुनःशूरः दानशूरोनलःखलुनिश्चितंनोस्माकं मनोरथमात्रंकेवलं मनोरथंपूरयपरिपूर्णंकुर्वितिनैव किंतुइन्द्रादयोपियस्यार्थिनोजाताइति यशोभिर्दिगन्तानपिपूरय अस्मन्मनोरथपूरणेन तवमहतीकीर्तिर्भविष्य तीतिभावः । यान्परमितिपाठेअन्येयानस्मान् प्रतिपरंकेवलंअर्थयितारो नतुदातारइतिभावः । अर्थयितारःताच्छील्येतृन् ॥ १३२ ॥

**अर्थितांत्वयिगतेषुसुरेषु म्लानदानजनितोरुयशः श्रीः ॥ अद्यपाण्डुगगनंसुरशाखी केवलेनकुसुमेन विधत्ताम् ॥ १३३ ॥**

अर्थितामिति । सुरशाखीकल्पतरुः सुरेषुदेवेषुत्वयिविषयेअर्थितांया चकतांगतेषुप्राप्तेषुसत्सु म्लानाविनष्टप्रायादानजनिता स्वीयासहजाबाउ र्वीमहतीयशःश्रीर्यस्यैवंभूतःसन् अद्यकेवलेनकीर्तिरोहितेन कुसुमेनपु ष्पेणाकुत्वागगनंपाण्डुश्वेतविधत्तांकरोतु एतावन्तंकालंकीर्तिपुष्पाभ्यांश्वे तंकृतंत्वयाकीर्तेरपहृतत्वात्केवलेन पुष्पेणेतिभावः ॥ १३३ ॥

**प्रवसतेभरतार्जुनवैन्यवत्स्मृतिधृतापिनलत्वमभी ष्टदः ॥ स्वगमनाफलतांयदिशङ्कसे तदफलंनिखिलं खलुमङ्गलम् ॥ १३४ ॥**

कास्तैवसुलक्षानतुसाध्यं इत्यस्योत्तरमाह प्रवसतइति । हेनलभरता र्जुनवैन्यवत् भरतः शाकुंतलेयःअर्जुनःकार्तवीर्यःवैन्यः पृथुस्तद्वत्स्मृत्याधृ

लोगोचरःस्मृतइत्यर्थः । एवंभूतोपिप्रवसतेदेशांतरगामिनेपुरुषायाभीष्टं द दातीत्यभिष्टदःसत्वंस्वगमनाफलतां स्वगमनस्यनैष्फल्यंयदियांहिशङ्कसे संभावयसितर्हिनिखिलंसमस्तं वैन्यादिस्मरणलक्षणंमङ्गलंशकुनादित्व दृष्टान्तेनखलुनिश्चितंअफलंनिष्फलं वैन्यंपृथुमित्यादीनांस्मरणस्यापि वैय र्थ्यप्रसङ्गात् स्वगमनवैफल्यंत्वयानाशङ्कनीयं अतोगच्छेत्यर्थः । भरता दिवत्त्वमपीतिवा भरतादेरभ्यर्हितत्वात्पूर्वनिपातः ॥ १३४ ॥

इष्टंनःप्रतितेप्रतिश्रुतिरभूदच्यस्वराल्हादिनी धर्मा र्थांसृजतांश्रुतिप्रतिभटीकृत्यान्वितारव्यापदाम् ॥ त्वत्कीर्तिः पुनतीपुनस्त्रिभुवनंशुभ्राद्वयादेशनाद्द्र व्याणांशितिपीतलोहितहरिन्नामान्वयंलुम्पतु१३५

इष्टमिति । हेनलनोस्माकंइष्टंवाञ्छितंप्रत्युद्दिश्यस्वराल्हादिनीअस्व दाल्हादनायस्वर्गानन्ददायिनी स्वरेणाङ्गीकारसूचकमधुरस्वनेन वानन्द दायिनीतयाधर्मार्थाधर्मप्रयोजनिकायात्तवप्रतिश्रुतिः जीवितावधिकिम प्यधिकंचेत्यादिकाप्रतिज्ञाभूत्जाता तांप्रतिश्रुतिंअद्यइदानींसत्यत्वेन श्रु तिप्रतिभटीकृत्यवेदसदृशीकृत्वा अन्वितंश्रुतेः प्रतिभटाप्रतिश्रुतिरितिसा र्थकं आख्यापदंसञ्ज्ञापदंयस्याः एवंभूतांकुरुसत्यांसृजेत्यर्थः। श्रुतिप्रतिभट त्वेहिप्रतिश्रुतिशब्दःसार्थकोभवति सत्यत्वेनत्वीयवचनंश्रुत्यन्तरंकुर्वित्य र्थः । अङ्गीकृतंपरिपालयेतिभावः । पुनःप्रतिज्ञासिद्धौसत्यांत्रिभुवनंत्रि लोकींपुनतीपुनाना । अथवात्वउज्वलांकुर्वाणात्वत्कीर्तिः शुभ्रस्यश्वेतवर्ण स्यअद्वयंअद्वैतंतस्यादेशनात्करणाद्द्रव्याणांवस्तूनां शितिपीतलोहितह रितांकृष्णगौररक्तनीलानांवर्णानांनामसञ्ज्ञा तस्यान्वयःसंबन्धःतलुम्पतु विनाशयतु सर्वस्यत्रिलोकस्यश्वेतीकरणात्कृष्णादिवर्णाभावोजयत्वित्यर्थः। प्रतिज्ञातपरिपालनात्लोकत्रयेपि,तवअतिनिर्मलंयशः प्रसरिष्यतीतिभा वः । कर्मप्रतिपादिकाश्रुतिरपिइष्टंयागमुद्दिश्यप्रवर्त्तते । स्वरैःउदात्ता दिभिः अकारआद्योयेषांतेआद्याःस्वराःअथःकर्मफलभूताआद्यःप्रथमभो क्तव्यःस्वःस्वर्गःतेनानन्ददायिनी । तथाचोदनालक्षणोर्थोधर्मइतिवाक्यप्र तिपादितस्यधर्मस्यवेदैकगम्यत्वोक्तेः धर्मार्थोनिर्घेयवाक्यार्थोवायस्याःसा धर्मप्रतिपादिनी । तथाश्रूयतइतिश्रुति रित्यन्वितमनुगतार्थंनामपदंय

स्याःएवंभूताच । अथचप्रतिश्रुभिःप्रतिवचनरूपंअस्तु श्रौषडित्यादिवा क्यंसापिइष्टंयागंप्रतिजवति स्वरैरुदात्तादिभिराल्हादिनीयाभवंति । अ थचत्वत्कीर्तिरूपाब्रह्मप्रतिपादिकाश्रुतिःत्वयाकीर्त्यमानावावेदान्तश्रुतिः श्रवणमननादिद्वारात्रैलोक्यपवित्रंकुर्वाणा । यद्वारजःसत्वतमोरूपेभ्य स्त्रिभ्योगुणेभ्योभवतीतित्रिभ्योजूरुत्पत्तिर्यस्येतित्रा त्रिभूर्यस्याद्यवस्थात्र यसहितत्वमितियावत् । तद्वतद्वचनंचातिगहनंसंसाराख्यंपृथग्वापदं । निवृत्तिद्वारापुनानाशुभ्रस्यातिनिर्मलस्यनिर्दोषस्यब्रह्माद्वैतस्योपदेशात् । अव्यानांदृश्यपदार्थानांकृष्णपीतादिनां सम्बन्धंलुम्पतीवाचारंभणमिति श्रुतिरेकमेवाद्वितीयंब्रह्मेत्यादि वचनाद्घटादेर्मिथ्यात्वसाधनान्नामादि विकारंनिराकरोतीतिध्वनिः । धर्मार्थोमितिक्कचित् इष्टंइच्छायामिति अत्रायजेश्वकर्मणिभावेचक्तः । यजेःसंप्रसारणंचत्वष्टुत्वेचइष्टमिति अम रादयःसर्वेपिव्याचक्षते । इष्टियोगेच्छयोरित्यादिनातत्तुशिष्टप्रयोगाद्द्रष्टा व्यम् । विशेषस्तुग्रन्थविस्तरभयान्नलिख्यते । इष्टमित्येवपाठःसाधीया नित्यलम् ॥ १३५ ॥

यंप्रासूतसहस्रपाद्दुदभवत्पादेनखञ्जःकथंसञ्ज्ञाया तनयःसुतःकिलपितुःसादृश्यमन्विच्छति ॥ एत स्योत्तरमद्यनःसमजनि त्वत्तेजसांलङ्घनेसाहस्रै रपिपङ्गुरङ्घ्रिभिरभिव्यक्तिभवद्भानुमान् १३६

यमिति।सहस्रपात्सहस्रचरणोऽथचसहस्रकिरणः सूर्योयंप्रासूतप्रसूवा न्सञ्ज्ञायानाम्न्याःपत्न्याःतनयःसुतःपुत्रःशनैश्चरःपादेनचरणेनपङ्गुः कथमु द्भवत्जातः सहस्रचरणस्यपुत्रेणसहस्रचरणेननभवितव्यंअस्यतुनएकोपी ति। किलयस्मात्सुतःपितुःसादृश्यमन्विच्छतिप्राप्नोति कारणगुणाहिकार्यगु णानारभन्तेइतिन्यायात् तस्माच्छनैश्चरस्यएकोपिपादोनास्तीत्येतस्यनोस्म दीयप्रश्नस्यअद्यभानुमानुत्तरंसमजनिजातः किंकुर्वन्त्वत्तेजसांलङ्घनेअति क्रमविषयेसाहस्रैःसहस्रसङ्ख्याकैरपि अङ्घ्रिभिःचरणैःअथवाकिरणैःप ङ्गुश्चरणरहितःअभिव्यक्तोभवन्प्रकटीभवन् अतःपङ्गुःपितुःपङ्गुत्वात्पुत्र स्यापिपङ्गुत्वंयुक्तमेवेत्यर्थः । त्वत्तेजःसूर्यतेजसोप्यधिकंतस्मात्त्वयाप्र स्तादिष्टंसाधनीयमितिभावः । पादारश्म्यंघ्रितुर्यांशाइत्यमरः । सहस्रंपा

तसंख्यासुपूर्वस्येतियादस्यान्त्यलोपः। पादेनखण्डोऽङ्घ्रिभिःप्रकुरितियेना-ङ्कविकारइतितृतीया। साहस्रैःतदस्यपरिमाणमित्यर्थेशतमानविंशतिक सहस्रेत्यण् ॥ १३६ ॥

इत्याकर्ण्यक्षितीशस्त्रिदशपरिषदस्ता गिरश्चाटुग र्भावैदर्भीकामुकोपिप्रसभविनिहितंदूत्यजारंबभा र ॥ अङ्गीकारगतेस्मिन्नमरपरिवृढःसंभृतानन्द मूचे भूयादन्तर्द्धिसिद्धेरनुविहितभवच्छिन्नतायत्रत त्र ॥ १३७ ॥

इत्याकर्ण्येति । क्षितीशोराजा वैदर्भीकामुकोपिसन् प्रसभंविनिहितं बलाद्दारोपितंदूत्यभारंदूत्यलक्षणंभारंबभार । किंकृत्वाइतिपूर्वोक्तप्रका रेणउपहासस्यापिकारणात् चाटुगर्भाःप्रियोक्तियुक्तमध्या त्रिदशपरिषदः देवसभायास्ताःपूर्वोक्ताःगिरःवाणीः आकर्ण्यत्रिदशपरिषदःसकाशाद्वा । अन्योपिबलान्निहितंभारंदुःखेनवहति । अस्मिन्नलेअङ्गीकारगतेप्राप्ते सतिकरिष्यामीतितेनाभ्युपगतेसति अमरपरिवृढःदेवप्रभुरिन्द्रःसंभृतान न्दयथातथातंनलंप्रतिइत्यूचे । इतिकिम् । अन्तर्द्धिसिद्धेःअन्तर्धानवि-द्यासिद्धेः यत्रतत्रसर्वत्रदेशेकालेप्रअनुविहितसम्प्रसृतंभवच्छित्तंयथातस्या भावःअनुविहितभवच्छिततांकार्यसिद्धिर्भूयात् । यत्राद्रश्योभवितुमिच्छसि तत्रान्तर्द्धिसिद्धिर्भूयात् यत्रनेच्छसितत्रमाभूयात् । यासिकाननुपमृद्येत्या दिपरिहृतमनेन ॥ १३७ ॥

श्रीहर्षंकविराजराजिमुकुटालङ्कारहीरःसुतं श्रीही रःसुषुवेजितेन्द्रियचयंमामल्लदेवीचयम् ॥ तस्य श्रीविजयप्रशस्तिरचनातातस्यनव्येमहा काव्ये चारुणिवैरसेनिचरितेसर्गोगमत्पञ्चमः ॥ १३८ ॥ पुरुहूतकपटोनाम पञ्चमः सर्गः समाप्तः ॥

श्रीहर्षमिति । पूर्वार्धन्तुपूर्ववदेव । श्रीविजयप्रशस्तिनाम्नःरचनायोग्य-न्यस्ततातस्यजनकस्य । सापियेनरचिताइत्यर्थः नव्यनूतनेप्रमेयेषास्मि गोऽगमत्पञ्चमःपञ्चानांपूरणः सर्गः समाप्तः ॥ ॥ ॥ ॥ ॥

## अथ नैषधीयचरिते षष्ठोसर्गः

॥ प्रारभ्यते ॥

दूत्यायदैत्यारिपतेःप्रवृत्तो द्विषांनिषेद्धानिषधप्रधानः ॥ सभीमभूमीपतिराजधानीं लक्षीचकाराथरथस्पदस्य ॥ १ ॥

श्रीगणेशायनमः ॥ दूत्यायेति । अथदूत्याङ्गीकारादनन्तरंदैत्यारयः देवास्तेषांपतिरिन्द्रः तस्यदूत्यायदूतकर्मणेप्रवृत्तःउद्युक्तः द्विषांनिषेद्धापरन्तपःसःनिषधप्रधानःनिषधदेशानामधिपः भीमनामकःभूमीपतिः राजा तस्यराजधानींकुण्डिनाख्याम् । रथस्यस्पदोजवस्तस्यलक्षीचकारतांप्रतिययावित्यर्थः चतुर्णांदूत्यकरणेप्रवृत्तत्वादपिप्राधान्यादिन्द्रोपादानम्। इन्द्राद्युपकारार्थंप्रवृत्तःस्वयंपरन्तपश्चेत्यनेन भीमस्यभयानकस्यापिराज्ञोनगरींप्रतिगमनेसामर्थ्यं सूचितम् । प्रधानशब्दःक्लीवे । निषेद्धेतितृच् ॥ १ ॥

भैम्यासमंनाजगणद्वियोगं सदूतधर्मैस्थिरधीरधीशः ॥ पयोधिपानेमुनिरन्तरायं दुर्वारमप्यौर्वमिवौर्वसेयः ॥ २ ॥

भैम्येति । स्थिरधीरक्षोभ्यहृदयः दृढयुद्धःसःअधीशःनलःनिर्विकारत्वलक्षणेदूतधर्मेविषयेदुर्वारंदुर्लङ्घमन्तरायंविघ्नभूतमपि भैम्यासमंसार्धंवियोगंनाजगणत्मनसिनधृतवान् । कःकमिव । और्वश्रेयःमुनिरगस्त्यः पयोधिपानेसमुद्रपानेदुर्वारंअंतरायरूपं और्वमिववडवानलमिव । विकारहेतौसत्यपिगाम्भीर्यात्स्वीयंवरनायकंदूरैत्यक्त्वानिःकपटेनाश्रयेनतेषांदूत्यमङ्गीकृतवानितिभावः । दुष्टंवाःवारियेनसदुर्वारस्तं और्वविशेषणम् । मित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसं दृष्ट्वावासतीवरेकुम्भेरेतोऽपतत्ततोऽगस्त्यवसिष्ठावजायेतामित्यनुक्रमणिकोक्ते रगस्त्यऔर्वश्रेयः उर्वशीपुत्रः । उरुंबहुअश्नातिउर्वशीतत्पुत्रस्यबहुभोक्तृत्वमेवयुक्तमितिचज्ञेयम् २

नलप्रणालीमिलदंबुजाक्षी संवादपीयूषपिपासव

स्ते ॥ तदध्ववीक्षार्थमिवानिमेषा देशस्यतस्याभरणीबभूवुः ॥ ३ ॥

नलेति । तेदेवाः यत्रनलदेवानांसम्वादः अभूत्तस्यदेशस्यआभरणीबभूवुः तत्रैवस्थिताइत्यर्थः । किंभूताःनलरूपयाप्रणाल्यानिःसृतआगच्छतोम्बुजाक्ष्याभैम्याःसंवादपीयूषस्य रसस्य कथालक्षणस्यामृतस्यपिपासवःपानेसाभिलाषाः तदाकर्णनैकपराः । तथातदध्ववीक्षार्थमिवनलमार्गावलोकनार्थमिवानिमेषाः निमेषरहिताः । देवत्वात्सहजमपिनिर्निमेषत्वंनलोऽनेनमार्गेणभैमीकथाकथनार्थंकदासमागमिष्यतीतिनलमार्गप्रतीक्षार्थत्वेनोत्प्रेक्षितम् । नलप्रतीक्षार्थंतत्रैवस्थिताइत्यर्थः ॥ ३ ॥

तांकुण्डिनाख्यापदमात्रगुप्ता मिन्द्रस्यभूमेरमरावतींसः ॥ मनोरथःसिद्धिमिवक्षणेन रथस्तदीयःपुरमाससाद ॥ ४ ॥

तामिति । सतदीयःनलसंबन्धीरथः भूमेरिन्द्रस्यभीमस्यकुण्डिनमिति आख्यापदमात्रेणसञ्ज्ञापदेनैवगुप्तांगोपितांअमरावतींनामपुरंक्षणेनशीघ्रंआससादप्राप । स्वरूपतः साक्षादमरावतीपुरंकुण्डिननामधेयमितिविशेषः । कःकामिव । तपःप्रभाववतांमनोरथःसिद्धिमिव । मनोरथदृष्टान्तेन रथस्यातिजवत्वंसूचितम् ॥ ४ ॥

भैमीपदस्पर्शकृतार्थरथ्या सेयंपुरीत्युत्कलिकाकुलस्ताम् ॥ नृपोनिपीयक्षणमीक्षणाभ्यां भृशंनिशश्वासतुरैःकृताशः ॥ ५ ॥

भैमीति । भैमीपदस्पर्शेनकृतार्थारथ्यामार्गोयस्याः सायत्रभैमीविचरतिसेयंपुरीनगरीत्युत्कलिकाकुलः उत्कंठाबाहुल्येनविमनाःसःनृपःनलःतांनगरींईक्षणाभ्यांनेत्राभ्यांक्षणमात्रंनिपीयसादरंप्रेक्ष्य भृशंबहुनिश्वासनिश्वसितवान् । यतोदूत्यादेशनात्सुरैः कृताशःखण्डिताशः । भैम्यासार्धमत्राहंविचरामीतिमनोरथेनपूर्वमुत्कण्ठितोभूत् । पश्चाद्दूत्यस्मरणाद्दुःखितोभूदितिभावः ॥ ५ ॥

स्विद्यत्प्रमोदाम्बुलवेनवामं रोमाञ्चभृत्पक्ष्मभिर

स्यचक्षुः ॥ अन्यत्पुनःकंम्प्रमपिस्फुरत्वा त्तस्याःपुरःप्रापनवोपभोगम् ॥ ६ ॥

खिद्यदिति । भैमीनगरीमयाद्दृष्टेति प्रमोदेनसंसर्गप्रीतिजनितानन्देन जातोयोऽश्रुलवोबाष्पलेशः तेनखिद्यत्स्वेदयुक्तंबाष्पएवस्वेदस्थानेजातोयस्यएवंभूतंपक्ष्मभिर्नेत्ररोमभिः रोमाञ्चभृत्रोमाञ्चयुक्तंतान्येवरोमाञ्चरूढानेजातानियस्यएवंभूतमस्यनलस्य वामंसव्यंचक्षुः तस्याःपुरः प्रथमदर्शनलक्षणंनवोपभोगंनूतनकामकेलिंचप्राप । अन्यद्दक्षिणंचक्षुः पुनःस्फुरतीतिस्फुरत्तद्भावेनकम्प्रमपिकम्पनशीलमपि भैमीप्राप्तिसूचकंस्फुरणंप्राप्येतियावत् । एवंभूतंदक्षिणमपितस्याःपुरःनवोपभोगंप्राप । चलत्वंनयनस्ययद्यपिस्वभावतोविद्यतेतथापि प्रियाप्राप्तिसूचकत्वादित्यस्यसार्थक्यम् । अन्यस्यापिकामिनोनवोपभोगेस्वेदादयः सात्विकभावाःप्रभवन्ति । दक्षिणनयनस्फुरणंभैमीलाभलक्षणसूचकंशकुनेकथितम् ॥ ६ ॥

रथादसौसारथिनासनाथा द्राजात्रतीर्यांशुपुरंविवेश ॥ निर्गत्यबिम्बादिवभानवीयात् सौधाकरंमण्डलमंशुसङ्घः ॥ ७ ॥

रथादिति । अथासौराजानलः सारथिनासनाथादधिष्ठितात्रथादवतीर्यपुरंविवेश । कःकिमिव । अंशुसङ्घःभानवीयात्सूर्यसंबन्धिनोबिम्बात्मण्डलान्निर्गत्यसौधाकरंचन्द्रसंबन्धिमंडलमिव । अमावास्यायांसूर्यंप्रविष्टश्चन्द्रकिरणसमूहोयथाप्रतिपदिततोनिर्येत्यचन्द्रंप्रविशति । सूतंरथेसंस्थाप्यएकाकीनगरंप्रविष्टइत्यर्थः ॥ ७ ॥

चित्रन्तदाकुण्डिनवेशिनःसानलस्यमूर्तिर्नवृतेनदृश्या ॥ वभूवतच्चित्रतरंतथापि विश्वैकदृश्यैवयदस्यमूर्तिः ॥ ८ ॥

चित्रमिति । तदातस्मिन्समयेकुण्डिनवेशिनः नगरप्रवेशिनःनलस्यादृग्गोचराथवातिसुन्दरीमूर्त्तिःकायःदृश्यानववृतेदृग्गोचरोयथसुंदरीनवबृतेनाभूदाश्चर्यम् । एतावन्तकालं दृग्गोचरस्याकस्मादन्तर्हितत्वादसुन्दरस्यचेदानीमसुन्दरत्वादाश्चर्यम् । भूयादन्तर्धिसिद्धिरितिवरदानादिच्छावशादन्त

हितोभूदित्यर्थः । यद्यपिदृश्यानभूत्तथापि अस्यमूर्त्तिर्विश्वस्यसर्वस्यलोकस्यएकामुख्या ऽसहायावादृश्यैवदृग्गोचरएवबभूवेतियत् तच्चित्रतरं अतिशयितमाश्चर्यम् । अन्तर्हितस्याप्यनन्तर्हितत्वेविरोधादाश्चर्यम् । अयचसर्वस्मिन्जगतिएकारमणीयाभूत्तदतिचित्रम् । एतादृक्सौन्दर्यस्यान्यत्राभावात् । नदृश्येतिनसमासोवा ॥ ८ ॥

जनैर्विदग्धैर्भवनैश्चमुग्धैः पदेपदेविस्मयकल्पवल्लीम् ॥ तांगाहमानापुरमस्यदृष्टि रथाययौराजकुलातिथित्वम् ॥ ९ ॥

जनैरिति । अथतांपुरींगाहमानाविलोकयन्ती अस्यनलस्यदृष्टिःराजकुलातिथित्वराजसदनातिथ्यमाययौ । राजमन्दिरंददर्शइत्यर्थः । गाहमानस्येतिपाठेराज्ञोविशेषणम् । राजकुलाभिमुख्यमितिक्वचित् । किंभूताम् । विदग्धैःचतुरैःजनैर्मुग्धैःसुन्दरैः भवनैश्चकृत्वापदेपदेविस्मयस्यकल्पवल्लींकल्पलतांअतिशयाश्चर्यकारिणीं कल्पवृक्षसंबन्धिनींवल्लीमित्यर्थः । कुलंजनपदेगृहेश्चेतिविश्वः ॥ ९ ॥

हेलांदधेराक्षिजनेश्चलज्जे लीनश्चरामीतिहृदाललज्जे ॥ द्रक्ष्यामिभैमीमितिसंतुतोष दूतंविचिन्त्यस्वमशौशुशोच ॥ १० ॥

हेलामिति । असौनलःअक्षसज्जेशस्त्रसमद्धे रक्षिजनेराजगृहरक्षकलोकेहृदाहेलामवज्ञांदधौ । एतेममकिमपिकर्तुंनशक्नुवन्तीति । तथाअहंलीनश्चौरवददृश्योराजासन्चरामीति विचार्यमनसाललज्जे । तथाहमद्यभैमींद्रक्ष्यामीति हेतोर्हृदासंतुतोष । तथाअनन्तरंस्वमात्मानंदूतंविचिन्त्यहृदाशुशोच । दुःखंकृतवान् । भैमीदर्शनेपिममलाभोनास्तीति हृदेत्यनेनअवहित्थादिसूचकाकारादिचेष्टानकृतेत्यर्थः । प्रथमतृतीयचरणाभ्यांपौरुषानुरागौवुक्तौ । द्वितीयचतुर्थाभ्यांतौप्रशान्तौकृतौ । दूतत्वममलस्याभिलाषोऽनुचितइत्यात्मानंनिनिन्देतिवाभावः । हेलांहेलृअनादरइत्यस्मात् षिद्भिदादिभ्योङ्इत्यङ् ॥ १० ॥

अथोपकार्याममरेन्द्रकार्या त्कक्षासुरक्षाधिकृतैर

दृष्टः ॥ भैमीं दिदृक्षुर्बहु दिक्षु चक्षुः क्षिपन्नसौ ताम विदाद्विशंकः ॥ ११ ॥

अथेति। अथअसौतामुपकार्यांपूर्वंदृष्टामुपकारिकांअविशत् । किंभूतः । अमराग्रान्येत्रयः इन्द्रस्तेषांप्राधान्यादमरेन्द्रस्यवाकार्याद्धेतोः कार्याद्धरदानाद्वाहेतोः । कक्षासुगृहप्रकोष्ठेषुस्थितैरवाधिकृतैःरक्षकैः अन्तर्हितत्वाददृष्टः । अतएवाविशङ्कोगतभयः । तथावहुवारंदिक्षुचक्षुःक्षिपन्ददामः । यतोभैमींदिदृक्षुर्द्रष्टुकामः । कक्षाप्रकोष्ठेहर्म्यादेरित्यमरः ॥ ११ ॥

अयंक इत्यन्यनिवारकाणां गिराविभुग्नारिविभुज्यकण्ठम् ॥ दृशंददेविस्मयनिस्तरङ्गांसलङ्घितायामपिराजसिंहः ॥ १२ ॥

अयमिति । स राजसिंहोनलःलङ्घितायामतिक्रान्तायामपिविभुग्नारि उपकार्याद्वारि अन्तर्हितोप्यहमेभिर्दृष्टःकिमितिविस्मयेनाश्चर्येण निस्तरङ्गांनिश्चलांदृशंददौदत्तवान् । किंकृत्वाकोयमित्यन्यनिवारकाणांनलान्यनिषेधकारिणांरक्षकाणांगिराकृत्वा मामेवकिमेतेनिषेधयन्तीतिधियाकण्ठं विभुज्यवक्रीकृत्य । राजसिंहइत्यनेनदृष्टेप्यात्मनिनिर्भयत्वंसूच्यते । सिंहोप्यवज्ञयाग्रीवांवक्रीकृत्यगर्वेणदृष्टिंपश्चाद्ददाति । राजसिंहःमज्ञांसावचनैश्चेतिउपमितेतिवासमासः ॥ १२ ॥

अन्तःपुरान्तःसविलोक्यवाला कांचित्समालब्धुमसंवृतोरुम् ॥ निमीलिताक्षःपरयाभ्रमत्या संघट्टमासाद्यचमच्चकार ॥ १३ ॥

अन्तरिति । सःनलःअन्तःपुरस्यअन्तःमध्येसमालब्धुमुद्वर्तयितुंअसंवृतेअनाच्छादितेउरूजङ्घेयस्यास्तांकाञ्चित्वालांस्त्रियंविलोक्य ननग्नांस्त्रियमीक्षेतेतिश्रुतेः । उत्तमपुरुषत्वाच्चनिमीलिताक्षोवभूवेतिज्ञेयः । तथायथेच्छयाभ्रमन्त्याचलन्त्याकयाचित्परयास्त्रियासहनिमीलिताक्षः निमीलितनयनत्वादेवसङ्घट्टंसम्यकंआसाद्यप्राप्यचमच्चकार सचकितोवभूवेत्यर्थः । एकंसन्धित्सतोऽपरंप्रच्यवतइतिन्यायात्सजुगुप्सोजातः ॥ १३ ॥

अनादिसर्गस्रजिवानुभूता चित्रेषुयाभीमसुतान

लेन ॥ जातेवयद्वाजितशम्बरस्य साशाम्बरीशि ल्पमलक्षिदिक्षु ॥ १४ ॥

अमादीति । नलेनसाभैमीदिक्षुप्रतिदिशंअलक्षिदृश्यतेस्म । ननुचक्षुषाऽसंनिकृष्टाकथंदृष्टा । नचशुक्तौरजतमिवतत्रासत्यपिसारूप्याद्भासते इतिवाच्यम् । अननुभूतपूर्वस्यवस्तुनआरोपासम्भवादित्याशङ्क्यतन्मा-न्यथानुपपत्त्यापूर्वानुभवमपेक्षते अनादयोयेसर्गाःसृष्टयस्तेषांपरंपरात स्यानुभूतावा । ननुजन्मान्तरेपिभैम्याःपरिग्रहेतत्स्मरणेवा प्रमाणंना-स्तीत्यतआह । चित्रेषुआलेख्येषुवाअनुभूता । ननुचित्रेष्वियंनिष्क्रियैवा नुभूतायथानुभवंचआरोपोभवति तत्कथमियंमामालिङ्गतीवसानुरागमा लोकयन्तीवप्रणयमनुनयन्तीवसकेलिकोपमावारयन्तीवदृश्यतेऽतआह । यद्वाजितःशम्बरोयेनसजितशम्बरोमदनःतस्ययामायाशाम्बरी । शम्बरो दैत्यस्तस्ययाशाम्बरीमायातस्याःशिल्पंनिर्माणंजातेव । कामेनशम्बरंजय तातस्यमायाप्यपहृतातयामाययेयंनिर्मितेत्यर्थः । यद्वाशम्बरारेःसम्बन्धि मायानिर्माणकौशलंजातेवसा । मदनस्यैवेदंशिल्पंतत्रमायामात्रहेतुकंन तुमांसदृङ्मासवत्वाद्यकारणरचितंइति मायानिर्मितंचातिसुन्दरंभवति का रणगुणानुरोधाभावात् । यद्वानलेनसाकामस्यशाम्बरीरूपंशिल्पंकौशलं जातेवालक्षि । शम्बरस्यजितत्वात्तन्मायैवभैमीरूपापहृतेत्यर्थः । अ-थवाजातेवेत्युत्प्रेक्षान्तरम् । प्रागननुभूतापितदानींकामस्यशिल्पभूतासा जाताउत्पन्नेवालक्षितोपरोक्षमनुभूयतेनचबाध्यते । आलिङ्गनादिरू पसमर्थप्रवृत्तिजनकत्वादितिभावः । यद्वाशाम्बरीत्युत्प्रेक्षान्तरमितिव्या ख्येयम् । विरहवशात्सर्वत्रभैमीदृष्टासापूर्वमनुभवतारतस्येनस्मृतासति आरोपात्प्रतीयतेशुक्तौरजतवत् । यद्वापूर्वमनुभूतैवस्मरणेनप्रतिदिशम-पूर्वैवेत्यादिता । यद्वाआविर्भ्रमकरजतवद्गन्धर्वनगरवद्वामायावशाद्दृश्यत्व मसत्येवाननुभूतापिभासतइतिसमुदायतात्पर्यम् ॥ १४ ॥

अलीकभैमीसहदर्शनान्न तस्थान्यकन्याःस्मरसो रसाय ॥ भैमीभ्रमस्यैवततःप्रसादे भैमीभ्रमस्तेन तास्वलम्भि ॥ १५ ॥

अलीकेति । मोहवशादवलोकिता अलीकभैमीमिथ्याभैमीतयासहता

सामपिदर्शनादन्यकन्यास्वरसः अन्तःपुरेस्थिता अस्सरस्तुल्याभैमीव्यतिरि क्ताअबलास्तस्यनलस्यरसायप्रीत्यैनाभूवन् । सहदर्शनाद्वारतस्यत्वानस्यसं भवादलीकदृष्टायाअपिभैम्याः सकाशादन्याअतिहीनाइति तास्वनुरक्तोना भूत् किन्तुअलीकदृष्टायामपितस्यामेवेत्यर्थः । तास्वेवभैमीबुद्धिः कथनेत्य तत्राह । ततःषष्ठ्यर्थेतसिः । तस्यभैमीभ्रमस्यैवभैमीभ्रान्तेरेवप्रसादात् सा मध्योत्तेननलेनतासुअन्यकन्यास्वरःसुभैमीभ्रमोमालम्भिनप्राप्तः । अ लीकदृष्टायास्तस्याः सकाशात्तासांअतिहीनत्वात्सादृश्यलक्षणभ्रान्तिकार णाभावाद्भैमीभ्रान्तिर्नोत्पन्नेत्यर्थः ॥ १५ ॥

**भैमीनिराशेहृदिमन्मथेन दत्तस्वहस्ताद्विरहाद्विह स्तः ॥ सतामलीकामवलोक्यतत्र क्षणादपश्यन् व्यषदद्विबुद्धः ॥ १६ ॥**

भैमीति । दूत्याङ्गीकाराद्भैमीविषयेनिराशेवितृष्णेपिहृदिविद्यमानत्वा न्मन्मथेनदत्तः स्वहस्तः स्वहस्तावलम्बनंयस्मैएवंभूताद्विरहाद्वियोगात्वि हस्त विह्वलः हृदिभैमीनराशेसतीतिवा हृदिव्याकुलइतिवा एवंभूतः सनलःतत्रउपकार्यायांअलीकान्तां असत्यरूपाभैमीमवलोक्यक्षणात्तस्मि न्नेवक्षणेविबुद्धः भ्रान्तिरहितस्तामपश्यन् अवलोकयन्व्यषदत्विषादंप्रा प । दूत्याङ्गीकाराद्भैम्यांनिराशत्वेनशान्तोपिविरहः कामेनस्वहस्तंदत्वा पुनरुद्दीपितः । विरहजनितयाभ्रान्त्याभैमीतेनावलोकिता भ्रान्त्य पगमेचनालोकितेति अनवेक्षणेहेतुर्मनबोधोवृथाजातः यत्प्रसादान्मया भैमीविलोकितासाभ्रान्तिर्गताकष्टं जातमितिदुःखितोभूदित्यर्थः । येनह स्तोदत्तस्तस्यहस्तसाहित्ययुक्तम् । अत्रतुविपरीतमित्याश्चर्यम् । व्यषद त्लृदित्वादङ् । प्राक्सितादड्व्यवायेपीति अधिकारेसदिरप्रतेरितिषत्व म् । विहस्तव्याकुलौसमावित्यमरः ॥ १६ ॥

**प्रियांविकल्पोपहृतांसयात्र ह्रियोज्झसन्देशमजल्प दल्पम् ॥ ऋदृश्यवाग्भीषितभूरिभीरु भवोरवस्ता वदवेदयत्तम् ॥ १७ ॥**

प्रियामिति । सनलः विकल्पेनसंकल्पेनोपहृतांउपनीतांप्रियां भैमींप्रति

दिगीशानांइन्द्रादीनांसंदेशमल्पमपियावदजल्पत् अवोचत् । तावदेवत स्मिन्नेवक्षणेअदृश्यस्यतस्यैववाचाभीषिता भयंप्राप्ताभूत्यं:वध्वः।नीरवःभय शीलायाबालालाभ्योभवःचरपक्षोरवःशब्दःतंनलंअचेतयत्सावधानंचकार। भ्रान्तिवीक्षितांभैर्मीप्रतिइन्द्रादिभिरेवमुक्तमिति यावद्वक्तुंप्रारब्धंतावदेव अनेनशब्देनअदृश्योभूतादिःकोप्यायातः इतिभीतानांबालानांकलकलेन पुनःभ्रान्तोभूत्वातूष्णींवभूवेतिभावः । अल्पसंदेशमितिवा । भीषितेति भियोहेतुभयेषुक् । चितीसंज्ञानेभीवादिकाद्धेतुमतिणिच्अचेतयत् ॥ १७ ॥

पश्यन्सतस्मिन्मरुतापितन्व्या.स्तनौपरिस्प्रष्टुमि वात्तवस्त्रौ ॥ अक्षान्तपक्षान्तमृगाङ्कमास्यं दधा रतिर्यग्वलितंविलक्षः ॥ १८ ॥

पश्यन्निति । तस्मिन्नन्तःपुरेऽचेतनेनमरुतावायुनाथचदेवेनापिपरिस्प्र ष्टुमिवमर्दयितुमिवात्तवस्त्रौक्षिप्तवस्त्रौकस्याश्चित्तन्व्याः स्तनौपश्यन्अवद्धि पूर्वंकंअकस्माद्विलोकयन् परस्त्रीकुचदर्शनाद्विलक्षोविचित्तः सनलोमृगा ङ्कत्वादेवअक्षान्तःअसोढः पक्षान्तमृगःपूर्णिमाचन्द्रोयेनएवंभूतं आस्यंवदनं तिर्यग्वलितंतिरश्चालितंदधार । पराङ्मुखोऽभूदित्यर्थः । नलादन्य.कोप्यु त्तमःपुरुषोनास्तीतिभावः । प्रच्छन्नकामुकसम्भोगेचन्द्रस्यातिरोधानंयुक्त मितिध्वन्यते ॥ १८ ॥

अन्तःपुरेविस्तृतवागुरोपि बालावलीनांवलितैर्गु णौघैः ॥ नकालसारंहरिणंतदक्षि द्वयंप्रभुर्बद्धुम भून्मनोभूः ॥ १९ ॥

अन्तरिति । मनोभूःकामःकालःकृष्णःकनीनिकालक्षणःसारःश्रेष्ठभागो यस्यतत्तथाहरिणंअभितःपाण्डुरन्तंयस्यनलस्याक्षिद्वयं बद्धुंसौन्दर्यस्यवशं कर्तुंप्रभुःसमर्थोनाभूत् । अथचनेत्रद्वयमेवहरिणंमृगंबद्धुम् । अरण्येमृग युनामृगोधर्तुंशक्यः । कामोमृगयुस्तु अन्तःपुरेनगरमध्येहरिणंधर्तुंनश शाकेत्याश्चर्यम् । किम्भूतः । बालावलीनांअवरोधतरुणपङ्क्तीनांवलितैः सविलासैःपुनःप्रवृत्तैर्वागुणौघैर्नृत्यगीतादिसौन्दर्यगुणसमूहैः वलितैः अ ङ्गसौष्ठवैर्गुणौघैश्चव्याकत्वान्तःपुरे विस्तृतावागुरालक्षणयावशीकरणद्रव्यंये न । गुणाएववागुरास्यानेयस्यजाताइत्यर्थः । अथचकेशपङ्क्तीनांवलितै

स्त्रिगुणितैर्दोरकसङ्घैः नगरमध्ये विस्तृतत्वागुरोपिकामपिबालांनलःसाभि लाषंनापश्यदित्यर्थः ॥ १९ ॥

**दोर्मूलमालोक्यकचंनुनुत्सो स्ततःकुचौतावनुलेप यन्त्याः ॥ नाभीमथैषश्लथवाससोनु मिमीलदिक्षुक्रमकृष्टचक्षुः ॥ २० ॥**

दोरिति । एषःनलःकचकेशपाशंरुरुत्सोर्बन्धु मिच्छोःकस्याश्चित्केशसंयमननादेवदोर्मूलंबाहुमूलं आलोक्यततस्तस्माद्देशात्किंचिद्धोनमितदृष्टिस्ततश्चन्दनादिनानुलेपयन्त्याविलेपयन्त्यास्तस्याएवतावतिसुन्दरौकुचौस्तनौ आलोक्यततोपिकिञ्चिन्नमितदृष्टिः अथकुचलेपनानन्तरंनाभिविलेपनार्थंश्लथवाससः श्लथीकृतवसनायास्तस्याःएवनाभीमालोक्यततोप्यधोनमितदृष्टिः एवंदिक्षुऊर्ध्वदेशादधोदेशोक्रमेणकृष्टसमाकृष्टंचक्षुर्येनएवंभूतः सन् अनुपश्चाद्नवलोकनीयस्यकस्याप्यङ्गस्यअवलोकनप्रसङ्गान्मिमीलनेत्रनिमीलनमेवचकार मीलसङ्कमनेधातुः अत्राप्युत्तमत्वंसूचितम् ॥ २० ॥

**मीलन्नयोकेभिमुखागताभ्या धर्तुंनिपीड्यस्तनसान्तराभ्याम् ॥ स्वाङ्गान्यपेतोविजगौसपश्चा त्पुमङ्गसङ्गोत्पुलकेपुनस्ते ॥ २१ ॥**

मीलन्निति । मीलन्संकोचितनयनःसनलः अभिमुखंसंमुखमागताभ्यां स्त्रिभ्यांमध्ये विद्यमानोनिपीड्यनितरांपीडनंकृत्वा धर्तुंनशेकेनशक्तः । यतःस्तनाभ्यांकृत्वासान्तरेव्यवधानसहितेताभ्याम् । उभयोरुच्चैःस्तनावेव परस्परंमिलितौनतुतयोः परस्परंसंश्लेषोजातः । सान्तरत्वात्ताभ्यामपेतो निर्गतःसन्पश्चात् स्वाङ्गानिस्वीयानवयवान् परस्त्रीसंसर्गोद्विजगौ । विशेषेणनिनिन्द । एतेऽनुचितकारिणइति तेस्त्रियौपुंसःअङ्गसङ्गेनउत्पुलकेसात्विकभावोद्बोधात्रोमाञ्चितेजाते । स्त्रीणांपापप्रधानत्वात्परपुरुषसंयोगेनतयोरोमाञ्चितत्वंजातम् । नलेनतूत्तमपुरुषत्वात्परस्त्रीसंसर्गोद्ङ्गनिन्दाकृतेतिभाव । धर्तुंशकियोगेतुमुन् ॥ २१ ॥

**निमीलनस्पष्टविलोकनाभ्यां कदर्थितस्ताःकलयन्कटाक्षैः ॥ सरागदर्शीवमृशंलज्जे स्वतःसतां**

ह्रीपरतोतिगुर्वी ॥ २२ ॥

निमीलनेति । निमीलनेपरस्त्रीसंसर्गःप्रकटविलोकनेचविवस्त्रस्त्रीद र्शनान्निमीलनस्पष्टविलोकनाभ्यांकदर्थितः पीडितः अतःस्ताःतरुणीरु भयपरिहारार्थंकटाक्षैः कलयन्नवलोकयन्सनलोरागेणदर्शीवपश्यन्निवम् न्नलनलोलज्जितः । लज्जातुअन्यतोभवतितत्कथंलज्जितोनलइत्यतआ ह । सतांसाधूनांपरतःसकाशात्स्वतोह्रीर्लज्जातिगुर्वी अतिमहतीभव ति स्वतोयावतीलज्जातावतीपरतोनेत्यर्थः । तस्माद्दृश्यत्वेनकटाक्षाव लोकनेनस्वयमेवनललज्जइत्यर्थः ॥ २२ ॥

रोमाञ्चितांगीमनुतत्कटाक्षै भ्रान्तेनकान्तेनरते निसृष्टः ॥ मोघःशरौघःकुसुमानिनासी त्तद्धैर्यपूजां प्रतिपर्यवस्यन् ॥ २३ ॥

रोमाञ्चितेति । नलाङ्गसङ्गाद्रोमाञ्चिताङ्गींस्त्रियमनुलक्षीकृत्यतस्यन लस्यकटाक्षैः एतौअपिपरस्परमनुरक्तौइति भ्रान्तेनरतेःकान्तेनकामेनप रस्परसंभोगार्थंनिसृष्टःक्षिप्तः कुसुमानिपुष्पलक्षणःशरौघःमोघोनिष्फलः नाभूत् । यतःतस्यनलस्यधैर्यपूजांप्रतितद्दिश्यपर्यवस्यन्सज्जाततात्पर्यः मुख्यप्रयोजनाभावेपिनलसदृशःकोपिधीरोनास्तीति तद्धैर्यपूजायामुपयो गात्पुष्पसाफल्यम् ॥ २३ ॥

हित्वैववर्त्मैकमिहभ्रमन्त्याः स्पर्शःस्त्रियाःसुत्यज इत्यवेत्य ॥ चतुष्पथस्याभरणंबभूव लोकावलो कायसतांसदीपः ॥ २४ ॥

हित्वेति । एकंवर्त्मएकपदींहित्वात्यक्त्वैवइहैकपद्यांअन्तःपुरेवा भ्रम न्त्याःविचरन्त्याःस्त्रियाःस्पर्शःसुत्यजःसुखेनत्यक्तुंशक्यतेनान्यथेति अवेत्य विचार्य सतांसाधूनांप्रकाशरूपत्वाद्दीपइवदीपः सनलः लोकानांकर्मभू तानांपुरलोकानामवलोकाय चतुष्पथस्यचतुर्णांपथांचतुर्दिग्भ्यः समागता नांमार्गाणांएकत्रसमाहारः यस्मिंस्थितेनलोकेनचतुर्दिग्भ्यः समागतोज नोदृश्यतेतस्याभरणंबभूव । दीपोपिलोककर्तृकायावलोकनायचतुष्पथस्या भरणंभवति । चतुष्पथंसमाहारेपथः संख्याव्ययादेरितिनपुंसकत्वम् ॥२४॥

उद्वर्त्तयन्त्याहृदयेनिपत्य नृपस्यदृष्टिर्न्यवृतद्द्रुतेव ॥ वियोगिवैरात्कुचयोर्नखाङ्कैरर्धेन्दुलीनैर्गलहस्तितेव ॥ २५ ॥

उद्वर्त्तयन्त्येति । नृपस्यदृष्टिःउद्वर्त्तयन्त्याःसमालम्भनंकुर्वन्त्याः कस्याश्चिद्धृदयेउरसिनिपत्यद्रुतेववेगसहितेवन्यवृतत् परावृत्ता परस्त्रीकुचदर्शनभियेत्यर्थः । उत्प्रेक्षते । कुचयोर्विद्यमानैरर्धेन्दुलीनैरर्धचन्द्राकारैर्नखाङ्कैः नखक्षतैर्वियोगिनोनलस्यवैरात्गलहस्तितेवगलेहस्तोगलहस्तः सञ्जातोयस्याःसातारकादित्वादितच् । नखाङ्कदर्शनंचन्द्रदर्शनंचविरहिणोसह्यमितिशत्रुत्वम् । गलहस्तितोबहिर्झटितिपरावर्तते । न्यवृतदिति द्युतादित्वाद्‌लुङिद्युद्भ्योलुङीतिपरस्मैपदम् ॥ २५ ॥

तन्वीमुखन्द्रागधिगत्यचन्द्रं वियोगिनस्तस्यनिमीलिताभ्याम् ॥ द्वयन्द्रढीयःकृतमीक्षणाभ्यान्तदिन्दुताचस्वसरोजताच ॥ २६ ॥

तन्वीति । तन्व्याः मुखंचन्द्रमधिगत्यज्ञात्वा अथचवदनलक्षणंचन्द्रंप्राप्य द्राक्झटितिनिमीलिताभ्यांसङ्कुचिताभ्यां वियोगिनस्तस्येक्षणाभ्यांनेत्राभ्यां द्वयंद्रढीयः अतितरांदृढंकृतंसत्यंकृतम् । द्वयंकिम् । तदिन्दुता तन्मुखस्यचन्द्रत्वंस्वस्यसरोजताचकमलत्वंच चन्द्रप्राप्तौकमलस्यैवसंकोचोनत्वन्यस्य चन्द्रप्राप्तावेवकमलस्यसंकोचोनत्वन्यप्राप्तावित्यन्वयव्यतिरेकाभ्यांतदिन्दुत्वंस्वसरोजत्वंच तन्वीमुखंचन्द्रवद्दृमणीयंनलनेत्रेचनीलोत्पलवद्रमणीयेइत्यर्थः । परस्त्रीमुखावलोकनंअयुक्तमितिनेत्रसंकोचःकृतइत्युत्तमत्वंसूचितम् ॥ २६ ॥

चतुष्पथेतंविनिमीलिताक्षं चतुर्दिगेताः सुखमग्रहीष्यन् सङ्घट्यत्तस्मिन्भृशभीनिवृत्ता स्ताएवतद्वर्त्मनचेददास्यन् ॥ २७ ॥

चतुष्पथइति । परस्त्रीमुखाद्यवलोकनभियानिमीलिताक्षंनलं चतुर्दिगेताश्चतुर्दिग्भ्यःसमागताः । चतस्रःस्त्रियः चतुष्पथेपितर्हिसुखमनायासमग्रहीष्यन्धर्तुमशक्ष्यन्चेत्यदि तस्मिन्नलेसंघट्यसंघट्टं प्राप्यादृश्य

संघट्टादेवस्पर्शभ्रंशित्रियाजातमहाभीत्यानिवृत्ताः पुनःप्रवृत्तास्ताएवपूर्वोक्ताः सङ्कल्पेतस्यनिर्गन्तुंमार्गंनादास्यन्व्यतरिष्यन् । परावृत्तत्वान्मार्गेस्तस्यैनद स्तलोपधतुर्नाशङ्कुवन्निति क्रियातिपत्तिः ॥ २७ ॥

**संघट्टयन्त्यास्तरसात्मभूषा हीराङ्कुरप्रोतदुकूल हीरा दिशानितम्बंपरिधाप्यतन्व्यास्तत्तापसंत्ता पमवापभूपः ॥ २८ ॥**

संघट्टेति । भूपोनलःतन्व्याःकस्याश्चित्नितम्बंदिशाकरणभूतया परि धाप्यदिगन्तरंकृत्वेत्यर्थः । तेनपरस्त्रीविवसनीकरणेनजातिसंयत्यापंतेन संतापंपरमन्दुःखमवाप प्राप किंभूतायाःसंघट्टयन्त्याःसङ्घट्टं कुर्वन्त्याः अ तएवकिम्भूतः परस्त्रीस्पर्शत्रियातरसापरस्त्रीसंस्पर्शभियाझटितिनिवृत्त त्वादात्मनोभूषाअलङ्कारास्तेषुहीरकाः तेषामङ्कुराःकोटयःतत्रप्रोतंस्यूतंदु कूलंहरतिएवंशीलः स्यूतत्वात्स्वतएवआगच्छतोदुकूलस्यनेता अबुद्धिका रित्वेप्यतितरांसयैतदनुचितंकृतमितिसन्तापादुत्तमत्वंसूचितम् ॥ २७ ॥

**हृतःकयाचित्पथिकन्दुकेन संघट्यभिन्नःकरजैःक यापि । कयाचनक्तःकुचकुङ्कुमेन संभुक्तकल्पः सबभूवताभिः ॥ २९ ॥**

हृतइति । सनलःपथिचतुष्पथरूपेकयाचित्सुन्दर्याकन्दुकेनहृतः अ न्यस्यप्रहितःकन्दुकोमध्येमार्गमदृश्यरूपस्यतस्यलग्नः कयाचित्तत्रैवसंघ ट्यबुद्धिपूर्वकरजैर्नखैः भिन्नोऽङ्कितः कयाचित्तत्रैवसंघट्यबुद्धिपूर्वमालि ङ्गनवशात्कुचकुङ्कुमेनाक्तःप्रलिप्तः एवंताभिःअन्तःपुरसुन्दरीभिः संभु क्तकल्पः ईषदून संभुक्तोबभूव ग्राम्यधर्माभावादीषदूनत्वंसंभोगस्य ता भिरितितृतीययातासामेवबुद्धिपूर्वकारित्वंनतुनलस्येतिसूचितम् ॥ २८ ॥

**छायामयःप्रैक्षिकयापिहारे निजेसगच्छन्नथनेक्ष्य माणः । तच्चिन्तयान्तर्निरधारिचारु स्वस्यैवत न्व्याहृदयंप्रविष्टः ॥ ३० ॥**

छायेति । कौतुकित्वाददृश्यस्यैवममप्रतिबिम्बेनभवितव्यमिति इच्छा वशात्कयापितन्व्यासुंदर्यानिजेस्वीयेहारे छायामयःप्रतिबिम्बरूपः सन

लःप्रेक्षिपूर्वमवलोकितः अथानन्तरंगच्छन्ततःस्थानान्तरंगच्छन् अतोहा रेनहंसमायाःनदृश्यमानः अधुनैवकश्चित्सुन्दरोहारेमयादृष्टः क्वेदानींगत इतितच्चिन्तयानलचिन्तयाकृत्वा सनलःस्वस्यैवहृदयंत्वीयमन्तःकरणंप्रवि ष्टइतितस्याःअन्तर्मनसि चारुसम्यक्निरवायिनिर्धारितः हृदयेएवहार स्यविद्यमानत्वात्सामीप्यात्तत्रैवप्रविष्टइतिनिश्चयः कृतइत्यर्थः । प्रतिबि म्बरूपन्तमालोक्यविरहपीडिताजातेतिभावः ॥ ३० ॥

तच्छायसौन्दर्यनिपीतधैर्याः प्रत्येकमालिङ्गदमूर तीशः ॥ रतिप्रतिद्वन्द्वितमासुनूनं नामूषुनिर्णीतर तिःकथंचित् ॥ ३१ ॥

तदिति । रतीशःकामः हाराहीतच्छायस्यनलप्रतिबिम्बस्यसौन्दर्येण निपीतमपहृतंधैर्ययासान्ताः अमूस्ताःपुरसुन्दरीःप्रत्येकंपृथक्आलिङ्गत् । ननुरतीशोनरत्याएवालिङ्गनंयुक्तंनान्यस्याइत्यतआह । नूनमुत्प्रेक्षते स कामःरतेःप्रतिद्वन्द्वितमासु अतितरांप्रतिस्पर्धिनीषुरतितुल्यासुअमूषुमध्ये कथंचित्केनापिप्रकारेणसौन्दर्यशीलादिना नर्निर्णीतारतिर्येनएवभूतोनू नम् । रतेरनिश्चयात्सर्वासामालिङ्गनेनरतेरप्यालिङ्गनं भविष्यतीतिबुध्ये त्यर्थः । नलप्रतिबिम्बदर्शनमात्रेणसर्वाअपिकामपरवशाजाताइतिभावः । तस्यच्छायाविभाषासेनेतिनपुंसकत्वम् । प्रतिद्वन्द्वितमासुतसिलादिष्विति पुम्बत् ॥ ३१ ॥

तस्माददृश्यादपिनातिबिभ्यु स्तच्छायरूपाहित मोहलोलाः । मन्यन्तएवादृतमन्मथाज्ञाः प्राणा नपिस्वान्सुदृशस्तृणानि ॥ ३२ ॥

तस्मादिति । ताःसुदृशःतरुण्यः अदृश्यादपितस्मान्नातिबिभ्युः अ तिशयितंभयंनप्रापुःप्राप्ताः हारादौतच्छायस्यतत्प्रतिबिम्बस्ययद्रूपंसौन्द र्यन्तेनआहितोजनितःमोहःमदनविकारविलासःतेनलोलाश्चञ्चलाः मद नविकारविलासेआसक्तावा । तत्प्रतिबिम्बदर्शनेनमदनपरवशत्वाददृ श्यादपितस्माद्भयंनप्राप्तमित्यर्थः । एतदपिकुतआह । आदृतमन्मथाज्ञाः समानितकामाज्ञाःसुदृशः स्वान्प्राणानपितृणान्येवतृणतुल्यानेवमन्यन्तेय

तः अतोमदनपरवशत्वाद्भयंनप्राप्तमितियुक्तम् । यस्यप्राणवाञ्छापिनवि द्यतेतस्यभयन्दूरंनिरस्तमितिभावः । लोलश्चलसतृष्णयोरित्यमरः ॥ ३२ ॥

जागर्तितच्छायदृशांपुरायः स्पृष्टेचतस्मिन्विसस र्पकम्पः । द्रुतन्द्रुतेतत्पदशब्दभीत्या स्वहस्तित स्त्रारुरुत्त्वापरंसः ॥ ३३ ॥

जागर्तीति । तच्छायदृशांनलप्रतिबिम्बावलोकिनीनांचारुदृशांसुदृशां सात्त्विकप्रादुर्भाववशाद्यःकम्पःपुराजागर्तिप्रजागः प्रतिबिम्बदर्शनमा त्रेणयः कम्पःसमुद्भूत् तस्मिन्नलेस्पृष्टेषसतियःकम्पःविससर्प दर्शनापे क्षयास्पर्शनस्याधिकसात्त्विकजननसामर्थ्याद्दर्शनजन्यकम्पापेक्षयायोजातः सकम्पःस्पर्शनभयाद्द्रुतंशीघ्रन्द्रुतेपलायितेतस्मिन् अदृश्यस्यतस्यपदशब्द भीत्याचरणशब्दभियाकर्त्र्या पूर्वोपेक्षयापरमतिशयेन स्वहस्तितोदत्ताव लम्बनोवृद्धिंप्रापितइत्यर्थः । अथचपरंकेवलंस्वहस्तंप्रापितोदत्तावल म्बःकृतोमदीयोयंकम्पोनसात्त्विकभावजातइत्येवतयाकथितइत्यर्थः । च भयथाप्रासांनदर्शनस्पर्शनजन्यः कम्पःशृङ्गारस्यानुभावःपाश्चात्योऽभयानक स्येतिपरिपाट्याप्रवृद्धोभूदितिभावः । स्वहस्तितः तारकादिः । जागर्ति पुरिलुङ्स्मास्वइतिभूतेलट् ॥ ३३ ॥

उल्लास्यतांस्पृष्टनलाङ्गमङ्ग न्तासांनलच्छायमिवा पिदृष्टिः । भ्रश्मैवरत्यास्तदनार्तिपत्या च्छेदेप्यबो धंयदहर्षिरोमा ॥ ३४ ॥

उल्लास्यतामिति । रत्याःपत्याकामेन तासांअन्तःपुरसुन्दरीणां स्पृष्टंन लाङ्गंयेनएवंभूतमङ्गमुल्लास्यतांहर्षवशात्परिपुष्टीक्रियतां नामनकेवलन्त देवकिन्तुनलच्छायापिवानलप्रतिबिम्बमपिवातासांदृष्टिरपि उल्लास्यतांह र्षवशात्प्रसार्यतांनामात्रविषये चित्रंन किन्तुच्छेदेकर्त्तनेकृतेपिसति अ बोधंअचेतनंलोमयदहर्षिहर्षंप्रापितत्तदश्मैवपाषाणएव अर्मार्तिर्नातंतः अचेतनस्यलोम्नः हर्षणंपाषाणनर्त्तनतुल्यइत्यर्थः । सत्ववशाद्रोमाञ्चो भूदितिभावः । उल्लास्यतांकर्मणितङ् । उपसर्गानुवृत्तेरनावश्यकत्वात् पिबेतिपाघ्रादिनाशः ॥ ३४ ॥

यस्मिन्नलस्पृष्टकमेत्यहृष्टा भूयोपि तं देशमगान्मृगाक्षी ॥ निपत्य तत्रास्य धरारजस्थे पादे प्रसीदेति शनैरवादीत् ॥ ३५ ॥

यस्मिन्निति । नलसंमुखमागच्छन्तीमृगाक्षीहरिणनेत्रा, यस्मिन्देशेऽन्यापदेशाद्गच्छतोनलस्य गात्रेणासङ्गस्वगात्रसंघट्टलक्षणंस्पष्टकाख्यमालिङ्गनंएत्यप्राप्य हृष्टारोमाञ्चादियुक्ताजाता तन्देशंभूयोपिपुनरपिअगात्जगाम । तत्रदेशेधरारजस्थेपृथ्वीरजःसुस्थिते अस्यनलस्यपादेचरणप्रतिबिम्बे निपत्यनमस्कारंकृत्वा प्रसीदेतिअनुग्रहंममकुर्वित्याकर्णनभीत्याशनैरवादीदवोचत् । नितरांनलाधीनाजातेतिभावः यद्योषितःसंम्मुखमागतायाअन्यापदेशाद्व्रजतोनरस्य । गात्रेणगात्रघटतेतदेतदालिङ्गनंस्पृष्टकमाहुरार्याइतिकामशास्त्रम् ॥ ३५ ॥

भ्रमन्नमुष्यामुपकारिकायां मायस्य भैमीविरहात्कृशीयान् ॥ असौमुहुःसौधपरंपराणां माधत्त विश्रान्तिमुपत्यकासु ॥ ३६ ॥

भ्रमन्निति । असौनलः सौधपरंपराणांसप्तभूमिकप्रासादपरंपराणामुपत्यकासुऊर्ध्वभूमिषु मुहुःपुनः विश्रान्तिमाधत्तकृतवान् । किंकृत्वा । भैमीविरहात्कृशीयानतितरांकृशोयतः तस्मादमुष्यामुपकारिकायांभ्रमन्आयस्यबहुश्रमंप्राप्य । श्रमापनोदार्थंक्षणमात्रंतत्रस्थित्वोर्ध्वंगृहान्विशतिस्मेत्यर्थः । उपत्यकास्वितिपाठः साधीयान् । उपत्यकानांविश्रान्तियोग्यत्वात् । उपाधिभ्यान्त्यकन्नासन्नारूढयोरित्युभयत्रापित्यकन् ॥३६॥

उल्लिख्य हंसेन दले नलिन्यास्तस्मै यथादर्शि तथैव भैमी । तेनाभिलिख्योपहृतस्वहारा कस्यान दृष्टा जनिविस्मयाय ॥ ३७ ॥

उल्लिख्येति । हंसेननलिन्यादलेपत्रेभैमीमुल्लिख्यलिखित्वातस्मैनलाय यथाभैमीयदर्शिदर्शिता । तथैवतत्रविश्रान्तेननलेनापिअभिलिख्यलिखित्वा उपहृतःकण्ठेअर्पितःस्वहारःस्वीयमुक्ताहारोयस्याः एवंभूताचित्ररूपाभैमीदृष्टासतीकस्याःशुद्धान्तसुन्दर्याः विस्मयायआश्चर्यायनजाता ।

तथाभूतान्तांदृष्ट्वाकेनेयमत्रातिसुन्दरीलिखिताकण्ठार्पितहाराचेति सर्वा अपिविस्मिताजाताइत्यर्थः । विश्रान्त्यर्थंभैमींलिखित्वासांशाङ्कीमीप्राप्ति बुध्याऽनन्तरकरणीयसंकल्पवशात्तेनमुक्ताहारार्पणीकृतेतिभावः ॥ ३७ ॥

कौमारगन्धीनिनिवारयन्ती वृत्तानिरोमावलि वेत्रचिह्ना ॥ सालिख्यतेनेक्ष्यतयौवनीय द्वास्था मवस्थांपरिचेतुकामा ॥ ३८ ॥

कौमारेति । तेननलेन साभैमीअञ्जिलिख्यऐत्यतदृश्यतेस्म । किंभूता कौमारंशैशवन्तस्यगन्धः लेशोपिविद्यतेयेषुतानिवृत्तानिलेखमादीनिनिवा रयन्तीनिषेधयन्ती यतोरोमावलिरेववेत्रंयष्टिश्चिन्हंयस्याःसा तथायौवनी यायांयौवनसंबन्धिन्यांद्वारितिष्ठतीतियौवनीयद्वास्यातामवस्थांआकार विशेषंपरिचेतुकामाअङ्गीकर्तुकामा । वय-सन्धिप्राप्तांलिखित्वापश्यतिस्मे त्यर्थः । अन्यांअपिवेत्रधारिणीकांश्चिन्निषेधति । द्वास्थावत्भवति । गन्धी नीतिपाठेअल्पाख्यायामितिगन्धस्येदादेशः ॥ ३८ ॥

पश्याःपुरन्ध्रीःप्रतिसान्द्रचन्द्र रजःकृतक्रीडकुमा रचक्रम् ॥ चित्राणिचक्रेऽध्वनिचक्रवर्ति चिह्नन्त दङ्घ्रिप्रतिमासुचक्रम् ॥ ३९ ॥

पश्याइति । सान्द्रंघनञ्चन्द्ररजःकर्पूरपरागः तेनकृताक्रीडाखेलायै नएवंभूतंकुमारचक्रंबालसङ्घोयस्मिन्नेवंविधेऽध्वनिमार्गे तदङ्घ्रिप्रतिमा सुनलचरणकमलप्रतिबिम्बेषु वर्तमानञ्चक्रवर्त्तिनःसार्वभौमस्यचिन्हंल क्षणरेखारूपंचक्रं पश्याःविलोकयन्तीः पुरन्ध्रीः तरुणीःप्रतिलक्षीकृत्य चि त्राणिअतितरामाश्चर्याणिचकार । तेनसार्वभौमेणात्रविचरितमितितासा माश्चर्यमभूदित्यर्थः । चान्द्रेत्यपिपाठः । यस्याइतिपाठेभैम्याःसंबन्धिनीः पुरन्ध्रीरितियोजनात् स्वाम्येनचक्रंराष्ट्रं वर्त्तयतीतिचक्रवर्त्ती ॥ ३९ ॥

तारुण्यपुण्यामवलोकयन्त्यो रन्योन्यमेणेक्षणयो रञ्जिख्याम् ॥ मध्येमुहूर्तंसबभूवगच्छ न्नाकस्मि काच्छादनविस्मयाय ॥ ४० ॥

तारुण्येति । सनलः तारुण्येनपुण्यांचार्वीं अन्योन्यंपरस्परसंबन्धिनीम

भिख्यांशोभामवलोकयन्त्याःपश्यन्त्योःकयोश्चिदेणेक्षणयोःमृगीदृशोर्मध्ये मुहूर्तंक्षणमात्रङ्कुर्वन्सन् आस्मिकेननिर्हेतुकेनाच्छादनेनतिरोधानेनकृत्वा यःविस्मयःआश्चर्यंतस्मैबभूव । भूयादन्तर्धिसिद्धेरित्यादिवरदानाददृश्यस्यममस्पर्शेनभवितव्यंशरीरेणान्यस्याच्छादनंकर्त्तव्यमदृश्येषुमदीयभूषारत्नेषुप्रतिबिम्बेन भवितव्यमित्यादीच्छावशाच्छादनात्तयोराश्चर्यंजनयतिस्मेतिभावः । पुण्यन्तुचार्वपीत्यमरः ॥ ४० ॥

पुरःस्थितस्यक्कापिचदस्यभूषा रत्नेषुनार्यःप्रतिबिम्बितानि ॥ व्योमन्यदृश्येषुनिजान्यपश्यन् विस्मित्यविस्मित्यसहस्रकृत्वः ॥ ४१ ॥

पुरइति । क्वचित्प्रदेशेस्त्रीणांपुरोग्रेस्थितस्यास्यनलस्य अदृश्येषुभूषारत्नेषुभूषणरत्नेषु निजानिस्वीयानिप्रतिबिम्बानि विस्मित्यविस्मित्यपुनःपुनःविस्मयंप्राप्य नार्यःसहस्रकृत्वःसहस्रधा व्योमनिगगनेअपश्यन्अवलोकयन्तिस्म । केवलेगगनेकेनापिप्रतिबिम्बंनावलोक्यतेअस्माभिरवलोक्यन्ते । स्वकीयंपरकीयमपिकिमेतदित्याश्चर्यंपुनःपुनर्ददृशुरित्यर्थः । एतदपिनलस्येच्छावशादेवेतिपूर्वमुक्तम् । प्रतिबिम्बितानिभावेक्तः । रूपाणीतिवासंबन्धनीयम् ॥ ४१ ॥

तस्मिन्विषज्यार्धपथात्तपात न्तदङ्गरागच्छुरितं निरीक्ष्य ॥ विस्मेरतामापुरविस्मरन्त्यः क्षिप्तंमिथःकन्दुकमिन्दुमुख्यः ॥ ४२ ॥

तस्मिन्निति । इन्दुमुख्यःचन्द्रवदनाः कन्दुकंनिरीक्ष्यमिथःपरस्परंक्षिप्तमेवाविस्मरन्त्योपिविस्मेरतांसाश्चर्यतामापुः । किंभूतंकन्दुकन्तस्मिन्नलेविषज्यसंघट्यपरस्यैप्रक्षिप्तंतामप्राप्यार्धपथेअर्धमार्गेएवात्तमङ्गीकृतंपातःपतनंयेनतन्तथातदङ्गरागेणनलाङ्गरागेणछुरितंभूषितंवा । यस्यैक्षिप्तस्तामप्राप्यमध्येसंघट्टयोग्यस्यवस्तुनोऽभावादकस्मात्कथंपतितइतिकस्याङ्गरागोस्मिंल्लग्नइतिसाश्चर्याजाताइतिभावः । पथोर्द्धमितिविग्रहेऽर्द्धंनपुंसकमितिसमासः । ऋक्पूरित्यादिनासमासान्तः ॥ ४२ ॥

पुंसिस्वभर्तृव्यतिरिक्तभूते भूत्वाप्यनीक्षानियमत्र

तिन्यः ॥ छायासुरूपं भुवि वीक्ष्य तस्य फलं दृशोरानशिरे महिष्यः ॥ ४३ ॥

पुसीति । महिष्यः राजपत्न्यः मणिबद्धायां भुवि तत्प्रतिबिम्बेषु केवलायां वा भूमौ आतपाभावरूपासु छायासु तस्य नलस्य स्वरूपं सौन्दर्यं वा वीक्ष्य दृशो र्नेत्रयोः फलं साफल्यमानशिरे प्रापुः । किंभूतास्ता अमर्त्याभीमस्तस्माद्व्यतिरिक्तभूते व्यतिरिक्तरूपे पुंसि विषये, अमीषामनवलोकनं तस्यां योनियमः अव श्यं त्रावस्तल्लक्षणं यद्व्रतं तद्विभ्यते यास्तां एवंभूता भूत्वापि । सुन्दरत्वस्यावलोकनात्तासां नेत्रसाफल्यं जातम् । प्रतिबिम्बस्यातपाभावस्य वा पुरुषत्वाभावात्तदवलोकनेपि व्रतस्खलितिर्नाभूदिति भावः ॥ ४३ ॥

विलोक्य तच्छायमतर्किताभिः पतिं प्रति स्वं वसुधा पिधत्ते ॥ यथा वयं किं मदनं तथैनं त्रिनेत्रनेत्रानलकीलनीलम् ॥ ४४ ॥

विलोक्येति । ताभिर्महिषीभिः भुवि तच्छायं विलोक्य इति अतर्कितं उत्प्रेक्षितम् ॥ इतिकिम् । यथा वयं स्वपतिं भीमलक्षणं प्रति उद्दिश्य मदनं धारयामः तथा वसुधापि त्रिनेत्रनेत्रानलस्य त्रिलोचनलोचनाग्नेः कीलेन ज्वालेन नीलं श्यामलं मूर्तेन मदनं भीमलक्षणं स्वं पतिं प्रति धत्ते धारयति किम् । छायायाः श्यामत्वात् त्रिनेत्रनेत्रेत्यादि विशेषणं युक्तम् । यथा वयमीशं प्रति मदनं पिदध्म्हे लज्जावशादन्तर्गूढतया धारयामस्तथा स्वं पतिं प्रति वसुधा मदनं पिधत्ते अन्तर्गूढया धारयति किमिति वा । नलोति सुन्दर इति भावः । वन्हेर्द्वयोर्ज्वालकीलाविल्यमरः ॥ ४४ ॥

रूपं प्रतिच्छायिकयोपनीतमालोकिताभिर्यदिनामकामम् ॥ तथापि नालोकि तदस्वरूपं हारिद्रभङ्गाय वितीर्णभङ्गम् ॥ ४५ ॥

रूपमिति । ताभिर्महिषीभिः प्रतिच्छायिकया प्रतिबिम्बेनोपनीतं रूपं नलस्वरूपं सौन्दर्यं वा यदिनाम यद्यपि कामं आलोकि दृष्टम् । तथापि तदतिप्रसिद्धं तस्य रूपं नालोकि न दृष्टम् । यतः हारिद्रभङ्गाय हारिद्रच्छेदाय सुवर्णच्छेदाय वातिगौरवत्वाद्वितीर्णो दत्तः भङ्गः पराजयो येन तत् । छायायाङ्गौ

रत्वादिवर्णानवलोकनादितिभावः । अतिसौन्दर्यं सूचितम् ॥ ४५ ॥

भवन्नदृश्यः प्रतिबिम्बदेह व्यूहं वितन्वन्मणिकुट्टिमेषु ॥ पुरंपरस्य प्रविशन्वियोगी योगीव चित्रं सरराजराजा ॥ ४६ ॥

भवन्निति । वियोगीसराजानलः योगीवविवियोगरहितइवअथचमुनिरिवविरराजएतच्चित्रम् । विरहिणोविरहित्वाभावादाश्चर्यम् । यतः अदृश्यो भवन्मणिकुट्टिमेषुमणिबद्धभूमिषु प्रतिबिम्बदेहव्यूहं प्रतिबिम्बरूपकायसमूहं वितन्वन् विस्तारयन् । तथापरस्यपुरंनगरंगृहोपगृहंवाप्रविशन्मुनिरप्यदृश्योभवतिकायव्यूहञ्चकरोतिपरस्यजीवान्तरस्यशरीरञ्चप्रविशति विषयेभ्योनिवृत्तत्वाद्वियोगीचभवति । पुरंपाटलिपुत्रेस्यात्गृहोपरिगृहे पुरम् । पुरंपुरिशरीरेचेतिविश्वः ॥ ४६ ॥

पुमानिवास्यर्षिमयाभ्रमन्त्या च्छायामयः पुंसइव व्यलोकी ॥ ब्रुवन्निवातर्कि मयापिकश्चि दितिस्म सस्त्रैणगिरः शृणोति ॥ ४७ ॥

पुमानिति । सनलइतिस्त्रैणगिरः स्त्रीसमूहवाणीः शृणोतिस्म इति किंभ्रजन्त्याविचरन्त्यामयापुमानिवअस्पर्शिस्पृष्टः ॥ विचरन्त्यामयापुंसइवपुरुषस्येवच्छायाव्यलोकि । दृष्टा । मयापिकश्चिद्ब्रुवन्वदन्निवातर्कि । सर्वाभिः सर्वाभिः परस्परं वाभैमींप्रत्येवमुक्तमित्यर्थः । स्त्रीपुंसाभ्यानञ् स्नञौभवनादितिनञ् स्त्रैणीः स्त्रीसंबन्धिनीर्गिरइतिवा ॥ ४७ ॥

अम्बांप्रणम्योपनतानताङ्गी नतेनभैमीपथियोगमाप ॥ स भ्रान्तिभैमीषु नतांविवेद सातञ्चनादृश्यतयाददर्श ॥ ४८ ॥

अम्बामिति । नताङ्गीसुन्दराङ्गी भैमीअम्बांमातरंप्रणत्यप्रणम्योपनताआगतासतीनलेनसहपथियोगंसंबन्धमापसनलः भ्रान्तिभैमीषुभ्रान्त्यादृष्टासु भैमीषुमध्येतांसत्यरूपांनविविदेविवेकेननज्ञातवान् साचादृश्यतयातंन ददर्शनादर्शत् दृश्यमेवेतिपाठेनाद्राक्षीदेवेत्यर्थः । अदर्शत्अदृशोऽङीतिगुणः प्रणत्यवाल्यपीतिअनुनासिकलोपेतुकि ॥ ४८ ॥

प्रसूप्रसादाधिगताप्रसून मालानलस्योद्भमवीक्षि तस्य ॥ क्षिप्तापिकण्ठायतयोपकण्ठे स्थितन्तमालम्बतसत्यमेव ॥ ४९ ॥

प्रसूरिति । प्रसूप्रसादाधिगतामातृप्रसादप्राप्ताप्रसूनमालाकुसुममाला उद्भ्रमेणभ्रान्त्याविक्षितस्यापिनलस्य कण्ठाय तयाभैम्याक्षिप्ताउपकण्ठे समीपेस्थितंसत्यरूपमेवतंनलन्तत्कण्ठंचालिङ्गत् ॥ ४९ ॥

स्रग्वासनादृष्टजनप्रसादः सत्येयमित्यद्भुतमाप भूपः ॥ क्षिप्तामदृश्यत्वमितोऽथमाला मालोक्य तांविस्मयतेस्मवाला ॥ ५० ॥

स्रगिति । भूपोनलः । इत्यद्भुतमाश्चर्यमाप । इतिकिम् । वासनाकृ त्स्पचिन्तासन्तापोपनीतस्यभैमीलक्षणस्यजनस्यप्रसादरूपेयंस्रक्मालास त्यरूपेति । अलीकदृष्टेनदत्तस्यकुत्रापिसत्यत्वंनदृष्टंअत्रतुअपूर्वंदृष्टम् । सावालात्वलीकनलायकण्ठायक्षिप्तां । तांमालामदृश्यत्वमितांप्राप्तांआ लोक्यविचार्यविस्मयतेस्मसाश्चर्याबभूव अलीकदृष्टनलकण्ठेक्षिप्तामालाना स्तिकेननीताइत्याश्चर्यम् ॥ ५० ॥

अन्योन्यमन्यत्रवदीक्ष्यमाणौ परस्परेणाध्युषिते पिदेशे ॥ आलिङ्गितालीकपरस्परान्त स्तथ्यंमिथ स्तौपरिपस्वजाते ॥ ५१ ॥

अन्योन्यमिति । सत्यरूपेणपरस्परेणाध्युषितेधिष्ठितेपिदेशेऽन्योन्यंपर स्परंअन्यत्रवत् अन्योन्यानध्युषितदेशवद्भ्रान्तिदृष्टमिवईक्षमाणौविलो कयन्तौतौआलिङ्गितंयदलीकंपरस्परन्तस्यान्तर्मध्ये तथ्यंसत्यमपिमिथः प रस्परंपरिषस्वजाते । आलिलिङ्गतुः । अलीकदृष्टस्यआलिङ्गितपरस्परस्य मध्ये सत्यरूपस्याप्यालिङ्गनंजातमितिभावः । आलिङ्गितमलीकंपरस्परं येनैवभूतंअन्तःकरणंययोरितिवा सत्यमप्यलीकबुद्ध्यैवालिलिङ्गतुरितिभा वः । परिषस्वजातेसदिस्वञ्ज्योःपरस्यलिटीतिपरस्यषत्वनिषेधः ॥ ५१ ॥

स्पर्शान्तमस्याधिगतापिभैमी मेनेपुनर्भ्रान्तिमद

र्शनेन ॥ नृपःसपश्यन्नपितामुदीत स्तम्भोनधर्तुं सहसाशशाक ॥ ५२ ॥

स्पर्शमिति । भैमीसत्यरूपन्तंअस्यस्पर्शंअधिगताप्राप्तापितस्पादर्शनेनपुनर्व्यालिं मेने । सत्यस्यदर्शनेनभाव्यंनचदृश्यतेसःतस्मादलीकःस्पर्शःइत्यमन्यत सनृपःसत्यरूपान्तांपश्यन्नपिसहसाझटितिउदीतोजातःसात्विकविकाररूपःस्तम्भोयस्यैवंभूत सन्तांधर्तुं नशशाक ॥ ५२ ॥

स्पर्शातिहर्षाद्धृतसत्यमत्या प्रवृत्तमिथ्याप्रतिलब्धबाधौ ॥ पुनर्मिथस्तथ्यमपिस्पृशन्तीनश्रद्दधाते पथितौविमुग्धौ ॥ ५३ ॥

स्पर्शेति भैमीसत्यरूपपरस्परस्पर्शजनितेनातिहर्षेणादृतयाङ्गीकृतया सत्यमत्यासत्यबुद्ध्यापुनरप्यालिङ्गनादौ प्रवृत्यपुनरलीकपरस्परालिङ्गनस्पर्शाभावान्मिथ्यात्वेनप्रतिलब्धः सत्यमतेर्बाधोयाभ्यामेवंभूतौसन्तौतृतीयस्थानेपथिमार्गेतथ्यं सत्यरूपंमिथः परस्परंस्पृशन्तावपिविमुग्धौभ्रान्तौनश्रद्दधातेसत्यत्वेनस्पर्शंनजानीतःस्म । प्रथमस्थलेतात्त्विकोपालम्भाद्द्वितीयस्थलेबाधोपालम्भात्तद्दृष्टान्तावष्टम्भेनतृतीयस्थलेकिंप्रथमस्थलइवसत्यमुतद्वितीयस्थलइवासत्यमितिनिर्णयाभावादनादरसहितौजाताविति भावः । पुनरपितृतीयस्थलेसत्यालिङ्गनेजातेपिविश्वासोनाभूदित्यर्थः॥५३॥

सर्वत्रसंवादमबाधमानौ रूपश्रियातिथ्यकरंपरंतौ ॥ नशेकतुःकेलिरसाद्विरन्तु मलीकमालोक्यपरस्परन्तु ॥ ५४ ॥

सर्वत्रेति । रूपश्रियापरस्परसौन्दर्यशोभया परमतितरांपरस्परस्यातिथ्यकरंसौख्यकरंसर्वत्रबहुषुस्थलेषु सम्वादंस्पर्शादिनासम्वादयोग्यंसत्यरूपंपरस्परंकमंजूतमबाधमानौसत्यत्वेनमन्यमानौ । क्वचिदलीकन्तुअसत्यंपुनः असत्यमपिवा परस्परमालोकयन्तौकेलिरसात्क्रीडाप्रीतेर्विरन्तुविरतिंप्राप्तुं नशेकुः । समर्थौनाभूताम् । क्वचिदलीकत्वेपिबहुषुस्थलेषुसत्यत्वादालिङ्गनादिक्रीडाव्यङ्कुरेवेतिभावः । तथ्यकरमितिपाठे कीदृक्परस्परम्परंकेवलन्तथ्यकरंसत्यत्वबुद्धिजनकमितिवा ॥ ५४ ॥

परस्परस्पर्शरसोर्मिसेकात्तयोः क्षणं चेतसि विप्रलम्भः ॥ स्नेहातिदानादिव दीपकार्चिर्निर्वाप्य किंचिद्द्विगुणं दिदीपे ॥ ५५ ॥

परेति । परस्परस्पर्शरसः अन्योन्यस्पर्शजनितोऽनुरागस्तस्योर्मिरुद्रेकस्तज्जनितात्सेकात्सेचनात् तयोश्चेतसि विप्रलम्भो वियोगः क्षणमात्रं किंचिन्निर्वाप्य पूर्वापेक्षया द्विगुणं द्वाभ्यां गुणाभ्यामन्यथा तयोर्हृदि दीपे प्रदीप्तः । कस्मात्किमिव स्नेहातिदानात्तैलस्य बहुप्रक्षेपाद्दीपिकार्चिरिव दीपशिखेव सा यथा किंचिन्मन्दीभूय द्विगुणं प्रकाशते । अप्राप्तौ सत्यां विप्रलम्भस्तादृग् दुःसहो न यथा संयोगपूर्वको वियोग इति भावः ॥ ५५ ॥

वेश्माप सा धैर्यवियोगयोगाद्द्वौ धत्त चमोहं च मुहुर्दधाना ॥ पुनः पुनस्तत्र पुरः स पश्यन् बभ्राम तां सुभ्रुवमुद्भ्रमेण ॥ ५६ ॥

वेश्मेति । सा भैमी वेश्म स्वगेहमाप किंभूता धैर्यवियोगस्य योगात्संबन्धात्क्रमेणात्र नलसम्भावना कुतः स्यादिति बोधं सम्यग्ज्ञानं नल एवायमिति मोहं मिथ्याज्ञानं च मुहुर्दधाना स नलः उद्भ्रमेण भ्रान्तिवशेन तां सुभ्रुवं सुन्दरीं पुनः पुनः पुरोऽग्रे पश्यन्विलोकयन् तत्रैव बभ्राम अलीकतदालिङ्गनादिवाञ्छया तत्रैव विचचारेति भावः ॥ ५६ ॥

पश्चान्नृपः संचरमाण एव चिरं परिभ्रम्य कथं कथंचित् ॥ विदर्भराजप्रभवानिवासं प्रासादमभ्रंकषमाससाद ॥ ५७ ॥

पश्चादिति । पश्चात्संचरमाणो विचरन्नेव नृपः कथंकथंचित्संचरणचारित्वे परिचयाभावादतिमहता क्लेशेन चिरं परिभ्रम्य परितो भ्रमित्वा अभ्रंकषं अत्युच्चत्वाद्गगनलग्नशिखरं विदर्भराजप्रभवया भैम्याभिरामं सुशोभमधिष्ठितमित्यर्थः । प्रासादमाससाद प्राप विप्रलम्भजनितपरिभ्रमणवशात्प्रासादं प्राप्तवान्न तु बुद्धिपूर्वकमिति भावः । संचरमाणः समस्तृतीयायुक्तादिति तङ् । कथंकथंचिदिति । समुदायनिपातोऽतिकृच्छ्रार्थो द्रष्टव्यः । अभ्रंकषम् । सर्वकूलाभ्रेति खच् ॥ ५७ ॥

सखीशतानांसरसैर्विलासैः स्मरावरोधभ्रममावह
न्तीम् विलोकयामाससभांसभैम्या स्तस्यप्रतोली
णिवेदिकायाम् ॥ ५८ ॥

सखीति । सनलः । तस्यप्रासादस्यप्रतोल्यांपुरोमणिवेदिकायांमणि
बद्धभूमौभैम्याःसभांविलोकयामास किंभूतांसखीशतानांसरसैःशृङ्गारैःवि
लासैर्विभ्रमैःस्मरस्यावरोधभ्रमअन्तःपुरभ्रान्तिमावहन्तींकुर्वन्तीं सखीनां
रतितुल्यत्वात्प्रतोलीमणिबद्धवेदिकोपरिरचितांसभान्ददर्शेत्यर्थः । रथ्या
प्रतोलीविशिखेत्यर्थः ॥ ५८ ॥

कण्ठेकिमस्याःपिकवेणुवीणा स्तिस्रोजिताःसूच
यतित्रिरेखः ॥ इत्यन्तरस्तूयतयत्रकाचि न्नलेन
बालाकलमालपन्ती ॥ ५९ ॥

कण्ठइति । यत्रसभायांनलेनकलंमधुरास्फुटमालपन्तीरागालापंकुर्व
न्तीकापिकाचिद्बालाऽन्तर्मनसिइतिअस्तूयतस्तुतानतुव्यक्तवाचा इतिकिं
अस्याःसुन्दर्याःत्रिरेखःलक्षणभूतास्तिस्रोरेखायस्मिन्सकण्ठः । तिस्रोपि
पिकवेणुवीणाःस्वरामृतेनजिताःसूचयतिज्ञापयतिकिं मधुरस्वराकर्णनेन
रेखात्रयदर्शनेनचकोकिलादित्रयस्यजयसूचनार्थंइदंरेखात्रयंकण्ठेनधृतंनतु
लक्षणत्वेनेत्युपमीयतइत्यर्थः । रेखात्रयाङ्किताग्रीवाकंबुग्रीवेतिकथ्यते ५९

एतंनलन्त्वन्दमयन्तिपश्य त्यजार्तिमित्यालिकुल
प्रबोधान् ॥ श्रुत्वासनारीकरवर्तिसारी मुखात्स्व
माशङ्कतयत्रदृष्टम् ॥ ६० ॥

एतमिति । यत्रसभायांसनलः । नारीसुन्दरीतत्करवर्तिनीसारीसारि
कातस्यामुखात् एवमालिकुलेनसखीसमूहेनपाठितान्प्रबोधान्सान्त्वनवा
क्यानिश्रुत्वा स्वात्मानन्ताभिर्दृष्टमाशङ्कत । इतिकिम् । हेदमयन्तित्वन्म
नसिस्थितंएतंपुरोवर्तिनआगतंवानलपश्य आर्तिन्तद्वियोगजनितांपिडा
न्त्यजेति । अहमेताभिर्दृष्टः अन्यथासारिकामेवमेताः कुतः पाठयन्ती
ति ॥ ६० ॥

यत्रैकयालीकनलीकृताली कण्ठेमृषाभीमभवीभ

वन्त्या ॥ तद्भूपथे दौहृदिकोपनीता शालीनमाधायिमधूकमाला ॥ ६१ ॥

यत्रेति । यत्रसभायांमृषामिथ्याभीमभवीभवन्त्याभैमीवेषधारयन्त्या एकयासख्याअलीकनलीकृतालीकवठेअसत्यनलाकारीकृतसखीकण्ठे दौहृदिकोपनीतामालाकारेणानीता मधूकमालातस्याद्रष्ट्रस्यनलस्यद्रष्ट्रमृगोचरेशालीनंसलज्जंआधायिनिहिता भैमीविनोदार्थन्ताद्दशीमेवक्रीडांसर्वाःकुर्वन्तीतिभावः । दौहृदिकाधात्रीवा वृक्षादिदोहदेनियुक्तोदौहृदिकः । तत्रनियुक्तइतिठक् । शालीनकौपीनेअधृष्टाकार्ययोरितिनिपातात्शालीनशब्दःसाधुः ॥ ६१ ॥

चन्द्राभमभ्रन्तिलकन्दधाना तद्भ्रविजास्येन्दुकृतानुबिम्बम् सखीमुखेचन्द्रसमेससर्ज चन्द्रानवस्थामिवकापियत्र ॥ ६२ ॥

चन्द्रेति । यत्रसभायांकापिकाचित्सुन्दरी चन्द्राणांअनवस्थांइयत्तानवधारणान्निर्णयाभावमन्योन्यस्मिन्प्रतिबिम्बादनवस्थितिंवा ससर्जेवकिंभूताचन्द्रसमेचन्द्रतुल्ये निजसखीमुखेऽतिस्वच्छत्वाच्चन्द्राभंचन्द्रतुल्यमभ्रंअतिस्वच्छद्रव्यविशेषः तत्संबन्धिअभ्रन्तद्रूपन्तिलकंललाटाभरणंदधानाकुर्वाणा । किंभूतंमाभ्रन्तिलकन्तद्वचन्द्राकाराभ्रतिलकयुक्तं निजंस्वीयंआस्यलक्षणइन्दुः तेनकृतमनुबिम्बंप्रतिबिम्बंयत्र । चन्द्राकाराभ्रतिलकयुक्तस्वीयमुखचन्द्रेकृतमनुबिम्बयेनवा । यन्मुखेचन्द्राकारेचन्द्राकारोभ्रतिलक.क्रियतेतस्याश्चन्द्राकारोभ्रतिलकोमुखच्चद्वैचन्द्रौअलङ्कारकारिण्याःचन्द्राकारेऽभ्रतिलकेप्रतिबिम्बितौ । यथाचालङ्कार.क्रियतेतस्यामुखंतत्रविद्यमानोभ्रतिलकश्चद्वौचन्द्रौयस्याक्रियतेलङ्कारतन्मुखचन्द्राभ्रतिलकेप्रतिबिम्बितौ । एवप्रतिबिम्बितयोरपिपरस्परमुखचन्द्राभ्रतिलकयोप्रःतिबिम्बरूपौपरस्परमुखचन्द्राभ्रतिलकौप्रतिबिम्बितौ एवं प्रतिबिम्बितःप्रतिबिम्बादावित्येवंचन्द्रानवस्थाद्रष्टव्या । तद्विद्यतेऽत्रतद्वत्वृत्त्यत्रमतुपोमकारस्यभयइतिवः ॥ ६२ ॥

दलोदरेकाञ्चनकेतकस्य क्षणान्मषीभावुकवर्णले

खम् ॥ तस्यैवयत्रस्वमनङ्गलेखं लिलेखभैमीनख लेखनीभिः ॥ ६३ ॥

दलेति । यत्रसभायांकाञ्चनकेतकस्यसुवर्णकेतककुसुमस्य दलोदरेपत्र गर्भे क्षणाल्लेखनानन्तरक्षणमेवमषीभावुकामषीभवनशीलावर्णलेखाऽ क्षरलेखायस्मिन् तस्यएवनलसंबन्धिनमेवमनखक्षतादिधांल्खाविद्यतइ त्येवमादिरूपंस्वंस्वीययमनङ्गलेखंमदनोपदिष्टलेखनंभैमीनखलेखनीभि र्लिलेख । विरहिणीभिःस्वीयज्ञावसूचनार्थंप्राणेशायपत्रिकाप्रेष्यते । मध्या वर्णाश्चलिख्यन्ते । केतकीपुष्पेषुनखलेखानांश्यामीभवनंस्वभावः । भावु केतिलषपतेतिशीलेत्युकञ् ॥ ६३ ॥

विलेखितुंभीमभुवोलिपीषु सख्यातिविख्यातिभृ तापियत्र ॥ अशाकिलीलाकमलंनपाणि रपारि कर्णोत्पलमङ्क्तिनैव ॥ ६४ ॥

विलेखितुमिति ॥ यत्रसभायांलिपीषुचित्रकर्मसुअतिविख्यातिभृताति कुशलयापि भैमीसख्याभीमभुवोभैम्याः लीलाकमलभिन्नौचित्रपटेवाविले खितुमशाकिशकम् । पाणिःकरोनैवलेखितुंशकः । तथाकर्णोत्पलंकर्णा भरणीभूतंविलेखितुमपारिपर्याप्तम् । अविलेखितुनैवापारि । लीलाकम लावतंसोत्पलापेक्षयापाणिनयनमतिसुन्दरत्वाल्लेखितुनशक्तमितिभावः। विलेखितुंशकधृपेतिपर्याप्तिवचनेष्विितिवातुमुन् । लघूपधत्वाद्गुणः लिपीषु कृदिकारादितिङीष् ॥ ६४ ॥

भैमीमुपावीणयदेत्ययत्र कलिप्रियस्यप्रियशिष्यव र्गः ॥ गन्धर्ववध्वःस्वरमञ्जरीणं तत्कण्ठनालैक धुरीणगर्भाः ॥ ६५ ॥

भैमीमिति । यत्रसभायांकलिप्रियस्यनारदस्यगन्धर्ववधूलक्षणःप्रियः शिष्यवर्ग.एत्यागत्यभैमीमुपावीणयत्वीणयोपगायत् । किंभूतःस्वरामृते नाऽऽपूर्णंतस्याःभैम्याःकण्ठनालंतेनैकधुरांवहतिएकधुरीणातत्तुल्यावी णायस्यप्रथमंगन्धर्ववध्वोनन्तरंनारदेनवीणावादनमध्यापिता अतिकौश ल्यात्तस्यातिप्रियाएवंविधा अपिवीणावादनेततोप्यधिकंकौशलमभ्यसित्

त्तत्रागत्यजैर्मौर्वीणयोपगायन्तिस्मेतिभावः । वीणागुन्थ्यपेक्षयाभैमीक ण्ठस्यातिमाधुर्यंसूचितम् । नालपदेनमुखस्यकमलत्वंसूचितम् । स्कन्धंरी वास्तुलमित्यमरः । उपवीणयत्सत्यापपाशेतिणिच् । कलिःप्रियोस्येति वाप्रियस्येतिपूर्वनिपाताभावः । रीणंरीगतिरेषणयोःस्वादित्वान्निष्ठानत्व म् । एकधुरीणेत्यत्रएकधुराल्लुक्चेतिखः ॥ ६५ ॥

**नावास्मरःकिंहरभीतिगुप्ते पयोधरेखेलतिकुम्भएव॥ इत्यर्धचन्द्राभनखाङ्कचुम्बि कुचासखीयत्र सखीभिरूचे ॥ ६६ ॥**

नावेति । यत्रसभायांसखीभिःसखीइतिपूर्वोक्तंऊचे । किंभूताअर्धच न्द्राकोर्द्वचन्द्राकारोनखाङ्कः नखक्षतन्तेनचुम्बिनौआश्लिष्टौकुचौस्तनौय स्याःसा । इतिकिम् । हेसखिस्मरःतेतवपयोधरेस्तनलक्षणेकुम्भएवहरा द्भीतिस्तस्याःसकाशादात्मानङ्गोपायतीतिहरभीतिगुप् । एवंभूतःसन्नावा नौकयाखेलति किंवितर्के । अर्धचन्द्राकारत्वान्नखाङ्कनौकात्वंयुक्तम् । अग्निभीतोहियैस्य प्रधानंस्थानमाश्रयतीतित्रिनेत्रानलाद्भीत्यापलायितः त्रिजैयंशीतस्तनद्वयलक्षणंस्थानमागत्यसुखेनजलक्रीडांकरोतीत्यर्थः ॥ ए वमस्त्वोपिवैरिणःसकाशात्पलाय्यनिर्भयंस्थानङ्गत्वाक्रीडति । हरेणपार्व त्याः सकाशाद्भीतिस्तयागुप्तेअमर्दितेसौन्दर्यात्कुचमर्दनवाञ्छायांसमुत्पन्ना यामपिअर्धाङ्गत्वात्पार्वतीकोपभियाहरेणास्पृष्टइत्यर्थः । कुचविशेषणंवा पार्वतीभियाहरागमनसंभावनाया अप्यभावान्निर्भयत्वेहिस्मरस्यक्रीडायु ज्यतइत्यर्थः । नखाङ्कचुम्बिपीवरत्वात्कुचदर्शनात्सर्वस्यापिकामोद्रेकोभव तीतिभावः । हरेणपार्वतीजीत्यागुप्तेस्पृष्टेसुन्दरिसखिसबोधनंवा । हरभी लक्षणाईतिःपरचक्रान्तस्मोदात्मानंगोपायतीतिमदनविशेषणंवाहरोप्येतद्द र्शनविमोहितोमनवशंगतःशान्तकोपोभविष्यतीतिबुध्यानिर्भयइति ॥६६॥

**स्मराशुगीभूयविदर्भसुभ्रू वक्त्रोयदक्षोभिखलुप्रसूनैः॥ स्रजंसृजन्त्यातदशोधितेषु यत्रैकयासूचिशिखांनिखाय ॥ ६७ ॥**

स्मरेति । प्रसूनैःपुष्पैः स्मराशुगीभूयकामबाणीभूय विदर्भसुभ्रूवक्षोजे

नीवक्षोयदक्षोभिपीडितम् ॥ तद्वैनीवक्षःकोमलस्तवकैरन्तःपुष्पेषुगुम्फ टनार्थंसूचिशिखांसूच्यग्रंनिखायारोप्यस्रजंमालांसृजन्त्यारचयन्त्या सख्या धाशोधिशोधितम् । खलूत्प्रेक्षते । तेषांशस्त्रप्रहारकरणाद्वैरनिर्यातनन्तया कृतमित्यर्थः ॥ यत्रकाचिन्मालांजग्रन्थेतिभावः । मालाकारिण्याश्चपुष्पेषु सूचिशिखानिखननंहिजातिः ॥ ६७ ॥

यत्रावदत्तामतिभीयभैमी त्यजत्यजेदंसखिसाहसिक्यम् ॥ त्वमेवकृत्वामदनायदित्से बाणान्प्रसूनानिगुणेनसज्जान् ॥ ६८ ॥

यत्रेति । यत्रेति । यत्रसभायांभैमीअतिभीयअतितरांभयंप्राप्यतांमाला कारिणीमित्यवदत् । इतिकिम्हेसखिइदंमालारचनलक्षणंसाहसिक्यमवि चार्यकारित्वात्त्यजत्यजमुञ्चेति । साहसिकत्वमेवाह । यतःप्रसूनानिपुष्प रूपान्बाणान्गुणेनदोरकेणअथचमौर्व्यासज्जान्सकन्नान्कृत्वामदनायत्वमे वदित्सेददासि । मांपीडयतःकामस्यमौर्वीसंवद्धबाणदानेनयात्वंसाहाय कमाचरसिसात्वंसमीचीनासहचरी भवसीतिसोल्लुण्ठनंतामवददित्यर्थः । मालायांबाणसन्नद्धमौर्वीबुध्याभैम्याभयंजातमितिभावः । त्यजत्यजेतिभ याद्विरुक्तिः । सहसावर्ततेसाहसिकः । ओजःसहोम्भसावर्ततइतिठक् । तस्यभावेगुणवचनेत्यादिनाष्यञ् ॥ ६८

आलिख्यसख्याःकुचपत्रभङ्गीं मध्येचमध्यामकरीं करेण ॥ यत्रालपत्तामिदमालियानं जानेत्वदेकावलिनाकनद्याः ॥ ६९ ॥

आलिख्येति । यत्रसभायांकाचित्सुन्दरीसख्याःकुचयोःपत्रभङ्गीमध्ये पत्रवल्लीरचनामध्येकरेणमकरीआलिख्यतांसखीं इदमालपद्धावदत् इति किम् । हेआलिसखित्वदेकावलिस्त्वदेकयष्टिकमुक्ताहारविशेषस्तल्लक्षणा याः नाकनद्याः स्वर्गगङ्गायाइदंमकरीलक्षणंयानंवाहनंमन्येतर्कयामि । स्वच्छत्वान्मुक्ताहारस्यनाकनदीत्वम् । हारसमीपेमकर्याविद्यमानत्वाद्म करीवाहनत्वंनाकनद्यामुत्प्रेक्षितम् । एकावल्येकयष्टिकेत्यमरः ॥ गङ्गा मकरवाहिनीतिप्रसिद्धिः ॥ ६९ ॥

तामेवसायत्रजगादभूयः पयोधियादःकुचकुम्भयो स्ते ॥ सेयंस्थितातावकहृच्छयाङ्क प्रियास्तुविस्त रयशःप्रशस्तिः ॥ ७० ॥

तामिति । यत्रयासुमध्येतामेवसखींभूयःपुनरपिइतिजगाद । इतिकिम् । हेसखिपयोधियादःसमुद्रजलजन्तुस्तावकस्त्वदीयोहृदयस्थितोहृच्छयःकामस्तस्याङ्कश्चिन्हन्तस्यप्रियाप्राणेश्वरी तेकुचयोःस्थितायतोसेयंमकरी अर्थात्कुचयोर्विस्तारस्यपीवरत्वस्ययशःप्रशस्तिः यशःशासनमस्तुभवत्विति यासमुद्रेसदावसतिसातंविहायचेत्कुचयोःस्थिता तर्हितदपेक्षयाऽनयोःस्त्वत्कुचयोःपीवरत्वन्दुरवगाहत्वंचस्पष्टतरंमान्यस्येतियशःशासनमस्तुभवतु प्राणेशस्यहृच्छयत्वेन प्रियायाश्चपितत्रैवस्थातुमुचितमितिभावः ॥ ७० ॥

सारीञ्चरन्तींसखिमारयैता मित्यक्षदायेकथिते कयापि ॥ यत्रस्वघातभ्रमभीरुसारी काकूत्थसाकूतहसःसजज्ञे ॥ ७१ ॥

सारींचरन्तीमिति । चरन्तींगृहाद्गृहान्तरङ्गच्छन्तीमथचक्रमन्तीमेतां सारीमक्षोपकरणंशकुनिविशेषञ्च हेसखिगृहाणमारयजहिहिंधेतिकयाचित्सखींप्रति अक्षदायेपाशकदानेकथितेसति यत्रसनलःद्वितीयार्थप्रतीत्यास्वघातस्यभ्रमोभ्रान्तिस्तेनभीरुर्भयशीलासारीपक्षिविशेषःतस्याः काकुःभयविकृतस्वरस्तस्योत्थानन्तेनसाकूतःसाभिप्रायःहसःहास्यंयस्यएवंविधोजज्ञेजातः । मांमारयिष्यतीतिभयाद्विकृतस्वरङ्कुर्वाणांतूष्णींसारींदृष्ट्वा पक्षोरपिएवंज्ञानंकथमितिभ्रान्तिवशाच्च साश्चर्यत्वात्सहास्योजातइत्यर्थः । सारीमाक्षोपकरणेतथाशकुनिकान्तरे । दायोदानेयौतिकादिधनेइतिविश्वः । हसःस्वनहंसौवेत्यप् ॥ ७१ ॥

भैमीसमीपेसनिरीक्ष्ययत्र ताम्बूलजाम्बूनदहंसलक्ष्मीम् ॥ कृतंप्रियादूत्यमहोपकारं मरालमोहद्राढिमानमूहे ॥ ७२ ॥

भैमीति । यत्रसनलोभैमीसमीपे ताम्बूलधारणार्थंजाम्बूनदहंसलक्ष्मींसुवर्णघटितहंसपुत्तलिकाशोभांनिरीक्ष्य कृतःप्रियादूत्यलक्षणोमहानुपका

रोयेनएवंभूलोमरालोहंसस्तस्मिन्मोहोभ्रान्तिःतस्यदूर्द्धिमाट्टृढत्वमूढेप्रापे त्यर्थः । ममदूतोहंसएवायंकिमितितस्यभ्रमोजातइत्यर्थः । ऊहेवहेर्लि टिवचिस्वपीतिसंप्रसारणम् ॥ ७२ ॥

तस्मिन्नियंसेतिसखीसमाजे नलस्यसन्देहमथव्यु दस्यन् ॥ अपृष्टएवस्फुटमाचचक्षे सकोपिरूपा तिशयःस्वयन्ताम् ॥ ७३ ॥

तस्मिन्निति । अथसःप्रसिद्धःकोपिलोकोत्तरोरूपातिशयःसौन्दर्यातिश यः अपृष्टएवस्वयमात्मनैवतांभैमींस्फुटंप्रकटंआचचक्षेकथयतिस्म । किंकु र्वन्तस्मिन्सखीसमाजेसखीसमूहमध्ये साप्रसिद्धाभैमीयंभविष्यतीतिप्रति सखीजातंनलस्यसन्देहंव्युदस्यन्निराकुर्वन् सहचर्यपेक्षयासौन्दर्यातिशयद र्शनादियंभैमीति नलेनस्वतएवज्ञातमित्यर्थः । पूर्वंवासन्देहस्वरूपेण नोदेयमितिबुध्या अपृष्टएवभविष्यसन्देहनिराकरणार्थमाचष्टइति । व्यु दस्यन्निति हेतौशता । प्रथमंसखीसमूहदर्शनेजातेभ्रामुमध्ये काभैमीति सन्देहेसत्यनन्तरंभैमीदर्शनेजातेरूपातिशयःसन्देहंनिराकुर्वन्अपृष्ट एवभै मीमाचष्टेतिवाव्याख्या । व्युदस्येतिल्यबन्तोवापाठः ॥ ७३ ॥

भैमीविनोदायमुदासखीभि स्तदाकृतीनांभुविक ल्पितानाम् ॥ नातर्किमध्येस्फुटमप्युदीत स्तस्या नुबिम्बंमणिवेदिकायाम् ॥ ७४ ॥

भैमीति । सखीभिःभैमीविनोदायमनोरञ्जनाय मुदाहर्षेणमणिवेदि कायांभुवि विलेखितानान्तदाकृतीनांनलप्रतिस्वरूपाणांमध्ये मणिवेदि कायामुदीतंस्फुटंजातमपि तस्यसत्यस्यनलस्यानुबिम्बंप्रतिबिम्बंताभिर्नो तर्कितंलक्षितम् । रचितनलप्रतिच्छन्दमध्येसत्यमपिप्रतिबिम्बं प्रतिच्छन्दबु द्ध्यासत्यत्वंनज्ञातमित्यर्थः ॥ ७४ ॥

हुताशकीनाशजलेशदूतो र्निराकरिष्णोःकृतकाकु याच्चाः ॥ भैम्यावचोभिःसनिजान्तदाशां न्यवा रयद्दूरमपिप्रयाताम् ॥ ७५ ॥

हुताशेति । सनलःभैम्यावचोभिःदूरमत्यर्थंअथदूरदेशंप्रायातामपिप्रा

ह्यामपिनिशांस्वीयान्तदाशांनैमीसंबन्धिनीमाशांन्यवर्तयत् किंभूतायानै
म्याःश्रुताशोग्निःकीनाशोयमः जलेशोवरुणःतेषांदूतीर्निराकरिष्णोर्निराक
रणशीलायाः । किंभूताःदूतीःकलाकाकुयाक्वादैन्यस्वरयुक्तायाचनायाभि
स्ताः । वन्ह्यादित्रयदूतीनिराकरणेनपुनरपिभैमीप्राप्ताशासहितोवभू
वेत्यर्थः । वन्ह्यादेरप्रधानत्वाद्दूतीवचनप्रकारोविस्तरेणोक्तः । अन्य
दपिदूरप्रयातंवचनैःपरावर्त्यते । दूतीरितिनलोकेतिषष्ठीनिषेधः । ७५ ॥

**विज्ञप्तिमन्तःसभयःसभैम्या मध्येसभंवासवसंभली**
**याम् ॥ संभालयामास भृशंकृशाश्च स्तदालिवृन्दै**
**रभिनन्द्यमानाम् ॥ ७६ ॥**

विज्ञप्तिमिति ॥ सनलःमध्येसभंसभामध्येतस्याःभैम्याः आलिवृन्दैःस
खीवृन्दैःइन्द्रदूतीसम्यग्वदतीति अभिनन्द्यमानामभिनन्दितां वासवस्यस
म्भलीदूतीतत्सम्बन्धिनीमन्तकृतांभैम्याः विज्ञप्तिसावधानं सम्भालयामासस
माकर्णयामास । भैमीवासवप्रायेणवरिष्यतीतिछ्रान्तःसभयः अस्यावचनंस्वी
करिष्यतीतिमनसिभयसहितः तथास्वसखीवचनंभैमीकरिष्यत्येवेतिबुध्या
भैमीकृशाशःखण्डिताशः । शम्भलीकुट्टिनीसमेत्यमरः ॥ ज्ञपेर्यन्ताद्युचि
विज्ञापनेतियद्यपिभवितव्यंतथापि क्तिन्नाबादिभ्यश्चेतिवचनाट्टीप्यादयः
प्रयोगतोनुसर्तव्याइति वचनाद्विज्ञप्तिरित्यत्रक्तिन् । पदमञ्जरीकारोप्येव
मेवसमर्थितवान् ॥ मध्येसभमिति पारेमध्येषष्ठ्यावाइत्यव्ययीभावेनपुंस
कह्रस्वः एदन्तत्वंनिपातनात् ॥ ७६ ॥

**लिपिर्नदैवीसुपठाभुवीति तुभ्यंमयिप्रेषितवाचि**
**कस्य ॥ इन्द्रस्यदूत्यांरचयप्रसादं विज्ञापयन्त्या**
**मवधानदानैः ॥ ७७ ॥**

लिपीति । हेभैमित्वंविज्ञापयन्त्यांइन्द्रस्यदूत्यांमयि अवधानदानैरेका
ग्रचित्तत्वेनप्रसादंरचयकुरु । एकाग्रचित्तत्वमेवप्रसादः । किंभूतस्यइतितु
भ्यन्त्वदर्थंप्रेषितंवाचिकंसन्देशवचनंयेन । इतिकिम् । भुविविद्यमानेनलो
केनदैवीदेवसम्बन्धिनीलिपिः सुपठासुखेनपठितुंनशक्येतिकृत्वापत्रिकान
दत्ता । सावधानासतीन्द्रविज्ञापनामाकर्णयेत्यर्थः । वाचिकवाचोव्याहृ

तार्थायामितिठक्स्वार्थिकः । स्वार्थिकाःप्रकृतितोलिङ्गवचनान्यतिवर्तन्त इतिनपुंसकत्वम् । यथोमालैवमाल्यंसेनैवसैन्यम् । विज्ञापयन्त्यांघटादिपाठान्मितांह्रस्वइत्यत्र वाचिन्नविरागइत्यतोवेत्यनुवृत्तेर्व्यवस्थितविभाषयाविज्ञापनाभर्तृ सुसिद्धिसेतीत्यादिमहाकविप्रयोगदर्शनाद्ध्रस्वाभावात्साधुत्वंज्ञेयम् ॥ ७७ ॥

सलीलमालिङ्गनयोपपीड मनामयंपृच्छतिवासवस्त्वाम् ॥शेषस्त्वदाश्लेषकथापनिद्रैस्तद्रोमभिः सन्दिदिशेभवत्यै ॥ ७८ ॥

सलीलमिति । वासवःसलीलंसविलासंआलिङ्गनयाआश्लेषेणउपपीडमुपपीड्य गाढमालिङ्ग्यत्वामनामयंआरोग्यंपृच्छति । हेभैमितवारोग्यं विद्यतेकच्चित् ब्राह्मणंकुशलंपृच्छेत्क्षत्रंपृच्छेदनामयम् ॥ वैश्यंक्षेमंसमापृच्छेच्छूद्रमारोग्यमेवचेतिमनुवचनात् हेभैमितवाश्लेषकथयात्वदालिङ्गनकथावशादपनिद्रैर्विकसितैः तस्येन्द्रस्यरोमभिःकर्तृभिःशेषोवशिष्टोर्थःभवत्यैतुभ्यंसन्दिदिशेसन्दिष्टः । इन्द्रस्त्वय्येवसानुरागः तस्मात्त्वयानुग्रहीतव्यइत्यर्थः । सात्विकभावोदयेनगद्गदकण्ठत्वादन्यत् किञ्चिन्नसन्दिदेशेत्यर्थः । लिगिचित्रीकरणेचौरादिकः । ण्यासश्रन्थेतियुच् । उपपीडंसप्तम्यांचोपपीडेतिणमुल् ॥ ७८ ॥

यः प्रेर्यमाणोपिहृदामघोनस्त्वदर्थनायांह्रियमापदागः ॥ स्वयम्वरस्थानजुषस्तमस्य बधानकण्ठेवरणस्रजासु ॥ ७९ ॥

यइति । हेभैमित्वयाहमनुग्राह्यइत्यादित्वदर्थनायांत्वदीययाञ्चायां विषये मघोनइन्द्रस्यहृदामनसाप्रेर्यमाणोपियःकण्ठः ह्रियंलज्जालक्षणंआगोऽपराधमापत्प्राप । लज्जयाकिमपिनोक्तवानित्यर्थः । त्वंस्वयंवरस्थानजुषः स्वयंवरस्थानस्थितस्यास्येन्द्रस्यतंसापराधकण्ठंवरणस्रजाभालया आशुशीघ्रंबधान । सापराधोहिप्रभुणाबध्यते । त्वमप्यस्यप्रभुतुल्याभवेत्यर्थः । एवंसानुरागमिन्द्रंवृणीष्वेतिभावः ॥ ७९ ॥

नैरन्त्यजक्षीरधिमन्थनाद्यैरस्यानुजायोद्गमिता

सुरैः श्रीः ॥ अस्मै विमथ्येक्षुरसोदमन्यां श्राम्यन्तु नोत्थापयितुं श्रियन्ते ॥ ८० ॥

नेति । हे भैमि त्वमेनमिन्द्रं मात्यज । यैरमरैः क्षीरधिमन्थनाद्स्येन्द्रस्यानुजायउपेन्द्राय श्रीरुद्गमितानिर्गमिता । ते देवाः इक्षुरसोदं इक्षुरससमुद्रं विमथ्य मथित्वाऽस्मै इन्द्रार्थं अन्यां श्रियं उत्थापयितुं निर्गमयितुं न श्राम्यन्तु यैः देवैः क्षीरसमुद्रं निर्मथ्य लक्ष्मीं निर्गमय्य सा इन्द्रानुजाय दत्ता त्यक्त्वा अलसा पि पूज्याय इन्द्राय तैस्ततोऽप्यधिकादातव्या । सा इक्षुरससमुद्रमथनं विनानप्राप्यत इति तदर्थं तन्मथने प्रयासस्तेषांस्यात् त्वत्प्राप्त्या सप्रयासो माभूत् । त्वं लक्ष्म्याः सकाशादतिसुन्दरी एनं वृणीष्वेति भावः । अतिसौन्दर्येण त्वमेवेक्षुरससमुद्रसम्भवा लक्ष्मीरित्यर्थः । इक्षुरस एवोदकं यस्य । उदकस्योद इति उद्भावः ॥ ८० ॥

लोकस्रजिद्यौर्दिवि चादितेया स्तेष्वादितेयेषु महान्महेन्द्रः ॥ किं कर्त्तुमर्थीयदि सोपि रागो ज्जागर्ति कक्षा किमतः परापि ॥ ८१ ॥

लोकेति । हे भैमि लोकस्रजि चतुर्दशभुवनमालायां द्यौर्महती स्वर्गोधिकः दिवि च आदितेया युद्धसंमुखमरणादिप्राप्तदेवत्वापेक्षया अदित्या अपत्यानि ये देवास्ते महान्तः आदितेयेष्वपि महेन्द्रो महान् सोप्येवंविध इन्द्रोपि रागादनुरागाद्यदि तव किंकर्त्तुं किंकरीभवितुमर्थी प्रार्थयते इत्यर्थः । न तु केनापि बलात्कारेण प्रवर्त्तितः अतः परान्या कक्षा उत्कर्षः किं जागर्त्ति नास्त्येवेत्यर्थः । इन्द्रोपि तव किंकरीभवितुमिच्छति अत एव त्वत्तुल्या कापि सौभाग्यवती सुन्दरतरी च न विद्यत इति भावः । अदित्या अपत्यानि आदितेयाः । कृदिकारादक्तिन इति ङीषन्तात् दित्यदित्येति ण्यं बाधित्वा स्त्रीभ्यो ढगिति ढक् ॥ ८१ ॥

पदं शतेनाप्यमखैर्यदिन्द्र स्तस्मै सतेयाचनचाटुकारः ॥ कुरु प्रसादं तदलंकुरुस्व स्त्रीकोरकृद्भ्रूनटनभ्रमेण ॥ ८२ ॥

पदमिति । इन्द्रः शतेन मखैः यज्ञशतेन यत्पदं प्रापस इन्द्रस्तस्मै पदाय ते तव याचने अर्थनाविषये चाटूनि प्रियवचनानि करोतीति कारः । त्वं प्रसादं कु

रु। तथातदैन्द्रं पदं स्वीकारकदङ्गीकारसूचकं भ्रूनटनं भ्रूचालनमस्त्वेव अस्तो नप्रयासमात्रेणालङ्कुरुष्व। भ्रूभङ्गेनाङ्गीकुरुष्वेत्यर्थः। इन्द्रवरणेस्वर्गाधि पत्यन्तवैवभविष्यतीतिभावः। प्रभोर्भ्रूक्षेपएवाङ्गीकारसूचकः। चाटुकारः कर्मोहेतुताच्छील्येतिप्राप्तस्यटस्यनशब्दश्लोकेतिनिषेधादण् ॥ ८२ ॥

मन्दाकिनीनन्दनयोर्विहारे देवेभवेद्देवरिमाधवे
श्रिया ॥ श्रेयःश्रियांयातरियञ्चसख्या न्तञ्चेतसा
भाविनिभावयस्व ॥ ८३ ॥

मदाकिनीति। मन्दाकिनीनन्दनयोर्विहारेजलक्रीडादौयच्छ्रेयोमङ्गलं भवेत् तथादेवेइन्द्रेधवेभर्तरिचयत्श्रेयः तथामाधवेनारायणेदेवरेचस्वामि कनीयसिभ्रातरिचयत्श्रेयः तथायातरिभर्तृभ्रातृजायायांसख्यांश्रियांल क्ष्म्यांचयत्श्रेयः हेभाविनिविचारचतुरेतन्निमित्वन्तत्सर्वंचेतसाभावयस्वनि धारय। इन्द्रवरणेयत्केनापिदुर्लभन्तत्सर्वन्त्वयासुलभमितीन्द्रंवृणुष्वेतिभा वः। देवेमाधवेवा। अग्न्यादीनांवरणेमन्दाकिनीविहारमात्रंनतुनन्दन विहारस्तथाग्न्यादिर्देवोवरोनतुमाधवोदेवरः। तथाश्रीःसंपद्रूपासखीन तुलक्ष्मीरूपामातुरूपासखीइन्द्रवरणेत्वेतद्द्वयप्राप्तिर्भविष्यतितस्माद्विचा रय। अग्न्यादीन्परित्यज्यइन्द्रमेववृणुष्वेतिभावः। भावाःशृङ्गारादयो वा। श्यालाःस्युर्भ्रातरःपत्न्याःस्वामिनोदेवृदेवरौ। भार्यास्तुभ्रातृवर्गस्य यातरःस्युःपरस्परमित्यमरः। श्रेयस्तुमङ्गलेधर्मेइतिविश्वः दिवेर्ऋन्नित्यौणा दिकेऋन्प्रत्ययेदेवातस्मिन्देवरि। यतेर्वृद्धिश्चेतियाततातस्यांयातरि॥ ८३॥

रज्यस्वराज्येजगतामितीन्द्रा द्योऽचाप्रतिष्ठांलभ
सेत्वमेव ॥ लघूकृतस्वंबलियाचनेन यत्प्राप्यवा
मनमामनन्ति ॥ ८४ ॥

रज्यस्वेति। त्रयाणामपिजगतांतस्मिन्राज्येत्वंरज्यस्वप्रीतिमताभवेति। इन्द्रात्सकाशाद्याञ्चांप्रतिष्ठांयाञ्चाजन्यंमाहात्म्यंत्वमेव लभसेप्राप्नोषिना न्या। यस्यत्रैलोक्यराज्यप्राप्तये बलियाचनेनलघूकृतःस्वआत्मायेनतंपुरुषं वामनंसर्वेमहानुभावाआमनन्तिब्रुवन्ति यावन्नअन्यलघुत्वाद्देवतस्यवाम नत्वंनत्वन्यतः। लघुत्वमाश्रित्यवामनेनयद्राज्यमिन्द्रार्थमर्पितमद्राज्ये

त्वं राज्यस्वेतीन्द्रेणास्वयं प्रार्थितायास्तवप्रतिष्ठाकथंनभवतिअपितुभवत्येव। रञ्जस्वरञ्जरागेदिवादिः। स्वरितेत्वादात्मनेपदम् ॥ ८४ ॥

यानेवदेवान्नमसित्रिकालंनतत्कृतघ्नीकृतिरौचिती ते प्रसीदतानप्यनृणान्विधातुं पतिष्यतस्त्वत्पदयोस्त्रिकालम् ॥ ८५ ॥

यानिति त्वयानेवदेवान् त्रिकालत्रिसन्ध्यंनमसिनमस्करोषि तेषां कृतघ्नीकृतिःकृतघ्नीकरणंतेतवनऔचिती। तेषामकृतज्ञताकरणंनोचितम्। तर्हिकिंकर्तव्यमित्यतआह। त्वंत्रिसंध्यन्तवपादयोःपतिष्यतस्तान्देवाननृणानृणरहितान्विधातुंकर्तुंप्रसीदप्रसन्नाभव इन्द्रवरणेइन्द्रसेवार्थमागच्छद्भिर्देवैरिन्द्रंप्रणम्यइन्द्राणींविहायतवापिप्रणतिः करिष्यते। त्वयापूर्वंनमस्कृतास्त्रिकालंनमस्यन्ति तेनतेषामपिअनृणात्वञ्जविष्यसीतिइन्द्रमेववृणीष्वेतिभावः। त्रिकालन्त्रिसन्ध्यंपात्रादित्वात्क्लीबभावः। उभयत्राप्यत्यन्तसंयोगेद्वितीया ॥ ८५ ॥

इत्युक्तवत्यानिहितादरेण भैमीगृहीतामघवत्प्रसादः॥स्रक्पारिजातस्यनतेनलाशां वासैरशेषामपुपूरदाशाम् ॥ ८६ ॥

इतीति। परिजातस्यपुष्पस्यस्रग्माला नलस्याशांनतेनलाभिलाषंविनावासैःपरिमलैःकृत्वाऽशेषामाशांसकलाअपिदिशइत्यर्थः। अपुपूरयत्परिपूर्णाचकार किंभूतास्रक्इतिपूर्वोक्तमुक्तवत्यानिहिता तथाआदरेणभैम्यागृहीताचतथामघवतइन्द्रस्यप्रसादरूपासर्वाअपिदिश परिमलबहुलाजाताइत्यर्थः। आदरेणमालायागृहीतत्वादिन्द्रेभैम्यनुरागसम्भावनयानलःशिथिलाशोजातः। इन्द्रदूत्यादीनामपिलसएवाभिलाषपूरणंजातमितिभावः। तथापुरुषाराधनमृतेइत्यादिप्रयोगदर्शनादृतेयोगेनलाशामितिद्वितीयापिभवति। णौचङ्युपधायाह्रस्वविधानाद्दैवादिकस्यपूर्यतेःपूरयतेर्वाऽपूपुरदितिप्राप्तेपुपूरदितिचिन्त्यम्। नचनाग्लोपिशास्वितिनिषेधप्रसङ्गः। अग्लोपित्वाभावात्। गत्यन्तरंमृग्यम्। सञ्ज्ञापूर्वकोविधिरनित्यइत्युपधाह्रस्वाभावइतिवा पूरीआप्यायनेएतस्यपूरणंपूर घनन्तंतंकरोति। तत्करोतीतिणिचिअग्लोपित्वेननाग्लोपीतिउपधाह्रस्वस्यनिषेधादपुपूर

दितिवा ॥ ८६ ॥

आर्येविचार्यालमिहेतिकापि योग्यंसखिस्यादितिकाचनापि ॥ ओंकारएवोत्तरमस्तुवस्तु मङ्गल्पमत्रेतिचकाप्यवोचत् ॥ ८७ ॥

आर्यइति । हेआर्येश्रेष्ठे इहेन्द्रवरणविषयेविचारोलंविचारोनकर्तव्यः । किंचेन्द्रोवरणीयइतिकाप्यवोचत् काचनापिसखीत्रैमिइदंइन्द्रवरणंयोग्यंउचितंस्यादित्यवोचत् कापिचइतिअवोचत् इतिकिं अत्रेन्द्रवरणविषयेचाङ्गीकारसूचकओंकार एववस्तुतात्त्विकंमङ्गल्यंशुभंउत्तरमस्तुभवतुइतिसखीसंमतिः । मङ्गल्पमित्यर्हार्थेयत् ॥ ८७ ॥

अनाश्रवावः किमहंकदापिवक्तुंविशेषःपरमस्तिशेषः ॥ इतीरितेभीमजयानदूती मालिङ्गदालिश्रमुदामियत्ता ॥ ८८ ॥

अनेति । भीमजयाइतिपूर्वोक्तमभिहितेसति मुदांहर्षाणांइयत्ताऽपरिमितताहूतीमाली.सखीअनालिङ्गत्किन्तुअनयास्मद्वचनेनेन्द्रवरणमङ्गीकृतमितिबुद्ध्यातासामपरिमितोहर्षोजातइत्यर्थः । इतिकिंहेसख्यःअहंकदापिकदाचिदपिवोयुष्माकं अनाश्रवाआश्रवावचनकारिणीनकिमपितुसर्वदाभवद्वचनकारिण्येव भवदुक्तंमयाक्रियतएवसर्वदापरंकिन्तुवक्तुंशेषःअवशिष्टःविशेषोस्ति नालिङ्गत्अपित्वालिङ्गदेव शेषपदश्रवणादल्पएवसन्तोषोऽभूदित्यर्थइतिवाविशेषः शेषोस्तिकिंअपितुनास्तीत्युभयत्रापिकिमःसंबन्धाद्भ्रान्तिवशादपरिमिताहर्षाजाताइतिवा परंकिन्त्वर्थम् ॥ ८८ ॥

भैमींचदूत्यञ्चनकिञ्चिदाप इतिस्वयंभावयतोनलस्य ॥ आलोकमात्राद्दितन्मुखेन्दो रभून्नभिन्नंहृदयारविन्दम् ॥ ८९ ॥

भैमीमिति । अहंभैमींचदूत्यंचकिञ्चिदपिद्वयोर्मध्येकिमप्यहन्नआपनप्राप्तवानिति स्वयंस्वतःभावयतःचिन्तयतोनलस्यराज्ञः हृदयारविन्दंयदियद्भिन्नंविदीर्णंनाभूत् । ततस्तन्मुखेन्दोर्भैमीमुखचन्द्रस्यआलोकमात्राद्दर्शनादेवनान्यहेतोः पूर्वोक्तचिन्तावशादेवतस्यहृदयस्यस्फोटेनयद्यपिभवितव्य

न्तथापिभैमीमुखावलोकनतत्परतयातेननभूतमित्यर्थः । हृदयस्फोटनपर्यन्तन्तस्यदुःखंजातमितिभावः । इन्द्रानादरसूचकभैमीमुखावलोकनात्स्फुटितमितिभावइतिवा । अथचकमलञ्चन्द्रप्रकाशाद्भिन्नंविकसितंनभवति किन्तुसङ्कुचत्येवेतियुक्तम् । दूत्याप्राप्तौकीर्त्यभावाद्दुःखम् ॥ ८९ ॥

ईषत्स्मितक्षालितसृक्कभागा दृक्सञ्ज्ञयावारितत द्दालिः ॥ स्वजानमस्कृत्यतयैवशाक्रन्तांभीमभू रुत्तरयाञ्चकार ॥ ९० ॥

ईषदिति । भीमभूःभैमीतयैवस्वजाशक्रं सहवानमस्कृत्यमालामेवमह्यन्प्रसादइतिकृत्वातामिन्द्रदूतीमुत्तरयाञ्चकारउत्तरवतीञ्चकार । इन्द्रवाचिकस्यप्रत्युत्तरन्ददावित्यर्थः तामुत्तरमाचष्टइतिवा । किम्भूतादिन्द्रदूत्यादीनांइन्द्रे स्वीयानुरागप्रतीतिसूचकहर्षदर्शनाद्धेषत्स्मितेनअत्यल्पस्मितेन क्षालितःधौतःसृक्कभागःओष्ठप्रान्तप्रदेशोयस्याःसातथा । दृक्सञ्ज्ञयाकिंचित्कटाक्षविक्षेपलक्षणेनसङ्केतेनवारितानिषिद्धा आर्यैविचार्योक्तमित्यादिप्रवक्त्यस्तास्ताआलयःसख्योयया । लोकरीत्यानमस्कारोऽनङ्गीकारसूचकः । स्मितशब्देनैवईषत्त्वप्रतीतेरीषदत्यल्पत्वसूचनार्थम् । प्रान्तावोष्ठस्यसृक्किणीत्यमरः । उत्तरवतींकरोतीतिणिचिमतुल्लोपः । तदाचष्टइति वाणिच् ॥ ९० ॥

स्तुतौमघोनस्त्यजसाहसिक्यं वक्तुंकियन्तंयदिवेद वेदः ॥ वृथोत्तरंसाक्षिणिहृत्सुनृणा मज्ञातृविज्ञापिममापितस्मिन् ॥ ९१ ॥

स्तुताविति । हेदूति लोकत्रजिष्णौरित्यादिमघोनःस्तुतौसाहसिक्यमविचार्यकारित्वंत्यजमुञ्च । वर्णयितुमशक्यस्यवर्णनंत्वंमाकार्षीः कुतःसाहसिक्यत्वमित्यतआह । तशक्रंवक्तुवर्णयितुंयदिवेदतर्हिवेदःकियत्किञ्चित्वेदनान्यः मनुष्यस्याकथेत्यर्थः । तस्यवर्णनत्वंकरोषीतिमहत्साहसत्वेत्यर्थः । तस्यवर्णनंनकार्यम् । नृणांहृत्सुसाक्षिणिमनुष्यहृदयविष्टे तस्मिन्निन्द्रे अज्ञातारमजानानंविज्ञापयतिएवशीलममाप्युत्तरंप्रतिवचनं वृथाव्यर्थमेव । एवंविधमुत्तरमज्ञातारंप्रत्येवसार्थकंनतुसकलहृदयवेदिनंप्रतीत्यर्थः । त्वत्कृतवर्णनंमृषा । ययाममनसिधृतंनतदिन्द्रोपिजानातिप्र

त्युत्तरंवृणेत्यर्थः ॥ ९१ ॥

आज्ञान्तदीयामनुकस्यनाम नकारपारुष्यमुपैति जिव्हा ॥ प्रव्हातुतांमूर्ध्निविधायमालां वालापराध्यामिविशेषवाग्भिः ॥ ९२ ॥

आज्ञामिति । कस्यनामजिह्वातदीयामैन्द्रीमाज्ञामनुलक्षीकृत्यनकरोमीति एतद्रूपंपारुष्यंकाठिन्यमुपैतिप्राप्नोति अपितुनकस्यापि । सर्वैरपितदाज्ञाक्रियतएवेत्यर्थः । तुपुनःप्रह्वानम्रासतीवालाहन्तामाज्ञारूपांमालांमूर्ध्निविधायशिरसास्वीकृत्याथचनमस्कृत्यविशेषवाग्भिर्विशेषवचनैरपराध्यामि । अदेवदेहमिन्द्रंवृणोइत्यादिवचनैर्देवदेहंनवृणइतिनिश्चितत्वादपराधइत्यर्थः । अज्ञत्वादाज्ञायाअकरणेप्यपराधोनमन्तव्यइतिवालापदेनसूचितम् । भूमीन्द्रवरणात्कियंत्याज्ञास्वीकृतेत्यर्थः । मालापिमूर्ध्निविधीयते ॥ ९२ ॥

तपःफलत्वेनहरेःकृपेयमिमंतपस्येवजनंनियुङ्क्ते भवत्युपायंप्रतिहिप्रवृत्ता वुपेयमाधुर्यमधैर्यसर्जि ९३

तपइति । इयमीदृशीहरेःकृपा तपःफलत्वेनमह्यतस्तपसःफलपरिपाकस्तत्वेन इमंमल्लक्षणजनस्वकारणेतपस्येव नियुङ्क्ते प्रेरयति । येनतपसेयंकृपालब्धा तत्तपएवत्वयाकर्तव्यमितिमामाज्ञापयतीत्यर्थः । तपसः फलेजातेपुनरपितपस्येवकिमितिप्रवर्त्तयतीत्याइङ्क्याह । हिमस्मादुपेयस्यफलस्यमाधुर्यंश्रेष्ठत्वं उपायंस्वसाधनंप्रत्युद्दिश्यप्रवृत्तौअधैर्यसर्जिअधैर्यकारिभवति । येनेदंफलंलब्धन्तदेवपुनरपिकर्त्तव्यमितिपुरुषंस्वसाधनेतमपटंकरोति । अतःइयंकृपातपस्येवप्रेरयतीत्यर्थः । स्वादुप्रियौतुमधुराविरयमरः । यथातथासोपायेनात्यन्तदुर्लभापीन्द्रकृपाप्राप्तातथैवतपसान्तप्राप्तिर्भविष्यतीतिनिश्चयात्तपसिमांपुनःप्रवर्तयतीतिभावः । नियुङ्क्ते स्वराद्यन्तोपसृष्टादितिवक्तव्यात्तङ् ॥ ९३ ॥

शुश्रूषिताहेतदहन्तमेव पतिंमुदेपिव्रतसंपदेपि॥ विशेषलेशोयमदेवदेह मंशागतन्तु क्षितिभृत्तये ह ॥ ९४ ॥

किंतत्तपइत्यतआह । शुश्रूषिताहइति । यस्मादियमैन्द्रीकृपातपस्येव मांनियुङ्क्ते तत्तस्मादहंनुदेपिहर्षार्थव्रतसंपदेपिनियमसमूहसिध्यर्थंच त मिन्द्रमेवपतिंप्राणेशंशुश्रूषिताहे । तस्यैवसेवांकर्तुमिच्छामि । तर्हिंअ स्माकंमनोरथेनफलितमित्यतआह । अयन्तुअयपुनःविशेषलेशःस्वल्पो विशेषः इहभुविक्षितिजृम्भयाराजत्वेनांशेनागतं राज्ञोलोकपालांशत्वस्म रणादेवंविधमदेवदेहंमनुष्यशरीरमिन्द्रांशंभूमीन्द्रं नलमेव वृणेनतुदेवदे हंइन्द्रमितिभावः । शुश्रूषिताहे । शाशुस्मृदृशांसनइतितङ्उत्तमैकवच नेटेरेत्वे इणतीतितासेःसस्यह ः ॥ ९४ ॥

अश्रौषमिन्द्रादरिणोगिरस्ते सतीव्रतातिप्रतिलो मतीव्राः ॥ स्वंप्रागहंप्रादिषिनामराय किंनामत स्मैमनसानराय ॥ ९५ ॥

अश्रौषमिति । हेदूतिअहन्तेतवगिरःअश्रौषम् । किंभूतागिरःइन्द्रेऽरा दरोऽस्यासान्ताःतथासतीव्रतस्यपतिव्रतावृतस्यातिप्रतिलोमाअतिप्रतिकू लाअतएवतीव्राःदुःसहाः । अनुचितमेतन्मायाकृतमितिशेषः । अनूढा याःसतीत्वाभावाद्व्रतलोपःकुतस्तरामित्याशङ्क्याह । अहंस्वमात्मानंमन सान्तःकरणेनप्राक्पूर्वंअमरायदेवेन्द्रायनप्रादिपिदत्तवती किंनामकिन्तर्हि नरायमनुष्यायतस्मैइन्द्रायइन्द्रांशत्वाद्भूमीन्द्रायमनसाआत्मानन्दत्तवती अथवरलयोरभेदायस्मैप्रसिद्धायनलाय मनःपूर्वकृपंवागुत्तरंरूपमितिश्रुतेः कायिकवाचिकयोः मनःपूर्वकत्वान्मानसस्यैवविवाहस्यमुख्यत्वादन्तःकर णेनपूर्वमेवनलस्यवृतत्वान्ममसतीत्वम् । सत्याःपरपुरुषकथापिनाकर्ण नीयासाचमयाआकर्णितांइत्यनुचितंकृतमित्यर्थः । ममाग्रेइन्द्रकथापिन कार्येतिभावः प्रादिषिदेञोलुङ्उत्तमपुरुषएकवचनस्यस्थाघ्वोरिच्चेतिइत्त्व कित्वे ॥ ९५ ॥

तस्मिन्विमृश्यैवकृतेहृदैषा नैन्द्रीदयामामनुतापि काभूत् ॥ निर्वातुकामंभवसंभवाना न्धीरंसुखाना मवधीरणेव ॥ ९६ ॥

तस्मिन्निति । तस्मिन्नलेविमृश्यैवविचार्यैवहृदामनसावृतेसति एषा

इन्द्रसंबन्धिनीदयामम्मानुतापिकापश्चात्तापयिष्यन्तीमाभूत् । यद्विमया नलःपूर्वंनवृतःस्यात्तर्हिइदानीमिन्द्रोव्रियेतपूर्वंमविचार्यैवाहंनलंवृतवती अनुचितमेतत्कृतमितिममपश्चात्तापोनविद्यतइत्यर्थः । काकमिव । भवेसं सारेसंभवउत्पत्तिर्येषांसुखानांआपातरमणीयानामवधीरणाघ्यवज्ञा । निर्वा तुकामंमुमुक्षुन्धीरमिव यथानसन्तापयति । कस्मिन्सतितस्मिंस्तच्छब्दवा च्येब्रह्मणित्वदाविमृश्यैवाङ्गीकृतेसति विषयामयावृथात्यक्ताइतियथाधी रोनतप्यतेतथाहमपिनतप्येइत्यर्थः । मोक्षसुखस्यसंसारसुखस्यच यावद् न्तरंतावन्नलेन्द्रयोरितिभावः । मामनुतापिकाज्ञविष्यद्केनयोगे । अके नोर्भविष्यदाधमर्ण्ययोरितिषष्ठीनिषेधात्द्वितीया ॥ ८६ ॥

वर्षेषुयद्भारतमार्यधुर्याः स्तुवन्तिगार्हस्थ्यमिवा श्रमेषु ॥ तत्रास्मिपत्युर्वरिवस्ययाहं शर्मोर्मिकि र्मीरितधर्मलिप्सुः ॥ ८७

मुदेपिव्रतसंपदेपीत्युक्तंविवृणोति । वर्षेष्विति । आर्येषुसाधुषुमध्ये ये धुर्याःश्रेष्ठाःमन्वादयःवर्षेषुइलावृत्तादिषुखण्डेषुमध्येयज्जंबूद्वीपनवमांशः भारतंखण्डंअतिपुण्यभूमित्वात्स्तुवन्ति । केषुकिमिवआश्रमेषुब्रह्मचर्यादि षुमध्येगार्हस्थ्यंगृहस्थाश्रममिवस्तुवन्तीत्यर्थः । यथारण्यंसमाश्रित्यसर्वेजी वन्तिजन्तवः । वर्त्तन्तेगृहिणस्तद्वदाश्रित्येतरआश्रमाइति । तत्रतस्मिन्नि हभारतेखण्डेपत्युःप्राणेश्वरस्यनलस्यवरिवस्ययासेवयाऽहंशर्मणःसुखस्योर्मे यःपरंपराःताभिःकिर्मीरितोमिश्रितोधर्मस्तल्लिप्सुरभिलाषुकास्मि । नलसे वयोभयमपिभविष्यतीतिसएववृतइतिभावः । भरतस्यक्षत्रियस्येदंभारत म् । वरिवस्यातुशुश्रूषेत्यमरः ॥ ८७ ॥

स्वर्गेसतांशर्मपरंनधर्मा भवन्तिभूमाविहतच्चतेच॥ शक्यामखेनापिमुदेऽमराणां कथंविहायत्रयमेक मीहे ॥ ८७ ॥

नलवरणेनैवपूर्वोक्तन्द्रढयति । स्वर्गइति । स्वर्गेसतांस्थितिमतांजना नां परंकेवलंशर्मास्तिनधर्माःपुण्यानि । तस्यकेवलंभोगभूमित्वात् । इह भारतभूमौपुनःतच्चसुखन्चतेधर्माश्चसन्ति। कर्मभोगभूमित्वाद्भारतस्येत्यर्थः

इन्द्रेवृतेसतिसुखोत्पादनाद्धर्मोपिविद्यतइत्याशङ्क्याह । अमराणांसुदोभ खेनापिशक्या । यज्ञकरणादिन्द्रप्रीतिरपिकर्तुं शक्येतिस्वर्गकेवलंसुखम् । अत्रतुसुखंधर्मोदेवमुद्दश्येत्य तत्रयंविहायकेवलमेकंसुखंकथमीहेइच्छामि । तस्मान्नलेवृतेसुखादित्रयंप्राप्तं नलवरणमेवन्याय्यः । अन्योपियत्रबहुप्राप्नो तितदेवगृह्णाति । इन्द्रवरणेतस्यैवसुखंनान्येषाम् । नलवरणेसर्वेषान्देवा नामित्यभिप्रायेणबहुवचनम् ॥ ९८ ॥

साधोरपिस्वः खलुगामिताधोगमीसतुस्वर्गमितःप्र याणे ॥ इत्यायतीश्चिन्तयतोहृदिद्वे द्वयोरुदर्कः किमुशर्करेन ॥ ९९ ॥

पूर्वोक्तमेवान्वयव्यतिरेकाभ्यांसमर्थयते साधोरिति । साधोर्धार्मिकस्या पि स्वःस्वर्गात्सकाशात्प्रयाणेखलुनिश्चितमधोगामिताअधःपातिता । क्षी णेपुण्येमर्त्यलोकंविशन्तीति भगवद्वचनात् । इतोमारसवर्षात्तुप्रयाणेमरण रूपेसति ससाधुःस्वर्गङ्गमीपुण्यवत्त्वात् । इतिद्वयोःस्वर्गमर्त्ययोर्द्वेआयती उत्तरकालौहृदिचिन्तयतोविचारयतःपुरुषस्य द्वयोस्तयोरुदर्कउत्तरंफल म् उभेद्विविधेशर्करेनकिम् । यथाक्रमंकर्परलेशखण्डविकृतीकिंनापितुस्व र्गफलंकर्परांशतुल्यं मर्त्यलोकफलंखण्डविकृतितुल्यम् । अधोगामित्वात्स्व र्गगामित्वाच्च । तस्मादत्रनलपरिचर्यैवन्याय्यसीतिभावः शर्कराखण्डविकृता वुपलाकर्परांशयोरितिविश्वः । गामिताआगामीतिभविष्यतिगम्यादयइतिभ विष्यतीनिकृते अकेनोर्भविष्यदाधमर्ण्ययोरितिषष्ठीनिषेधात् स्वर्गमिति द्वितीया ॥ ९९ ॥

अक्षीणएवायुषिकर्मकृष्टे नरान्नतिष्ठत्युपतिष्ठतेयः बुभुक्षतेनाकमपथ्यकल्पं धीरस्तमापातसुखोन्मु खकः ॥ १०० ॥

स्वर्गवाञ्छासर्वथानकर्तव्याइत्यत्रआह । अक्षीणइति । यःस्वर्गःकर्मक ष्टेकर्मार्जितेआयुषिअक्षीणएवनितरांक्षीणेसत्यैवनरान्उपतिष्ठतेतैःसङ्गतोभ वति तिष्ठतिआयुषिनोपतिष्ठतेप्राप्नोतितत्रअस्थिरोभवतीतिवा । क्षणमा त्रंनप्रतीक्षतेपुनरप्यधोगामित्वात् । क्षीणेपुण्येइतिभगवद्वचनात् । कर्म

कष्टेरितिपाठेपुण्यक्षयादित्यर्थः । धीरः आपातसुखोन्मुखंअविचारितर मणीयसुखकारिणं प्रथमान्तपाठेऽविचारितरमणीयसुखोद्युक्तोऽपथ्यक रुयसंपथ्यतुल्यन्तनाकवुत्सुवतेभोक्तु मिच्छति । अपितुनकोपि । तस्मात्त्व एववरणीयोनत्वन्यइतिभावः । उपतिष्ठतेउपाद्देवपूजासङ्गतिकरणेत्या दिनातङ् । पथोऽनपेतंपथ्यंधर्मपथ्यर्थन्यायेतियत् ततोनञ्समासेईषद समाप्तौकल्पप् ॥ १०० ॥

इतिन्द्रदूत्यांप्रतिवाचम र्द्धंप्रत्युह्यसैषाभिदधेवय स्याः ॥ किंचिद्विभ्रक्षोल्लसदोष्ठलक्ष्मी जितापनिद्र द्दलपङ्कजास्याः ॥ १०१ ॥

इतीति इन्द्रदूत्यांइतिएवंप्रकारांप्रतिवाचंप्रत्युत्तरं अर्धेमध्येएवप्रत्युह्य विहत्यसमाप्य सैषाभैमीवयस्याःसखीरभिदधेउवाच । किंभूताः । किंचि द्विवक्षयाइन्द्रचरणानुगकिञ्चिद्वक्तुमिच्छयाउल्लसन्तौस्फुरन्तौयौ ओष्ठौत योर्लक्ष्म्याशोभयाजितमपनिद्रदलंपङ्कजयेनएवंविधंआस्ययासान्ताः । त स्याःप्रत्युत्तरन्त्यक्त्वासखीनिषेधार्थमवददित्यर्थः । ओष्ठौपद्मदलाधिकौ मुखंपद्माधिकमित्यर्थः । प्रत्युह्यउपसर्गाद्ध्रस्वऊहतेरितिह्रस्वः । अपगता निद्रायेभ्यस्तानिअपनिद्राणीवाचरन्तीति अपनिद्रंइतिसर्वप्रातिपदिकेभ्य इत्याचारेक्विप्तदन्ताच्क्ता ॥ १०१ ॥

अनादिधाविस्वपरंपराया हेतुस्रजःस्रोतसिचेश्व रेवा ॥ आयत्तधीरेषजनस्तदार्याःकिमीदृशःपर्य नुयुङ्ज्यकार्यः ॥ १०२ ॥

अनादीति । अनादिधावादिरहितयथातथाधाविन्याञ्चलन्त्याः पुनःपु नरावर्तमानायाःस्वस्यजीवात्मनःपरंपरायाःपङ्क्तेहेतूनांकारणानांअदृ ष्टलक्षणानांशुभाशुभकर्मणां स्रजोमालायाःस्रोतसिप्रवाहेवाईश्वरेवा एप जनःसकलोलोकोमल्लक्षणोवा यस्मात्आयत्ताप्रवाहाधीनाईश्वराधीना वाबुद्धिर्यैःसएवंभूतोस्ति । तस्मात्भोआर्याःबुद्धिमन्त्यःसख्यःईदृश परा धीनःसकलोमल्लक्षणोवाजनः त्वमेवंकिञ्चिकीर्षसीतिपर्यनुयोगःआक्षेपः प्रश्नोवातद्योग्यस्तदर्हःकिमपितुनभवति । अदृष्टमीश्वरोवायथाप्राणिनंप्र

वर्त्तयतितादृशीतस्याबुद्धिरुदेतितथाचत्वमेवं किञ्चिकीर्षसीतिप्राक्षेपंप्र श्नंवासम्प्राणीनार्हसितस्यस्वातन्त्र्याभावात्। ततश्चअदृष्टवशादीश्वरवशाद्वा मतेऽनुरक्ताहमपित्वंमतेकिमित्यनुरक्ताइन्द्रेकिमितिनेत्युभयथापर्यनुयो गयोग्यानभवामीतिप्रकृतेभवतीभ्निः किमपिनवक्तव्यमितिभावः । अना दिधाविनीस्वेषामात्मनांमलभैमीलक्षणानांपरम्परयाहेतुस्तत्र: प्रतियुगं हिनलभैमीसम्बन्धःश्रूयतेनत्विन्द्रभैमीसम्बन्धः इतिवाव्याख्या । किङ्करो तुमरःप्राज्ञःप्रेर्यमाणःस्वकर्मभिरिति । किङ्करोतुसुधीरस्मिन्नीश्वराज्ञावशं वदइतिवृद्धवचनम् । प्रवाहयतितंहिकिमपिकर्तुंअसमर्थमितिस्रोतःप नसूचितम् ॥ १०२ ॥

नित्यंनियत्यापरवत्यशेषे कःसंविदानोप्यनुयोग योग्यः ॥ अचेतनासाचनवाच्यमर्हे द्वक्तातुवक्तुश्र मकर्मभुङ्क्ते ॥ १०३ ॥

पूर्वोक्तमेवाह । नित्यमिति ॥ अशेषेसमस्तेजनेनित्यंसर्वदानियत्यादै वेनपरवत्यदृष्टाधीनेसति सम्विदानोपिज्ञातापिकःअनुयोगयोग्यः अपि देतुनकोपि दैवेनयथाप्रेर्यतेतथैवसर्वोपिकरोतीत्यर्थः । कुमार्गप्रवृत्युत्पादि कानियतिरेवप्रष्टव्येत्यतआह । साचनियतिरपिवाच्यंनार्हेत् । पूर्वोक्तनि योगयोग्यानभवति । यतोऽचेतनाचेतनारहिता । चेतनायुक्तमेवअनु योगमर्हतिनतुपाषाणाद्यचेतनं तुपुनःवक्ताऽनुयोगकारीपुरुषःपुनःवक्त श्रमहेतुकंकर्मभुङ्क्तेभवति । लोकस्यदैवाधीनत्वान्नियतेश्चाचेतनत्वात् तौप्रतिवचनस्यवैयर्थ्याद्वक्तुःकेवलंकण्ठशोषोजनयति । तस्माद्भवतीभिर्मांप्र तिकिमपिप्रकृतेनवक्तव्यमितिभावः । सम्विदानःसमोगम्यृच्छिप्रच्छीत्या दिनातङ् ॥ १०३ ॥

क्रमेलकंनिन्दतिकोमलेच्छुः क्रमेलकःकण्टकलंप टस्तम् ॥ प्रीतौतयोरिष्टभुजोःसमायां मध्यस्थता नैकतरोपहासः ॥ १०४ ॥

क्रमेलकमिति । कोमलेच्छुःमृदुवस्त्वभिलाषीपुरुषःक्रमेलकमुष्ट्रंकठि नवस्तुभक्षित्वान्निन्दति । क्रमेलकःकण्टकलम्पटःकण्टकाशीसन्तंकोमले

क्तुं निन्दति । इष्टभुजोः स्वेष्टभक्षणशीलयोस्तयोः समायान्तुल्यायांप्रीतौस स्यांनएकतरोपहासः द्वयोर्मध्येएकतरायउपहासः नमध्यस्थताकिन्तुनएक तरोपहासोमध्यस्थता । यद्यपितौद्वावपिपरस्परनिन्दाकारित्वादनुचित कारिणौतथापिउदासीनेननपक्षपातोमकार्यः । तस्मान्ममनलेपक्षपातोस्ति तुल्यास्त्विन्द्रे इत्यावयोस्तुल्यायांप्रीतौसत्यांभवतीभिर्माध्यस्थ्यमेवकार्यंन त्वेकतरोपहासःकार्यः । किमपिनवक्तव्यमितिभावः । समायामितितु ल्यार्थत्वात्सर्वनामत्वाभावः ॥ १०४ ॥

गुणाहरन्तोपिनरेनंरेमे नरोचमानंपरिहारयन्ति नलोकमालोकयथापवर्गा त्त्रिवर्गमर्वाञ्चममुञ्च मानम् ॥ १०५ ॥

गुणा इति । हरन्तोमनोरमाअपिहरेरिन्द्रस्यदूत्युक्तागुणामेमह्यंरोचमा नंममप्रीतिविषयंनरंअथचनलंनपरिहारयन्तिनत्याजयन्ति । अथचरम णीयाअप्यन्येहरेरीश्वरस्यगुणारोचमानात्वयंआवर्तनंनपरिहापयन्ति । अन्य गुणापेक्षयातस्याधिकगुणत्वादित्यर्थः । हरणशीलत्वेपिकिमितितंनत्याज यन्तीत्याशङ्क्य दृष्टान्तेनपरिहरति । हेसख्यः यूयंअपवर्गात्मोक्षादर्वाञ्चंहीन मपित्रिवर्गंधर्मोर्थकामरूपंअमुञ्चमानं अत्यजन्तंलोकंनआलोकयथापर मसुखरूपंमोक्षंपरित्यज्यत्रिवर्गंसेवतेतथाइन्द्रंपरित्यज्यनलंसेवेअत्ररुचिरे वप्रमाणमितिभावः । मेइतिरुच्यर्थानामितिचतुर्थी ॥ १०५ ॥

आकीटमाकैटभवैरितुल्यः स्वाभिष्टलाभात्कृतकृत्यभावः ॥ भिन्नस्पृहाणांप्रतिचार्थमर्थं द्विष्टत्वमिष्टत्वमपव्यवस्थम् ॥ १०६ ॥

आकीटमिति । हेसख्यः आकीटंकीटमेषुकमिमभिव्याप्यकैटभवैरिपुआकैट भवैरिपुरुषोत्तमममभिव्याप्य स्वाभीष्टलाभात्सर्वेषांस्वीयस्वीयेप्सितप्राप्तेः कृतकृत्यभावःकृतकृत्यत्वन्तुल्यः । विष्णोर्यथास्वाभीष्टलाभात्कृतकृत्यत्व म् । तथैवकीटस्यापिस्वाभीष्टलाभात्कृत्यत्वं अर्थान्तरन्यासेनैतदेवाह च यस्माद्भिन्नस्पृहाणांस्वीयंस्वीयमीप्सितमभिलाषुकाणांसर्वेषामर्थमर्थंप्रति विषयंद्विष्टत्वंद्वेषविषयत्वंइष्टत्वंइच्छाविषयत्वं अपव्यवस्थं अपग

ताव्यवस्थानियमोयस्य एकस्ययद्द्विष्टन्तत्सर्वस्यापिद्विष्टं एकस्ययदिष्टन्त त्सर्वस्यापीष्टमितिनियमोनास्ति तस्माद्यद्यस्मैरोचते तत्तस्येष्टंयत्करोषतेत तस्यद्विष्टमितितस्मान्ममनलेएवानुरागाद्भवतीभिः किमपिनवक्तव्यमिति भावः। चकारोयस्मादर्थेसमुच्चयार्थेवाद्विष्टत्वमिष्टत्वञ्चेति आकीटमाकैटभ वैरीतिव्याङ्मर्यादाभिविध्योरितिसमासः ॥ १०६ ॥

अध्वाग्रजाग्रन्निभृतापदन्धुर्वन्धुर्यदिस्यात्प्रतिव द्धुमर्हः ॥ जोषञ्जनःकार्यविदस्तुवस्तु पृच्छ्यानिजे च्छापदवीमुदस्तु ॥ १०७ ॥

अध्वाग्रजेति हेसख्यः बन्धुः सुहृत् अध्वाग्रेपुरोमार्गेजाग्रद्वर्तमानःनिभृत श्चाच्छादितआपदन्धुः कूपोयस्यएवंभूतोयदिस्यात्तर्हिसुहृत्प्रतिवद्धुंनिषे द्धुमर्हःउचितःस्यात् तेनपथामागच्छयदिगमिष्यसितर्ह्यापदन्धुगम्भीरकूपेप तिष्यसीतिसुहृदासुहृन्निषेद्धुमुचितःप्रकृतेतुनैवमित्यर्थः। तस्मात्कार्यवित् विपत्कूपाभावज्ञानानोभवज्ञलक्षणोजनः जोषन्तूष्णीमस्तुभवतु गुणिनोनल स्यवरणेममानिष्टंकिञ्चिदपिनभविष्यतीतिभवतीभिरश्वंननिषेद्धव्येति। म यानलोविचार्यैववृतोस्तितस्मात्तूष्णींस्थातव्यमित्यर्थः। अस्मिन्नर्थेभव त्स्यएवदृष्टान्तःतुरेवार्थः। भवतीभिर्निजेच्छास्वेच्छैवमुदोहर्षस्यपदवीव त्सुमार्गरूपंवस्तुपृच्छ्याप्रष्टव्या। भवतीनामपियस्मिन्पुरुषादौहर्षस्तत्रैव किमितिहर्षइत्यनुयोगेभवतीभिरप्यनुरागएवकारणंवक्तव्यम्। तत्प्रकृता वपितुल्यमितिभावः। मत्कार्यज्ञानानोजनोजोषमस्तु। अजानानस्तुय त्किञ्चिद्वदत्वित्यर्थः। पुंस्येवान्धुःप्रहीकूपइत्यमरः। प्रच्छिहिकर्मा १०७

इत्थंप्रतीपोक्तिमतिंसखीनां विलुप्यपाण्डित्यव लेनवाला ॥ अपिश्रुतस्वर्पतिमन्त्रिसूक्ति न्दूतीं वभाषेद्भुतलोलमौलिम् ॥ १०८ ॥

इत्थमिति। वालाभैमी सखीनांप्रतीपोक्तौप्रतिकूलवचनविषयिणींम तिंबुद्धिं पाण्डित्यस्यवलेनसामर्थ्येन, इत्थंपूर्वोक्तप्रकारेणविलुप्यविलुप्य प्रमार्ज्यइन्द्रदूतींवभाषे किंभूतान्दूतीं श्रुतास्वर्पतिमन्त्रिणोवृहस्पतेःसूक्तिः शोभनोक्तिर्यया एवंभूतामपितथाभैम्युक्तिंश्रुत्वाजातेनाद्भुतेनाश्चर्येणालो

लोमौलिर्मस्तकोयस्याः अवशिष्टप्रतिवचनार्थंपुनरुवाचेत्यर्थः ॥ १०८ ॥

परेतभर्त्तुर्मनसैवदूती नभस्वतैवानिलसख्यभाजः॥ त्रिस्रोतसेवाम्बुपतेस्तदाशु स्थिरास्थमायातवतीं निरस्थम् ॥ १०९ ॥

किमुवाचेत्यतआह । परेतभर्त्तुरिति । हेइन्द्रदूति यस्मात्मनसामया नलोवृतः तस्मात्स्थिराआस्थावशीकरणाशक्तिर्यस्मिन्कर्मणि अहंइमौ वशीकरिष्यामीतिबुद्ध्याआशुशीघ्रंआयातवतीं आयातांपरेतभर्तुर्यमस्य दूतींमनसाएवनिरास्थंनिराकृतवत्यस्मि तत्रानभिलाषाद्धेतोः त्रिष्वयमेवहेतुस्तदर्थैवानिलसख्यभाजोग्नेः स्थिरास्थंशीघ्रमायातवतीन्दूतीनभस्वतेव वायुनेवनिरास्थतथास्थिरास्थंआयातवतीमम्बुपतेर्वरुणस्यदूतीन्त्रिस्रोतसेवमन्दाकिन्येवनिरास्थम् । यमस्यपरेतभर्तृत्वात्परेतप्राणानान्तदधीनत्वाद्वनमसश्च प्राणाधीनत्वाद्वनमसैवकृत्वाशीघ्रमायातांयमदूतींवन्हेरनिलमित्रत्वादनिलेनैवकृत्वाशीघ्रमायातांवन्हिदूतींवरुणस्य जलपतित्वान्मन्दाकिन्येवभूत्वाशीघ्रमायातास्वरुणदूतींनिरास्थमितिवा । तस्मादहमेव निराकृतेतिदुःखंमाकार्षीदितिभावः । मनोनभस्वन्त्रिस्रोत.शब्दैनवतरा त्वागमनवेगोद्योत्यते । मनआदिभिःसहायातवतीमिवेतिवा । निरास्थं अस्यतिवक्तीत्यङ् । अस्यतेस्थुक् ॥ १०९ ॥

भूयोर्थमेनंयदिमान्त्वमात्थ तदापदोव लभसेम घोनः ॥ सतीव्रतैस्तीव्रमिमन्तुमन्तु मन्तर्वरम्भ्याज्ञिणिमार्जितास्मि ॥ ११० ॥

भूयइति । हेदूतिस्त्वंएनमिन्द्रवरणरूपमर्थंमांभूयःपुनर्यदिआत्थब्रवीषितदातर्हिमघोनइन्द्रस्यपदौआलप्सेस्पृशसि । एवंशपथदानात्त्वया भूयोनवक्तव्यमित्यर्थः । तर्हिइन्द्रस्त्वयिकोपंकरिष्यतीत्यतआह ॥ अहं सतीव्रतैःपतिव्रतानियमैःवज्रिणिइन्द्रविषयेअन्तः अन्तकरणेतीव्रमन्तुःसर्वइमंमंतुंअपराधन्तुपुनःवरंमार्जितास्मि । प्रोञ्छिताऽस्मि । वरंमनागिष्टोवरंसम्यगन्तर्हृदयस्थितैःसतीव्रतैरितिवा । अन्तर्वरस्वरस्यनलस्यअन्तःमध्येवर्तमानेवज्रिणिराज्ञोलोकपालांशत्वादंशत्वेननलेस्थितेइन्द्रइतिवा

नलेतुष्टेइन्द्रोपिवृतोभवत्वेवेतिभावः । आगोपराधोमन्तुश्चेत्यमरः । मा जितेतिमृजेरितिवृद्धिः । कदित्वादिट् ॥ ११० ॥

इत्थंपुनर्भागवकाशनाशा न्महेन्द्रदूत्यामपयातव त्याम् ॥ विवेशलोलंहृदयंनलस्य जीवःपुनःक्षीव मिवप्रबोधः ॥ १११ ॥

इत्थमिति । इत्थंअनेनप्रकारेणपुनर्वागवकाशस्यवचनावसरस्यनाशा न्महेन्द्रदूत्यामपयातवत्याकृतायांसत्यांनलस्यजीवःप्राणाः भैमीस्वदूरस्थे तिचिन्तावशाल्लोलञ्चञ्चलंहृदयंपुनर्विवेश । कःकमिव प्रबोधःक्षीवंमत्तमि व तस्याश्चिन्तावशात्तस्यप्राणागतप्रायाएवाभूवन् गतायान्तुस्वस्यभैमी प्राप्तिनिश्चयेनदूरस्थप्राप्तिसम्भावनयाचतस्यप्राणाःपुनरागताइत्यर्थः मत्तोपि चञ्चलोभवति । मत्तेशौण्डोत्कटक्षीवाइत्यमरः । अनुपसर्गात्फुल्लक्षीवेति साधुः ॥ १११ ॥

श्रवणपुटयुगेनस्वेनसाधूपनीतं दिगधिपकृपया प्रागीदृशःसन्निधानात् ॥ अलभतमधुवालारा गयानुस्यमित्थं निषधजनपदेन्द्रःपातुमानन्दसा न्द्रः ॥ ११२ ॥

श्रवणेति । निषधजनपदानामिन्द्रोनलः बालाभैमीतस्याराग्यावनुरा गवचनतस्मादुत्पन्नं इत्थं पूर्वोक्तंमधुअमृतं पातुंसादरमाकर्णितुमान न्दसान्द्रंयथाभवतितथालब्धवान् किंभूतंमधु दिगधिपइन्द्रः तस्यकृपयाप्रा क्तादिदृशाहूत्याङ्गीकारप्राप्तात्सन्निधानाददृष्टीकरणलक्षणादुपायाद्धेतोः स्वे नस्वीयेनश्रवणलक्षणेनपुटयुगेनपात्रयुगेनसाधुसम्यक् प्रकारेणोपनीतमा नीतंस्वयमाकर्णितमित्यर्थः आनन्दसान्द्रमितिपाठेनलविशेषणंपूर्वोक्तम्भै म्यनुरागवचनंआनन्दसहितःसादरमाकर्णयामासेत्यर्थः । प्रत्नुणारवकीये नकेनचित्पात्राभ्यामानीयमधुपीयते इन्द्रादयस्तर्हिभैम्यनुरागवचनमह स्वयंपोमह्यंदूत्यंचेन्न दास्यं अतस्तत्प्रसादान्मयाभैमीवचनंस्वयमाकर्णित मित्यानन्देनसान्द्रइत्यर्थः ॥ ११२ ॥

श्रीहर्षंकविराजिराजिमुकुटालङ्कारहीरःसुतंश्रीही

रः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् षष्ठः खण्डनखण्डतोपि सहजात्क्षोदक्षमे तन्महा काव्येय द्यगलन्नलीयचरिते सर्गो निसर्गोज्ज्वलः ॥ ॥ षष्ठः सर्गः समाप्तः ॥ ॥ नमो कटुकाय ॥

श्रीहर्षमिति । सहजात्सोदरात्खण्डनलक्षणात्खण्डतः इक्षुविकाराच्छर्करा विशेषादपि क्षोदक्षमे घर्षणसहे परीक्षाक्षमे यथा यथा घृष्यते तथा तथा सरस इत्यर्थः । यस्यां पूरणः व्यगलत् समाप्त इत्यर्थः । स्यात् खण्डः शकले चेक्षुविकारे गुणविदोषयोरिति विश्वः । षष्ठः पूरणे डटि षट्कतीत्यादिना थुक् अस्मिन्सर्गे दूतगुणाः धर्मशास्त्रकारैरुक्ताः ॥ इति नारायणकृत नैषधटिप्पण्यां षष्ठः सर्गः समाप्तः ॥ नमः संकटायै ॥

## नैषधीये चरिते सप्तमः सर्गः प्रारभ्यते

श्रीगणेशाय नमः ॥ अथ प्रियासादनशीलनादौ मनोरथः पल्लवितश्चिरं यः ॥ विलोकनेनैव स राजपुत्र्याः पत्याभुवः पूर्णवदभ्यमानि ॥ १ ॥

श्रीगणेशाय नमः ॥ इत्थं इन्द्रदूतीनिराकरणेन भैम्याः स्वस्मिन्ननुरागं दृढं परीक्ष्य तुष्टो नलो भैमीमेवावर्णयदिति वक्तुं सप्तमसर्गमारभते ॥ अथेति । अथेन्द्रदूतीनिराकरणानन्तरं यो मनोरथः प्रियाया भैम्या आसादने प्राप्तिविषये शीलनादौ च तेन तेन विशेषेण रूपादिपरिकल्पने विषये आदिशब्देनालिङ्गनादिसम्भोगविषये पल्लवितः पूर्वं पल्लवयुक्तो जातः । भैमीं कथं प्राप्नोमि कथं वा तस्या विशिष्टभावादिकं ज्ञास्यामीति चिरमुदितः पूर्वमासीत् । मनोरथो भुवः पत्या राज्ञा नलेन राजपुत्र्या विलोकनेनैव पूर्णवत् परिपूर्णं इव फलितं इव अभ्यमानि संमानितः । प्राप्तिं विनैव दर्शनमात्रेण प्राप्त्यादिजन्यमानन्दं प्रापेति भावः । पल्लवितशब्देन मनोरथस्य वृक्षत्वं सूचितम् । अन्योपि ह्यारोपितं कुञ्चितं दृष्ट्वाऽत्यन्तं सन्तुष्यति । आसादनञ्च शीलनादि चेति समाहारैकवद्भावः । अन्यथा शीलशब्दस्य पूर्वनिपातात् ॥ १ ॥

प्रतिप्रतीकंप्रथमंप्रियाया मथान्तरानन्दसुधासमु
द्रे ॥ ततःप्रमोदाश्रुपरंपरायां ममज्जतुस्तस्यदृशौ
नृपस्य ॥ २ ॥

प्रतीति । तस्यनृपस्यदृशौनेत्रेप्रथमंप्रतिप्रतीकंप्रत्यवयवंप्रियायाभैम्यां ममज्जतुः निमग्ने अथपश्चादन्तःकरणेआन्तरोबाह्यःप्रत्यवयवदर्शनजनि तआनन्दस्तद्रूपासुधाअमृतन्तत्रममज्जतुस्ततः पश्चात्प्रमोदाश्रुपरंपराया मानन्दजनितबाष्पप्रवाहेममज्जतुः । अनयारीत्यासर्वेषामप्यवयवानाम तिसौन्दर्यंसूचितम् । प्रत्यवयवसौन्दर्यदर्शनादानन्दस्तस्मात्साश्रुपरंपरा जाता तयानलनयनाभ्यांकिमपिवदानद्रष्टमित्यर्थः । समुद्रेजलप्रवाहेच निमज्जनसूचितम् ॥ २ ॥

अह्लादयस्यान्वभवत्प्रमोदं रोमाग्रएवापिनिरीक्षि
तेस्याः ॥ यथौचितीत्यन्तदशेषदृष्टा वथस्मराद्वै
तमुदन्तथासौ ॥ ३ ॥

नेत्रप्रमोदमुक्त्वामनःप्रमोदमाह । अह्लेति । असौनलोऽस्याभैम्याःरो म्णोप्यग्रएवप्रथमंनिरीक्षितेसतिनविद्यतेह्लयंयस्यतदह्लयं अह्लणोऽह्लयंअ स्माद्वयन्तस्यत्रह्लैक्यस्येत्यर्थः । तत्प्रमोदमानन्दमन्वभवदनुबभूव । अ थानन्तरमित्यमनेनप्रकारेणतस्यानैम्याअशेषासकलायादृष्टिर्दर्शनन्तस्यांस त्यामशेषमैमीदर्शनेसतियथायादृशीऔचितीभवतितथाद्वैतंद्वयोर्भावो द्विताद्वितैवद्वैतन्तन्नविद्यतेयस्याःसाऽद्वैतःस्मरस्वास्यवद्वैतश्चस्मरस्याद्वैतरा हित्यंवा तस्यमुदमन्वभवत् मदनैक्यजनितमानन्दमनुबभूवेत्यर्थः । यस्य निकृष्टरोमाग्रस्यैवनिरीक्षणेअह्लाद्वैतानन्दोभवति तस्यारमणीयसकलाव यवदर्शनेअह्लाद्वैतानन्दादधिकोमदनाद्वैतानन्दएवअनुभवितुंसमुचितइत्यर्थः । सर्वावयवदर्शनेमदनानन्देऽमज्जदितिभावः । तेषांरोम्णामग्रेऽपदृष्टेसत्या मितिवा । द्वैतंप्रज्ञादित्वात्स्वार्थेऽण् ॥ ३ ॥

वेलामतिक्रम्यचिरंमुखेन्दो रालोकपीयूषरसेनत
स्याः ॥ नलस्यरागाम्बुनिधौविवृद्धे तुङ्गौकुचावा
श्रयतःस्मदृष्टी ॥ ४ ॥

वेलामिति । नलस्यदृष्टीदृशौ तस्यामुखेन्दोरालोकनेनतल्लक्षणेनपीयूषरसेनामृतरसेन विलोकनलक्षणंयद्मृतन्तांसिन्त्वा । तसैवतद्विषयिणया प्रीत्याकृत्वापूर्णंमहतीम्वेलान्दूत्यसमयकृपामतिक्रम्य मलसरागाम्बुधिधौग्रनुरागसमुद्रे विवृद्धेवृद्धिङ्कृतेसति तुङ्गावुच्चौकुचौआश्रयतःस्म दूत्यसमयमविचार्यमुखचन्द्रावलोकनविवृद्धेन अनुरागेणकृत्वातुङ्गौकुचौनलोवलोकयतिस्मेतिभावः । चन्द्रस्यप्रकाशलक्षणेनामृतरसेनमहतींमर्यादामतिक्रम्यसमुद्रेवृद्धिङ्कृतेसत्याप्लवनभयादन्योपितुङ्गस्थानमाश्रयति । वृष्टिरितिक्वचित्पाठस्त्याः ॥ ४ ॥

भग्नासुधायांकिमुतन्मुखेन्दो र्लग्नास्थितातत्कुचयोःकिमन्तः॥ चिरेणतन्मध्यममुञ्चतास्य दृष्टिः कृशीयःस्खलनाद्भियानु ॥ ५ ॥

भग्नेति । अस्यनलस्यदृष्टिःकृशीयः अतिशयेनकृशन्तस्याभैम्याः मध्यञ्चिरेणचिरकालेनामुञ्चत अत्यजत् । मध्यम्विलम्बेनतत्याजेत्यर्थः ॥ अत्राप्युत्प्रेक्षते स्खलनात्पतनाद्भियाभयेननुकिं अतिकृशमेतन्मध्यंचेत्त्यक्ष्यामितर्हिपतिष्यामीतिबुध्याकिम्विलम्बेनात्यजत् । किंभूतादृष्टिः । तन्मुखेन्दोःसुधायांमग्नाकिम्मुखेन्दावेवविलम्बिता । तथाऽनन्तरंमृणालसूत्रेणापिदुर्लभावकाशेतत्कुचयोरन्तर्मध्ये लग्नासम्बद्धासतीनिर्गन्तुमशक्तत्वास्थिताविलम्बिता पूर्वंयदङ्गम्विलोकितन्तदङ्गंसुन्दरतरत्वात्परित्यक्तुंनशक्ताकिन्तुपुनःपुनस्तदेवावलोकयतिस्मेतिभावः । कृशीयसःप्रकाशात्स्खलनंकृशीयसस्खलनमितिवा ॥ ५ ॥

प्रियाङ्गपान्थाकुचयोर्निवृत्य निवृत्यलोलानलदृग्भ्रमन्ती ॥ बभौतमान्तन्मृगनाभिलेप तमःसमासादितदिग्भ्रमेव ॥ ६ ॥

प्रियेति । नलदृगेवंभूतासतीबभौतमांअतितरांशुशुभे । किंभूताप्रियायाभैम्याःअङ्गस्यप्रत्यङ्गंपान्थीनित्यपथिका अतएवलोलाचञ्चलाऽथचसस्पृहासती निवृत्यनिवृत्यव्याघुट्यव्याघुट्यकुचयोर्भ्रमन्तीसञ्चरन्ती उत्प्रेक्षते । किंभूतेव तयोःकुचयोर्मृगनाभिलेपःकस्तूरिकालेप तल्लक्षणतमोऽ

भकारस्तेनकृत्वासमासादितःप्राप्तःदिग्भ्रमोदिङ्मोहोययाएवंभूतेव । अ न्योपिपान्थस्तमसाप्राप्तदिङ्मोहोभ्रमन्निवृत्यनिवृत्यपूर्वमेवस्थानंप्राप्नो ति । सर्वावयवावलोकनतत्परापिकुचावेवालोकयतिस्मे । कुचौत्यक्तुं न शशाकेत्यर्थः । लोलश्चलसतृष्णयोरित्यमरः । नित्यंपन्थानंगच्छतीतिपान्थः पथोणनित्यमितिणस्ततष्टाप् । बभौतमाङ्गिमेतिङव्ययेत्यादिनाम् ॥६॥

विभ्रम्यतच्चारुनितम्बचक्रे द्रुतस्यदृक्तस्यखलुस्ख लन्ती ॥ स्थिराचिरादासतदूररम्भा स्तम्भावुपा श्लिष्यकरेणगाढम् ॥ ७ ॥

विभ्रम्येति । तस्याश्चारुणिसुन्दरेनितम्बरूपेचक्रे विभ्रम्यपरिभ्रम्य स्खलन्तीखलुपतन्तीव तस्यद्रुतस्यदृष्टिः तदुरूलक्षणौरम्भास्तम्भौक दलीस्तम्भौकरेणरश्मिनाकृत्वागाढंनिबिडमुपाश्लिष्यआलिङ्ग्य चिरात् चिरकालंस्थिरानिश्चलाआसबभूव । अन्यापिचक्रभ्रमणंप्राप्यपतन्तीस तीहस्तेनस्तम्भङ्गाढमालिङ्ग्यस्थिराभवति । नितम्बम्विलोक्यआदरेण तदुरूपश्यतिस्मेतिभावः ॥ ७ ॥

वासःपरंनेत्रमहंननेत्र ङ्किमुत्वमालिङ्ग्यतन्मयापि उरोनितम्बोरुकुरुप्रसाद मितीवसातत्पदयोःप पात ॥ ८ ॥

वासइति । सानलदृग् इतीवकारणात्तत्पदयोर्भैम्याश्चरणयोःपपातप्र णामञ्चकार । इतिकिम् । हेभैमिवासोवसनंउत्तमपट्टदुकूलविशेष.परं केवलंनेत्रमर्थंचनेत्रशब्दवाच्यम् । अहंनेत्रंनकिन्तुअपितुअहमपिनेत्रंनेत्रश ब्दवाच्यंयस्माद्भवामि ततस्मादुभयोरपिनेत्रशब्दवाच्यत्वलक्षणात्कार णाद्धेभैमित्वनेत्रेणवसनेनैवमयापिप्रयोज्येनत्वदुरोवक्षोनितम्बोजघनप श्चाद्भागऊरूचएतेषांसमाहारउरोनितम्बोरुआलिङ्ग्यवेष्टय । अयचद्गांय स्वप्रसादञ्चकुरु तदालिङ्गनार्थममोपरिप्रसन्नाभवेति । अन्योपिस्वसमान स्यकस्यचिद्राजादेःसकाशाद्धनंपदंप्राप्तिंदृष्ट्वास्वस्यापि तल्लाभार्थंराज्ञश्च रणयो.पततिमह्यमप्येतद्देयमितिचप्रार्थयते । उरोनितम्बोरूविलोक्य चरणावपिविलोकयतिस्मेतिभावः । नेत्रंत्वचिगुणेवस्त्रेनदमूलेविलोचने इतिविश्वःप्राण्यङ्गत्वादेकाङ्गावेनपुंसकत्वञ्च ॥ ८ ॥

दृशोर्यथाकाममथोपहृत्य सप्रेयसीमालिकुलञ्च तस्याः ॥ इदं प्रमोदाद्भुतसंभृतेन महीमहेन्द्रो मनसा जगाद ॥ ९ ॥

दृशोरिति । अथ स महीमहेन्द्रो भूमीन्द्रो नलः प्रमोदो हैमी विलोकनेनानन्दः सौन्दर्यदर्शनादद्भुतमाश्चर्यञ्च ताभ्यां संभृतेन पूर्णेन मनसा इदं वक्ष्यमाणं जगाद । चिन्तयन् मनसैव तामिवर्णयदित्यर्थः । किं कृत्वा प्रेयसी भैमी तस्याश्चालिकुलं सखीसमूहञ्च दृशोर्नयनयोर्यथाकामं मज्जिलाषमनतिक्रम्य नयनाभ्यामेवोपहृत्योपायनीकृत्य ॥ ९ ॥

पदे विधातुर्यदि मन्मथो वा ममाभिषिच्येत मनोरथो वा ॥ तदा घटेतापि न वा तदेतत्प्रतिप्रतीकाद्भुतरूपशिल्पम् ॥ १० ॥

तदेवाह । पद इति । यदि जगन्निर्माणशीलस्य विधातुर्ब्रह्मणः पदेऽधिकारे मन्मथो वाऽभिषिच्येत मम मनोरथो वाभिषिच्येत तदापि तत्र पि तदनिर्वचनीयमेतद्दृश्यमानमेतस्या वा प्रतिप्रतिकं प्रत्यवयवमतिसुन्दरत्वादद्भुतमाश्चर्यकारि रूपलावण्यं तस्य शिल्पं निर्माणं घटेत न वा घटेत ब्रह्मणाप्येतत्प्रत्यवयवं सौन्दर्यं कर्तुं न शक्यत इत्यर्थः । ईदृक्सौन्दर्यं कदापि कुत्रापि न दृष्टमिति भावः ॥ १० ॥

तरङ्गिणी भूमिभृतः प्रसूता जानामि शृङ्गाररसस्य सेयम् ॥ लावण्यपूरोऽजनि यौवनेन यस्यां तथोच्चैः स्तनताघनेन ॥ ११ ॥

तरङ्गिणीति । घनेन निबिडेन यौवनेन वयस्या भैमीलक्षणायां तरङ्गिण्यां लावण्यपूरोऽजनि जनितस्तथाऽत्युच्चैः स्तनौ यस्यास्तस्या भावरुच्चैः स्तनता उच्चकुचत्वमजनि सेयं शृङ्गारलक्षणस्य रसस्य तरङ्गोद्रेकस्तद्वती अथ च नदीरूपभूता भीमनाम्नो भूमिभृतो भूमीपतेः सकाशात्प्रसूता उत्पन्ना इति जानामि वाक्यार्थः कर्म । प्रथमं सहजसौन्दर्यरूपाच्छृङ्गाररूपा जाताऽनन्तरं निबिडयौवनेन सौन्दर्याधिक्यजननादुच्चकुचत्वजननाच्च पूर्वापेक्षया शृङ्गाररसस्य मूर्तिरियं नदीति मन्ये इति भावः ॥ अथ च रसस्य उदकस्य नदी पर्वतादुत्पद्यते । तस्यां

स्तनतावन्नैश्ल्वायमानेनस्खलितरासूर्जताघनेनमेघेनपूर्वंजलप्रवाहोजलो ट्टेकोपिश्रूयते । तथाचिर्वचनीयप्रकारावन्नैस्तनतातयाकृत्वाघनेननिरन्त रैरीकंमद्रम् । घीवनमिद्गोपणस्वा । पूरोजलप्रवाहस्यादितिविश्वः । भूमि भूतोभुवःप्रभवस्त्र्यपादाणत्वम् । प्रसूतेतिअकर्मकात्कर्तरिक्तः ॥ ११ ॥

अस्याम्वपुर्व्यूहविधानविद्यां किंद्योतयामासन वांसकामः । प्रत्यङ्गसङ्गस्फुटलब्धभूमा लावण्य सीमायदिमामुपास्ते ॥ १२ ॥

अस्यामिति । अङ्गमङ्गंप्रत्यङ्गंप्रत्यवयवंयःस्वस्यैवलावण्यस्यसङ्गःसंबन्ध स्तेनकृत्वास्फुटंव्यक्तंलब्धोभूमाप्राचुर्यंययाएवंभूता लावण्यसीमासौन्दर्य परमकाष्ठायद्यस्मादिमांभैमीमुपास्तेसेवते तस्मात्कारणाद्बाल्यापेक्षयामवां नूतनांसकामःतदेवापूर्वजन्यस्ताम् । वपुर्व्यूहस्यशरीरसमूहस्यविधानंनि र्माणन्तस्यविद्यांशास्त्रं कायव्यूहरचनाकौशलमस्यांभैम्यामेवकिंद्योतयामा स । नत्वन्यस्यामित्यर्थात् । किंवितर्के बाल्यापेक्षयातरुणिमन्यधिकंसौन्दर्यं भवतिसकलावयवेषुसाकल्येनसौन्दर्यसीमाभैम्यामेवविद्यतेनान्यस्यामिति भावः । प्रत्यङ्गसङ्गमवयसन्धिंप्रतीतिर्वा अस्यामित्यनेनभैम्याविदूष्यंसूच्यते। विद्याप्रकाशनंहिविद्वत्समीपएवभवति । समदनोस्यांनवानपूर्वांकायव्यू हनिर्माणविद्यान्द्योतयामासकिं यस्मात्सौन्दर्यस्यपरमाकाष्ठा सकामःप्रत्य ङ्गंविद्यमानत्वेनप्राप्तोभूमाबाहुल्यंयेनैवंभूतःसन्निमांभैमींसेवते । प्रत्यव यवंसाकल्येनमदनस्यविद्यमानत्वान्मदनेनस्वीयंबहुरूपत्वंप्रकटीकृतमित्य र्थः । मुखावलोकनेनयादृशोमदनप्रादुर्भावोभवतितादृशएवनयनावलो कनेनेतितदीयैकैकावयवदर्शनेसकलस्यसाकल्येनमदनप्रादुर्भावोभवतीति भावः । लब्धभूमेत्यादौपक्षेननइति निषेधाद्ङीबभावः ॥ १२ ॥

जम्बालजालात्किमकर्षिजम्बू नद्यानहारिद्रनिभ मङ्गेयम् ॥ अप्यङ्गयुग्मस्यनसङ्गचिन्ह मुन्नीयतेद न्तुरतायदत्र ॥ १३ ॥

जम्बालेति । इयंभैमीजम्बूनद्याःजम्बूफलरसजातनद्याःजम्बालजाला त्पङ्कसमूहात्किंनाकर्षिनाकृष्टाअपितुततएवाकृष्टा यद्यस्माद्हारिद्रनिभ

प्रजाहरिद्रारक्तवस्त्रतुल्यकान्तिःजम्बूनद्याजम्बालजालंनामजाम्बूनदन्तच्चा न्यसुवर्णापेक्षयात्युत्तमन्ततआकृष्टा तदेवहरिद्रातुल्यवर्णत्वन्द्यटतेनान्यथे त्यर्थः। हरिद्रसुवर्णौवा। अपिशब्दोहेत्वन्तरंसमुच्चिनोति। यदपिअत्रास्यां भैम्यामङ्गयुग्मस्यहस्ताद्यवयवयुगलस्यसङ्गचिन्हंपरस्परंसन्धिलाञ्छनन्दन्तु रतालक्षणयाविसंस्थूलतानिम्नोन्नतानोन्नीयते नतर्क्यते यज्जम्बालजाला दाकृष्यतेतस्योच्चावचप्रदेशेषुपङ्कस्यलग्नत्वाद्विसंस्थूलता मलस्यतेभैम्याम पितथायतस्ततोपीयञ्जाम्बूनदपङ्कादाकृष्टेत्यनुमीयते। अवयवसन्धिसू चकंकूर्परादिभैम्यांनलक्ष्यतेसुवर्णगौरीचेयमितिभावः। कूर्परादेरलक्ष्यत्वे नसामुद्रिकलक्षणवत्त्वं सूचितम्। यदित्युभयत्रापिसम्बध्यते। पूर्वार्धेहा रिद्रपदेनयोजना उत्तरार्धेयथास्थितम्। मध्यस्थतमयोश्चाङ्गयुग्मसङ्गाभा वोज्ञातव्यः नोचेन्मध्यस्यपरमाणुरूपत्वात्स्तनयोश्चोच्चैस्त्वाज्जाम्बूनदज म्बालपूर्णत्वेनैतेमुद्रितास्युरित्यादिज्ञातव्यम्॥ १३॥

सत्येवसाम्येसदृशादशेषाद् गुणान्तरेणोन्नकृषेय
दङ्गैः अस्यास्ततःस्यात्तुलनापिनाम वस्तुत्वमेषा
मुपमोपमानः॥ १४॥

सत्येवेति। यदङ्गैर्भैम्याअङ्गैर्मुखाद्यवयवैरर्थाद्गुणान्तरेणवृत्तत्वादिनागु णेनचन्द्रादिनासमंसाम्येसत्येवसदृशात्कविसमयेमुखादेः सदृशत्वेनोपमा नत्वेनाभिमताच्चन्द्रादेरशेषात्सकलाद्वस्तुनः सकाशाद्गुणान्तरेणकेनचिद्गु णान्तरेणान्येनगुणेनकत्वायद्यस्मादुन्नकृषेउत्कर्षोजातन्ततस्तस्मादर्थादस्या अङ्गैःकृत्वासदृशस्यचन्द्रादेस्तुलनापिसमीकरणमपितैःसहसाम्यंवास्यान्ना म कविसमयेसर्वत्रोपमानस्याधिक्यमुपमेयस्यचन्यूनत्वंप्रसिद्धम्। तथा चात्यरमणीयमुखाद्यपेक्षयाचन्द्रादेराधिक्यादुपमानत्वं मुखादेश्चन्यूनत्वा दुपमेयत्वंघटते अस्यास्तुमुखंयद्यपिवर्तुलत्वेनचन्द्रेणसमानन्तथापिचन्द्रा पेक्षयाधिकामृतयुक्तत्वेनाधिकंगौरत्वेनकलङ्काभावेनचचन्द्रादाधिक्यम्। नेत्रेऽप्याकारेणनिलिमाचयद्यपिनीलोत्पलदलेनसमानेतथापिनीलोत्पल दलस्यकटाक्षविक्षेपादिराहित्येन स्वस्यचतत्साहित्येननीलोत्पलदलापेक्ष याधिके। एवमोष्ठादेरपिकेनचिद्गुणेनसाम्येसत्येवगुणान्तरेणबन्धूकाद्यपे क्षयाधिक्यं द्रष्टव्यं तथाचचन्द्राद्यपेक्षयाधिक्यनैतदीयवदनाद्यङ्गानामुप

मानत्वंचन्द्रादेश्चैतदीयवदनाद्यपेक्षयान्यूनत्वेनोपमेयत्वमिति चन्द्रोभैमी वदनसदृशोनीलोत्पलदलञ्चभैमीनयनसदृशमिति एवंसदृशस्यचन्द्रादेर्भै मीवदनादिनासमीकरणंसाम्यस्याभवेदपि भैमीवदनादेरुपमानत्वं चन्द्रा देश्चोपमेयत्वंयुक्तमेवेत्याशयः । अमीषामेतदीयानामङ्गानान्तुपुनःयस्तु चन्द्रादिलक्षणंउपमानमुपमानोधिक्कारएवयदमीषामेवहीनस्योपमानत्वा भावादधिकस्योपमेयत्वाज्ञावादितिभावः । यतउत्कर्षेततोहेतोरस्याभैम्या स्तुलनापिस्यात्क्वसाम्यस्विनोत्कर्षोनसिध्यतीतिसाम्यमप्यस्तुनामवस्तुत स्तुपरमार्थस्तुअमीषामङ्गानामुपमानन्तिरस्कार इतिवाउपमीयतेअनेने त्युपमानं उपमार्थेतिकरणेभावेवातश्चोपसर्गेइत्यङ् ॥ १४ ॥

पुराकृतिस्त्रैणमिमांविधातु मभूद्विधातुःखलुहस्त लेखः ॥ येयंभवद्भाविपुरन्ध्रिसृष्टि स्तस्यैयशस्त ज्जयजंप्रदातुम् ॥ १५ ॥

पुरेति । पुराप्रथमंकृतिर्निर्माणंयस्यैवम्विधंप्रथमनिर्मितंस्त्रैणंस्त्रीवै र्ग्योदि इमांभैमींविधातुंस्रष्टुंविधातुः खलुनिश्चितम् । हस्तलेखःप्रथमो भ्यासोभूत् अन्योपिशिल्पीप्रथमंहस्तलेखकृत्वापश्चात्सुन्दरतरवस्तुनिर्मा ति । उत्तरशिल्पापेक्षयाहस्तलेखस्यातिहीनत्वाद्भैमीजन्मनः पूर्वंयत्स्त्री समूहोहस्तलेखोभूत्सभैम्यपेक्षयातिहीनःभैमीचातिसुन्दरीतिभावः । न नुयन्निर्माणार्थमभ्यासःकृतःसानिर्मिताअग्रिमस्त्रीसृष्टिःकिमितिकृतेत्या शङ्क्याह येयंभवतीवर्तमानाभविष्यन्तीचपुरन्ध्रिसृष्टिःस्त्रीनिर्मितिःअस्यै भैम्यैतज्जयजन्तस्यांभवद्भाविपुरन्ध्रिसृष्टेः भैमीकर्तृकोयोजयःतस्माज्जातं यशःप्रदातुंनत्वन्यत्किमपिप्रयोजनमस्ति । तस्याभैम्याअपेक्षयातिहीन त्वाद्दमयापीदृशीनिर्मातुंनशक्यतइति सर्वान्ज्ञापयितुंब्रह्मणाभैमीजन्मा नन्तरमपिस्त्रीनिर्मितिःकृता अकरणेतुभैम्यनतरञ्चेदन्यांस्त्रियंधातानिरमा स्यत तर्ह्यतदपेक्षयापिसातिरमणीयान्नविष्यदितिलोकस्यसंभावनाभवे त् तन्निवारणार्थंब्रह्मणैवंकृतमित्यर्थः । भूतभविष्यद्वर्तमानेषुभैमीसदृशी कापिनास्तीतिभावः । खलूत्प्रेक्षायांवा पुरन्ध्रीतिङ्यापोःसंज्ञेतिवाहुल काद्ध्रस्वः । ह्रस्वान्तएववा भवद्भावीतिप्रागेवस्त्रीत्वविवक्षयाद्वंद्वं कृत्वापु रन्ध्रिशब्देनयथाकथञ्चित्कर्मधारयः । छन्दसांभवन्तीभावेतिस्यात् । इ

वासमाप ॥ पक्षस्थलावद्बहुचन्द्रकोपि कलापि नायेनजितःकलापः २० ॥

अधुनामानुपीत्वात्केशादारभ्यपादपर्यन्तवर्णनमारभते । अस्याइति । स दूरांत्वात्सपक्षोमित्रंसहायश्चैकः केवलोद्विधुश्चन्द्रोयस्यअस्यामुखस्योपरि शिरसिकचौघःकेशसमूहःवासंवसतिमाप । तत्स्थानेयुक्तम् । कथमित्यतआह । येनकचौघेनपक्षस्याःपक्षेषुस्थितास्तावन्तोतिवहवश्चन्द्रकायस्यएवम्विधोपिकलापिनांमयूराणांकलापःपिच्छभारःजितःपराजितः । तस्मोपिमयूरपिच्छभारोयेनजितस्तस्यात्युत्तमस्याच्छिरसिवसतिर्युक्तैवेत्यर्थः ॥ २० ॥

अस्यायदास्येनपुरस्तिरश्चि तिरस्कृतंशीतरुचान्धकारम् ॥ स्फुटस्फुरद्भङ्गिकचच्छलेन तदेवपश्चादिदमस्तिवद्धम् ॥ २१ ॥

श्लोकद्वयेनकेशानेववर्णयति । अस्याइति अस्याःभैम्याआस्येनवदनलक्षणेनशीतरुचाचन्द्रेण पुरोग्रतस्तिरश्चितिर्यक्प्रवर्तमानं यदन्धकारन्तिरस्कृतमपसारितंपराजितञ्च तदेवेदंस्फुटंप्रकटंस्फुरन्तोविलसन्तःभङ्गिनोजिह्मताःकचास्तेषाञ्छलेनव्याजेनपश्चान्मुखस्यपश्चाद्भागेबद्धमस्ति । पुरस्तिरश्चियत्तिमिरस्थितन्तत्ततोपसारित्वापश्चाद्भागादपसारणेचन्द्रस्यासामर्थ्यादागत्यसन्धीभूयपश्चाद्भागेस्थितिमकरोदित्यर्थः । विलसत्कौटिल्योनिबद्धःकेशसमूहोयंनभवति किन्तुचन्द्रेणातिरस्कृतत्वाद्विलसत्पराजयचिन्हंपश्चाद्बद्धमन्धकारमेव । अन्योपिजातजयोधृतपराजयचिन्हःपश्चाद्बध्यतेति अतिनीलोतिकुटिलश्चैमीकेशसंघइतिभावः अन्धकारोस्त्रियामित्यमरः । भङ्गइत्यपिपाठः ॥ २१ ॥

अस्याःकचानांशिखिनश्चकिंनु विधिंकलापौविमतेरगाताम् ॥ तेनायमेभिःकिमपूजिपुष्पै रभ्यर्च्य दत्वासकिमर्धचन्द्रम् ॥ २२ ॥

अस्याइति । अस्याःकचानांकेशानांशिखिनोमयूरस्यच कलापौसंघपिच्छभारौ विमतेरहमुत्कृष्टोऽहमुत्कृष्टइतिविवादाद्धेतोर्मध्यस्थत्वेनविधिंब्रह्माणंअगातांजग्मतुः किंनुइतिसमुदायोवितर्के । तेनब्रह्मणाअयंपुरोदृश्य

भ्रुवाविति भावः । अन्योपिवैरिणान्हत्वाक्रोधेनतदायुधमपिभनक्ति २४

भ्रूभ्यांप्रियायाभवतामनोभूचापेनचापेघनसारभावः ॥ निजांयदप्लोषदशामपेक्ष्य संप्रत्यनेनाधिकवीर्यतार्जि ॥ २५ ॥

भ्रूभ्यामिति । प्रियायाःभ्रूभ्यांकृत्वाभवतोत्पद्यमानेनभ्रूत्वकृच्छ्नामनोभूचापेन घनोदृढोसारोमज्जायस्यतद्भावोतिदृढत्वञ्चआपेप्रापे । यदैवच भ्रूत्वन्तदैवदृढत्वमितिचकारार्थः । पुष्पत्वदशायांनिःसारस्यापिधनुषोभैमीभ्रूभवनदशायांससारत्वञ्जातमित्यर्थः । कथंससारत्वमित्यत आह । यद्यस्मात्निजांस्वीयांअप्लोषदशामदाहावस्थांअपेक्ष्यसंप्रतिदग्धस्यभैमीभ्रुभवनसमये ऽनेनधनुषाऽधिकवीर्यताअतिशयित पराक्रमत्वमार्जिअर्जितम् । अदग्धपुष्परूपचापापेक्षयादग्धस्यभस्मीभवतःकेसरप्लोषस्यभैमीभ्रूभवतस्तस्यैवचापस्यजगद्वशीकरणेअधिकसामर्थ्यदर्शनादेवमनुमीयतइतिभावः । घनत्वंसारत्वंदृढत्वंश्रेष्ठत्वञ्चप्रापइतिवा । अथचघनसारभावःकर्पूरत्वञ्च । यतःकर्पूरोपिनिजाऽदाहात्स्वीयापक्वावस्थामपेक्ष्यादाहावस्थायामधिकवीर्यतामशयितंसौगन्ध्यं शीतलत्वञ्चार्जयति । अथकर्पूरमस्त्रियाम् । घनसार इत्यमरः ॥ २५ ॥

स्मारन्धनुर्यद्विधुनोज्झितास्पा यास्येनभूतेनचलक्ष्मलेखा ॥ एतद्भ्रुवौजन्मतदापयुग्मं लीलाचलत्वोचितवालभावम् ॥ २६ ॥

स्मारमिति ॥ यत्स्मारंमदसम्बन्धिधनुस्तदेकम् । अस्याआस्येनभूतेन वदनत्वकृतेन विधुनाचन्द्रेण उज्झितात्यक्ता याचलक्ष्मलेखाकलङ्कलेखा भैम्यामुखस्यनिकलङ्कत्वात्तन्मुखभवनौचित्याय चन्द्रेणात्यक्तायालक्ष्मलेखेतियावत् । त्यक्तान्तन्मदनचापचन्द्रलक्ष्मलेखालक्षणंयुग्मंद्वयकर्तृ । एतद्भ्रुवौभैमीभ्रुवौभैमीभ्रूरूपञ्जन्मआप । भैमीभ्रूस्वरूपेणतद्वयंपरिणतमित्यर्थः । किंभूतञ्जन्मलीलयाविलासेनचलत्वञ्चञ्चलत्वंयत्रतदुचितोवालभावःकेशसत्तायस्मिन् । लीलाचलत्वेनविलासेनचेष्टयाचउचितस्तदुभययोग्योवालभावःशिशुत्वंयस्मिन्जितजन्मत्तेनयुग्मेनलब्धमित्यर्थइतिवा । जन्मप्राप्तौक्रीडाचञ्चलत्वोचितोवालभावःशैशवंभवति । लेखापदंसाम्यार्थम् ॥

भैमीभ्रु वौकामचापचन्द्रलक्ष्मलेखाकारेसविलासेमदनजनितेचेतिभाव ॥ भावःसत्तास्वभावाभिप्रायचेष्टात्मजन्मस्वित्यमरः ॥ २६ ॥

इषुत्रयेणैवजगत्त्रयस्य विनिर्जयात्पुष्पमयाशुगे न ॥ शेषाद्द्विबाणीसफलीकृतेयं प्रियादृगम्भोज पदेभिषिच्य ॥ २७ ॥

नवभिःश्लोकैर्दृशौवर्णयति । इषुत्रिति । पुष्पमयाशुगेनपुष्परूपबाणेन कामेनकर्त्रा इषुत्रयेणैवपुष्परूपेणैवबाणत्रयेण जगत्त्रयस्यविनिर्जयाद्वश श्रीकरणात् एकैकेनबाणेनएकैकस्यजगतोजयाद्धेतोर्बाणत्रयस्यसार्थक्यात्सं भावितवैयर्थ्योपञ्चबाणत्वाच्छेषावशिष्टा इयंपुरोदृश्यमानाद्विबाणी प्रिया याभैम्यादृगम्भोजपदेनयनद्वयरूपकमलस्थानेऽभिषिच्यारोप्यसफलीकृता सार्थकीकृता । उत्तमस्थानप्रापणेतस्याःसाफल्यंजातमित्यर्थः । पुष्पमयकर णत्वाद्दृगम्भोजयोरपिबाणत्वमुचितम् । अयमभिप्रायः । बाणत्रयेणजगत्त्र यीजयात्त्रयाणांसाफल्यमवशिष्टंबाणद्वयं भैमीनेत्राम्भोजयोरभिषिच्यकामेन सार्थकीकृतन्तत्रच त्रयेणत्रयजितमित्याश्चर्यंनकिन्तुवैयर्थ्यं सम्भावनापिद्वये नजगत्त्रयञ्जितमितिअत्यन्तमाश्चर्यन्तस्मादेतद्बाणद्वयमेवसार्थकंयथातथा बाणद्वयंनेत्यभिप्रायः । विनिर्जयाद्विनिर्जयपर्यालोच्येतिल्यब्लोपेवा २७

सेयंमृदुःकौसुमचापयष्टिः स्मरस्यमुष्टिग्रहणार्हम ध्या ॥ तनोतिनःश्रीमदपाङ्गमुक्तां मोहाययादृ ष्टिशरौघवृष्टिम् ॥ २८ ॥

सेयमिति । मुष्टिग्रहणायार्हायोग्योमध्योयस्याःसेयंभैमीस्मरस्यकौसुमी चापयष्टिर्धनुर्लता । अतएवमृदुः । चापयष्टिरपिमध्येमुष्टिनाध्रियते । सा कायाभैमीनोस्माकंमोहायमदनजन्यविकाराय श्रीमतासलक्ष्मीकेनापाङ्गे नमुक्तानांदृष्टिलक्षणानांनयनकमलक्षणानां शराणामोघस्य समूहस्यवृष्टिं ओघेनपरंपरयावावृष्टिं तनोतिविस्तारयति । मदनोप्यस्माद्धनुषोमोहाय पूर्वोक्तामेवबाणपङ्क्तिवृष्टिमुञ्चति तथेयमपिकटाक्षविक्षेपमात्रेणजगत् त्रयमपिमोहयतीतिभावः । ओघःपरंपरायाञ्चेतिविश्वः ॥ २८ ॥

ध्या । घूर्णितपक्ष्मलमक्षिपक्ष्म प्रान्तद्युतिश्वेत्याजि

तामृतांशु ॥ अस्याइवास्याश्चलदिन्द्रनील गोलामलश्यामलतारतारम् ॥ २९ ॥

आघूर्णितमिति । अस्याभैम्याः अक्षिपद्मं नयनकमलं अस्याभैम्या इव भवत्वन्यनयनाभ्यां तुल्यमित्यर्थः ॥ किंभूतं । अक्षिपद्मं आघूर्णितं घूर्णायमानमन्दमुन्मीलदित्यर्थः । अथच विकसदवस्थम् । तथा पक्ष्मलं रोमसहितम् । अथच दलसहितम् । तथा प्रान्तद्युतेरपाङ्गकान्तेः श्वैत्येन धवलत्वेन तथाकृत्वा जितोऽमृतांशुश्चन्द्रमा येन प्रान्ते तस्माद् अधिकमुज्ज्वलं चन्द्रः सुधया यथाह्लादकारी तथा पाङ्गद्युत्या तथाह्लादकारीत्यर्थः । कमलमपि प्रकृष्टा या अन्तर्द्युतिर्गर्भकान्तिस्तस्याः श्वैत्येन जितचन्द्रम् । प्रांशुद्युनीतिपाठे महाकान्तिश्वैत्येनर्जितचन्द्रश्च भिन्नं पदम् । तथा चलन् चंचलोयमिंद्रनीलगोलस्तद्वदमला तस्य वा अमला स्निग्धतरा श्यामलता कृष्णता भारात्यादत्ते अङ्गीकरोति श्यामलतारा एवंविधा तारा कनीनिका यस्य एवंविधः आङ्पूर्वो रा तिरादानेवर्तते कमलमपि चलदिन्द्रनीलगोलवदमला श्यामलता श्यामलत्वं नां राति अङ्गीकरोति श्यामलतारो भ्रमरः तेन तारतार उच्चैः स्वरयुक्तं भ्रमरस्य तारो ऽत्युच्चस्वरः यस्मिन्नेवंभूतमिति वा तारोत्युच्चैः च यस्त्रिष्वित्यमरः पद्मेन साम्येव कव्येतत्कमलं स्वरूपेणैतदेवेति भेदाभावात् कमलेन साम्याभावः । यद्वा कमलस्य नेत्रयोश्च यद्यपि साम्यमस्ति तथापि नेत्रकमलस्य कमलेन सदृशाभ्यो भावः । कमलनेत्रत्वे सति कमलत्वस्याभावादित्यर्थः अन्यस्या नयनाभ्यां तु साम्यमसंभावितमेव तथा च दक्षिणं नयनकमलं वामनयनकमलतुल्यं वामनयनकमलं दक्षिणनयनकमलतुल्यं नत्वन्यदस्योपमानमस्तीति भावः । अस्मिन्विषये रामरावणयोर्युद्धं रामरावणयोरिवेतिवत्तदेवोपमेयं तदेवोपमानं सङ्गच्छते पक्ष्मलं सिध्मादित्वाल्लच् ॥ २९ ॥

कर्णोत्पलेनापि मुखं सनाथ लभेत नेत्रद्युतिनिर्जितेन ॥ यद्येतदीयेन ततः कृतार्थौ स्वचक्षुषी किंकुरुते कुरङ्गी ॥ ३० ॥

कर्णोत्पलेनेति । कुरङ्गी मृगी भैमीनेत्रद्युत्या निर्जितेन तदीयेन भैमसंबन्धिना कर्णोत्पलेन कर्णावतंसोत्पलेनापि सनाथं युक्तम् । स्वमुखं यदि लभेत तत

तस्तर्हि कृतकृत्यासतीस्वयमुभीकिंकिमर्थंकुरुतेऽपितुश्रतिहीनत्वान्निष्प्रयोजनत्वाद्वनेत्यजेदेवेतिभावः । भैमीनेत्रशोभाप्राप्तौकाकयेत्यपेरर्थः । तन्नेत्रदीप्त्याजितेनापिकर्णोत्पलेनतन्मुखस्यसनाथत्वन्नेत्स्यात्तर्हिस्वनयमेत्यजेदेवेत्यर्थः । मृगीनेत्रापेक्षयाभैमीकर्णोत्पलमधिकन्तस्मादपिभैमीनेत्रेऽधिकेइतिभावः । ततःकर्णोत्पलयोगलाभाद्धेतोःकृतार्थासतीतिवा ३०

त्वचःसमुत्तार्यदलानिरीत्या मोचात्वचःपञ्चषपाटनायाम् ॥ सारैर्गृहीतैर्विधिरुत्पलौघा दस्याम भूदीक्षणरूपशिल्पी ॥ ३१ ॥

त्वचइति । मोचात्वचःकदलीगर्भत्वचःसंबन्धिनीर्बाह्यास्त्वचोवल्कलानिरीत्याप्रकारेणक्रमेणसमुत्तार्यपृथक्कृत्य तथाकमलवृन्दसंबन्धीनिबाह्यानिदलानिपत्राणिक्रमेणपृथक्कृत्य पञ्चषपाटनायांपञ्चषट्वापरिमाणंयेषांकदलीत्वक्कमलवृन्दानान्तेषांपाटनायांसत्यां बाह्या.पञ्चषाःत्वचोबाह्यानिपञ्चषाणिदलानिचोत्पाट्यमोचात्वचः कदलीवल्कलादुत्पलौघाच्चगृहीतैःसारैःश्रेष्ठभागैःकृत्वाअस्यांभैम्यांविषयेविधिर्ब्रह्माईक्षणेनेत्रेतयोरूपंरामणीयकन्तस्यशिल्पीकारकोभूत् । कदलीगर्भगतक्षौरैस्त्वंगृहीत्वानेत्रगतक्षौरत्वंनिर्मितम् । यद्वाकमलगर्भपत्रगतक्षौरैरत्वग्गृहीत्वानेत्रसौन्दर्यंनिर्मितमित्यर्थः । उत्पलशब्देननीलोत्पलंवा तथातत्सारेणनेत्रयोर्नीलिमाकृतइत्यर्थः । पञ्चषेतिसंख्ययाव्ययासन्नेतिबहुव्रीहौबहुव्रीहौःसंख्येयेडुतिडचिटिलोपः ॥ ३१ ॥

चकोरनेत्रेणदृगुत्पलानां निमेषयन्त्रेणकिमेषकृष्टः सारःसुधोद्गारमयःप्रयत्नै र्विधातुमेतन्नयनंविधातुः ॥ ३२ ॥

चकोरेति । एतन्नयनंभैमीनेत्रंविधातुंनिर्मातुं विधातुर्ब्रह्मणःप्रयत्नैःसमुद्योगैश्चकोरनेत्राणामेणीदृशांहरिणीनेत्राणांउत्पलानाञ्चसंबन्धीसुधोद्गारमयःपीयूषनिर्भररूपःएष प्रत्यक्षदृश्यःसारः श्रेष्ठोभागोनिमेषलक्षणेनयन्त्रेणकृष्टः किमित्यूह्यनिमेषःपत्मसङ्कोचोदलसंकोचश्चत्रयाणामपिनिमेषयन्त्रेणनिष्पीड्यगृहीतेनश्रेष्ठभागेनैतन्नेत्रंनिर्मितंसारस्यसुधोद्गाररूपत्वंच

पीतचन्द्रचन्द्रिकाचकोरनयनसाराकर्षणात् एतस्यचन्द्रोत्सङ्गस्यत्वात्तद् दृशोरप्यमृतसंबन्धात्तत्साराकर्षणादुत्पलानाञ्चसोमवंश्यत्वाद्रात्रौचन्द्रसम्बन्धात्तत्साराकर्षणादिति अन्योपीक्ष्वादिसारोरसरूपःकाष्ठयन्त्रेणाकृष्यते निमेषरूपंयन्त्रमेतासारग्रहणार्थंयन्त्रमेवनिर्मितं एतद्दृगुत्पलयोः पूर्वं द्वंद्वः । तत्रैतद्दृशोरुत्पलापेक्षयाद्गुपमानेनत्तरकृत्वादभ्यर्हितत्वादेतद्दृक्पदस्यपूर्वनिपातः अजाद्यदन्तस्याप्युत्पलशब्दस्यनएतेतिजातिमात्रविवक्षया ॥ ३२ ॥

ऋणीकृताकिंहरिणीभिरासी दस्याःसकाशान्नयनद्वयश्रीः ॥ भूयोगुणेयंसकलावलाद्य त्ताभ्योनयालभ्यतबिभ्यतीभ्यः ॥ ३३ ॥

ऋणीति हरिणीभिरस्याःसकाशान्नयनद्वयस्य श्रीःशोभाऋणीकृताबुद्ध्यागृहीतासीत्किं कुतोयद्यप्यस्मादनयाभैम्याबिभ्यतीभ्यस्ताभ्योहरिणीभ्यः सकलासम्पूर्णाकलयासम्पूर्णाकलयाविलासेनसहितावा भूयोगुणाबहुगुणाद्वयंनयनद्वयश्रीः बलात्कारेणालभ्यतलब्धा अथचसकलाधनवृद्धिसहिताभूयोगुणात्रिगुणाचतुर्गुणावाबिभ्यतीभ्योबलात्कारेणलब्धा उत्तमर्णेनहिनस्यधनेधमर्णेभ्योवृद्धिसहितात्रिगुणाचतुर्गुणावासम्पद्बलात्कारेणलभ्यते भूयोगुणत्वंयाज्ञवल्क्योक्तव्यवहाराध्यायेद्रष्टव्यं अशीतिभागोवृद्धिःस्यादित्यादिना अनयापितादृशीलब्धा तस्मात्पूर्वंमृणस्वरूपेणगृहीतेतिसत्यम् । त्रस्यन्तीभ्योतएवचञ्चलनयनाभ्योपिहरिणीभ्यःसकाशादेतन्नेत्रेसुन्दरेअतिचञ्चलेचेतिभावः ३३ ॥

दृशौकिमस्याश्चपलस्वभावे नदूरमाक्रम्यमिथोमिलेताम् ॥ नचेत्कृतःस्यादनयोःप्रयाणे विघ्नःश्रवःकूपनिपातभीत्या ॥ ३४ ॥

दृशाविति । चपलस्वभावेअतिचञ्चलस्वभावे अस्यादृशौदूरमाक्रम्यदूरं गत्वाशिरः परिभ्रम्यमिथोन्योन्यंकिंनमिलेतां अपितुमिलितेभवेतामेव परन्त्वेत् यद्यनयोःप्रयाणेदूरगमनेविषये श्रवःकूपयोःकर्णलक्षणकूपयोः निपातोपतनन्तद्भीत्यापरावर्तेततस्माद्भीत्याश्रयेनविघ्नःकृतोनस्यात् यद

रूपेणप्रतिबन्धकेननमिलिते नेत्रेआकर्णपूर्णेवम्ब्लतरेचेतिभावः । अत्र क्रियातिपत्तिर्नविवक्षणीया ॥ ३४ ॥

केदारभाजाशिशिरप्रवेशा त्पुण्यायमन्येमृत्तभुत्प लिन्या ॥ जातोयतस्तत्कुसुमेक्षणेयं यतश्चतत्की रकद्वक्चकोरः ॥ ३५ ॥

केदारेति । केदारजाजाह्नीहिक्षेत्रभाजाआलवालभाजावा अथचकेदारःस्यदेवसेविन्योत्पलिन्याकमलिन्याशिशिरर्त्तौःप्रवेशाद् अथचशिशिरेहिमेप्रवेशाद्धिमचूर्णनाद्धेतोः पुण्यायमृतंपुण्यंप्राप्तमृतंतज्जन्यसुकृतविशेषजन्योत्तमफलप्राप्तमेवेत्यर्थः । इत्यहंमन्येजानामिकुतः । यतोयस्माद्धेवचन्तस्याःकमलिन्याःकुसुमेएवईक्षणेनेत्रेयस्याएवंविधाजाता यतश्चयस्माच्चकोरस्तत्कोरकद्वक्तस्याएवकोरकौकलिकेदृशौयस्यैवंविधोजातःतस्मादेतदनुमीयते नहिसुकृतातिशयेनविनाभैमीनयनत्वञ्चकोरनयनत्वञ्च तदुत्पन्नकुसुमकोरकाभ्यालभ्यते शिशिरर्त्तौःप्रवेशेकमलिनीनश्यति भैमीनेत्रेचकमलतुल्ये कलिकापेक्षयाकुसुमस्याधिक्यात्चकोरनेत्रापेक्षयाभैमीनेत्रेअतिसुन्दरेइतिसूचितम् केदारःपर्वतेशम्भोःक्षेत्रभेदालवालयोः शिशिरःस्याद्दृतौभेदेतुषारइतिविश्वः ॥ ३५ ॥

नासादसीयातिलपुष्पतूणं जगत्त्रयव्यस्तशरत्रयस्य श्वासानिलामोदभरानुमेया रन्ध्रेद्विबाणींकुसुमायुधस्य ॥ ३६ ॥

नासिकांवर्णयति । नासेति । अदसीयाऽमुष्याःसम्बन्धिनीनासानासिका जगत्त्रयेविजयायव्यस्तंक्षिप्तंशरत्रयंयेनतस्यकुसुमायुधस्य जगत्त्रयेशरत्रयस्यक्षिप्तत्वादवशिष्टांद्विबाणींबाणद्वयींदधत् तिलपुष्पंयारचितंतूणंजस्रापुष्पमाणस्येषुधिरपिपुष्पमयोयुक्तः तिलपुष्पंचतूणीराकारंकिभूतांद्विबाणीश्वासानिलस्यनिश्वासपवनस्यामोदभरेण परिमलबाहुल्येनानुमेयामनुमानार्हाम् बाणत्रयेणजगत्त्रयजितंमवशिष्टंबाणद्वयभैमीनासालक्षणतिलपुष्पतूणीरन्ध्रद्वयेस्थापितमित्यर्थः ॥ ३६ ॥

बन्धूकबन्धूभवदेतदस्या मुखेन्दुनानेनसहोज्जि

हाना ॥ रागश्रियाशैशवयौवनीयां स्वमाहसंध्या मधरोष्ठलेखा ॥ ३७ ॥

श्लोकसप्तकेनाऽधरोष्ठंवर्णयति । बन्धूकेति । अनेनंप्रत्यक्षदृश्येनमुखेन्दुनासहैवोत्थिजहानासमुत्पद्यमाना अस्याअधरोष्ठलेखालेखाकारोधरोष्ठः एतत्प्रत्यक्षदृश्यंस्वमात्मानंशैशवयौवनीयांबाल्यतारुण्यसम्बन्धिनींसन्ध्यांब्रूते अहमेवसंध्येति बाल्यतारुण्ययोःसन्धौभवनात्संध्यात्वं शैशवान्ते यौवनादौवाऽधरोष्ठेभूयान्रक्तिमाभवतीतिभावः । किम्भूतंस्वरागश्रियालोहितिमशोभयाकृत्वा बन्धूकस्यमध्याह्नविकसितपुष्पस्यबन्धूभवस्समानंभवद् अतिरिक्तमित्यर्थः । अथचरात्रिदिनसन्धौसन्ध्याभवतिसन्ध्यापिचन्द्रेणसहैवोदेतिरक्ताचभवति ॥ ३७ ॥

अस्यामुखेन्दोरधरःसुधाभूर्बिम्बस्ययुक्तःप्रतिबिम्बएषः ॥ तस्याथवाश्रीद्रुमभाजिदेशे संभाव्यमानास्यतुविद्रुमस्य ॥ ३८ ॥

अस्याइति अस्यामुखेन्दौवदनएवचन्द्रे विद्यमानएषोऽधरोष्ठः सुधाभुविअमृतभूमौजातस्यबिम्बीफलस्यप्रतिबिम्बःसदृशोयुक्तः ॥ बिम्बीफलस्यजैम्यधरस्यचसाम्यंनास्त्येवरक्तत्वेसत्यमृतवत्त्वाभावात् यद्वास्याअमृतभूमावुत्पन्नस्यैवनान्यस्य अथचनिर्मलत्वाच्चन्द्रे प्रतिबिम्बोऽयमस्ययुक्त इत्यर्थः । अतएवमुखेन्दाविति निर्देशः । अथचन्द्रंप्रतिबिम्बस्यप्रतिबिम्बोभवतीतियुक्तमेवेत्यर्थः । अथवेत्यपरितोषेणैतद्दूषयति तस्यश्रीःशोभाद्रुमभाजिद्रुमसहितेदेशेऽस्यतु एतदधरस्यतुसंभाव्यमाना विचार्यमाणाश्रीर्विद्रुमेप्रवालेसंभाव्यमानासंजाव्यतइत्यर्थः । सुधाभूमौसमुत्पन्नस्यापिबिम्बफलस्यरसवत्त्वेनसाम्यंस्यात्तथापितस्य वृक्षाश्रयत्वाद्रक्तशोभायाअतिरुक्तत्व द्रुमैम्यधरस्यचस्निग्धत्वात्तद्धंधरस्येवस्निग्धरक्तशोभाकुत्रास्तीतिविचारणायांविद्रुमेविद्यते रक्तिमाकृत्वाविद्रुमस्याधरस्यचसाम्यं विद्यतेयद्यपितथापिविद्रुमस्य सुधाभूमावनुत्पन्नत्वादधरतुल्यरसत्वाभावाद्विद्रुमेणापिसाम्यंनविद्यतइत्यर्थः । बिम्बीफलस्यैवंविधरक्तिमाभावाद्विद्रुमस्यामृतवत्त्वाभावादेतदधरस्यच एतदुभययुक्तत्वादेतदधरोपमताभ्यां नास्त्यइतिभावः । द्रुमसहितेदेशेविद्यमानस्यद्रुमरहितेदेशेविद्यमा

मस्यचविरुद्धत्वात्साम्याभावइत्यर्थः । विम्बीफलस्यैवंविधरक्तिमाभावा द्विद्रुमस्यामृतवत्वाभावादेतदधरस्यचविम्बीफलस्यचयद्यपिसाम्यंविद्यते तथाप्येतस्यानास्तीतिअस्याइतिपदेनसूचितम् । मुखेन्दाविति सुधासंभव सूचनंभैम्यधरोष्ठस्यैव यद्वाअथवान्यस्मादपिहेतोरितियावत् तस्यबिम्बीफ लस्यशोभावृक्षसहितेप्रदेशेबहुवृक्षेवनेवर्तते । बिम्बीफललतायावृक्षाद्याश्र यत्वादस्यतुपुनःसंभाव्यमाना विचार्यमाणासाशोभाविगतवृक्षेनगरेसंभाव्य तेनगरएवभैम्याविद्यमानत्वात् द्रुमभाजिसाधारणकणकवृक्षसहितारण्येत स्यश्रीरस्यतुविशिष्टाश्रादिवृक्षेनगरेसंभाव्यतइतिवा आरण्यकस्यनागरिक स्यचत्रह्वन्तरमित्यर्थःविस्तरेणालम्प्रतिबिम्बशब्दोऽर्थचौदिषुद्रष्टव्यः ॥३८॥

जानेऽतिरागादिदमेवबिम्बं बिम्बस्यचव्यक्तमि तोऽधरत्वम् ॥ द्वयोर्विशेषावगमाक्षमाणां नाम्नि भ्रमोऽभूदनयोर्जनानाम् ॥ ३९ ॥

जानेइति रदनच्छदोपमानत्वेनप्रसिद्धंयद्बिम्बंबिम्बीफलन्तदिदमेवभै म्योष्ठलक्षणमेवनान्यदइतिजाने । कुतः । अतिरागादतिलौहित्यादत्य नुरागाच्च । लोकप्रसिद्धस्यबिम्बीफलस्यतादृग्लौहित्याभावात् सर्वत्रोप मानस्याधिक्याच्चाधरोपमानभूतंयद्बिम्बफलन्तद्भैमीरदनच्छदरूपमेवनान्य दित्यर्थः । भैमीरदनच्छदस्योपमानत्वंयुक्तमितिभावः । लौकिकस्यबि म्बस्यचइतःसत्यभूताद्भैमीरदनच्छदात्सकाशादधरत्वंव्यक्तंस्पष्टम् ॥ ता दृग्लौहित्याभावान्न्यूनत्वादुपमेयत्वमित्यर्थः । अथचेदंपुरोदृश्यमानमे वबिम्बमसित पुरोदृश्यमानादस्माल्लौहित्याद्धेतोर्बिम्बस्यचप्रसिद्धस्यबिम्बि फलस्याधरत्वमोष्ठत्वम् । नन्वेवंसतिलोकप्रसिद्ध्यपलापप्रसङ्गइत्यतआह द्वयोर्बिम्बाधरयोर्विशेषावगमेतारतम्यज्ञाने अक्षमाणामसमर्थानांपामरा णांजनानांद्वयोरनयोर्बिम्बाधरनाम्निभ्रमोऽभूत् । तारतम्यस्यास्फुरणात्पा मरैर्बिम्बत्वेनपरीक्षकाभिमतस्याधरस्यसंज्ञाकृताअधरत्वेनचपरीक्षका भिमतस्यबिम्बसंज्ञाकृता । अतःपामरप्रसिद्ध्यपलापोनतुपरीक्षकप्रसिद्ध्यपलापइत्यर्थः । बिम्बापेक्षयाभैम्योष्ठोधिकएवेतिभावः ॥ ३९ ॥

मध्योपकण्ठावधरोष्ठभागौ भातःकिमप्युच्छ्रसि

तौ यदस्याः ॥ तत्स्वप्नसंभोगवितीर्णदन्त दंशेन किंवा न मया पराद्धम् ॥ ४० ॥

मध्येति । अस्या भैम्या अधरोष्ठस्य मध्योपकण्ठौ मध्यसमीपवर्तिनावध रोष्ठभागौ अधरप्रदेशौ किमपि किञ्चिदुच्छूसितौ उच्छूनौ यद्यस्माद्भातः शोभे ते । तस्माद्धेतोः स्वप्ने यो भैमीसंभोगस्तत्र वितीर्णो दत्तो दंशो दन्तक्षतं येन एवं विधेन मया वा मयैव किं नापराद्धं किन्तु तादृशापराधो मयैव कृतः । वाशब्दः संभावनायां वा । स्वप्नसंभोगे वितीर्णेन दन्तक्षतेन कृत्वेति वा । अधरोष्ठस्य मध्ये समीपवर्तिनोः पार्श्वदेशयोः किञ्चिदुच्छूनता सामुद्रिकोक्तो गुणः । दन्तक्षतेनाप्युच्छूनता भवति । स्वप्ने प्रत्यक्षं मयेयं सङ्गुप्यते इत्युत्कण्ठातिशयो व्यङ्ग्यः ॥४०॥

त्रिधा विदर्भेन्द्रसुताधरोष्ठे नृत्यन्ति कत्यन्तरभेदभाजः ॥ इतीव रेखाभिरपश्रमस्ताः संख्यातवान्कौतुकवान्विधाता ॥ ४१ ॥

विद्या इति । अन्तरभेदभाजः अवान्तरभेदसहिताः कति विद्याः कियन्तीर्विद्याः विदर्भेन्द्रसुताधरोष्ठे भैम्यधरोष्ठे नृत्यन्ति स्फुरन्ति साग्ररूपेण वर्तन्ते इतीवेति स्वयमेव सन्दिहानइवेति लोकसन्देहनिवृत्त्यर्थं वा कौतुकवान् अपश्रमः श्रमरहितो विधाता ब्रह्मा ऽधरोष्ठवर्तिनीभिः रेखाभिः कृत्वा इयन्त्यो विद्या विद्यन्त इति ताः विद्याः संख्यातवान् गणितवान् । रामणीयकहेतुभूता रेखा विद्यागणनार्थत्वेन उत्प्रेक्षिताः । अन्तरे ओष्ठमध्ये इति वा ॥ ४१ ॥

संभुज्यमाना ह्ययथा निशान्ते स्वप्नेनुभूता मधुराधरेयम् ॥ असीमलावण्यरदच्छदेयं कथं मयैव प्रतिपद्यते वा ॥ ४२ ॥

संभुज्येति । निशान्ते रात्र्यन्ते मध्ये रात्र्यवसानसमये वा अद्य स्वप्ने लया संभुज्यमाना कृतोपभोगा इयं भैमी चुम्बनवशान्मधुराधरा ऽमृतोष्ठी सुन्दराधरा वा अनुभूता इत्यमनिर्वचनीयप्रकारेणासीमलावण्यो निर्मर्यादसौन्दर्यो रदच्छदो ऽधरोष्ठो यस्याः सेयं मयैव कथं वा प्रतिपद्यते प्रतीयते । आश्चर्यमेतदित्यर्थः । स्वप्ने यादृशी सुन्दराधरा अनुभूता तादृश्येव जाग्रदवस्थायामपि इत्याश्चर्यम् । अत्र हेतुर्निशान्तपदम् । गोविसर्जनवेलायां दृष्टा सद्यः फलं भवेदिति ।

अथवयानयामधुररसयुक्ताधराऽनुभूतासाऽनिर्मथादोलवणरसभावोयस्या एवंविधोऽधरोष्ठोयस्याःसानयैवकथमनुभूयतइत्याश्चर्यम्महत् मधुररसलवणरसयोः परस्परंविरोधादित्यर्थः ॥ ४२ ॥

यदिप्रसादीकुरुतेसुधांशो रेषांसहस्रांशमपिस्मितस्य ॥ तत्कौमुदीनांकुरुतेतमेव निर्मिंच्छ्यदेवः सफलंमजन्म ॥ ४३ ॥

स्मितंवर्णयति । यदीति । एषास्मितस्यसहस्रांशंसहस्रपरिपूरकं लेशमपि सुधांशोर्यदिचेत्प्रसादीकुरुतेचन्द्रस्यप्रसन्नाभूत्वाप्रसादत्वेनस्मितलेशमपिददाति तर्हि सचन्द्रोदेवस्तमेवस्मितसहस्रांशमेव निर्मिच्छ्यारोत्कौमुदीभिरेव पूरयित्वानीराजनंकृत्वा कौमुदीनाञ्जन्मसफलंकृतकृत्यतांकुरुते । अत्युत्तमस्यतस्यनीराजनस्यानेतासांभवनयोग्यत्वात् । अन्यदप्युत्तमंवस्तूत्तमेनवस्त्रादिनानीराज्यते । कुमुद्वस्तात्स्मितसहस्रांशस्यापिसदृशयोनेतिभावः । सहस्रश्चासावंशश्चेतिव्युत्पत्तिः । सहस्रपूरणोंशइतिलक्षणयाव्याख्येयम् । अन्यथानित्यंशतादीत्यादिनाडटस्तमडागमेसहस्रतमइतिस्यात् । (निच्छ्वउत्क्षेपइतिपठितोपि) निःपूर्वोनिच्छतिर्नीराजनार्थः ॥ ४३ ॥

चन्द्राधिकैतन्मुखचन्द्रिकाणां न्दरायतन्तत्किरणाद्घनानाम् ॥ पुरःसरस्तस्त्वद्द्वितीयं रदावलिद्वन्द्वमिन्दुवृन्दम् ॥ ४४ ॥

श्लोकत्रयेणदन्तपङ्क्तिद्वयंवर्णयति । चन्द्रेति । तस्यचन्द्रस्यकिरणाञ्जात्यभिप्रायेणैकवचनम् । किरणेभ्यःसकाशाद्घनानांमुखचन्द्रस्यचन्द्राद्दुष्कृत्वादतिनिबिडानाञ्चन्द्रादधिकश्चन्द्रोऽन्कृष्टमेतन्मुखमैतीमुखचन्द्रस्तस्यचन्द्रिकाणां दरायतमीषद्दीर्घं अथचचन्द्रिकाधिकैतन्मुखचन्द्रचन्द्रिकारूपाणामेवघनानामेघानाम् तत्किरणात्तेभ्योमेघेभ्यःक्षरणाद्धेतोरीषदायतं पुरःसराणिअग्रेसराणिजातानिनिःसृतानिपृषन्तिबिन्दवस्ताभ्यैवद्वितीयानियस्यतत्द्विबिन्दुवृन्दं रदावलिद्वन्द्वंतद्दन्तपङ्क्तिद्वितयमिवाचरति । अथनिःसृतबिन्दूनांसूक्ष्मत्वादधोदन्तत्वंपश्चादव्यवधानमेव निरस्तांबिन्दूनामीषदायतत्वादूर्ध्वंदन्तत्वमित्यर्थः । पर्जन्यवशात्पटलान्तात्प्रथममे

काविन्दुपङ्क्तिः पततितदनुद्वितीयालयेवलग्नेषदायतापततितद्वद्दिदन्तपङ्क्तिद्वयमिति । दन्तानामीषदायतत्वंघनत्वसूक्ष्मत्वञ्चसामुद्रिको गुणः । रदावलिद्वन्द्वेतीत्यत्रसर्वप्रातिपदिकेभ्यःक्विबाचारेइतिक्विप् ४४ ॥

सेयंममैतद्विरहार्तिमूर्छा तमीविभातस्यविभाति सन्ध्या ॥ महेन्द्रकाष्ठागतरागकर्त्री द्विजैरमीभिः समुपास्यमाना ॥ ४५ ॥

सेयमिति । सेयत्नैमीममएतंयासहविरहोवियोगस्तज्जन्यायाआर्तिः पीडातज्जन्यायामूर्छासैवतमीरजनीतस्याविभातस्यप्रातःकालस्यसमयस्यसम्बन्धिनीसन्ध्याविभ्रातिप्रकाशते । कीदृशीमहेन्द्रस्यकाष्ठामुत्कर्षंगतःप्राप्तःकाष्ठांमर्यादामगतोऽप्राप्तोवारागोनुरागस्तस्यकर्त्रीजनिका । तथाचअमीभिःप्रत्यक्षदृश्यैर्द्विजैर्दन्तैः समुपास्यमाना । विभातंयसन्ध्येयमित्यनेनत्नैमीदर्शनाद्मूर्छापगमःसूचितः । प्रातःसन्ध्यापिप्राचीप्राप्तिलौहित्यजनिकाब्राह्मणैःसेव्यते । रजनीयामिनीतमीत्यमरः ॥ ४५ ॥

राजौ द्विजानामिहराजदन्ताःसंविभ्रतिश्रोत्रियविभ्रमंयत् ॥ उद्वेगरागादिमृजावदाता श्चत्वारएतेनदवैमिमुक्ताः ॥ ४६ ॥

राजाविति । इहदृश्यमानायांद्विजानान्दन्तानाञ्चराजौ पङ्क्तौएतेदृश्यमानाश्चत्वारोराजदन्तादन्तश्रेष्ठाः यद्यस्माच्छ्रोत्रियाणांविभ्रमंविलासउज्ज्वलत्वलक्षणन्धारयन्ति तत्तस्मान्मुक्तानेतान्राजदन्तान्मौक्तिकानिअवैमि । किंभूताःउद्वेगरागःक्रमुकजन्योःलोहितिमासआदिर्यस्यतदादिरादेर्मृजयाशोधनेनकृत्वाऽवदाताउज्ज्वलाः । क्रमुकत्वचाभस्मीभूतेनयाक्रमुकेणकृतमार्जनाद्दन्ताअत्युज्ज्वलाभवन्तिइति चतुर्णामेवमार्जनंक्रियतेतेषामेवदर्शनविषयत्वात् । ततश्चात्युज्ज्वलत्वान्मुक्तासाम्यंयुज्यते ॥ अथचराजवन्तःस्वरूपंयेषान्तेराजिदन्ताः । एवंभूताःद्विजानांब्राह्मणानांपङ्क्तौश्रोत्रियविप्रसपङ्क्तिंपावनत्वम्बिभ्रति । उद्वेगस्यउद्वेजनस्यचित्तवैक्लव्यस्यरागस्योभिलाषस्यादिशब्दाद्द्वेषादेश्चयन्मार्जनंपरित्यागस्तेन निष्कलुषाश्चभवन्ति । उत्कृष्टोवेगोयेषांरागादीनामितिवा । एवम्विधाश्च

स्वाभुक्ताभवन्तीतियुक्तमेवेत्यर्थः । घोण्टातुपूगःक्रमुकोगुवाकःखपु रोस्यतुफलमुद्वेगमित्यमरः । दन्तानांराजानोराजदन्ताः । राजदन्ता दिषुपाठात्परनिपातः ॥ ४६ ॥

शिरीषकोशादपिकोमलाया वेधाविधाय द्रुगम
शेषमस्याः ॥ प्राप्तप्रहर्षःसुकुमारसर्गे समापयद्वा
चिमृचिद्रुत्वमुद्राम् ॥ ५७ ॥

श्लोकचतुष्टयेनवाणींवर्णयति । शिरीषेति । वेधाःशिरीषस्यकोशात्कुसु मादपि कोमलायाभैम्याअस्याः अशेषसकलंअङ्गंसुकुमारतरंविधायनिर्मा य सुकुमारसर्गेमृदुतरवस्तुसृष्टौप्राप्तप्रकर्षःसन् वाचिअस्याएववाण्यामृदुत्व मुद्रांसौकुमार्यमर्यादांसमापयत् । अस्यासुकुमारतराण्यंगानिकृत्वा सौकुमार्यमर्यादांभैमीवाण्यामेवसमाप्तिंनीतवान् । अतिमधुरस्वरेयमि तिभावः । अन्योपिक्वापिशिल्पीस्वोत्कर्षसमाप्तिंनयति ॥ ५७ ॥

प्रसूनबाणाद्वयवादिनीसा काचिद्द्विजेनोपनि
षत्पिकेन ॥ अस्याःकिमस्यद्विजराजतोश्या नाधी
यतेभैक्ष्यभुजातरुभ्यः ॥ ५८ ॥

प्रसूनेति । तरुभ्यआम्रादिवृक्षेभ्योभैक्ष्यभुजाफलपुष्पादिरूपभिक्षासमू हभोजिना पिकेनकोकिलेनद्विजेनपक्षिणा प्रसूनबाणःकामस्तस्याद्वैतवा दिनीसाभैमीवाग्रूपा काचिदपूर्वोपनिषद्रहस्यग्रन्थः अस्याभैम्याः आस्य द्विजराजतोमुखचन्द्रान्नाधीयतेभैपठ्यतेकिमपितुपठ्यतएव कषायरसा स्वादिमञ्जरीभक्षणेनपिकस्यमधुरस्वरत्वमुचितंपिकः पञ्चमस्वरंपठति । सभैमीस्वरएवेदानीमपितेनाभ्यस्यतेपरन्तुनायातीत्यर्थः । कोकिलस्वरा धिकृजैमीस्वराकर्णनमात्रेणमदनाद्वैतमेवभवतीतिभावः । अन्येनापिभि क्षाभुजाब्राह्मणेनाद्वैतप्रतिपादिका एकमेवाद्वितीयंब्रह्मेत्यादिकोपनिष द्ब्राह्मणश्रेष्ठादधीयते । नविद्यतेद्वयंयस्यतदद्वयप्रसूनबाणलक्षणांयदद्वय मितिसमासः । द्विजराजतआख्यातोपयोगइत्यपादानत्वम् भिक्षाणांसमू होभैक्षादिभ्योण् ॥ ५८ ॥

पञ्चाङ्गसन्धानमवेक्ष्यलक्ष्मी मेकस्यविष्णोःश्रय

णातसपत्नीम् ॥ आस्येन्दुमस्या भजते जिताब्जं सरस्वतीतद्विजिगीषया किम् ॥ ४९ ॥

पद्मेति सरस्वतीअस्याभैम्यास्तस्याः सपत्न्या लक्ष्म्या विजिगीषया तु मे ध्वयासपत्नीगृहादुत्तमं गृहममकथंकारं स्यादिति मनीषया सौन्दर्येणाजिताब्जञ्जितपद्मं आस्येन्दुं मुखचन्द्रं भजते सेवते किंवितर्के किंकृत्वा एकस्या विरोधिभ्यां श्रयणादात्मनः सपत्नीं लक्ष्मीं पद्मस्य ह्यङ्क क्रोड़ कृत्वसद्मस्थानं यस्याः तामवेत्य चन्द्रोदये कमलसङ्कोचाच्चन्द्रोपि जिताब्जो भवति । यद्वा जितोब्जः चन्द्रोयेन चन्द्रेणाकमलञ्जितं सोप्यनेन जित इति तदाश्रयणाल्लक्ष्मीर्यास्या ऽतितरां जितेत्यर्थः । वक्रोक्त्यादिषा तु यमस्यामेव विद्यते नान्यस्यामिति भावः । अन्यापि सपत्नीगृहाद्युत्तमं विलोक्यैव यास्वगृहादित स्माद्युत्तमङ्करोति । अब्जो जैवातृकः सोमइत्यमरः ॥ ४९ ॥

कण्ठेऽत्र सन्तीचतुरायदस्याः सरस्वती वादयते विपञ्चीम् ॥ तदेव वाग्भूयमुपेत्य गाढ्याः श्रोतुः श्रुतौ यातिसुधारसत्वम् ॥ ५० ॥

कण्ठइति । अस्याः कण्ठे वसन्ती वीणावादने चतुरा सरस्वती यद्विपञ्चीं वीणामावादयते तदेव वीणावादनमेव मृगाक्ष्या मुखे वाग्भूयवाणीत्वेन परिणम्य श्रोतुः श्रुतौ कर्णे सुधारसत्वं याति वीणावन्मधुरस्वरैयमिति भावः । वाग्भूयेत्यत्र च्व्यन्तत्वाद्भूतिसञ्ज्ञायां समासः ॥ ५० ॥

विलोकितास्या मुख उन्नमय्य किं वेधसेयं सुषमा समाप्तौ ॥ धृत्युद्भवा यच्चिबुके चकास्ति निम्नं मनाग्ङ्गुलियन्त्रणेव ॥ ५१ ॥

चिबुकं वर्णयति विलोकितेति विधिना सुषमासमाप्तौ मुखनिर्माण शोभासमाप्तौ सत्यां मुखमुन्नमय्य किंयदूर्ध्वीकृत्य विलोकितमास्यं यस्या एवंभूता किम् । अलङ्करणसमाप्तौ अलङ्कारकारिणो मुखमुन्नमय्यालङ्कारशोभामवलोकयति विधिनापि तथैव कृतमिति वितर्कः अस्या मुखमुन्नमय्येति वा यो जना कथं ज्ञातमित्यत आह यद्यस्मान्मनागीषत्किंसे गभीरं चिबुके ऽन्त्यग्रसत्यौ धृत्युद्भवाङ्गुलीधारणजन्या अङ्गुल्या कृता यायन्त्रणा नियमनादैव

यकास्तिशोऽज्रते अतिमार्दवादङ्गुलिधारणादपिहन्तग्रसन्धौनिम्नत्वज्ञात मित्यर्थः । उत्तमस्त्रीणांस्वभावादेवचिबुकंनिम्नं भवतीति ॥ ५१ ॥

प्रियामुखीभूयसुखीसुधांशु र्जयत्ययंराहुभयव्ययेन ॥ इमान्दधाराधरबिम्बलील. न्तस्यैवबालङ्करचक्रबालम् ॥ ५२ ॥

पुनरपिश्लोकनवकेनसाश्रयवंमुखंवर्णयति । प्रियेति अयं सुधांशुश्चन्द्रः प्रियामुखं.भूत्वैमीमुखत्वंप्राप्य मुखाकारेणपरिणम्य राहुभयस्यव्ययेनभावेनसुखीनिश्चिन्त.सन् जयतिसर्वोत्कर्षेणवर्तते मुखचन्द्रस्यराहुबाधानास्तीतिसुखित्वं यतश्चायंचन्द्रएवतस्मात्तस्यैवचन्द्रस्यबालमुदयसमयभाविकरचक्रबालंकिरणमण्डलइमांप्रत्यक्षामधरबिम्बलीलामोष्ठबिम्बलीलामधरोष्ठविलासन्दधार चन्द्रतुल्यंमुखंउदितमात्ररक्ततुल्यचन्द्रतुल्योधरोष्ठइतिभावः अन्योपिवैरिणःसकाशाद्भीतस्तदीयपरिजनोपिभीतःसन् तदनवबोधार्थमन्यथाकारंकृत्वाधारयन्सुखीभवति बालश्चलीलांधारयति ५२

अस्यामुखस्यास्तुनपौर्णमास्यं पूर्णस्यजित्वामहिमाहिमांशु ॥ भ्रूलक्ष्मखण्डन्दधदर्धमिन्दु र्भालस्तृतीयःखलुयस्यभागः ॥ ५३ ॥

अस्यामिति । अस्याःपूर्णस्यसर्वावयवपरिपूर्णस्यापचवर्तुलस्य मुखस्य महिमाश्रेष्ठत्वकीर्तिरपचचन्द्रापेक्षयाधिकपरिमाणत्वंनास्तु । अपितुअस्त्वित्यर्थः । किम्भूतस्यमुखस्यपूर्णिमाआस्यंप्रारम्भोयदुदयेपूर्णिमाया आस्यमिववा तथाभूतंहिमांशुंपूर्णचन्द्रञ्जित्वास्थितस्यकुतोधिकत्वमित्यतआह खलुयस्यावयवस्यमुखस्य तृतीयोभागोंशोभालोललाटं अर्धखण्डेन्दुःसम्रकलरूपश्चन्द्रः किंभूतइन्दुस्तद्भ्रूवावेवलक्ष्मकलङ्कंदधत्धारयद्मुखस्यतृतीयोभागोभालोयस्यचन्द्रार्धं एकेनांशेनमुख चन्द्राधिकमुखीचन्द्रार्धतुल्यभालचेयमितिभावः । भालोर्ध्व चन्द्रतुल्यस्तदधोभागःपूर्णचन्द्रतुल्यइत्यर्थः । जित्वेत्यनन्तरंस्थितस्येत्यध्याहार्यं अन्यथाभिन्नकर्तृकत्वात्क्त्वानुपपत्तिः ॥ ५३ ॥

व्यधत्तधातामुखपद्ममस्याः संभ्रमजमम्भोजकुले

खिलेऽपि ॥ सरोजराजीमृजतां दृशीयां नेत्राभिधे यौवतपत्रसेवाम् ॥ ५४ ॥

अथतेति वेधा अखिलेप्यंभोजकुले अस्यामुखपद्मं सम्राजं द्वादशराजमण्डलाधीशं अथवाकृत अथचतदर्पणयासम्यगतिशयेनराजतइतिसम्राजम् । अतएवनेत्राभिधेयौनेत्रसञ्ज्ञकौसरोजराजौ अन्यकमलापेक्षयाश्रेष्ठीनयनीभूतेकमलश्रेष्ठेतद्रूपौसरोजराजौ अदसीयामसुष्यतन्मुखकमलस्यसंबन्धिनःसेवांसृजतःकुरुतः अस्ययदिसम्राट्त्वंनस्यात्तर्हिकिमितिनेत्राभिधायाभ्यांसरोजराजाभ्यांसेवाक्रियेत क्रियतेतावदतोन्यथानुपपत्तिप्रमाणगम्यमस्यसम्राट्त्वमित्यर्थः । भैमीमुखनेत्राभ्यांविजिताब्जमितिभावः । अन्योपिसम्राड्राजभिःसेव्यते येनेष्टंराजसूयेनमण्डलस्येश्वरश्चयः । शास्तियश्चाज्ञयाराज्ञःससम्राडित्यमरः ॥ ५४ ॥

दिवारजन्योरविसोमभीते चन्द्राम्बुजेनिक्षिपतः स्वलक्ष्मीम् ॥ आस्येयदस्यानतदातयोःश्री रेकश्रियेदन्तुकदानकान्तम् ॥ ५५ ॥

दिवेति । दिवारजन्यो क्रमेणदिनरात्र्योः रविसोमाभ्यांसकाशाद्भीते भयंप्राप्तेभीतेर्भयाद्वा चन्द्राम्बुजेस्वलक्ष्मींस्वशोभां अस्याआस्येयदानिक्षिपतस्यापयतस्तदातयोश्चन्द्रपद्मयोःश्रीर्न सूर्याद्भीतेनचन्द्रेणदिवसेचन्द्राद्भीतेनकमलेनरात्रौयदास्वस्वशोभाभैमीमुखेनिक्षिप्तातदातद्द्वयमपिनिःशोभंजातं अथचनिक्षिपतोन्यासीकुरुतस्तदाचन्द्राम्बुजयोः श्रीर्नास्ति । इदन्तुभैमीमुखंपुनरेकस्यचन्द्रस्याम्बुजस्यवा श्रियाशोभयाकस्मिन्कदाकस्मिन्समयेदिनेरात्रौवानकान्तमपितुदिनेरात्रौचचन्द्रशोभयाकमलशोभयाचसशोभम् चन्द्रस्यशोभारात्रावेवनदिनेकमलस्यशोभादिनेएवनतुरात्रौभैमीमुखन्तुदिवारात्रौचसशोभमित्यर्थः । भैमीमुखञ्चन्द्रस्यलक्ष्मीरूपनिक्षेपंरात्रौतस्मैप्रयच्छतिदिनेनीतत्वात्तस्याःएवकमलञ्चलक्ष्मीरूपंनिक्षेपन्दिनेप्रयच्छतिरात्रौभीतत्वात् यनादिनिक्षेपोपिधनिनायदायाच्यते तदैवदातव्योभवतिनस्थापनीयश्चभवति यावच्चविद्यतेतावत्तेनैवस्वस्यालङ्कारःक्रियते । दिवाचन्द्रदीप्त्यारात्रौकमलदीप्त्याचात्मानमलङ्करोतीत्यर्थः ॥५५॥

अस्यामुखश्रीप्रतिबिम्बमेव जलाच्चतातान्मुकुरा च्चमित्रात् ॥ अभ्यर्थ्यधत्तःखलुपद्मचन्द्रौ विभूषणंयाचितकङ्कदाचित् ॥ ५६ ॥

अस्याइति । खलूत्प्रेक्षते । पद्मश्चन्द्रश्चोभौताततात्पितुर्जलाद्वमित्राद्वमुकुरादादर्शाच्च अभ्यर्थ्यअर्थात्प्रतिबिम्बमेवयाचित्वा अस्यानैम्यामुखश्री प्रतिबिम्बमेवसशोभमुखप्रतिबिम्बलक्षणमेव याचितकंयाच्ञयाप्राप्तंविभूषणङ्कदाचिद्दिनेरात्रौचधत्तोधारयतः । जलोत्पन्नत्वात्पद्मस्यपिताजलम् । वृत्तत्वोज्ज्वलत्वादिगुणयोगाद्दर्पणस्यचन्द्रसखत्वं पितृमित्राभ्यांयाचितकन्दीयते । याचितकालङ्कारःकदाचिद्दीयतेनसर्वदा । तदुक्तंयदाप्रतिबिम्बितभैमीमुखन्तदैवपितरञ्जलयाचित्वादिनेकमलंशोभते । दर्पणेयदाप्रतिबिम्बितंभैमीमुखन्तदैवदर्पणमित्रयाचित्वारात्रौचन्द्रः शोभतेनान्यथा तयोःशोभेत्यर्थः । भैमीमुखप्रतिबिम्बेनापिसदृशौयदापद्मचन्द्रौनभवतः तदाभैमीमुखसदृशौकुतस्तरांभवेतामपितुनकुतोपीतिभावः । चौपरस्परसमुच्चये । याचितकम् । याचितेनप्राप्तमित्यर्थेअपमित्ययाचिताभ्यांकङ्कनाविति कन् ॥ ५६ ॥

अर्कायपत्येभुवितिष्ठमाना भृङ्गैर्मितामक्षिभिरम्बुकेलौ ॥ भैमीमुखस्यश्रियमम्बुजिन्यो याचन्तिविस्तारितपद्महस्ताः ॥ ५७ ॥

अर्कायेति । अर्कायसूर्यायपत्येप्रियायतिष्ठमानाःस्वप्रकाशनेनसूर्यस्त्रौयंज्ञापयितुकामाः अम्बुजिन्योऽम्बुकेलौजलक्रीडासमयेभृङ्गरूपैरक्षिभिर्नेत्रैःकृत्वामिताज्ञातांनैम्याएवमुखस्यश्रियम्विस्तारिताःपद्मरूपाहस्तायाभिस्ताएवंभूताःसत्योभैमींयाचन्ति । खलूत्प्रेक्षते । अस्मत्पतिःसूर्योऽधुनासमागमिष्यतीतित्वन्मुखशोभयापिरुचिराभवामइतिभैमीमुखशोभांभैमींयाचन्तइत्यर्थः । कमलभैमीवदनयोःसर्वथासाम्यंनास्तीतिभावः । अन्योपिस्वामिनिहस्तंप्रसार्यद्रव्यंयाचते । अन्याप्यन्यदीयमलङ्कारंस्वालङ्कारकरणार्थंहस्तौप्रसार्ययाचति । क्रीडासमयेयाचितमवश्यंप्रभुणादीयते । अर्कायेतिश्लाघह्नुङ्स्थाशपांज्ञीप्स्यमानइतिसंप्रदानत्वम् । तिष्ठमानाःप्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदम् । स्वीयंभावंज्ञापयितुमितिहेतौवाशानच् । याचिर्द्विकर्मा ५७

अस्यामुखेनैव विजित्य नित्य स्पर्द्धी मिलत्कुङ्कुमरोषभासा ॥ प्रसह्य चन्द्रः खलु नह्यमानः स्याद्वतिष्ठन्परिवेषपाशैः ॥ ५८ ॥

अस्याइति । अस्यामुखेनैव नित्यस्पर्द्धी सदास्पर्धमानश्चन्द्रोविजित्यपराभूयखलुनिश्चितंप्रसह्यहठान्नह्यमानोबध्यमानएवअधुनापितिष्ठन् परिवेषएवपाशोबन्धनरज्जुर्यैस्तएवम्बिधःस्याद्भवेत् । नान्यथैतद्घटतइत्यर्थः । किंभूतेनमुखेनवर्तनार्थमिलत्संलग्नकुङ्कुमस्तदेवरोषज्ञाक्रोधलौहित्यंयस्मिन् मिलन्तीकुङ्कुमरूपारोषभायस्मिन्निति वा । भैमीमुखस्पर्द्धयासोपराधश्चन्द्रोमुखेनैवजित्वापरिवेषमिषेणबद्धइत्यर्थः ॥ चन्द्रोपिभैमीमुखसमानोनभवतीतिभावः । अन्योपिस्पर्द्धमानरोषारुणःसन्हठाद्विजित्यनिबध्नातिसोपिबद्धएवतिष्ठतीतिखलूत्प्रेक्षायामानह्यमानइवेति ॥ ५८

विधोर्विधेर्बिम्बशतानि लोपं लोपङ्कुहूरात्रिषु मासिमासि ॥ अभङ्गुरश्रीकमिमंकिमस्या मुखेन्दुमास्थापयदेकशेषम् ॥ ५९ ॥

विधोरिति । विधिर्मासिमासिप्रतिमासङ्कुहूरात्रिषुनष्टेन्दुकलाऽमावास्यारात्रिषु विधोश्चन्द्रस्यबिम्बशतानिबहूनिमण्डलानिलोपंलोपम्बिलुप्यविलुप्य अभङ्गुरश्रीकंअविनश्वरशोभंइमंप्रत्यक्षदृश्यमस्यामुखेन्दुंमुखचन्द्रमेकशेषंमेकश्वासौशेषश्चतथाभूतंअस्थापयत्किंस्थापितवान्किम् । अमावास्यायांसर्वथाचन्द्रादर्शनादियमुत्प्रेक्षा । क्षयित्वाच्चन्द्रबिम्बानांस्थानेअविनश्वरशोभत्वात्तत्कार्यकारित्वाच्च अस्यामुखलक्षणमिन्दुंस्थापितवानित्यर्थः । क्षयित्वादपिचन्द्रोमुखतुल्योनभवतीतिभावः । अन्योपिकारुःस्वयमेवकृतम्वस्तुअनुत्तमंज्ञात्वाविनाश्यसुन्दरतरम्वस्तुस्थापयति । अथवसरूपाणांमध्येकानिचित्सरूपाणिविलुप्यएकशेषः क्रियतेयश्चएकःशिष्यतेसतत्कार्यकारीभवति । लोपंआभीक्ष्ण्येणमुल्चेतिणमुल् ॥ ५९ ॥

कपोलपत्रान्मकरास्सकेतु र्भ्रूभ्यांजिगीषुर्धनुषाजगन्ति ॥ इहावलम्ब्यास्तिरतिंमनोभू रज्यद्वयस्योमधुनाधरेण ॥ ६० ॥

कपोलेति । मनोभूःकामोरतिंप्रीतिमथचरतिंस्वप्रियामवलम्ब्यअङ्गीकृत्य तयासहइहभैमीमुखेऽस्ति। किंभूतः कपोललिखितात्यत्रवल्लीरूपान्मकरात्सकेतुःसचिन्हस्तथाभ्रूभ्यांभ्रुवेवधनुषाअगज्जीगीषुस्तथाऽधरेणओष्ठलक्षणेनमधुनावसन्तेन कृत्वारज्यत्सानुरागोवयस्योवसन्तलक्षणमित्रंयस्य। अधरेणअधरसंबन्धिनामधुनारसेनकृत्वारज्यन्नोणोवयस्योमदनवृद्धिकरत्वादोष्ठएववयस्य भैमीमुखेमकलकामचिन्हदर्शनादत्रमदनोवसतीत्यनुमीयतइत्यर्थः । भैमीमुखावलोकनात्सबलस्यकामस्योत्पत्तिर्भवतीतिभावः । रज्यदितिकुषिरञ्जोरितिश्यन्यरस्मैपदे ॥ ६० ॥

वियोगवाष्पाञ्चितनेत्रपद्मच्छद्मार्पितोत्सर्गपयःप्रसूनौ ॥ कर्णौकिमस्यारतितत्पतिभ्यां निवेद्य पूपौविधिशिल्पमीदृक् ॥ ६१ ॥

श्लोकपञ्चकेनकर्णौवर्णयति । वियोगेति । अस्याःकर्णौरतिश्चतत्पतिःकामश्चताभ्यां निवेद्यस्यउपहारस्यसंबन्धिनौपूपौमण्डकौईदृकिंस्विद्विधिशिल्पं निर्माणमितिसम्भावना । एतदर्थंब्रह्मणाएतौनिर्मितावित्यर्थः। किम्भूतौवियोगजनितायेवाष्पा अश्रूणितैरञ्चितस्यपूजितस्यनेत्रपद्मस्यछद्मनाव्याजेनार्पितेवितीर्णेउत्सर्गार्थंन्दानार्थंपयःप्रसूनेजलपुष्पेययोस्तौ । अश्रुदानजलंनेत्रेचदानपुष्पेययोः समीपेतिष्ठतः । नैवेद्यसमीपेजलपुष्पेभवतः । आकर्णनेत्रत्वादित्यर्थः । कर्णदर्शनादपिमदनोत्पत्तिरितिभावः । पूपोपूपःपिष्टकःस्यादित्यमरः । निवेद्यअर्हार्थेयत् ॥६१॥

इहाविशद्येनपथातिवक्रः शास्त्रौघनिष्यन्दसुधाप्रवाहः ॥ सोस्याःश्रवःपत्रयुगेप्रणाली रेखेवधावत्यभिकर्णकूपम् ॥ ६२ ॥

इहेति । अतिवक्रोवैषम्यादतिकुटिलोव्यङ्ग्यगूढार्थयुक्तोदुर्बोधोनृणां शास्त्रौघस्यशास्त्रसमूहस्यनिष्पन्दःसारभागएवसुधाप्रवाहोऽमृतप्रवाहः येनपथाइहअस्याःकण्ठकूपेअविशत् । सपन्थाअस्याःभैम्याःश्रवःपत्रयुगेकर्णतालद्वययुगेप्रणालिकायारेखेव अभिकर्णकूपद्वयंरन्ध्रंलक्षीकृत्यकर्णकूपसमुखम्धावति यादृशीप्रणालीतादृशएवप्रवाहोभवति । अत्रचता

टङ्कप्रणालिकेकुण्डलाकारत्वाद्वक्रेच्यतस्तत्रगच्छन्प्रवाहोपिवक्रोयुक्तः । यद्वा वक्रगामिनोहिप्रवाहस्यप्रणालीरूपोमार्गोवक्रएवभवति । कूपञ्चानुधावति । अतीवक्रकर्णरेखारूपयाप्रणाल्याऽऽगत्वावक्रःशास्त्रसुधाप्रवाहः कर्णयुगेमेस्यास्वाप्रविष्टइत्यर्थः । वक्रोक्तिःसुधारूपाभवति । सकलकलाप्रवीणेयमितिभावः ॥ निष्यन्दतइतिनिष्यन्दः । पचेपचाद्यच् । अनुविपर्यभिनिभ्यःस्यन्दतेरितिपत्वम् । अभिकर्णंकूपमितिलक्षणेनाभिप्रतीतिसमासः ॥ ६२ ॥

अस्यायदष्टादशसम्विभज्य विद्याःश्रुतीदध्रतुरर्धमर्धम् ॥ कर्णान्तरुत्कीर्णगभीरलेखः किन्तस्यसंख्यैवनवानवाङ्कः ॥ ६३ ॥

अस्याइति । अस्या श्रुतीकर्णौअष्टादशविद्याःसम्विभज्यद्विधाकृत्य यद्र्धमर्धंप्रत्येकन्धारयामासतुः तस्यार्धस्यकर्णान्तःकर्णमध्येउत्कीर्णोद्धृतागभीरानिम्नारेखायस्यएवभूतोनवसंख्याद्योतकोऽङ्कोनवाऽपूर्वोश्चर्यरूपासङ्ख्याकिन्न अपितुभवत्येव नवसंख्याकाश्विद्यामेकाश्रुतिर्धारयति । अपरापिनवसंख्याकामितिद्योतनार्थंब्रह्मणाएवकर्णमध्येरेखरूपोऽष्टादशार्धगणनरूपोनवाङ्कोनिर्मितइत्यर्थः । तस्यैवार्धस्यसंख्यानवाकिंनवाङ्कएवेत्यर्थः । इतिवानवेतिचेन्निषेधार्थः । अस्याकर्णरेखानवाङ्कतुल्यासलक्षणेतिभावः ॥ ६३ ॥

मन्येमुनाकर्णलतामयेन पाशद्वयेनच्छिदुरेतरेण ॥ एकाक्रिपाश्रम्वरुणम्विजिग्ये नङ्गीकृतायासततीरतीशः ॥ ६४ ॥

मन्यइति । रतीशःकामोऽमुनैतदीयेनकर्णलतामयेन छिदुरेतरेणदृढतरेणपाशद्वयेनपाशरूपशस्त्रद्वयेनकृत्वा एकएवएकाकीपाशोयस्यैवम्विधम्वरुणंसुखेनविजिग्येजितवान्मन्ये किंभूतोनअङ्गीकृताआयासततिः श्रमसाहित्यंयेन पाशद्वयेनैकस्यपाशस्यजयःसुकरइति आयासराहित्यकर्णयुगं दृष्ट्वावरुणादयःसर्वेपिकामवशगाभवन्तीतिभावः । पाशोवन्धनशस्त्रयोरित्यमरः । विजिग्येविपराभ्याञ्जेरितितङ् ॥ ६४ ॥

आत्मैव तातस्य चतुर्भुजस्य जातश्चतुर्दोरुचितः स्मरोपि ॥ तच्चापयोः कर्णलते भ्रुवौ ज्यें वंशत्वगंशौ चिपिटौ किमस्याः ॥ ६५ ॥

आत्मेति । स्मरोपि तस्माच्चतुर्दोश्चत्वारो दोषा बाहवो यस्य तादृश उचितो युक्तः यतश्चतुर्भुजस्य श्रीकृष्णस्य तातस्य पितुरात्मैव स्वरूपमेव । आत्मा वै पुत्रनामासीति श्रुतेः । पितुः सदृश पुत्रो युक्त एव । तस्य चतुर्भुजत्वे अस्या भ्रुवौ तच्चापयोर्भ्रूरूपयोर्द्वयोः स्मरधनुषोश्चिपिटे विस्तृते कर्णलते एव वंश त्वगंशौ वेणुत्वग्भागौ ज्ये किम् । नैम्याद्भ्रुवौ कामधनुषी कर्णौ मौर्व्यौ द्वयो र्धनुषोर्मौर्वीद्वयं युक्तम् । निर्व्यापारस्य धनुषोऽवतारिता मौर्वी कोणे तिष्ठ ति कर्णलता अपि भ्रूधनुषोः कोणे विद्यते इत्यर्थः । चिपिटावित्यपि पाठः ६५

ग्रीवाद्भुतैवावटुशोभितापि प्रसाधिता माणवकेन सेयम् ॥ आलिङ्गितामप्यवलम्बमाना सुरूपतामाखिलोर्ध्वकाया ॥ ६६ ॥

ग्रीवास्वर्णयति । ग्रीवेति । सेयद्ग्रीवाद्भुतैवाश्चर्यभूतैव अर्थाद्भैम्याः । अद्भुतत्वमेव विशेषणैराह । किंभूता अवटुवा कृकाटिकया ग्रीवापुरोभागे नालङ्कृता पिः समुच्चये माणवकेनार्धहाराख्येन हारविशेषेणवा प्रसाधिता तथा आलिङ्ग्यतामपि आलिङ्गनयोग्यमतिसौन्दर्यमवलम्बमाना आश्रय न्ती अत एव सुरूपतां शोभनरूपत्वं भजत्या अयत एव स्त्रियोऽखिल ऊर्ध्वका यः शरीरोर्ध्वदेशो यस्याः कण्ठसौन्दर्यात्सकल शरीरोर्ध्वदेशः शोभते । ईदृ शी ग्रीवा नान्यस्या इत्यर्थः । असुरूपतान्नाक् अतिप्रियत्वात्प्राणरूपता ना गखिलोर्ध्वकायो यया कृत्वेति वा । या अवटुशोभिता न सा माणवकेन बालेन प्रसाधितेति विरोधादाश्चर्यम् । अथवा लिङ्ग्यतामर्दलविशेषत्वं तद्रूपत्वम वलम्बते । तां सुरूपतां नाग्नोऽखिला ऊर्ध्वका मृदङ्गविशेषा यस्या यया वा । हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वकः । आलिङ्ग्यश्चैव गोपुच्छा कारः । मृदङ्गा मुरजा भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रय इत्यमरः । सरूप वेति पाठो वा । ग्रीवया कृत्वाऽद्भुतेति एकपदे भैमी विशेषणानि । अवटु र्घाटा कृकाटिका । अर्धहारो माणवक इत्यमरः । भवेन्माणवको बाले हारभे देकुपुरुषे इत्यजपालः ॥ ६६ ॥

कवित्वगानप्रियवादसत्या न्यस्याविधाताव्यधिताधिककण्ठे ॥ रेखात्रयन्यासमिषादमीषां वासीयसीयस्त्रिविभाजसीमाः ॥ ६७ ॥

कण्ठवर्णयति । कवित्वेति । विधाताअस्याअधिककण्ठेकण्ठे कवित्वगानंप्रियवाद्‌प्रियवचनंसत्यञ्चतानि न्यधितविरचितवान् । कुतोज्ञातमित्यतआह । सोयस्विधाताकण्ठेरेखात्रयस्यन्यासस्यमिषाच्चतुर्णाममीषांकवित्वादीनांपृथग्वासायस्थित्यर्थंसीमाश्चतस्रोविवभाजविभक्तवान् रेखात्रयेणचत्वारिस्थानानिभवन्ति । कवित्यादिकलावतीत्वङ्कम्बुकण्ठीत्वञ्चअस्यामस्तीतिभावः रेखात्रयाङ्किताग्रीवाकम्बुग्रीवेतिकथ्यते ॥ ६७ ॥

बाहूप्रियाजयतांमृणालं द्वन्द्वेजयोनामनविस्मयोस्मिन् ॥ उच्चैस्तुतच्चित्रममुष्यभग्न स्यालोक्यतेनिर्व्यथनंयदन्तः ॥ ६८ ॥

श्लोकद्वयेनबाहूवर्णयति बाहूइति । प्रियायाःबाहूमृणालञ्जयताम् । अनुमतमेतत् । यतोऽस्मिन्द्वन्द्वेयुगलद्वयोजयोनामयत्सनविस्मयः । अतिगौरत्वादतिमृदुत्वाच्चबाहुभ्यांमृणालञ्जितमिनाश्चर्यमित्यर्थः । अयचद्वाभ्यामेकःसुखेनपराजीयते अथचद्वन्द्वयुद्धेजयोऽभवत्यत्रनाश्चर्यं एकस्यजयोयुद्धेभवत्येव । तत्तु तत्पुनरुच्चैरतिशयितञ्चित्रमाश्चर्यं यद्भग्नस्यजितस्यअमुष्यान्तःकरणंनिर्व्यथनंव्यथारहितमालोक्यते । पराजितस्यान्तःकरणंसव्यथम्भवति । अस्यतुनेत्याश्चर्यं द्विधाकृतमृणालमध्ये छिद्राणिदृश्यन्ते नैमीभुजौहिमृणालादपिगौरतरौकोमलतराविति भावः । द्वंद्वंकलहयुग्मयोः । छिद्रंनिर्व्यथनमित्यमरः । पक्षेनिर्गतंव्यथमान्निर्व्यथनमितिनिरादयइतितत्पुरुषः ॥ ६८ ॥

अजीयतावर्तशुभंयुनाभ्या न्दोर्भ्यांमृणालङ्किमुक्तोमलाभ्याम् ॥ निःसूत्रमास्तेघनपङ्कमृत्सुमूर्तासुनाकीर्तिषुतन्निमग्नम् ॥ ६९ ॥

अजीयतेति । आवर्तेनदक्षिणावर्तेनशुभंयुःशुभान्वितारमणीयानाभिर्यस्यास्तयाभैम्या कोमलाभ्यान्दोर्भ्याम्भुजाभ्याङ्कृत्वामृणालमजीयतपराजि

तङ्किसुसम्भावनायाम् । अतएवनि सूत्रंनिश्चयस्यंस्फूर्तिरहितंनिरुपायं सदृशघतन्तुरहितन्तन्मृणालंघनपङ्कमृत्सुनिविडकर्दमम‍ृत्तिकारूपासुमूर्ता सुशरीरधारिणीषु अकीर्तिषुअयशःसुनिमग्नङ्किमुनास्ते अपितुताभ्याञ्जितत्वादेवम्विधमास्ते । अयशसःश्यामत्वान्मृद्रूपत्वम् । अतिकोमलंमृणालन्तन्तुरहितम्भवति । अन्योपिकेनचिज्जितोनिरुपाय.सन्नकीर्तिषुनिमग्नस्तिष्ठति । कोमलमपिमृणालन्नैमीभुजसदृशंनेतिभावः । सूत्रन्तुसूचनाग्रन्थे सूत्रन्तन्तुव्यवस्थयोरितिविश्वः । शुजयुःमत्वर्थेऽहंशुभमोर्युस्‌

रज्यन्नखस्याङ्गुलिपञ्चकस्य मिषाद्सौ हैङ्गुल
पत्त्रतूणे ॥ हैमैकपुंखास्तिविशुद्धपर्वा प्रियाकरेप
ञ्चशरीस्मरस्य ॥ ७० ॥

श्लोकत्रयेणपाणिम्वर्णयति । रज्यदिति । असौप्रत्यक्षदृश्या स्मरस्यपञ्चशरी रज्यन्त.स्वयमेवरक्ताभवन्तोनखायस्यअङ्गुलीनापञ्चकस्यमिषाद्व्याजात्प्रियायाभैम्याः करेअस्ति । किंभूते रक्तत्वाद्धैङ्गुलहिङ्गुलेनरक्तंपत्त्रन्तज्जनितंयत्तूणमिषुधिस्तद्रूपे किंभूतापञ्चशरी । हैमाःसुवर्णमयाएकेश्रेष्ठा.पुंखामुखानियस्याःसा तथाविशुद्धानिऋजूनिपर्वाणिग्रन्थयोयस्याःसा मदनस्यपुष्पायुधत्वादिषुधिरपिपुष्पमयस्तच्चपुष्पसाम्याद्रक्तपत्त्रमेव । इषुधिश्चहिङ्गुलेनरज्यते । करस्येषुधित्वम् । पञ्चाङ्गुलीनांपञ्चबाणत्वं रिक्तनखानाञ्चसुवर्णपुंखत्वम् । उभयोरपिविशुद्धपर्वत्वं अत्युत्तमञ्चसुवर्णंरक्तम्भवति । भैमीकराङ्गुलिदर्शनात्कामप्रादुर्भावोभवतीतिप्रतिपादितवर्णने पञ्चशरत्वम् । हैङ्गुलन्तेनरक्तमित्यण् । पञ्चशरीसमाहारेद्विगोर्ङीप् ७०

अस्याःकरस्यर्द्धनगर्द्धिसृद्धं यालत्वमापत्खलुप
ल्लवोयः ॥ भूयोपिनामाधरसाम्यगर्द्धं कुर्वन्कथ
मस्तुसनप्रवालः ॥ ७१ ॥

अस्यादिति । यःपल्लवोऽस्याःकरस्यर्द्धनस्यपाणिस्पर्धयागर्द्धिगर्धनंअभिलाषस्तेनऋद्धिराधिक्यं यस्य । यद्वास्पर्धनेगर्द्धिऋद्धिरभिलाषसमृद्धिर्यस्य भैमीपाणिभ्यान्तुल्योहमितिचित्तएवम्विधःसन्बालत्वंनवीनत्वं आपत्खलु । यस्मान्नवीनस्यैवतस्यरक्तत्वात्पाणिसाम्याहत्वादपचबालत्वमज्ञत्व

माप । स्वापेक्षयाऽधिकेनभैमीपाणिना सह स्पर्धमानत्वात् । अथस्वयं पद्मोलवः पल्लवश्चरणावयवः पाणिनायदास्पर्धतेतदासमूर्खएव । पाणेरु त्कृष्टत्वात्तस्यचातिनिकृष्टत्वादित्यर्थः । सपल्लवोभूयःपुनरपिअधरसाम्यग र्वंओष्ठतुल्योहमितिगर्वकुर्वन् प्रकृष्टोबालोऽलिनूतनःकथमस्त्वानास्तु । अ पितुतादृशएवभवतुमूर्खतरइत्यर्थः । नामेत्युपहासे । नवपल्लवादप्यति रिक्तौभैमीकरावितिभावः । अधरवर्णनंप्रासङ्गिकम् । मूर्खेभकेपिबालः स्यादित्यमरः ॥ ७१ ॥

अस्यैत्रसर्गाय भवत्करस्य सरोजसृष्टिर्मम हस्तलेखः ॥ इत्याह धाता हरिणेक्षणायाः किं हस्तलेखीकृतया तयास्याम् ॥ ७२ ॥

अस्येति । धाताब्रह्मा अस्यांहरिणेक्षणायामस्यांविषये हस्तेनलेखी कृतयालिखितयाऽथच अभ्यस्तयातयासरोजसृष्ट्याकृत्वाइतिआहकिम्। पूर्वोक्तंब्रूतेकिम् । इतिकिम् । हेभैमिअस्यभवत्करस्यत्वत्पाणेरेव सर्गा यनिर्माणाय सरोजसृष्टिर्ममहस्तलेखोऽभ्यासोऽभूदिति । हस्तयोःकम लादप्यतिरमणीयत्वलक्षणोभूतरेखाजन्यकमलत्वंचसूचितम् । अन्योपि शिल्पीपूर्वंहस्तलेखंकरोतिपश्चात्सुन्दरतरंवस्तुनिर्माति ॥ ७२ ॥

किं नर्मदायाममसेयमस्या दृश्याभितो बाहुलतामृणाली ॥ कुचौ किमुत्रस्यतुरन्तरीपे स्मरोष्मशुष्यन्नवबाल्यवारः ॥ ७३ ॥

षड्भिःसालङ्कारौकुचौवर्णयति । किमिति । अभितःपार्श्वद्वयेदृश्याद र्शनयोग्यारमणीया ममनर्मदायादर्शनमात्रेणसुखदायाः अस्याभैम्याःसेय म्बाहुलतामृणालीकिमितिसम्भावना । नर्मदायानद्यास्तटद्वयेपिमृणाली दृश्याभवति । तथेयमपिनर्मदा । ततश्चैतदीयबाहुवल्ल्यपिमृणालीतिस म्भाव्यते । अस्याःकुचौअन्तरीपेद्वीपेकिमुत्रस्यतुः । उन्मज्जतुः किंभू तायाःस्मरोष्मणातारुण्यतेजसाकृत्वाशुष्यतरंअतितराम्विनश्यदवस्थम्बा ल्यमेववाजलंयस्याः । बाल्यनाशात्तारुण्योद्गमाच्चद्वीपतुल्यावत्युच्चौकुचौ अस्याइतिभावः । जलशोषान्नर्मदायांद्वीपयोरुन्मज्जनंयुक्तम् । बाहुलते

लिपृथग्वा । आप.स्त्रीभूम्निवार्वारीत्यमरः । अन्तरीपंद्व्यन्तरुपसर्गेभ्यो पईत् । ऋक्पूरब्धूरितिसमासान्तः ॥ ७३ ॥

तालंप्रभुस्यादनुकर्तुमेता वृत्यानसुस्थोपतितंन तावत् ॥ परंचनाश्रित्यतरुंमहान्तङ् कुचौकृशा ङ्ग्याःस्वयमेवतुङ्गौ ॥ ७४ ॥

तालमिति । तालंफलद्विविधमपिपतितस्वापतितञ्च । अपतितन्ता लङ्कर्त्तुं एतौकृशाङ्ग्यामैम्याःकुचौअनुकर्तुप्रभुसमर्थस्यात् । यतोपतित मैम्याःकुचावनुकर्त्तुंनतावत्प्रभुसमर्थं यतउत्थानेनपरस्परसंश्लेषोद्गमनेनसु स्थौनिरन्तरत्वेनसुन्दरावित्यर्थः तस्यपतितत्वात्तयोरुन्नतत्वात्साम्यंनयु ज्यतइत्यर्थः । अन्योपिपातित्यदोषयुक्तोन्यंसुकृतिनंसमीकर्तुंनशक्नोत्येवे त्यर्थः । द्वितीयस्यापतितस्याप्यसामर्थ्यमाह । परमतिशयेनमहान्तमुच्चम थचपरमन्यमुच्चंतालवृक्षमाश्रित्यतुङ्गमपिकुचौसमीकर्त्तुमसमर्थयतः कुचौ स्वतएवपरानपेक्षमेवतुङ्गौउच्चतरौ । स्वतस्तुङ्गस्यपराश्रयेणचतुङ्गस्यकुतः साम्यम् । तालफलाद्प्यतिवृत्तौउच्चतरौचभैमीकुचावितिभावः ॥ ७४ ॥

एतत्कुचस्पर्द्धितयाघटस्य ख्यातस्यशास्त्रेषुनिद र्शनत्वम् ॥ तस्माच्छिल्पान्मणिकादिकारी प्रसि द्धनामाजनिकुम्भकारः ॥ ७५ ॥

एतदिति । एतस्याभैम्याःकुचस्पर्धितयास्तनस्पर्द्धितयाख्यातस्यप्रसिद्ध स्यघटस्यन्यायशास्त्रादिषुयत्कृतकन्तदनित्यं यथाघटइतियन्नित्यंतदकृत कमपिनयथाघटइत्यन्वयव्यतिरेकाभ्यांनिदर्शनत्वंदृष्टान्तत्वमजनिजातम् । प्रसिद्धस्यहिदृष्टान्तत्वम् । अन्योप्यप्रसिद्धःप्रसिद्धस्पर्द्धयाख्यातोभवति । मणिकादिकारी अलिञ्जरादिकारीयतस्माच्छिल्पाद्भैमीकुचस्पर्द्धिघटनि र्माणादेवप्रसिद्धंनामयस्यैवम्विधःसन्कुम्भकरोऽजनिजातः । मणिका दिकारित्वात्कुम्भकारत्वप्रसिद्धिर्न किन्तुभैमीस्तनस्पर्द्धयाख्यातस्यकुम्भस्य निर्माणात्कुम्भकारत्वप्रसिद्धिः·नान्यत्कारणम् । वरम्विरोधोपिसमंमहा त्मभिरितिभारविवचनात् । कुम्भपरिमाणावेतस्कुचावितिभावः । अलि ञ्जरःस्यान्मणिकइत्यमरः ॥ ७५॥

गुच्छालयस्वच्छतमोदबिन्दु वृन्दाभमुक्ताफलफे
निलाङ्के ॥ माणिक्यहारस्य विदर्भसुभ्रू पयोध
रैरोहतिरोहितश्रीः ॥ ७६ ॥

गुच्छेति । माणिक्यमयस्यहारस्यरोहितश्रीः लोहिताकान्तिर्विदर्भसुभ्रूपयोधरेभैमीकुचेरोहतिप्रादुर्भवति । किंभूतेगुच्छोहारविशेषआलयआश्रयोयेषान्तानिस्वच्छतमानिनिर्मलतमानिउदकबिन्दुवृन्दवज्जलबिन्दुसमूहवद् आभायेषान्तानिमुक्ताफलानितैः फेनिलःफेनयुक्तद्रवोज्ज्वलतरोऽङ्कोमध्योयस्य । मुक्ताहारमाणिक्यहाराभ्यांभैमीकुचौशोभेतेइतिभावः । अथचपयोधरेमेघेरोहितश्रीः ऋजुशक्रधनुःशोभाप्रादुर्भवतीतिवक्तिः । हारभेदायष्टिभेदागुच्छगुच्छार्धगोस्तनाः । इन्द्रायुधंशक्रधनुस्तदेवऋजुरोहितम् । रोहितोलोहितोरक्तइत्यमरः । फेनिलःमत्वर्थेफेनादिलश्चेतिइलच् ॥ ७६ ॥

निशङ्कसङ्कोचितपङ्कजोय मस्यामुदीतोमुख
मिन्दुबिम्बः॥ चित्रन्तथापिस्तनकोकयुग्मं नस्तो
कमप्यञ्चतिविप्रयोगम् ॥ ७७ ॥

नि॰शङ्केति । यदेतन्मुखमस्याभैम्यामयमिन्दुबिम्बएवोदितः किंभूतः निःशङ्कंयथातथाबलात्कारेणसङ्कोचितानिमिलितानि अथचजितानिकमलानियेन । मुखमिदंनकिन्तुचन्द्रोयमित्यर्थः । चन्द्रेणाहिकमलानिसङ्कोच्यन्ते । मुखनैकत्वात्संकुचितेकमलेएवैतेनतुकुचावित्यर्थः ॥ तथाप्युदितेपिचन्द्रेस्तनलक्षणङ्कोकयुग्मञ्चक्रवाकयुग्मङ्कर्तृ स्तोकमपिअल्पमपिविप्रयोगञ्वियोगंनाञ्चतिनप्राप्नोतिमिलितमेवयत्तिष्ठतितच्चित्रमाश्चर्यम् च चक्रवाकयुग्मञ्चन्द्रोदयेवियोगंप्राप्नोति । कुचलक्षणंनेत्याश्चर्यम् । चक्रवाककमलकलिकाकारावतिसन्निकृष्टौचैतत्कुचावितिभावः ॥ ७७ ॥

आभ्याङ्कुचाभ्यामिभकुम्भयोःश्री रादीयतेसाच
तयोर्नताभ्याम् ॥ भयेनगोपायितमौक्तिकौतौ प्र
व्यक्तमुक्ताभरणाविमौयत् ॥ ७८ ॥

आभ्यामिति । आभ्यांप्रत्यक्षदृश्याभ्याङ्कुचाभ्याङ्कुम्भयोःश्रीःशोभासंप

ग्रबलाद्गृह्यते आदीयते । इभकुम्भश्रियोऽनर्घनादित्यर्थः । ताभ्यामिभ कुम्भाभ्यामनयोः कुचयोरसौनादीयते । कुतोज्ञातमित्यत आह । यद्य स्मात्ताविभकुम्भौ भयेनार्थात्स्तनसकाशादेवं भीत्या गोपायितमौक्तिकौ इ मौ कुचौ तु प्रव्यक्तमुक्ताभरणौ । प्रकटमुक्तालङ्करणौ । मुक्ताग्रहणभयेन कुम्भाभ्यां स्वमुक्तागोपिताः । इभकुम्भाभ्यामपिअधिकश्रीभौ कुचौ रमणी याविति भावः । अन्योपि भीतः स्वरत्नानि गोपायति निर्भयस्तु प्रकटयति ७८

करागजाग्रच्छतकोटिरर्थी ययोरिमौ तौ तुलयेत्कु चौचेत् ॥ सर्वन्तदा श्रीफलमुन्मदिष्णु जातम्वटी मप्यधुनानलब्धुम् ॥ ७९ ॥

करेति । करागे जाग्रच्छिद्यमानः शतकोटिर्वज्रो यस्य स इन्द्रो ययोः कु चयोरर्थी याचकः कुचमर्दनाभिलाषी । उन्मदिष्णु लक्षणया पक्वं सर्वं श्रीफ लं बिल्वफलं कर्तृ चेद्यदि तौ इमौ कुचौ तुलयेत् समीकुर्यात् साम्योज्झिता भीयदि भवेत्तदा तर्हि तद्बिल्वफलं अधुना वटीमपि लक्षणया स्तनलावण्यपे शलमपि लब्धुं न जातं नोत्पन्नम् । इन्द्राद्युपसर्गोविष्णुः यदिन्द्रोप्येतयोरभि लाषी ताभ्यामतिसुन्दराभ्यां कुचाभ्यां पक्वमपि बिल्वफलन्तुल्यन्नभवेदित्य र्थः । यथा उन्मत्तस्यधर्मयानी यस्तेनावज्ञातत्वात्कपर्दकमूल्यमपि नलभते त था असितुच्छजातमित्यर्थः । बहुसङ्ख्याकमपि द्वाभ्यां समं नाभूदिति स र्वपदेन सूचितम् । अथ च करागे जाग्रत्यः शतकोटयो द्रव्यसंख्या यस्य सोपि य योरर्थी ग्रहणाभिलाषी ताविमौ कुचौ सर्वलक्ष्मीफलन्तुलयेत् तदा उन्मदि ष्णु त्वाद्धटीं वराटिकामपि लब्धुं न जातं न योग्यमित्यर्थः वट कपर्दके न्यग्रोध इति विश्वः । स्त्रीत्वस्यात्काचिन्मृणाल्यादिर्विवक्षापचयेयदीत्यमरसिंहवच नादल्पोवटो वटी । उन्मदिष्णुरित्यत्रालङ्कृञीति इष्णुच् ॥ ७९ ॥

स्तनावटे चन्दनपङ्किलेऽस्या जातस्य यावद्युवमा नसानाम् ॥ हारावलीरत्नमयूखधारा कारा: स्फुर न्ति स्खलनस्य रेखाः ॥ ८० ॥

स्तनेति । चन्दनेन पङ्किले आर्द्रे चन्दनयुक्ते अस्याः स्तनावटे गभीरे स्त नमध्ये जातस्य निम्नस्य यावद्युवमानसानां सर्वतरुणान्तः करणानां स्खल

नस्यपतनस्यहारावल्यांरत्नानितेषांमयूखधाराःकिरणपरम्पराःआकारःस्व रूपंयासान्तारेखाः स्फुरन्तिप्रतिभासन्ते । किरणपरम्परेयंनभवतिकिन्तु एताःपतनरेखाएवेति । एवंभूतंस्तनमध्यंदृष्ट्वासर्वेपिमुह्यन्तीति तत्रत्ख लनस्योक्तत्वात्तत्रालब्धावकाशाइतिभावः । पङ्किलेगर्तेलोकस्यपतनात्तद्रे खाश्चोत्पद्यन्ते । अवटःस्यात्खिलेगर्तेकूपेकुहकजीविनीतिविश्वः । पङ्किलः पिच्छादिः । यावन्तोयुवानस्तावतामितियावद्युवंसाकल्येव्ययीभावः ॥८०॥

क्षीणेनमध्येपिसतोदरेण यत्प्राप्यतेनाक्रमणम्व लिभ्यः ॥ सर्वाङ्गशुद्धौतदनङ्गराज्य विजृंभितम्भी मभुवीहचित्रम् ॥ ८१ ॥

वलीसहितमुदरम्वर्णयति । क्षीणेनेति । मध्येपिअवलग्नेसताविद्यमा नेनक्षीणेनकृशतरेण उदरेणयद्वलिभ्यस्त्रिवलिभ्यःसकाशादाक्रमणमभि भवोनप्राप्यते तत्सर्वाङ्गशुद्धौसर्वाङ्गानांशुद्धिर्यस्याएवंभूतायामिहंअस्यां भीमभुविभैम्याञ्चित्रमाश्चर्यरूप अनङ्गराज्यस्यकामराज्यस्यविजृंभितम्विल सितम् । अद्भुतलावण्यवशात्सूक्ष्माणाम्वलीनांपतितत्वात्तान्निरतिकृश मुदरंनाक्रान्तमित्यर्थः । अन्येनापिक्षीणेनदुर्बलेनोन्नयोः सीमायांविद्य मानेनापिस्वाम्यमात्यादीनांसप्ताङ्गानांशुद्धौसत्यामपिबलिष्टेभ्योभयानका यांभूमौपराभवोनप्राप्यतेतत्सप्ताङ्गरक्षितस्य दुर्बलस्यविलसितमाश्चर्यरूप म् । वलीनांसर्वाङ्गशुद्धेविद्यमानत्वात्स्वचसर्वाङ्गराहित्यात्सीमनिवर्तमान त्वाच्चपराभवकारणेसत्यपियत्पराभवोनप्राप्तस्तदाश्चर्यमित्यर्थः । यथाभी मस्यभुविराज्येअनङ्गस्यराज्यङ्कथं अन्यभूमावन्यराज्यभावासम्भवात् । अथ चभीमस्यसहादेवस्यऋतुविकासराज्यमित्यप्याश्चर्यम् । परैर्ग्रहीतुमशक्यत्वा दतिविषमायांभूमौपराभवोनप्राप्यतेअत्रचित्रम् अपितुनेतिकाकुर्वा ८१ ॥

मध्यन्तनूकृत्ययदीदमीय म्वेधानदध्यात्कमनीय मंशम् ॥ केनस्तनौसंप्रतियौवनेऽस्या सृजेदनन्य प्रतिमाङ्गदीप्रे: ॥ ८२ ॥

मध्यम्वर्णयति । मध्यमिति । वेधाइदमीयंएतदीयंमध्यन्तनूकृत्यअ तिकृशंकृत्वा मध्यमस्थिनंकमनीयमंशभागंयदिनदध्यात् । स्थापिन स्थापयेत्तर्हिसम्प्रतियौवनेनानन्यप्रतिमा अनन्यतुल्याअङ्गयष्टेर्दीप्तिःका

त्तियैसाःएवंजूतायाअस्याःस्तनौकेनांशेनप्रकारेणवासृजेत्एतदीयस्या तिसुन्दरस्यमध्यांशस्यसंग्रहंकृत्वातेनैवांशेनयौवनेकुचौकृतवानित्यर्थः । मध्योतिकृशःस्तनौचातिसुन्दराविति भावः ॥ ८२ ॥

गौरीवपत्यासुभगाकदाचि त्कर्त्तेयमप्यर्धतनूसम स्याम् । इतीवमध्येनिदधेविधाता रोमावलीमे चकसूत्रमस्याः ॥ ८३ ॥

रोमावलीम्वर्णयति । गौरीति । विधाताअस्यामध्येरोमावलीलक्षणं मेचकसूत्रंनीलंसूत्रंइतीवनिदधेकृतवान् । इतिकिम् सुभगासौभाग्यवतीय मपिपत्याप्रियेणकृत्वाकदाचित् अर्धतनूसमस्यांशरीरार्द्धपूरणाङ्कर्त्ताकरिष्य ति । केवगौरीव । पार्वतीईश्वरेणअर्धतनूसमस्यांयथाकृतवतीतथेयम पि । इयंरोमावलीनकिन्तुअर्धशरीरघटनार्थंनीलंसूत्रंनिहितमित्यर्थः । कर्त्तेतिलुट् ॥ ८३ ॥

रोमावलीरज्जुमुरोजकुंभौ गम्भीरमासाद्यचना भिकूपम् ॥ मद्दृष्टितृष्णाविरमेद्यदिस्या न्नैषा स्त्रतैषासिचयेनगुप्तिः ॥ ८४ ॥

पुनरपिसनाभिरोमालीम्वर्णयति । रोमेति । मद्दृष्टितृष्णाममदर्शन वाञ्छा रोमावलीलक्षणांरज्जुंउरोजलक्षणौकुम्भौगभीरंनाभिलक्षणंकूपमा साद्यप्राप्यतर्हिविरमेच्छाम्येत् । यदिएषांरोमावल्यादीनांसिचयेनवस्त्रेणै षागुप्तिर्वेष्टनंनस्यात्तदतखेदे । एवन्तुनजातमितिखेदः । अवेष्टितानामे षांसुखेनद्रष्टुंशक्यत्वाद्दर्शनवाञ्छाशाम्येत् वस्त्रावृतत्वात्तुनेत्यर्थः । अथवा ऽनावृतदर्शनाद्विरागः आवृतदर्शनात्त्वनुरागवशात्पुनःपुनर्द्रष्टुमेवाद्वैतइ त्यर्थः । रोमावल्यादेर्वस्त्रेणवेष्टनादौचित्यंसूचितम् । अथचदोरकङ्कुम्भं गभीरंकूपंचप्राप्यतृष्णापिपासातदाशाम्येत् । यद्येनेषांअसिचयेनलक्षणा याखड्गधारीपुरुषसमूहेनरक्षणंनस्यात् । राजैकभोग्यःकूपःखड्गपाणि भीरक्ष्यतेऽतोजलाहरणसामग्रीसद्भावेपिपिपासानशाम्यतीति । अतिग भीरनाभिरियमितिभावः । तृष्णेस्पृहापिपासेद्वेइत्यमरः । विरमेत्व्याङ् परिभ्योरमइतिपरस्मैपदम् ॥ ८४ ॥

उन्मूलितालानविलाभनाभि छिन्नांस्खलच्छृंखल रोमदामा ॥ मत्तस्यसेयंमदनद्विपस्य प्रस्वापवप्रो च्चकुचास्तुवास्तु ॥ ८४ ॥

उन्मीलितेति । सेयंभैमीमत्तस्यउन्नटस्याथवगलन्मदजलस्य मदनरूपस्य द्विपस्यवास्तुवसतिगृहमस्तु । किंभूता । उन्मूलितमुत्पाटितंयदालानंबन्धनस्तम्भःतत्सम्बन्धियद्विलकृतःतदाभातत्तुल्यानिम्नानाभि र्यस्याःसा तथा छिन्नं त्रुटितंस्खलत्पतितंशृंखलन्ततुल्यारोमराजिर्यस्याः । तथाप्रस्वापायगजस्यशयनार्थंस्वप्रवत्निर्मितवरवडवत्। उच्चकुचासुन्नतकुचानिमामेवावलंब्यकामोऽतिमत्तोजातइतिभावः । रोमावल्याश्छिन्नत्वंवलिमध्यगत्वात् मत्तस्यगजस्यवासगृहमप्येतादृशंभवति शृङ्खलन्त्रिष्विर्तिअमरः ॥ ८५ ॥

रोमावलीभ्रूकुसुमैःस्वमौर्वी चापेषुभिर्मध्यललाट मूर्ध्नि ॥ व्यस्तैरपिस्थास्नुभिरेतदीयै जैत्रःशचित्रं रतिजानिवीरः ॥ ८६ ॥

रोमावलिरिति । सरतिजानिःवीरःकाम.शूरश्च एतदीयैःक्रमेणरोमावलिश्चभ्रूश्चौचकुसुमानिचतद्रूपैः स्वमौर्वीचापेषुभिःकृत्वाजैत्रःजेतालोकत्रयमपिजयतीत्यर्थः । ममचित्रम् । किंभूतैःरोमावलिभ्रूकुसुमैःमूर्ध्नि ललाटमूर्ध्नि व्यस्तैःपरस्परासंबद्धैःस्थास्नुभिरपिस्थितैरपि । रोमावलीरूपाज्याम ध्येभ्रूरूपञ्चापंललाटेमूर्ध्निकुसुमरूपावाणाश्चविद्यन्ते एवंपृथक्स्थितैरपि लोकत्रयजातादाश्चर्यम् । अन्योहिधानुष्कोमौर्वीधनुर्वाणैःसम्मिलितैरेवजयतिनतुपृथक्स्थितैनैकेनअत्रतुविपरीतदर्शनादाश्चर्यम् । प्रत्येकमस्यारोमावलीभ्रूकुसुमचापदर्शनात्कामप्रादुर्भावोभवतीतिभावः । मूर्ध्नीतिप्राप्यङ्गत्वादेकवद्भाव.स्थास्नुजिःष्णुजिस्थश्चग्स्नुः । रतिजानिःजायायानिङ् पुष्पाणिवाणाःकुचमध्वलानिभ्रूचौधनुर्भालमलङ्कुरिष्णु ॥ रोमावलीमध्यविभूषणंज्यातथापिजेतारतिजानिरेतैरितिश्लोकान्तरमपिव्याख्यातप्रायम् ८६

स्मरस्याःखलुग्रन्थिनिवद्धकेश मल्लीकदम्बप्रतिविम्बवेषात् ॥ स्मरप्रशस्तीरजताक्षरेयं पृष्ठस्थली हाटकपट्टिकायाम् ॥ ८७ ॥

पृष्ठस्थलीं वर्णयति। अस्या इति। अस्याः ग्रन्थ्यानिबद्धाः केशाः केशपाशः तत्र मल्लीकदम्बानि विकसितमल्लीपुष्पसमूहास्तेषां प्रतिबिम्बस्य वेषात् व्याजात् पृष्ठस्थलीलक्षणायां हाटकपट्टिकायां सुवर्णघटितपट्टिकायां दृश्यमाना रजताक्षरारूप्यमयाक्षरा स्मरप्रशस्तिः कामयशः प्रशस्तिः । उत्तमस्य प्रशस्तिः सुवर्णपट्टिकायां रजताक्षरैर्लिख्यते । भैमीपृष्ठं सुवर्णपट्टिकारूपं तत्र केशग्रन्थिषु निबद्धमल्लीपुष्पाणां प्रतिबिम्बितत्वाद्रजताक्षरत्वम् । वेणीनिबद्धकेशपुष्पाणां प्रतिबिम्बसम्भवाद्ग्रन्थिनिबद्धेत्युक्तम् । सुवर्णपट्टिकातुल्या मदनजनिका च भैमीपृष्ठस्थलीति भावः । खलु निश्चितम् ॥ ८७ ॥

चक्रेण विश्वं युधि मत्स्यकेतुः पितुर्जितं वीक्ष्य सुदर्शनेन ॥ जगज्जिगीषत्यमुना नितम्ब द्वयेन किं दुर्लभदर्शनेन ॥ ८८ ॥

श्लोकद्वयेन नितम्बं वर्णयति । मत्स्यकेतु कामः पितुः श्रीकृष्णस्य सुदर्शनेन चक्रेण युधि विश्वं जितं वीक्ष्य वस्त्राच्छादितत्वाद्दुर्लभं दर्शनं यस्य तेन अमुना नितम्बद्वयेन नितम्बरूपचक्रेण कृत्वा जगज्जिगीषति किम् । किमिवार्थः । सुलभदर्शनेनापि पितुश्चक्रेण जगज्जितं मया तु दुर्लभदर्शनेन सुदर्शनादधिकेन चक्रेण । पुत्रेण पित्रपेक्षया अधिकेन भाव्यमिति मनीषया कामेन कृतमित्यर्थः । कामजनकोऽस्या नितम्ब इति भावः जिगीषति । सन्लिटोर्जेरिति कुत्वम् ८८

रोमावलीदण्डनितम्बचक्रे गुणञ्च लावण्यजलञ्च बाला ॥ तारुण्यमूर्त्तेः कुचकुम्भकर्त्तु र्बिभर्त्ति शङ्के सहकारिचक्रम् ॥ ८९ ॥

रोमावलीति । बाला भैमी तारुण्यमूर्त्तेः तारुण्यस्वरूपस्य तारुण्यकुलालस्य कुचकुम्भकर्त्तुः कुचकुम्भकारस्य एतत्सहकारिचक्रं सहकारिकारणवृन्दं बिभर्त्ति । अहं शङ्के । एतत्किम् । रोमावल्येव चक्रभ्रामकदण्डः नितम्बरूपचक्रञ्च गुणान् शीलादिलक्षणानेव गुणान्दोरकञ्च । लावण्यरूपञ्जलञ्च । कुम्भकारस्य दण्डचक्रजलदोरकलक्षणं सहकारणम्भवति । तारुण्ये सत्येता निमा दुर्भूतानीति भावः ॥ ८९ ॥

खड्गेन केनापि विजेतुमस्या गवेष्यते किं चलपत्रप

त्रम् ॥ नचेद्विशेषादितरच्छदेभ्य स्तस्यास्तुकम्प स्तुकुतोभयेन ॥ ९० ॥

वराङ्गम्वर्णयति । अस्याःकेनापिअतिसौन्दर्यादनिर्वचनीयेनाथचग्रास्य त्वात्प्रकटत्ववक्तुमयोग्येनाङ्गेनअवयवेन चलपत्रस्याश्वत्थस्यपत्रम्विशेषेण जेतुङ्कवेष्यतेकिमुत्प्रेक्षे।कुतोज्ञातमित्यतआह । नचेदेवन्तर्हिइतरच्छदेभ्यः अन्यवृक्षदलेभ्यःसकाशाद्विशेषादाधिक्यात्तस्यचलदलस्यकंपःकुतःकस्मात्तु भयेनास्तुभवतु । अन्यवृक्षदलापेक्षयाश्वत्थदलेभूयान्कंपोदृश्यतेतदनेनजे तुङ्कवेष्यतेआकारेणाश्वत्थदलतुल्यमस्याःवराङ्गमित्यर्थः ॥ ९० ॥

भ्रूश्चित्रलेखाचतिलोत्तमास्या नासाचरम्भाचय दूरुसृष्टिः ॥ दृष्टाततःपूरयतीयमेका नेकाप्सरःप्रे क्षणकौतुकानि ॥ ९१ ॥

पञ्चभिःश्लोकैर्भ्रूवर्णयति । भ्रूरिति । अस्याःभैम्याःभ्रूश्चित्राश्चर्यरूपा लेखाविन्यासोयस्याःसाअथचचित्रलेखाप्सरोविशेषःतथास्यानासातिला त्तिलकुसुमादप्युत्तमाऽतिरम्या । अथचनासैवतिलोत्तमाअप्सरोविशेषःत थाअस्याःऊरुसृष्टिरम्भास्वयङ्कदली अथचऊरुसृष्टिरम्भाअप्सरोविशेषः यद्यस्मात्तत्तस्मादियमेकैवदृष्टासतीअनेकाप्सरसां प्रेक्षणजनितानिकौतु कानिपूरतिजनयति।लाभ्योप्यस्यातिसौन्दर्यन्द्रष्टुङ्कौतूहलञ्जनयतीत्यर्थः । एतदूरूकदलीतुल्याविति भावः । तिलादुत्तमेतिपञ्चमीतियोगविभागात्स मासः ॥ ९१ ॥

रम्भापिकिञ्चिन्नहूयतिप्रकाण्डं नचात्मनःस्वेननचै तदूरू ॥ स्वस्यैवयेनोपरिशादधाना पत्राणिजाग्र त्यनयोर्भ्रमेण ॥ ९२ ॥

रम्भेति । रम्भापिआत्मनःप्रकाण्डंस्वरयस्तम्भं स्वेनात्मनानचनैवचिन्ह यति । स्वीयत्वेननजानातिकिम् । एतदूरूचनचिन्हयतिकिम् । एत दीयत्वेननजानातिकिम् । लोकोनजानातिरम्भापिनजानातीत्यपिशब्दा र्थः । स्वस्तम्भम्भैम्यूरुत्वेनभैम्यूरूचस्वस्तम्भत्वेनअज्ञासीदिकिमित्युत्प्रेक्षाकु तोज्ञातमित्यतआह । येनकारणेनअनयोर्भैम्यूर्वोर्भ्रमेणभैम्यूरूएतावित

युद्धारम्भा स्वयंत्मनएवोपरिस्वेनैवपत्रावियपत्रालम्बमानिर्ददतिस तीजागर्ति । अन्योपिवादीप्रतिवादिनिपत्रालम्बनंकुरुते । इयंस्वपरविवे काभावात्परस्मिन्कर्तव्यमात्मन्येवकरोतीत्यर्थः । कदलीस्तम्बोपरिदला निभवन्ति । कदलीगर्भस्तम्भतुल्यावेतदूरूइतिभावः । चिन्हवन्तङ्करोति तत्करोतीतिणिचिमतुल्लोपः ॥ ९२ ॥

विधायमूर्धानमधश्चरच्चे न्मुञ्चेत्तपोभिःस्वमसा रभायम् ॥ जाड्यञ्चनाचेत्कदलीवलीय स्तदाय दिस्यादिदमूरुचारु ॥ १३ ॥

विधायेति । कदली इदमूरुचारुरस्याःऊरुवच्चारुतुल्यकान्तिस्तदास्या तदाभवेत्यदिमूर्धानमधश्चरमधोगतंविधायकृत्वातपोभिः चान्द्रायणादि भिःकृत्वास्वंस्वीयंअसारभावंनिःसारत्वम्मुञ्चेत्त्यजेत् तथावलीयःसार्व कालिकञ्जाड्यंशीतलत्वञ्चेत्प्राप्नुयात्तदैवैतदूरुतुल्याभवेत् । कदलीभि स्यूरुतुल्यकान्तिर्यदिभवेत्तर्हितदाभवेत् । एवंयदिकदलीकुर्यात्तदेदमूरु चारुःस्यान्नान्यथेत्यर्थः । ऊर्वोरूर्ध्वदेशस्यस्थूलत्वादधोदेशस्यचसूक्ष्मत्वा त्ससारत्वाच्चकदल्याश्चैतस्माद्विपरीत्यादिदंमूरुचारुत्वंनयुज्यते । तथैतदू र्वोः शीतकालेसोष्मत्वादुष्णकालेचशीतलत्वात्कदल्याश्चसर्वदाशीतलत्वादे तदूरुचारुत्वंनयुज्यते तस्मात्तपसाकदल्याएतदूरुचारुत्वंसाध्यम् । अनुप मावेतदूरूइतिभावः । अन्योपिमूर्धानमधोविधायतपसास्वीयमसारत्वंभू यिष्ठंमूर्खत्वञ्चत्यक्त्वोत्तमेनसमानोभवति सुषीमःशिशिरोजडइत्यमरः ९३

ऊरुप्रकाण्डद्वितयेनतन्व्याः करःपराजीयतवारणी यः मुक्ताह्रियाकुण्डलनच्छलेन गोपायतिस्वंमुखपु ष्करंसः ॥ १४ ॥

ऊर्विति । तन्व्याःऊरुप्रकाण्डद्वितयेनऊरुस्तम्भयुगेनवारणीयःहस्ति सम्बधीकरःशुण्डादण्डःपराजीयतपराभूतः अतःसकरीकुण्डलनच्छलेन मण्डलीकरणव्याजेनह्रियालज्जया कृत्वास्वंस्वीयंमुखन्नूतंपुष्करङ्गोपायति तत्युक्तम् ॥ ९४ ॥

स्वस्यांमुनीनामपिमोहमूहे भृगुर्महान्यत्कुचशैल

शीली ॥ नानारदाल्हादिमुखंश्रितोरु व्र्यासोमहाभारतसर्गयोग्यः ॥ १५ ॥

अस्यामिति । अहमस्यांव्यासादिमुनीनामपिमोहंव्याप्तिंऊहेतर्कयामि । मुनयोप्येतामाश्रित्यतिष्ठन्तीति । अथचजितेन्द्रियाणामप्यस्याविषयेमोहंमदनविकारस्तर्कयामि । तेप्यनयामोहिताइत्यर्थः ॥ यस्मान्महानतितापसःभृगुःकुचशैलशीलीकुचपर्वतसेवी । मुनीनांपर्वताश्रयत्वात्पर्वतवुद्ध्यास्तनावाश्रयति । अथचकामपीडितत्वादयुवावेतत्कुचौमर्दयितुमिच्छति । अथचभृगुस्तटःपर्वताग्रयेणवर्तते । कुचयोःपार्श्वभागस्तटस्तुल्यइत्यर्थः । शीलमेवशैलकुचयोःशैलंस्वभावंशीलयति अभ्यस्यतिपरमद्यापिकुचस्वभावोनायातीत्यर्थः । मुखंनारदंआल्हादयतीतिनारदाल्हादिनमारदाल्हादिअनारदाल्हादिएवम्विधंनभवतिकिन्तुनारदाल्हाद्येव । गानकलाभ्यासार्थंनारदोमुखमेवाङ्करोतीत्यर्थः । मदनपीडितत्वादुन्मुखचुम्बनाभिलाषिणंनारदमानन्दयतीत्यर्थः । मुखंनानाविधैर्द्वात्रिंशत्संख्याकैरदैर्दन्तैराल्हादयत्यतिसुन्दरमित्यर्थः । महाभारतस्यसर्गेनिर्माणेयोग्यःसमर्थ व्यासः श्रितावूरूयेनैवम्विधःकदलीस्तंभच्छायावुद्ध्याएतदूरूआश्रित्यतिष्ठति। अथचकामपीडितत्वादेतदूरूसमालिङ्ग्यवर्ततइत्यर्थः । महतीभादीप्तिर्यस्यरतंसुरतन्तस्यसर्गोनिर्माणन्तत्रयोग्यः ततःकर्मधारयःइतिवा । एवम्विधोव्यासोविस्तारःश्रितावूरूयेन । अतिविशालावूरूइतिभावः । भृगुःशुक्रेप्रपातेचजमदग्नौपिनाकिनि । व्यासोमुनौस्याद्विस्तारेइतिविश्वः ॥ ५५ ॥

क्रमोद्गतोपीवरताधिजङ्घं वृक्षाधिरूढंन्विदुषीकिमस्याः ॥ अपिभ्रमीभङ्गिभिरावृताङ्गं व्यासोलतावेष्टितकप्रवीणम् ॥ १६ ॥

अङ्घेवर्णयति । क्रमेति । अस्याअधिजङ्घञ्जङ्घयोर्विद्यमानाक्रमोद्गतापीवरताऽवरोहणक्रमनिर्गतापीनता वृक्षस्यअधिरूढंवृद्धिप्रकारन्विदुषीकिञ्जानातिकिम् । वृक्षोयथामूलभागेसूक्ष्मोऽग्रभागेचस्थूलस्तथैयञ्जङ्घयोः क्रमेणोद्गतापीनताऊर्ध्वभागेवृक्षोयथाभारवान्भवतिपीनतापीत्यर्थः । अथचवृक्षाधिरूढास्यमालिङ्गनविशेषञ्जानातिकिम् । तथाच

मीभङ्गिभिर्व्वर्णाकारवेष्टनविच्छित्तिभिः कृत्वाआवृतमङ्गंयेनएवम्विध मस्यावासोदुकुलमपिलतयावेष्टितकेप्रवीणकुशलम् । यथालताव्वमीभङ्गिनिर्वृक्षम्वेष्टयतितथैवदुकूलमपिअङ्गम्वेष्टयतिइतिभावः । वाहुस्याङ्कएठमालिङ्ग्यंकामिनीकान्तउत्थिते । अङ्कमारोहतेयस्यवृक्षारूढःसउच्यते । उपविष्टप्रियङ्कान्तासुसावेष्टयतेयदि । तल्लतावेष्टितंज्ञेयङ्कामानुभववेदिभिः । अधिजङ्घम्विभक्त्यर्थेऽव्ययीभावः ॥ ९६ ॥

अरुन्धतीकामपुरन्ध्रिलक्ष्मी- जम्भद्विषद्दारनवाम्बिकानाम् ॥ चतुर्दशीयन्तदिहोचितीस्यद्गुल्फद्वयाप्तायदद्वयसिद्धिः ॥ ९७ ॥

गुल्फौवर्णयति । अरुन्धतीति । अरुन्धीवसिष्ठपत्नीकामपुरन्ध्रिःरतिःलक्ष्मीःजम्भद्विषद्दाराःइन्द्राणीनवसंख्याकाः अम्बिकाश्चब्राह्म्याद्यःसप्तगौरीसरस्वतीचेतिद्वे एतासान्त्रयोदशीनांपूरणीचतुर्दशीयंयद्यस्मात्तस्मादिहास्यांअदृश्यवस्तुनःसिद्धिरदृश्यवासाउचितैवयुक्तैव । गुल्फद्वयेनआप्ताप्राप्ताअरुन्धत्यादिभ्योपीयमतिसुन्दरीपतिव्रताच । तस्मादस्यांनिमग्नगुल्फत्वंनामसामुद्रिकंलक्षणंयुक्तमेवेतिभावः । यस्मादस्यानदृश्यसिद्धिर्लब्धातस्मादियमरुन्धत्यादीनाञ्चतुर्दशीसमुचितेतिवासम्बन्धः । आगमेचतुर्दश्यामदृश्यस्वसिद्धिर्भवतिइत्युक्तमित्यर्थः । चतुर्दशानांपूरणीपूरणेडट् । संख्यादित्वान्मसट्टित्वात्ङीप् ॥ ९७ ॥

अस्याःपदौचारुतयामहान्ता वपेक्ष्यसौक्ष्म्याल्लवभावभाजः ॥ जाताप्रवालस्यमहीरुहाणा ञ्जानीमहेपल्लवशब्दलब्धिः ॥ ९८ ॥

षड्भिःश्लोकैःपादौवर्णयति । अस्याइति । चारुतयासौन्दर्येणकृत्वामहान्तावुत्तमौअस्याः पादौअनेत्ययत्सौक्ष्म्यमल्पत्वमेतस्याःसुन्दरपदापेक्षयास्वंस्वपदल्पत्वन्ताद्दृक्सौन्दर्याभावादित्यर्थः । तस्माल्लवभावभाजःपदशोभालेशरूपत्वंभजतः ।महीरुहाणांप्रवालस्यबालकिसलयस्यपल्लवइतिशब्दस्तस्यलब्धिर्लाभोजातइतिवयञ्जानीमहे । पदोलव-भैम्याश्चरणस्यचीलवोलेशोयस्य । पदोलवरूपोवायमितिपल्लवशब्दः । प्रवालस्यपल्लव

शब्दप्राप्तिरनेनप्रकारेणजातेत्यर्थः । प्रवालादप्यधिकंरमणीयौचरणाविति भावः । लक्षितिक्तिन्नादिभ्यइतिक्तिन् ॥ ९८ ॥

जगद्वधूमूर्द्धसुरूपदर्पा अदेतयाधायिपदारविन्दम् ॥ तत्सान्द्रसिन्दूरपरागरागै र्द्वयंप्रवालप्रबलारुणन्तत् ॥ ९९ ॥

जगदिति । एतयारूपदर्पोत्सौन्दर्यगर्वात्जगद्वधूमूर्धसुलोकत्रयसुन्दरीशिरःसुपदारविन्दद्वयंयस्मात् अधायिदत्तम् । तत्पदारविन्दद्वयंतेषुमूर्धसु सान्द्रंयत्सिन्दूरंतस्यपरागास्तेषांरागैर्लौहित्यैः कत्वाप्रवालात्पल्लवात्विद्रुमाद्वाप्रबलमधिकमरुणमारक्तञ्जातमित्युत्प्रेक्षे । भैमीचरणावत्यरुणाविति भावः ॥ ९९ ॥

रूपारुणासर्वगुणैर्जयन्त्या भैम्याःपदंश्रीःसविधेवृणीते ॥ भ्रुवंसतामच्छलयद्यतःसा भृशारुणेतत्पदभाग्विभाति ॥ १०० ॥

रूपेति ॥ श्रीर्लक्ष्मीःशोभाचविधेर्ब्रह्मणःसकाशात्भैम्याः पदंस्थानंस्वरूपत्वंअधिकारंस्वावृणीतेस्मयाचतेस्म । यतःसर्वगुणैर्श्रीसम्बन्धिभिःकृत्वाश्रियंजयन्त्याः । अतएवकिंभूतारुषाक्रोधेनअरुणा । सब्रह्माभुवंनिश्चितन्तांश्रियंअच्छलयत् प्रतारितवान् । यतोयस्माद्भृशारुणाऽतिरक्तासाश्रीः एतत्पदभाक्भैमीचरणसेविनीतिभातिशोभते । यद्वाभृशारुणेति पदंविशेषणत्वेनैकपदत्वम् । पदशब्दच्छलेनभैमीचरणन्दत्तवान्नस्वरूपादि । अनुणाजितोऽन्योपिदेवतांप्रसन्नीकृत्यतत्पदंयाचते । भैमीचरणशोभालोकोत्तरेतिभावः ॥ १०० ॥

यानेनतन्व्याजितदन्तिनाथौ पादाब्जरागौपरिसुद्वपोर्णौ ॥ जानेनशुश्रूषयितुंस्वमिच्छूनतेनमूर्ध्नाकृतमस्यराज्ञः ॥ १०१ ॥

यानेनेति । तन्व्याःपादाब्जरागौश्रेष्ठकमलतुल्यौचरणौकतरस्यराज्ञःकस्यनृपस्य प्रणयकलहेवनसस्कारार्थंनतेनमस्त्र्यानुभ्रामयोर्जयेनस्वात्मानंशुश्रूषयितुंआत्मसेवाङ्कारयितुंइच्छूअभिलाषुकौइतिमन्ये । किंभूतौ

यानेनयमनेनकस्याजितोदन्तिनायोहस्तिश्रेष्ठोयाभ्याम् । तथापरिशुद्धोर सवीयःपार्ष्णिःचरणपश्चाद्भागोययोस्तौ । एतादृक्नृहस्तपःकेनराज्ञाकृत मितिनजाने इत्यर्थः । भजनकन्येयमितिभावः नैमीचरणावेवराजानौ । या तेनविजययात्रयाजितोगौडेश्वरोगजपतिर्याभ्यान्तौ तथापरिशुद्धःपार्ष्णि ग्राहोययोरेवंभूतौसन्तौकस्यराज्ञोभीतत्वान्नमस्कारार्थंनम्रेणशिरसाक्षमे वाङ्कारयितुमिच्छूनजाने । अन्योप्येवम्विधोराजागूढमन्त्रत्वात्स्वसेवां कारयिष्यतीतिनज्ञायते । तेनप्रसिद्धेनवर्जितेनमूर्ध्नानजानेइतिवा । अ न्यत्पूर्ववदितिवा ॥ १०१ ॥

कर्णाक्षिदन्तच्छदवाहुपाणि पादादिन:स्वाखिलतु ल्यजेतु:उद्भ्रममागद्वयताभिमाना द्विद्वैवदेधाव्याधि तद्वितीयम् ॥ १०२ ॥

कर्णेति । स्वमात्मनःअखिलंसमस्तं वस्तुस्वं पद्मनीलोत्पलादितत्यजेतुर्जे तुःकर्णादेःकर्णाक्षिनेत्रदन्तच्छदौष्ठःबाहुःपाणिःचरणः एतेषांसमाहारः तदादिर्यस्यआदिशब्दात्स्वादेरवयवस्यप्रत्येकमद्वयताभिमानात्मत्कर्णादितुल्य न्तरमन्यत्रास्तीति अहमेवैकंसुन्दरमितिअद्वैतगर्वादुद्वेगभाग् । क्रोधयु क्तोवेधाः इहैवअस्यांभैम्यामेवद्वितीयंद्वयोःपूरणंकर्णादिकृतवान् । हेक र्णादयःएवङ्गर्वंमाकुरुयतर्हिभवद्गर्वशान्त्यर्थंभवत्सदृशमन्यमस्यामेवकरि ष्यामीतिद्वितीयङ्कर्णादिकृतवानित्यर्थः । अतिकुद्धोहितदर्पशान्त्येत त्रैवमतिद्वंद्विनंरचयति । भैमीकर्णोभैमीकर्णद्वयअन्येनसतुल्यः । एवंने त्रादावपिज्ञातव्यङ्कर्णादीत्यादौप्राण्यङ्गत्वादेकवद्भावः । स्वाखिलेतिभा षितपुंस्कम् ॥ १०२ ॥

तुषारनि:शोषितमज्जसर्गं विधातुकामस्यपुनर्विधा तु: ॥ पंचास्विहास्यान्प्रिकरेष्ठभिख्या भिक्षाधुना माधुकरीसुधुक्षा ॥ १०३ ॥

तुषारेति । विधातुःब्रह्मणःपुनःअस्यांभैम्याकरौचरणौतेषुभैमीवदनच रणद्वयद्वयपाणिद्वयेषुविषयेषुअभिख्याशोभायाभिक्षामाधुकरीसदृशायति भिक्षातुल्याभवतीतिशेषः । किंभूतस्यविधातुःतुषारेणहिमेनमिःशोषितं

आत्यन्तिकम्विनाशितं अजमर्गकमलसृष्टिं अधुनेदानीं पुनर्विधातुंकाम स्यनिर्मातुकामस्यभिक्षाहिगृहपञ्चकएवभवति । मधुकरोहिअनेकानिपु ष्पाणिमधुयाचित्व स्वोदरभरणङ्करोति । तत्सम्बन्धित्वान्माधुकरी । कम लान्येवतद्वदनतुल्यानिनेतिभावः । आस्यादीनांप्रायपञ्चद्वंद्वे पिपञ्चत्वमि त्यनेनसंख्यापरिगणनादधिकरणैतावत्त्वेचेत्येकवद्भावाभाव ॥ १०३ ॥

एष्यन्तियावद्गणनाद्दिगन्तान्नृपाःस्मरार्ताःशर णेप्रवेष्टुम्॥ इमेपदाब्जेविधिनापिसृष्टास्तावन्त्य एवाङ्गुलयोऽत्ररेखाः ॥ १०४ ॥

अङ्गुलीर्वर्णयति । एष्यन्तीति । स्मरार्तानृपाःइमेपदाब्जेभैमीचरणक मलेकर्मभूतेशरणेरक्षकेप्रवेष्टुकामादस्मान्रक्षतंयुवामितिवदन्तः यावद्गण नाद्यावत्संख्याकाद्दिगन्तात्तत्सकाशादेष्यन्तिसमागमिष्यन्ति । विधिनापि तावन्त्यःतावत्संख्याकारेखाएवात्रचरणद्वंद्वेसृष्टानिर्मिताः । एताअङ्गुलयो दशदिगन्तानामपिदशसंख्यात्वाद्दशभ्योपिदिग्भ्यःकामार्तानृपाआगमिष्य न्तीतिसूचनार्थंलक्षणादशरेखाएवनिर्मिताः । नरेखापाठेअङ्गुलयोनभव तिकिन्तुरेखाएवेत्यन्वयः । य वद्गणनादित्यव्ययीभावेऽपञ्चम्यास्त्रितिवच नादम्भावाभावः ॥ १०४ ॥

प्रियानखीभूतवतीमुदेदं व्यधाद्विधिःसाधुदशत्व मिन्दोः॥ एतत्पदच्छद्मसरागपद्मसौभाग्यभा ग्यङ्कथमन्यथास्यात् ॥ १०५ ॥

नखान्वर्णयति । प्रियेति । विधिःमुदाहर्षेणयाप्रियानखीभूतवतीन खत्वंप्राप्तवतः इन्दोरिदन्दशत्वंसाधुउचितंव्यधात्कृतवान् । अथचसाध्वी शोभनादशाऽवस्थायस्यएवम्विधङ्कृतवान् । कथमित्यतआह अन्यथाऽस्ये न्दोरेतस्याःपदच्छद्मनाचरणव्याजेनसरागपद्मसौभाग्यंरक्तोत्पलसौभाग्य न्तस्यभाग्यंलाभःकथंस्यात् । दशसंख्यात्वेनभैमीसम्बन्धीनानखावस्थात्वेन चविनैवतच्चरणसेवानलभ्यते अनेनतावल्लब्धातस्मादस्यसाधुदशत्वङ्कृतमि तिज्ञायतइत्यर्थः चन्द्रपद्मयोर्विरोधाच्चन्द्रोदयेकमलस्यसङ्कोचात्समीची नावस्थत्वेनविनारक्तोत्पलसम्बन्धश्चन्द्रस्यनयुज्यतेसतुजातस्यचरणत्वंलब्ध्वा

स्यादेतदनुमीयतइत्यर्थः अन्योपिसाधुदशत्वेनाप्राप्यमपिप्राप्नोति । दशा पिचरणनखाश्चन्द्रतुल्याइतिभावः ॥ १०५ ॥

**यशःपदाङ्गुष्ठनखौमुखंच बिभर्तिपूर्णेन्दुचतुष्टयंया ॥ कलाश्चतुःषष्टिरुपैतिवा संन्तस्याङ्गथंसुभ्रुविनामनास्याम् ॥ १०६ ॥**

अङ्गुष्ठनखौचपुनःपृथक्त्वेनवर्णयति । यशइति । याभैमीयशःकीर्तिः पदाङ्गुष्ठनखौमुखञ्चएतद्रूपंपूर्णेन्दु चतुष्टयंषोडशकलचन्द्रचतुष्टयम्बिभर्ति तस्यांअस्यांसुभ्रु विभैम्याञ्चतुरधिकाषष्टिः कलाकथंनानवासंनोपैतुअपितु प्राप्नोतीतियुक्तमेतत् । षोडशकलचतुष्टयधारणात्षोडशकलाश्चतुर्गुणिता श्चतुःषष्टिर्भवतीतियुक्तमित्यर्थः । गीतवाद्यादिकलाप्रवीणेयमितिभावः । कलेतिजात्येकवचनम् । कलानाञ्चतुःषष्टीरितिवा कलाइतिपाठेकलारू पाश्चतुःषष्टिरिति ॥ १०६ ॥

**सृष्टातिविश्वाविधिनैवतावत्तारुण्यापिनीतापरियौवनेन ॥ वैदग्ध्यमध्याप्यमनोभुवेय मवापितावाक्पथपारमेव ॥ १०७ ॥**

वर्णयितुमशक्येयमितिनिगमयति । सृष्टेति । विधिनाएवइयन्तावदादौ अतिविश्वगजितत्रैलोक्यासृष्टा । अतिसुन्दरीकृतेत्यर्थः । अनन्तरंयौवनेनत स्याप्यतिविश्वसर्जनस्यापिविधेर्वाउपरिनीताशैशवसौन्दर्यापेक्षया अधिकं सौन्दर्यंप्रापिता । तारुण्येतिसौन्दर्यंभवति । ततोप्यनन्तरंमनोभुवाकामे नवैदग्ध्यंसर्वव्यापारचातुरीं अध्याप्यशिक्षयित्वावाक्पथस्यपारंपरन्तीरमे वअवापिताप्रापिता । वर्णयितुमशक्यत्वाद्वागगोचरइत्यर्थः । अथचवि द्यापारंप्रापितेत्यर्थः । मदनवशादतिचतुरेयमित्यत्यर्थः । अन्योपिप्राज्ञो ऽध्यापितःसन्वाङ्मयपारंप्राप्नोति ॥ १०७ ॥

**इतिसचिकुरादारभ्यैनांनखावधिवर्णय न्हरिणरमणीनेत्रांचित्राम्बुधौतरदन्तरः ॥ हृदयभरणोद्वेलानन्दःसखीवृतभीमजा नयनविषयीभावेमावन्दधारधराधिपः ॥ १०८ ॥**

इतीति । सधराधिपःनलःसखीभिःताभीमजातस्यानयनविषयीज्ञातेनयनगोचरत्वंज्ञापयन्निलापन्दधार । इदानीमात्मानंसखीसहितभैम्यैदर्शयिष्यामीतितस्यबुद्धिरुत्पन्नेत्यर्थः । प्रकटोजातइतिभावः । इन्द्रवरदानात्सखीसहितयैवभैम्याद्रष्टव्योनान्येनकेनचिदित्यभिप्रायःसूचितः किंकुर्वन् । इतिपूर्वोक्तप्रकारेणचिकुरादारभ्यकेशपाशमारभ्यनखावधिनखपर्यन्तंन्हरिणरमणीवन्नेयस्यास्तामेनांभैमीम्वर्णयन् । तथाचित्राम्बुधौअद्भुतसौन्दर्यदर्शनादेवअब्धौसमुद्रेतरत्पूर्यमाणांअन्तरंमानसंयस्यसः साश्चर्यःभैमीदर्शनादेवहृदयस्यभरेणपरिपूरणेनोद्वेलःवेलांमर्यादान्तीरञ्चातिक्रान्तोऽतिबहलआनन्दोयस्यसःउद्वेलत्वेनानंदस्यसमुद्रत्वंसूचितम् । अन्यदपिउदकङ्गम्भीरंस्थानंपरिपूर्यबहिर्निर्गच्छति । आरभ्यार्थयोगेपीतिकेचिदितिचिकुरादितिपञ्चमी ॥ १०८ ॥

श्रीहर्षङ्कविराजराजिमुकुटालङ्कारहीरःसुतंश्रीहीरःसुषुवेजितेन्द्रियचयंमामल्लदेवीचयम् ॥ गौडोर्वीशकुलप्रशस्तिभणितिभ्रातर्ययन्तन्महाकाव्येचारुणिनैषधीयचरितेसर्गोगमत्सप्तमः ॥

श्रीहर्षमिति ॥ गौडोर्वीशकुलस्यगौडदेशभूपालवंशस्यप्रशस्तिर्वर्णनातस्याभणितिःरचनातस्याःभ्रातरिएककर्तृकत्वात्सापियेनरचितेत्यर्थः । वीरसेनिचरितेचारुणिमहाकाव्येयंसप्तमःसर्गोऽगमत्समाप्तिंप्राप्तः । भ्रातरीतिभावितपुंस्कम् ॥ इतिश्रीमन्नरसिंहपण्डितात्मजनारायणकृतेनैषधीयप्रकाशेसप्तमःसर्गःसमाप्तः ॥

## अथ नैषधीयचरिते अष्टमःसर्गः

॥ प्रारभ्यते ॥

अथाद्भुतेनास्तनिमेषमुद्रं मुन्निद्रलोमानममुं युवानम् । दृशापपुस्ताःसुदृशःसमस्ताः सुताश्चभीमस्यमहीमघोनः ॥ १ ॥

श्रीगणेशायनमः ॥ इदानींनलोदिक्पालदूत्यंकृतवानितिवक्तुमष्टमंसर्गमारभते । अथेति । भैमीअथनलविषयभावाभिलाषानन्तरंताःसमस्ताः सुदृशःसख्यःमहीमघोनोभीमस्यसुताभैमीचामुंयुवानं दृशादृष्ट्यापपुः । साभिलाषंददृशुःकीदृशं अद्भुतेनभैमीसौन्दर्यजनितेनाश्चर्येणकृत्वाअस्तात्यक्तानिमेषमुद्रानेत्रसङ्कोचरीतिर्येन अतएवसात्त्विकभाववशादुन्निद्रलोमानमुद्धतरोमाञ्चं दृशेत्येकवचनेनकटाक्षावलोकनंसूचितम् । अचिन्तितसुन्दरदर्शनादाश्चर्येणास्तनिमेषमुद्रंयथातथापपुरितिवा । युवतिपदेनदर्शनयोग्यत्वंसूचितम् । भैमीसुखाःसर्वाअपितत्परा जाताइतिभावः ॥ १ ॥

कियच्चिरंदैवतभाषितानि निह्नोतुमेनंखलुशक्नुवन्तु ॥ पलालजालैःपिहितःस्वयंहि प्रकाशमासादयतीक्षुडिम्भः ॥ २ ॥

कियदिति । देवतासम्बन्धीनिदैवतानांवाअन्तर्हिसिद्धिरूपाणिभाषितानिवचनानिकियच्चिरंकियन्तंकालंएनंनलंनिह्नोतुंगोपायितुंप्रभवंतुनासमर्थानिभवन्तु अपितुक्षणमात्रंगोपायितुंसमर्थानिजातानिनतुबहुकालमित्यर्थः । नामेतिशिरश्चालने । अर्थान्तरन्यासमाह । हिप्रसिद्धंयस्माद्धा पलालजालैःनीलसतृणसमूहैःपिहितःइक्षोर्डिम्भोंकुरःस्वयमात्मनैवप्रकाशंप्राकट्यंदृश्यत्वंआच्छादयतिप्राप्नोति । वृंदारकादैवतानीत्यमरः॥२॥

अपाङ्गमप्याप दृशोर्नरस्मि नलस्य भैमीमभिलष्य यावत् ॥ स्मराशुगः सुभ्रुवि तावदस्याः प्रत्यङ्गमापुङ्खशिखं ममज्ज ॥ ३ ॥

अपाङ्गमिति । नलस्य दृशोर्नेत्रयोः रश्मिर्दीप्तिर्भैमीमभिलष्यापांगमपि अतिनैकट्याद्विलंबं प्राप्य मपि नेत्रप्रान्तं यावन्नप्रापतावदाद्यावेवस्मराशुगः सुभ्रुवि सुंदर्यां भैम्यां प्रत्यंगं प्रत्यवयवं पुंखस्य शिखाग्रन्तदाक्रमर्यादीकृत्याभिव्याप्य समज्ज नलकर्तृकसाभिलाषदर्शनोपक्रममात्रेणप्रत्यंगजैमी अतितरां कामाधीनाजातेतिभावः । अभिलाषप्रतिबंधकेदेययोरांश्चर्कत्त्वेसकार्नकत्त्वात्क्वोल्यम् । आपुंखशिखं आङ्मर्यादाभिविध्योरित्यव्ययीभावः ॥ ३ ॥

सङ्क्रमं न्विक्रमशक्तिसाम्या दुपाचरद्द्वावपि पंचबाणः ॥ कथं न वैमत्यममुष्य चक्रे शरैरनर्धार्धविभागभाग्भिः ॥ ४ ॥

यदिति ॥ पञ्चबाणः कामः द्वावपि नलभैम्यौ अक्रमं परिपाटीरहितं युगपद्विक्रमरूपायाः शक्तेः सामर्थ्यस्य साम्यात् द्वयोर्विक्रमो मनस्तस्य शक्तिः शारीरंबलन्तयोर्वासाम्यात्तुल्यत्वात् यद्यस्मादुपाचरत् । आत्मवशीचकार । तत्तस्मात्पञ्चबाणत्वे प्यमुष्यकामस्यार्धेन अर्धाधिकाभ्यां द्वाभ्यां विभागः संद्वाजीनभवन्तितैरनर्धार्धविभागभाग्भिः एवंभूतैरपि पञ्चबाणैर्वैमत्यंनकृतं । पञ्चभिरपि नलस्य प्रथमं व्यधं कृत्वा तावद्भिरेवानंतरं भैम्यावेधं वेदकरिष्यत्तर्ह्युभयोस्तुल्योनुरागोऽघटिष्यत् । तत्तु तेन न कृतं । तुल्यकालमेवोभयोरनुरागदर्शनात् यद्येकसमयावच्छेदेन व्यधं कुर्यात्तर्हि वा बाणानां दशत्वात्पंचबाणत्वं भज्येत । तस्मादर्धाधिकौ द्वौ द्वौ बाणौ वैत्सर्वभवतः तच्चानुरागसाम्यं भाव्येतापि नरस्वैवंयुज्यते । भवनस्ववाणस्यव्यधेः सामर्थ्याद्द्वाभ्यां नलस्यत्रिभिर्भैम्यावेधे वैपरीत्येनवानुरागे वैषम्येणभवितव्यम् । तच्चयौगपद्ये पि बाणवैषम्ये च सत्यपि न जातं तत्र पराक्रमशक्तिसाम्यमेव हेतुरित्यर्थः । द्वयोरप्येककालमेव तुल्य एवानुरागो जात इति भावः । यद्वा वैमत्यं कलहः विषमवस्तुत्वाद्बाणानां विभागो न घटते । एकस्यद्वैधीकरणे तत्सर्वेषामपि प्रामोतिसएव वैमत्यमाचरतीत्यर्थः । बाणानां वैमत्यमिमाश्च विक्रमशक्तिसाम्यादेवावाचरदितिवा । यथा राजा स्वसेवकानां वैमत्यभिया ऽन्यप्रकारेणकार्यं

साधयतितथेत्यर्थः । तस्मादुषलैश्चैमत्यंनकृतमित्यर्थः । अथपवेःपञ्चिभ्रः क्रमःआक्रमणांग्रहणांतत्रयाशक्तिः सामर्थ्यंतेनसाम्यात्तुल्यत्वात्खलकपोत न्यायेनइतियावत् । यथाकपोतःखलेपतिताक्कणान्युगपद्भृह्वातितथापंचबाणोपियुगपद्द्वावपितेनन्यायेनयस्मादुपाचरंस्तस्मादस्यबाणैरपि विषमसंख्यत्वेपिविरुद्धंनाकारि । अथचकामेनायंन्यायोङ्गीकृतः । अतएवबेमेतिरिबमतियस्यतस्यभावोवैमत्यंखलेकपोतन्यायेनचसकामबाणैरपि नकृतोऽपितुकृतएवेतिकाकाव्याख्येयम् । तैरपिपंचभिरेकदैवमिलित्वायुगपदेवतौवशीकृतौ ॥ कालस्यसूक्ष्मत्वात् । विक्रमतुल्योनलः शक्तितुल्या भैमीविक्रमशक्तितुल्यौतौसकृदेवस्ववाणकुसुमैरपूजयदित्यर्थः ॥ ४ ॥

तस्मिन्नलोसावितसान्वरज्य त्क्षणंक्षणंकेहसइत्युदास्त ॥ पुनःस्मतस्यांचलतेस्यचेतः पुनश्चदूत्येनबलान्न्यवर्ति ॥ ५ ॥

अनुरागसाम्यमेवाह । तस्मिन्निति । साभैमीतस्मिन्पुरुषेऽसौनलइतिहेतोरन्वरज्यत् । अनुरक्ताबभूव । अनंतरंसोतिसुन्दरोनलःअतिसुन्दरीतेइहास्मिन्नंतःपुरेक्वकुत्रइतिक्षणंक्षणंप्रतिक्षणंप्रविचार्यउदास्तउदासीनासीत्क्षणमन्वरज्यत्क्षणमुदास्तेतिवा । अस्यचित्तमस्यांपुनःमुहुःचलतेस्म । चंचलमभूत् । अथानन्तरमनेननलेनास्यचित्तेनबाढूत्याद्धेतोःपुनःन्यवर्त्तिपरावृत्तम् । दूत्यांगीकारैभैस्यभिलाषोनयुक्तइतिपरावृत्तमित्यर्थः । उभयोरपिभूयाननुरागोभूदित्यर्थः । पुरःस्मेतिपाठेप्रथमम् ॥ ५ ॥

तंवीक्ष्यकाचित्कुलजाललज्जे कयापितद्भासिहृदेममज्जे ॥ स्मरंतमाशंकतकापिकन्या भेजेमनोभूवशभावमन्या ॥ ६ ॥

कयेति कुलजाकाचिद्बालातंवीक्ष्यललज्जेकयाचिद्बालयाललनालोक्य लज्जितमित्यर्थः । अनुरागवशात्प्रकटितलज्जानुभावयाजातम् । कयाचित्प्रौढयातद्भासिनलकान्तौहृदाअन्तःकरणेनममज्जेनिमग्नं । सौन्दर्यदर्शनमात्रेणाश्चर्यपरयासाभिलाषयास्मरपरवशयाजातम् । कापिकन्याकुमारीतंस्मरमेवमेने । अतिसौंदर्यान्मदनकत्वाशंकेत्यर्थः । अन्यामनोभूवशभा

वंकामवशत्वमेवभेजे । अशिश्रयत् । अननुभूतसंभोगरसापिनलेसानुरागाजातेतिभावः । तंवीक्ष्यकाचित्कुलजाललज्जइ त्यपिपाठः ॥ ६ ॥

**कस्त्वंकुतोवेतिनशक्नुवन्त्य स्तंप्रष्टुमप्यप्रतिभातिभारात् ॥ उत्तस्थुरभ्युत्थितवांछयैव निजासनात्केरसाःकृशांग्यः ॥ ७ ॥**

कइति । कृशांग्यः अप्रतिज्ञायाअप्रागल्भ्यस्यातिभारादतिबाहुल्याद्धेतोः इतितंप्रष्टुंअपिजातुकदाचित्तत्रकंचित्कालंस्थिताअपिनशेकुः । इतिकिं । कस्त्वंकिंसंज्ञकःकुतोवादेशादागतइति तर्हिकिंचक्रु रित्यतआह । नैकरसाःलज्जाभयानुरागादियुक्ताःसत्यः अभ्युत्थितवांछयैवउत्थानकांक्षयाएवनिजासनात्स्वीयासनादुत्तस्थुरुत्थिताः । अन्योपिअप्रतिभोऽतिज्ञारोपि किमपिवक्तुंनशक्नोति।इह।सद्भावेप्यूर्द्धकर्मत्वादुत्तस्थुरित्यत्रतङभावः ॥७॥

**स्वाच्छंद्यमानंदपरंपराणां नैमीतमालोक्यकिमप्यवाप ॥ महारयंनिर्झरिणीववारा मासाद्यधाराधरकेलिकालं ॥ ८ ॥**

स्वाच्छंद्यमिति । नैमीतमालोक्यकिमपिअनिर्वचनीयमानंदपरंपराणां स्वाच्छंद्यंआधिक्यं अवाप । छंदःपद्येभिलाषेचेत्यभिधानात् । स्वःआत्मीयःछंदोऽभिलाषोयस्याः स्वच्छंदोभिरवग्रहस्तस्यभावःस्वाच्छंद्यम् । काकिमिवनिर्झरिणीनदीधाराधरोमेघस्तस्यकेलिः कालःक्रीडासमयो वर्षासमयं आसाद्यप्राप्यवारांजलानांमहारयंवेगमाधिक्यं इवलभते । दर्शनमात्रेणलोकोत्तरमानंदंप्रापेतिभावः ॥ ८ ॥

**तत्रैवमग्नायदपश्यदग्रे नास्याद्रुगस्यांगमयास्यदन्यत् ॥ नादास्यदस्यैयदिबुद्धिधारां विच्छिद्यविच्छिद्यचिरान्निमेषः ॥ ९ ॥**

तत्रेति । अस्याद्रुक्यदस्यनलस्यअंगमग्रेप्रथमंअपश्यत् । तत्रैवतस्मिन्नेवअंगेअनुरागवशान्निमग्नासतीप्रथमदृष्टमंगंविहाय अन्यदंगंतर्हिनअयास्यत् नप्राप्स्यत् । यदिचिराच्चिरकालात्संजातोनिमेषोनेत्रसंकोचःविच्छिद्यविच्छिद्यपूर्वदृष्टांगदर्शनविच्छेदंकृत्वाकृत्वा अस्यैअस्यै बुद्धिधारांअन्या

मन्यांबुद्विंदर्शने त्वासंततिंनादास्यत् । तेनबध्यं तरंदत्तम् । तद्वशादेवअ न्यदंगंप्रापदित्यर्थः । अतिसुंदरांगदर्शनस्यनिमेषेणाविच्छेदेकृतेसतिअनन्त रंतस्यैवअंगस्यदर्शने त्वयापुनरपिअंगांतरंदर्शनंनतु प्रथमांगदर्शनविरत्त्याइ त्यर्थः । सर्वेपिअवयवाअतिसुंदराइतिभावः क्रियातिपत्तौलृङ् ॥ ९ ॥

दृशापिसालिङ्गितमंगमस्य जग्राहनाग्रेवगतांगहर्षैः ॥ अंगांतरेऽनंतरमीक्षितेतु निवृत्यसस्मारनपूर्वदृष्टं ॥ १० ॥

दृशेति । सादृशाआलिङ्गितंस्पृष्टमस्यनलस्य प्रथमदृष्टादन्यदंगं अग्रे प्रथमतोऽवगतानिदृष्टानिअङ्गानितज्जनितैर्हर्षैरानंदैर्हेतु भिर्नजग्राहमदृष्टवती दृष्टमप्यंगंहर्षभरान्नददर्शेत्यर्थः । हर्षानुभवादनन्तरंनिमिषादिव शादंगांतरेईक्षितेपुनः निवृत्यपरावृत्यपूर्वदृष्टंप्रथमदृष्टमङ्गंनसस्मार ॥ प्रथमदृष्ट्यनन्तरंदृष्टस्यांगस्यातिरमणीयत्वाद्दृश्यमानाङ्गप्रथमदृष्टस्यरमणी यत्वात्सुखपरवशत्वाद्वामुह्यप्रथमदृष्टमंगंनस्मृतवतीनालोकतेइतिभावः । अन्यत्रहिपूर्वंदृष्टंस्मर्यतेऽत्रतुनेत्याश्चर्यम् । पूर्वोक्तएवभावः ॥ १० ॥

हित्वैकमस्यापघनंविशन्ती तद्दृष्टिरंगांतरसूक्तिसीमां । चिरंचकारोभयलाभलोभा त्स्वभावलोलागतमागतंच ॥ ११ ॥

हित्वेति । तस्याभैम्यादृष्टिः स्वभावलोलासतीउभयोःप्रथमदृष्टानन्तरं दृष्टयोर्लाभस्तत्रलोभात्लोलुपत्वाद्धेतोश्चिरंगतंगमनं आगतमागमनञ्चका र । द्वयोरप्यंगयोरतिसौन्दर्याद्गतागताभ्यांविवेकंकर्तुमशक्ताद्वयमपि त्यक्तुंनाशकदितिभावः । किंभूतातद्दृष्टिः अस्यैकमपघनमंगंहित्वाअङ्गां तरस्यभुक्तिरालोकनंतस्याः सीमांमर्यादांविशन्तीअङ्गान्तरमवलोकयन्ती स्वभावलोलेगमनागमनेकरोति अन्योपिवराकोदेशान्तरंवस्तुगृहीतुंस्वदेश स्यविक्रेतुंगमनागमनेकरोति । अपघनोङ्गमितिनिपातः ॥ ११ ॥

निरीक्षितंचांगमत्रीक्षितंच दृशापिबन्तीवरसेनतस्य ॥ समानमानन्दमियंदधाना विवेदभेदंनविदर्भसुभ्रूः ॥ १२ ॥

निरीक्षितमिति । इयंविदर्भसुभ्रूःभैमी तस्यनलस्यप्रथमंनितरांसादर सीक्षितंनिर्निमेषकारेणानवलोकितंचान्यदंगंदृष्टारसेन औत्सुक्येनद्वयमपि बन्तीसादरंविलोकयन्तीसती किञ्चिद्दृष्टाकृदर्शनविषयेपिसादरदृष्टाकृत नितानन्दसमानंतुल्यमानन्दंदधानाधारयन्ती किंसादरदृष्टंकिंचेषद्दृष्टम् । यद्वा । किंसादरदृष्टंकिञ्चसर्वथैवादृष्टमित्युभयोर्भेदस्तारतम्यंनाविवेद । तु ल्यसौन्दर्यत्वाद्द्वयोरपिदर्शनेतुल्यानुरागोभूदितिभावः । लोकस्यदृष्टेऽथा दरोदृष्टेचोत्साहोभवतितथात्रन तन्नयोरपिलोकोत्तरत्वादितिभावः । अ न्यापियोगिनीदृष्टंघटादिस्पृष्टंवागगोचरंश्रुतिगम्यंब्रह्मस्वरूपंदृष्ट्वाक्कालेन किंसारंकिमसारमितिसादरंविचारयन्तीघटादिनिरस्तब्रह्मत्वादिप्रमाण स्यंब्रह्मानन्दस्वरूपंब्रह्मसाक्षात्कारदशायांअङ्गीकरोतीत्युक्तिः ॥ १२ ॥

सूक्ष्मेघनेनैषधकेशपाशे निपत्यनिष्पन्दतरातरा भ्याम् तस्यानुबन्धंनविमोच्यशक्तं मपारितल्लोच नखंजनाभ्याम् ॥ १३ ॥

सूक्ष्मइति । आयताभ्यान्तल्लोचनलक्षणाभ्यांखञ्जनाभ्यां तस्यकेशपाश स्यसादरावलोकनलक्षणंअनुबंधं अध्यतकिंचित्सुंबन्धनंविमोच्यत्यक्तुं शक्तुंनापारिनोशकि । किंभूताभ्यांसूक्ष्मेघनेनिबिडेमनैषधकेशपाशेसादरा वलोकनार्थंनिपत्यनितरांपतित्वासादरावलोकनादेवनिष्पन्दतरीभवद्भ्यां नेत्रसङ्कोचरहिताभ्याम् खञ्जनोपिपाशेपतितोबन्धनंविमोच्यपदमपिच लितुंनशक्नोति । भैमीदृष्टिःचिरकालकेशपाशमेवावलोकतेतिभावः । केशाःसूक्ष्मास्तुपाणिदशनांगुलिपर्वकेशाइत्यादिलक्षणम् । पाशःकर्णार्थस्य पार्थेःकर्णातेशोभनार्थकः । छत्राद्यन्तेषनिन्दार्थः पाशःपत्यादिवन्धनइ तिविश्वः ॥ १३ ॥

भूलोकभर्तुर्मुखपाणिपाद पद्मैः परीरम्भमवाप्य तस्य । दमस्वसुर्दृष्टिसरोजराजि भ्रिरंनतत्याज सगंधवन्धम् ॥ १४ ॥

भूलोकेति । दमस्वसुर्भैम्याःदृष्टिसरोजराजिर्नयनकमलपङ्क्तिः तस्य भूलोकभर्तुर्नलस्यमुखपाणिपादलक्षणैःपद्मैः परीरम्भंसंश्लेषमवाप्यसंबध

बंधंसगोत्रसम्बंधंसजातीयत्वं इत्यिरंतस्याजं । मुखादीनांकमलत्वात्सगो
त्रत्वम् । अन्योपिचिराद्वंधुभिरालिङ्गनंप्राप्यझटितिनमुञ्चति । भैमीदृ
ष्टिर्नलमुखादिअतिरमणीयत्वात्चिरमालोकतेतिभावः । सबन्धःज्योति
र्जनपदेतिसः । सगन्धेतिपाठेसगन्धोबन्धुरुच्यते ॥ १४ ॥

तत्कालमानंदमयीभवन्ती भवत्तरानिर्वचनीयमो
हा ॥ आमुक्तसंसारदशारसाभ्यां द्विस्वादमुल्लास
मनुङ्क्तमिष्टम् ॥ १५ ॥

तत्कालमिति । साभैमी । पूर्वोक्तप्रकारेणमुक्तसंसारिणोर्यद्दशेअवस्थे
तयोरसाभ्यांप्रीतिभ्यांकृत्वा द्विस्वादौरसौयत्रैवंविधंमिष्टमतिस्वादुअतिम
धुलंउल्लासंहर्षमभुक्त अनुबभूव क्रममाह । किंभूता । तत्कालंतस्मिन्द
र्शनकालेनलोपलब्धिसुखंध्याज्ञानन्दमयीआनन्दरूपाभवन्ती । त
थासुखेऽस्मिन्नन्तःपुरेनलागमनंकुतस्त्यमितिहेतोः अतिशयेनभवन्भ
वत्तरःअतितरामनिर्वचनीयोलोकोत्तरःमोहोज्ञातिर्यस्याः तद्दर्शनेनैवो
त्पद्यमानमूर्छावा । आनन्दरूपत्वंमुक्तदशा । आनन्दंब्रह्मणोरूपमिति
श्रुतेः । अनिर्वचनीयमोहत्वंसंसारिदशातुल्यकालमेव मुक्तसंसारिदशे
तयाऽनुभूतेत्याशयः । कथमनुङ्क्तेतिलङ् । अभुक्तेतिपाठेलुङ् ॥ १५॥

दूतेनलश्रीभृतिभावितभावा कलङ्किनीयंजनिमेति
नूनम् ॥ नसंव्यधान्नैषधकायमायं विधिःस्वयन्दू
तमिमांप्रतीन्द्रम् ॥ १६ ॥

नलत्वनिश्चयंविनातत्रानुरक्तायाःभैम्याः पातिव्रत्यभङ्गस्तथाचमनौचि
तीमाशङ्क्यकविःपरिहरति । दूतइति । विधिरिमांभैमींप्रतिउद्दिश्य नै
षधस्यकायोनलदेहएवमायायस्यएवंविधंकपटनलवेषधारिणं इन्द्रमेवस्व
यंदूतंनसंव्यधान्नाकरोत् । किंतुइतिकारणात् सत्यमेवनलंदूतमकरोत्।
नूनमुत्प्रेक्षे । इतिकिंनलश्रीभृतिनलकांतिधारिणिदूते भाविताभावानलबु
ध्यै वभविष्यदनुरागाइयंनलव्यतिरिक्तेनुरागात्कलंकिनी अकीर्तिमती
बभोजनिमाभूत् । कपटनलरूपधारणाभावेसत्यपीन्द्रोनलरूपंधृत्वा
स्वीयदूत्यार्थंनगतवान् । तत्रेदमाकूतम् । भैम्याःपातिव्रत्यभङ्गोमाभूदि

तिहन्त्रायबुद्धिंनादत्त इत्यर्थः । नलनिश्चयाभावेपिसत्यएवनलेनुरागात्प्रातिव्रत्यक्षतिरितिभावः । अनितेतिपाठेनूनंनिश्चितंकलंकिनीजनिताभविष्यतीतिल्युटाव्याख्येयम् ॥ १६ ॥

पुण्येमनःकस्यमुनेरपिस्यात्प्रमाणमास्तेयदघेपि धावत् ॥ तच्चिंतिचित्तंपरमेश्वरस्तु भक्तस्यहृष्यत्करुणोरुणद्धि ॥ १७ ॥

नन्वतिसुंदरस्यनलस्यान्तःपुरेप्रवेशोसम्भवइतिनिश्चयान्नलसदृशेस्मिन्भैमीमनोप्रवृत्तेः कथंपातिव्रत्यभंगप्रसक्तइत्याशङ्कांपरिहरति । पुण्यइति । आस्तांभैमीपरित्यक्तविषयस्यमुनेरपिकस्यमनः पुण्येविषयेप्रमाणंनिश्चितं स्यादपितुनकस्यापि कुतःयद्यस्मात् । अघेपिपरदारगमनादौपातकेपि विषयेधावच्छीघ्रंगच्छदास्ते । मुनेर्मनःपुण्येएवनियतंप्रवर्ततइतिनकिंतु पातकेपि तत्राप्ययंविशेषः । शीघ्रमेवविषयेएवप्रवर्तते । एतच्चधावत्पदेनसूचितं शीघ्रगतावेवधावादेशविधानात् । अत्रतुनलस्यसत्यत्वाद्भैम्याः पातिव्रत्यरक्षणायैवब्रह्मैवंकृतवानिति । तर्हिसर्वेपिमुनयःपापिनःस्युरित्याशङ्कांपरिहरति । परमेश्वरस्तुपुनः हृष्यत्करुणउद्यत्कृपःसन् तच्चिन्तितदघचिंतयतिकर्तुमिच्छतीत्येवंशीलंभक्तस्यचित्तं रुणद्धिपातकात्परावर्तयति । यथासुपरिरघुनाथकृपातेपातकेसर्वथैवनप्रवर्त्तन्तेइतिनसर्वेषांपातकिताप्रसक्तइत्यर्थः । तच्चिंतिपरमेश्वरचिन्तिता ॥ १७ ॥

सालीकदृष्टेमदनोन्मदिष्णु र्यथापशालीनतयानमोनम् ॥ तथैवतथ्येपिनलेनलेभे मुग्धेषुकःसत्यमृषाविवेकः ॥ १८ ॥

सेति । स्वभावतःशालीनतमापिअतिसलज्जापिमदनोन्मदिष्णुरुन्मादवतीसतीसाभैमी अलीकदृष्टेमिथ्यादृष्टेनलेविषयेयथामौनंमापयथापूर्वंकिमप्यवादीत्तथैवतथ्ये सत्येपिनलेमौनंनलेभे । अलीकबुद्ध्यैवसत्येपिनलेअबोधदित्यर्थः । तत्कथमित्याशङ्क्याह । मुग्धेषुमूढेषु सत्यस्यमृषाऽसत्यस्यविवेकोविचारःकःअपितुन । अतोनधृष्टतयावचनंदोषायेतिभावः । शालीनतयेतिवापाठः । अपशालीनतयाअपगतशालीनतयायथामौनंनलेभेतथैवतथ्येपिइतिवाव्याख्येयम् ॥ १८ ॥

व्यर्थीभवन्भावपिधानयत्ना स्वरेणकृत्वाश्लथगद्गदेन ॥ सखीचयेसाध्वसबद्धवाचि स्वयन्तमूचे नमदाननेन्दुः ॥ १९ ॥

व्यर्थीभवदिति । अथतासैमीस्वयमात्मनातंनलमूचे । कस्मिन्सति । सखीनाचयेसमूहेसाध्वसेनअन्तःपुरेपरपुरुषप्रवेशाज्जनितसाध्वसेनकृत्वा बद्धावाक्येनकृतमौनेसति । किंभूतासा । श्लथोविरलःगद्गदःस्खलःतेनस्वरेणशब्देनकृत्वाव्यर्थीभवन्भावपिधानयत्नः सात्विकभावगोपनप्रयासोयस्याःतथाअतएवनमन्नम्रीभूतः आननेन्दुर्मुखचन्द्रोयस्याःसा । अथस्वरेणैवविभावयन्तीभावंनिजंसामृदुगद्गदेनेत्यपिपाठः स्पष्टार्थः ॥ १९ ॥

नत्वाशिरोरत्नरुचापिपाद्यं संपाद्यमाचारविदातिथिभ्यः ॥ वैधीविधेयामधुपर्कतृप्तिः प्रियाक्षराली रसधारयापि ॥ २० ॥

स्वाख्यं परिहरति । नत्वेति । त्रिभिर्विशेषकं । हेपुरुषश्रेष्ठआचारविदासदनुष्ठानक्रमधर्मशास्त्रविदापुरुषेण नत्वाशिरोरत्नरुचाचूडामणिदीप्त्यापिअतिथिभ्यःपाद्यं पाद्यार्थंवारिसम्पाद्यं देयम् । उदकाभावेनत्वापितावच्चरणक्षालनसम्भावनाकर्तव्या । तस्याःरत्नरुचोजलतुल्यत्वादित्यर्थः । आदौनमस्कारःकर्तव्यइतिभावः । आचारविदाऽतिथिभ्यइतिप्रतिवाक्यं श्लोकत्रयेपिज्ञातव्यम् । वैधीविधिसम्बन्धिनीनोदनावाक्यादागतामधुपर्कजन्यातृप्तिःप्रियाक्षरालीप्रियवचनपङ्क्तिः तस्यारसधारयामाधुर्यधारयापिविधेयाकरणीया । मधुपर्कसामग्र्यभावेपिप्रियवचनमपिवक्तव्यमितितात्पर्यः । पाद्यं पूर्ववत् ॥ २० ॥

स्वात्मापिशीलेनतृणंविधेया देयाविहायासनभूर्निजापि ॥ आनन्दबाष्पैरपिकल्प्यमंभः पृच्छाविधेयामधुभिर्वचोभिः ॥ २१ ॥

स्वात्मेति । आचारविदाशीलेनविनीतत्वादिनास्वभावेनसद्वृत्तेनवाकृत्वा स्वात्मापिस्वशरीरमपितृणंविधेयम्तृणंयथानम्रीक्रियतेतथाऽतिथीनामग्रे सेवार्थंस्वात्मापिनम्रीकर्तव्यइत्यर्थः । अथचतृणाभावेस्वाऽऽत्मैव

नृणास्थानेविधेयइत्यर्थः । विष्टरादिकस्यअभावेनिजापिस्त्रीयापि आस नल नणायाभूःस्थानंसिंहासनादितदपि आदरात्झटितिविहायत्य क्तादे या भूःस्थानेआसनमेवकल्प्यमित्यर्थः । अथचजलस्थानेआनन्दवाष्पचर णक्षालनार्थम् । यदिजलंनसम्भवतितर्हिआनन्दवाष्पैरपिहर्षाश्रुभिरपिच रणःकल्प्यं अतिथिदर्शनमात्रेहृष्टेनभवितव्यमित्यर्थः । तेएवकल्प्याइत्य र्थः । मधुभिरितिप्रियैर्वचोभिःपृच्छापिकुशलप्रश्नोपिविधेयःप्रियंवक्तव्य मित्यर्थः । मधुपर्कस्थानेमधुरवचनमेवकर्त्तव्यमित्यर्थः । आचरणशालम यापिप्रियवचनादिक्रियतइतिभावः । शीलंस्वभावेसद्वृत्तइतिविश्वः । अ प्रणोद्योतिथिःसायमपिवाग्भूतृणोदकैरितिस्मृतेः ॥ पृच्छापूर्ववत् ॥२१॥

पद्योपहारेनुपनम्रतापि संभाव्यतेपांत्वरयापरा धः ॥ तत्कर्त्तुमर्हाञ्जलिसज्जनेन स्वसंभृतिःप्रांज लतापितावत् ॥ २२ ॥

पद्येति । पद्योपहारेचरणक्षालनविषयेत्वरयाझटितिअपामनुपनम्रता जलानामनानयनमपिअपराधःसंभाव्यतांयतोलोकेनेत्यर्थः । विलम्बादानि यमेपिझटितिअनानयनाद्योपराधःसंभाव्यते ॥ तत्तस्मादाचारविदाञ्ज लिसज्जनेनकरपुटसंयोजनेनकृत्वा स्वस्यसंभृतिरूपास्वकरणीयातिथ्यसा मग्रीयावत्संपाद्यते तावदाद्यावञ्जलिसंयोजनेनस्वीयाप्रांजलताऋजुताक र्त्तुमर्हाप्रकटीकर्त्तुमुचितेत्यर्थः। तावतापूर्वापराधशांतिर्भवतीतिभावः। यावत्स्वसंभृतिस्वकरणीयातिथ्यसामग्रीसंपाद्यतेतावदंजलिसज्जनेनप्रांज लतापिकर्त्तुमर्हाइतिचान्वयः ॥ यद्वाऽपांत्वरयाजलानयनार्थसंभ्रमेणा नुपनम्रतानमस्काराभावःअपराधःसंप्राप्यतेजलानयनात्पूर्वंकृतेननमस्का रेणसर्वोप्यातिथ्यसंभारःकृतोभवतीत्यर्थः । तथैतत्सर्वंकृतमितितात्पर्यं प्रांजलेत्यच्प्रत्यन्ववेत्यत्राजितियोगविभागात्पदनामर्हालिवत्समासांतइ तिज्ञेयम् ॥ २२ ॥

पुरापरित्यज्यमयात्वसर्जि स्वमासनंतत्किमिति क्षणंन ॥ अनर्हमप्येतदलंक्रियेत प्रयातुमीहाय दिवान्यतोपि ॥ २३ ॥

पुरेति । अर्थात्पूर्वोक्ताचारदर्शनादाचाराच्च पुरस्त्रादावेवस्वमः उनप रित्यज्यत्र्यस्यसर्जिजवतेदीयतेस्म तदनहेमपियोषिदासत्वाद्गामनहेत्वा श्येयमप्यासन्नत्ताणमात्रंकिमितिकुतोहेतोर्नालंक्रियेत । अपितुअलंक्रि यतामित्यर्थः । यदिचयद्यप्यन्यतोपिप्रयातुंअन्यदेशंमपिगंतुंइच्छाचांछावि द्यतेवातथाप्येतदलंकर्तव्यमित्यर्थः । त्वामेवोदिश्यायातमितिचेन्न । मनै तादृग्भागधेयाभावादन्यत्रगमनेच्छायामपित्वयात्रमलंक्रियतामित्यर्थः । क्रियेत । प्रार्थनायांलिङ् ॥ २३ ॥

निवेद्यतांहंतसमापयतौ शिरीषकोशम्रदिमाभिमानम् ॥ पादौकियद्दूरमिमौप्रयासे निधित्सते तुच्छदयंमनस्ते ॥ २४ ॥

निवेद्यतामिति । हेपुरुषश्रेष्ठतुच्छदयंकृपाशून्यंतेमन कियद्दूरंकिंपरिमा णंदूरगमनलक्षणेप्रयासेइमौपादौनिधित्सतेस्थापयितुमिच्छतिनिवेद्यतामग्रे कथ्यतां किंभूतौपादौशिरीषाणांशिरीषपुष्पाणांकोशःसमूहः तस्यम्रदि म्निमार्दवविषयेयोभिमानोमत्तोधिककोमलंवस्तुनास्तीतियोगर्वः तद्विषये लोकस्यवागर्वस्तंसमापयंतौनाशयंतौ अन्योपिनिष्कृपःसुकुमारजनंप्रयासे प्रेरयति । अत्रागमनेपिश्रांतोसीदानीमितःक्वगंतासीतिभावः । शून्यंतु वशीकंतुच्छरिक्तकेइत्यमरः ॥ २४ ॥

अनायिदेशःकतमस्त्वयाद्य वसन्तमुक्तस्यदशांवनस्य ॥ त्वदाप्तसंकेततयाकृतार्था अव्यापिनानेनजनेनसञ्ज्ञा ॥ २५

अनायीति । त्वयाद्यकतमःकिंसंज्ञकोदेशःवसंतेनमुक्तस्यवनस्यदशांम वस्थांअनायिप्रापितः वसंतेनविनायथावनंनिःशोभंतथात्वयाविनासदे शोपीत्यर्थः । कस्माद्देशादागतोसीतिकथयेतिभावः । तथानेनमल्लक्षणज नेनत्वयिआप्त.विषयप्राप्तःसंकेतःसमयसंबन्धोययातस्याभावेनहेतुना क् तार्थाचरितार्थासंज्ञापिनामापिनअव्यापिनुश्रोतुमहोस्वनामापिकथये त्यर्थः । अव्याआवश्यकाभावाद्यांयदितियत् ॥ २५ ॥

तीर्णःकिमर्णोनिधिरेषनैव सुरक्षितेमूच्छ देहप्रवेशः

फलं किमेतस्य तु साहसस्य न तावदद्यापि विनिश्चिनोमि ॥ २६ ॥

तीर्ण इति । हे पुरुषश्रेष्ठ सुरक्षितेऽस्मिन्नन्तःपुरे तव प्रवेशोऽभूदितियत् एष अर्णोनिधिः समुद्र एव किं न तीर्णः किंतु बाहुभ्यामर्णवतरणतुल्य इति एतस्यान्तःपुरप्रवेशरूपस्य साहसस्याविचार्यकारित्वस्य तु पुनः किं फलं प्रयोजनमिति अद्यापीदानीमपि न विनिश्चिनोमि किमर्थमत्रागतमित्यपि कथयेत्यर्थः २६

तवप्रवेशो सुकृतानि हेतुं मन्येऽमदक्ष्णोरपि तावदत्र नलक्षितो रक्षिभटैर्यदाभ्यां पीतोऽसितन्वाजितपुष्पधन्वा ॥ २७ ॥

तवेति । तवात्र प्रवेशे मदक्ष्णोर्मदीयनेत्रयोः सुकृतानि पुण्यान्यपि तावद्धेतूनि कारणानीत्यहं मन्ये कारणांतरे संभवत्यपि मदीयनेत्रयोः पुण्यमादिकारणमित्यर्थः । कथमित्यत आह । यद्यस्माद्रक्षिभटैरतिसुंदरस्त्वं नलक्षितः तथा तन्वा वपुषा जितः पुष्पधन्वा कामो येनैवंभूतो यदाभ्यां नेत्राभ्यां पीतोसि स्वेच्छयावलोकितोसीत्यर्थः । रक्षणार्थमेव नियुक्तैः शूरैर्न दृष्टः आभ्यां च दृष्टः तन्मन्ये मत्पुण्यमेवात्र तव प्रवेशे हेतुरिति भावः ॥ २७ ॥

यथाकृतिः काञ्चनतेयथावा दौवारिकान्धंकरणी च शक्तिः ॥ रुच्योरुचीभिर्जितकांचनाभिस्तथासि पीयूषभुजां सनाभिः ॥ २८ ॥

यथेति । यथा येन प्रकारेण ते आकृतिराकारः लोकोत्तरातिरमणीया । यथा वा ते काञ्चना पूर्वा शक्तिश्च दौवारिकाणामंधंकरणी अंधताकारिणी स्वीय गौरत्वेन जिताकांचनी हरिद्रा याभिस्ताभिः कान्तिभिः कृत्वा रुच्योभिलाष्योसि तथा तेन कारणेन पीयूषभुजां देवानां सनाभिः सगोत्रोसि । देवत्वेन विना तत्र घटतेऽतस्त्वं प्रायेण कश्चन देवोसीति मन्ये चकारो रुच्य इत्यनेन योज्यः रुच्यश्चासि यथेति संबन्ध इति वा । निशाख्याकांचनी पीता हरिद्रावरवर्णिनीत्यमरः । कांचनेति पाठे सुवर्णे दौवारिके त्यत्र द्वारे नियुक्त इत्यर्थे तत्र नियुक्त इति ठक् द्वारादीनां चेत्यैच् अभूतत द्भावे आढ्यसुभगेति ख्युन् निखिलात्पूर्वपदस्य मुमिति ठिड्ढेति ङीप् । रुचिमर्हतीति रुच्यः तदर्हतीति यत् । राजसूयेतिनि

यातोवा । जितकांचनीजिरितिपाठेसमासांतविधेरनित्यत्वात्कप्रत्ययश्चेति नकप् सनामिर्द्योतिजेनपदेतिसभावः ॥ २८ ॥

नमन्मथस्त्वंमहिनास्तिमूर्त्ति नचाश्विनेयःसहि नाद्वितीयः ॥ चिह्नैःकिमन्यैरथवातवेयं श्रीरेवता भ्यामधिकोविशेषः ॥ २९ ॥

नेति ॥ त्वंमन्मथोनहियस्मात्सःकामोनास्तिमूर्त्तिःशरीरंरहितः त्वंआश्विनेयःअश्विनीकुमारोनच । चोप्यर्थः । हियस्मात्सअद्वितीयोनास्तिकिंतुद्वितीयसहितएव । त्वंसशरीरएकश्च अथवेतिपूर्वोपरिलोपे । अन्यैश्चिह्नैःकिं अपितुनकिमपि । किंतर्हिताभ्यांकामाश्विनेयाभ्यांसकाशादधिकाइयंतव श्रीःशोभैवविशेषः ॥ तयोरीदृक्शोभाभावादियमेवतदन्यत्वस्यज्ञापिकेत्यर्थः । नास्तिमूर्त्तिः अस्तिक्षीरादयश्चेतिबहुव्रीहौपश्चान्नकारसमासः २९

आलोकतृप्तीकृतलोकयस्त्वा मसूतपीयूषमयूख मेनं ॥ कःस्पर्धितुंधावतिसाधसार्धं मुदन्वतान न्वयमन्ववायः ॥ ३० ॥

आलोकेति । ननुहेलोकेनतृप्तीकृतःकृतार्थीकृतोलोकोयेनसतत्संबोधनं यस्त्वामेतंत्वद्रूपंपीयूषमयूखंचंद्रं असूतसकोयमन्ववायोवंशःउदन्वतासार्धं स्पर्धितुंस्पर्द्धांकर्तुं साधुयुक्तं धावतिसमुद्रसाम्यार्थंझटितिबुद्ध्यापारूढोभवतीत्यर्थः । समुद्रोप्यालोकेनप्रकाशेनतृप्तीकृतभुवनसुधाकरसूते । कस्मिन्वंशेसमुत्पन्नोसीत्यपिकथयेतिभावः । आलोकोदर्शनोद्योतौलोकस्तुभुवनेजनइतिचामरः ॥ ३० ॥

इतीरयंतीनलसुंदरंतं मत्वामरंरक्षिजनाक्षिबन्धा त् ॥ आतिथ्यशाठ्यव्यपदिश्यातस्यां श्रियंप्रिय स्यास्तुतवस्तुतःसा ॥ ३१ ॥

भूयोपीति । सावासालंनलंरक्षिजनानांदौवारिकाणामक्षिबन्धात्त्रबंधनाददृष्टीकरणान्नलंनसुंदरंनलसदृशं अमरंमत्वानिश्चित्यातिथ्यसंबंधीनिचाटूनिप्रियवचनान्यपदिश्यव्याजीकृत्य तद्व्याजेनतस्यांतस्मिन्नमरेविद्यमानांप्रियस्यनलस्यश्रियंशोभांवस्तुतःतत्वतःअस्तुतपुनरपिवर्णयतिस्म ॥

प्रियवचनव्याजेनत्वत्तोनलेशोभावर्णनपरैववमूवेतिभावः ॥ ३१ ॥

वाग्जन्मवैफल्यमसह्यशल्यं गुणाद्भुते वस्तुनि मौनता चेत् ॥ खलत्वमल्पीयसि जल्पितेपि तदस्तु बंदिभ्रमभूमितैव ॥ ३२ ॥

पुनरपिकिमित्यस्तुतेत्याशंक्यकविःस्तुतिप्रकारमाह । वागिति । गुणै रद्भुतेआश्चर्यभूतेवस्तुनिमौनतामुकीभावश्चेद्गुणाद्भुतंवस्तुनवर्ण्यतेचेत्तर्हि वाग्जन्मनोवैफल्यमसह्यशल्यमतिदुः खदायिदुःसहशल्यतुल्यभवतीत्यर्थः मूकस्यवचनकोपिविशेषइत्यर्थः । तर्ह्यल्पमेववक्तव्यमित्यतआह । अल्पी यसिजल्पितेतुभाषितेपिखलत्वंदुर्जनत्वंआयाति । लोकस्तंदुर्जनइतिवद ति तत्तस्मात्बन्दिनःस्तुतिपाठकस्यभ्रान्तिः स्तुतिपाठकोयमितिभ्रांति स्तस्याभूमितैवस्थानतैवास्तुभवतु । गुणाद्भुतंवस्तुबहुवर्णनीयमितिकवि रुपदेशवचःतस्मात्तु नयायुक्तास्तुतिरारब्धेतिभावः । तस्मान्मयिस्तुतिपा ठकभ्रांतिर्लोकस्यभवत्वितिमैमीवचोवेतिभावः ॥ ३२ ॥

कंदर्प एवं दमनिन्द तत्त्वां पुण्येन मन्ये पुनरन्यजन्म ॥ चण्डीशचण्डाक्षिहुताशकुंडजुहाव यन्मंदिरमिन्द्रियाणाम् ॥ ३३ ॥

कंदर्पइति ॥ कंदर्पएवमहतापुण्येनत्वांत्रेवत्वद्रूपमेवेदंदृश्यमानंपुनरपि अन्यजन्माविन्दतलेभेइत्यहमन्येज्ञाने । कुतोयद्यस्मात्समदनः चण्डीशस्य चंडदुःसहंअक्षितृतीयनेत्रंतत्सम्बन्धिहुताशकुंडंतस्मिन् इन्द्रियाणांमंदिरं गृहशरीरंजुहाव । पूर्वापेक्षयाधिकसौंदर्यप्राप्त्याशयाबुद्धिपूर्वकमेनअग्नि कुंडेस्वशरीरंक्षिप्तंतेनैवपुण्येनत्वद्रूपमाप्तम् । अन्येनापितथैवक्रियतेसएव त्वमितिभावः ॥ ३३ ॥

शोभायशोभिर्जितशैवशैलं करोषि लज्जागुरुमौलिमलम् ॥ दस्रौ हठाच्छ्रीहरणाद्दस्रौ कंदर्पमप्युज्झितरूपदर्पम् ॥ ३४ ॥

शोभेति त्वंशोभायशोभिःकीर्तिभिःकृत्वाजितःशैवोहरसबन्धीशैलः कैला सोयेनएवंविधमैलपुरूरवसहठेनबलात्कारेणश्रीहरणात् लज्जयागुरुतं

स्त्रोमौलिःशिरो न स्य एवं विधं करोषि । तथाकांतिकीर्त्तिं भिर्जितकैलासौ । दृष्ट्वावाश्विनेयावपिहठहरणादुदस्तौगलद्वाष्पौकरोषि । तथातस्मादेवहे तोःकद्र्यंमपिवर्जितस्त्यक्तःरूपदर्पःसौंदर्यगर्वोयेनस्तादृशङ्करोषि । च तुर्ष्वपित्वमधिकःसुंदरइतिभावः । अन्योपिवलादृहीतधनःसलज्जःग लद्वाष्पःत्यक्तदर्पश्चभवति ॥ ३४ ॥

अवैमिहंसावलयोवलक्षा स्त्वत्कांतिकीर्तेश्चपलाः पुलाकाः ॥ उड्डीययुक्तंपतिताःस्रवंति वेशंतपूरंप रितःप्लवंते ॥ ३५ ॥

अवैमीति । वलक्षाःधवलाहंसावलयःहंसपङ्क्तयस्त्वत्कान्तेःत्वत्सौंद र्यस्यकीर्तेर्यशसश्चपलाश्चंचलाःप्रसरणशीलाःपुलाकास्तुच्छधान्यांशा इत्यहमवैमिजाने । वलाकाइतिपाठेतार्श्चितिव्याख्येयम् । पुलाकत्वंसमर्थ यते । अतएवताउड्डीयउत्पत्यस्रवंतीनांनदीनांवेशतानांपल्वलानांच पूरंप्रवाहंपरितःउन्नयतःपतिताःसत्यंयुक्तंप्लवंते तदुचितमित्यर्थः । पु लाकाअप्यतिलघुत्वादुत्पत्यनद्यादौपतिताःसंतोगौरवाभावस्तरन्ति । त स्माद्धंसादीनांपुलाकत्वंघटतइत्यर्थः । शुभ्राहंसावलयोनकिंतुत्वत्कान्ति कीर्तिपुलाकाःसर्वत्रोड्डीयपतिताः सत्यःनदीस्वल्पसरांसिचपूरयित्वाप्लु वंते । इत्थंसुन्दरतरःकोपिनदृष्टइतिभावः वलक्षोधवलोर्जुनः । स्यात्पु लाकस्तुच्छधान्ये वेशन्तःपल्वलश्चाल्पसरइत्यमरः पूरस्परितः अभितःप रितइतिद्वितीया ॥ ३५ ॥

भवत्पदाङ्गुष्ठमपिश्रिताश्रीर्ध्रुवंनलब्धाकुसुमा युधेन ॥ रतीशजेतुःखलुचिन्हमस्मिन्नर्द्धेन्दुरास्ते नखवेषधारी ॥ ३६ ॥

भवदिति । कुसुमायुधेनमकरध्वजेनभवत्पदस्यभवच्चरणस्यावयवाच्च्यु तोंगुष्ठःतमपिश्रिताश्रीःशोभातस्मात्कारणाद्ध्रुवप्रायेणनलब्धा । अन्या वयवशोभाप्राप्तेःकावार्ता तस्मात्कुतःखलुयस्मादस्मिन्नंगुष्ठे नखवेषनख स्याकारंधारयतीतिधारिदधत् । अर्द्धेन्दुरर्द्धचिन्हलक्षणरतीशजेतुर्महादेवस्य चिन्हमास्तेविद्यते स्वशत्रुचिन्हंमलरूपंअर्द्धेन्दुंविलोक्यतद्गताश्रियंगृहीतुं

बिभेतीत्यर्थः । अन्योपिस्वशत्रुचिन्हंदृष्ट्वातच्छ्रियंगृहीतुंनशक्नोति । काम:त्वत्पदाङ्गुष्ठनखसदृशोनजयतीतिभावः । कामजयिनमीशमपिजित्वा तच्चिन्हंयेनापहृतंतस्यांगुष्ठस्यश्रियंकामःकथंलभेतेतिवाक्यार्थः । त्वदङ्गुष्ठः कामस्यजेताऽर्धचन्द्रांकितत्वाद्यथाशिवइत्यनुमानमत्रप्रमाणमित्यर्थः । त्वन्नखाश्चन्द्राकाराइत्यर्थः । रतीशजेतुःशेषषष्ठीसमासः ॥ ३६ ॥

राजाद्विजानामनुमासभिन्नः पूर्णांतनूकृत्यतनूंतपोभिः ॥ कुहूषुदृश्येतरतामुपेत्य सायुज्यमाप्नोतिभवन्मुखस्य ॥ ३७ ॥

राजेति । अनुमःसंप्रतिमासंभिन्नःपुनरुत्पद्यमानत्वादन्यएवद्विजानां राजाचन्द्रःपूर्णिमायांपूर्णांतनूंशरीरं चान्द्रायणतपोभिरिवतनूकृत्यक्षयंनीत्वाकुहूषुप्रतिमासममावास्यासुसदृश्येतरतामदृश्यत्वंएत्यप्राप्यभवन्मुखस्यसायुज्यमैक्यं प्राप्नोतिगच्छतिकिं तपःसामर्थ्येनत्वन्मुखैक्यं गतइत्यर्थः । चन्द्रादप्यधिकंभवन्मुखंइतिभावः । अन्योपिब्राह्मणश्रेष्ठःपूर्वसंस्कारवशात्तपोभिःशरीरंवशीकृत्यब्रह्मैक्यं गच्छति । दृश्येतरतामित्येणेतिक्वचित्पाठः ॥ ३७ ॥

कृत्वाविचित्रेतववीरनेत्रे किंकृष्णसारस्यदृशौमृगस्य ॥ अदूरजाग्रद्विदरप्रणाली च्छलादयच्छद्विधिरर्धचन्द्रम् ॥ ३८ ॥

कृत्वेति । विधिःतवनेत्रेदृशौबहुभिर्वर्णैःशुक्लकृष्णरक्तरूपैर्विचित्रेनानावर्णेआश्चर्यरूपेचकृत्वाकृष्णवर्णएवसारःश्रेष्ठंशोविद्यतेयस्मिन्ताट्टशस्यमृगस्यतयोर्दृशोरदूरेनिकटेजाग्रतीस्फुरन्तीविदररूपानेत्राधोगतरूपाप्रणालीरेखातामेवार्द्धचन्द्रमयच्छद्दत्तवान्किम् । त्वन्नेत्रसादृश्याभिलाषिणोः मृगदृशोरधोवर्त्तमानगर्तमिषेणाधिक्कारसूचनार्थपरीक्षकोब्रह्मागलहस्तंदत्तवान् । विदरःस्फुटनंभिदेत्यमरः ॥ ३८ ॥

मुग्धःसमोहात्सुभगान्नदेहा हृदद्भवभूरचनायचापम् ॥ भ्रूभङ्गजेयस्तवयन्मनोभू रनेनरूपेणयदातदाभूत् ॥ ३९ ॥

मुग्धइति । यद्यस्माद्योमनोभूःकामःभवद्भ्रुवोरचनायनिर्माणायब्रह्मणोस्वंचापन्ददत्प्रायच्छत् सदातदासर्वदाअनेनप्रत्यक्षदृश्येनरूपेणसौन्दर्येणहेतुनातवभ्रुवोर्भङ्गःकुटिलत्वंतस्मात्तेनजेयोजेतुंयोग्योजातःअसमर्थोऽभूत् । तस्मात्कारणात्सकामोमोहादज्ञानान्मुग्धोमूर्खोनतुसुभगात्सुन्दराद्धेतोःमुग्धःसुन्दरः यःस्वकीयमायुधंस्ववैरिणेप्रयच्छतिसनिरायुधत्वाद्धेतयावैरिणाजेतुंशक्यते । तस्मात्कामोमुग्धोमूर्खोनतुसुन्दरःउन्मादकत्वात्तदाकारत्वाच्चभ्रुवौकामचापरूपेइतिभावः । यदालदेतिसमुदायस्यसर्वदेत्ययमेवार्थः । मुग्धःसुन्दरमूर्खयोरितिविश्वः ॥ ३९ ॥

मृगस्यनेत्रद्वितयंतवास्ये विधौविधुत्वानुमितस्य

दृश्यम् तस्यैवचंचत्कचपाशवेशः पुच्छःस्फुरच्चा

मरगुच्छएषः ॥ ४० ॥

मृगस्येति । तवास्येविधौमुखरूपेचन्द्रे विमतोमृगवांश्चन्द्रत्वात्संगतवदितिविधुत्वेनहेतुनानुमितस्यानुमानगम्यमृगस्यनेत्रद्वितयंनेत्रद्वयंदृश्यंदृश्यतइत्यर्थः । तस्यैवमृगस्यचञ्चन्विलसत्कचपाशःकेशपाशस्तस्यवेषआकारोव्याजोयस्यैवंविधः एषपुच्छःस्फुरच्चामरपुच्छोयस्यस्फुरच्चामरस्तवकगुच्छोमृग.नतुकेशपाशइत्यर्थः । चन्द्रतुल्यंमुखंमृगनेत्रतुल्येनेत्रेस्फुरच्चामरगुच्छपुच्छसदृशश्चकेशपाशः अलङ्कारार्थंचचामरंगुच्छपुच्छेचबध्यते । अत्रहरिणविशेषोवाज्ञातव्यः ॥ ४० ॥

आस्तामनङ्गीकरणद्रवेन दृश्यःस्मरोनेतिपुराण

वाणी । तवैवदेहंश्रितयाश्रियेति नवस्तुवस्तुप्र

तिभातिभावः ॥ ४१ ॥

आस्तामिति इतिपुराणवाणीपुराणानांपुरातनानांपुराणीचजीर्णावागास्तांतिष्ठतु । इतिकिम्स्मरोभवेनशिवेनानङ्गीकरणाद्धेतो दृश्योनयनगोचरोनेतितुपुनस्तवदेहंश्रितयाश्रियाशोभयाएवकर्त्र्या अनङ्गीकरणात् कानस्याश्रयत्वेनास्वीकाराद्धेतोर्नदृश्यःनयनगोचरोऽयचतेनैवहेतुनादृश्योरनशोनाभूदइतिनवोनूतनोऽपूर्वश्चवादः वचनंवस्तुसत्यभूतवस्तुतत्वंवाप्रतिभातिस्फुरति । कामस्तच्छोभयाजितत्वाददृश्योजातोनतुदग्धत्वादिनित

त्ववादः । कामादपिसुन्दरोसीतिभावः । प्रतिमायाअतिवादोऽतिशयइ तिवा । वाणोक्तौजीर्णवादस्तुपुमानवश । अनयोर्महदन्तरमित्यर्थः । त्व दुंश्रितयाशोभयाहेतुनाशोऽत्रादर्शनमात्रेणदृश्योजातइतिवा ॥ ४१ ॥

त्वयाजगत्युञ्चितकांतिसारे यदिंदुनाशीलिशिलो ञ्छवृत्तिः । आरोपितोमाद्दवकोपिमौलौ सपत्न राज्येपिमहेश्वरेण ॥ ४२ ॥

त्वयेति । त्वयाउञ्चितोगृहीतःकान्तिसारःशोभाश्रेष्ठभागोयस्ययस्माद्वा एवंविधेजगतित्रिभुवनमध्ये इन्दुनाशिलश्चउञ्छश्चक्षेत्रादिपतितकणादानधा न्यादानलक्षणौशिलोञ्छौताविववृत्तिर्जीविकायद्यस्मादशीलि अभ्यस्तीकृ ता । तत्तस्मात्कारणान्महेश्वरेणमाणवकोपिशायःकलारूपोपिचन्द्रःमौलौ शिरसिआरोपितःधृतः । यवनांयाजकानांब्राह्मणानांराज्येपिचव्यशिषि क्तःद्विजराजोपितत्तएषकृतइत्यर्थः । त्वद्गृहीतात्कान्तिसारादवशिष्टंकां तिभागंकथंचिन्मेलयित्वाचन्द्रेणस्वस्यसौंदर्यं यस्मादर्जितंतस्मात्कलामात्र स्यातिसुन्दरत्वादीश्वरेणबालोपिशिरसिभूषणत्वेनधृतोयवनांमध्येश्रेष्ठ कृतोऽत्युज्ज्वलत्वाच्छिलोञ्छवृत्त्युपादानाच्चेत्यर्थः । बालोपिअन्यस्तपस्वी महतारााज्ञानमस्क्रियतेद्विजराज्येस्थाप्यतेचमहाधनिकेनमाणवकोहार विशेषोमौलावारोप्यतइत्याश्चर्यम् । सतुकण्ठेधार्यतेनतुशिरसिचन्द्रेत्व च्छोभालेशएवविद्यतेत्वादृशःसुन्दरःकोपिनास्तीतिभावः । जीवेद्वापिशि लोञ्छेनेतिस्मृत्याशिलोञ्छवृत्तिजीवनेतिप्रशस्तत्वोक्तेः ॥ ४२ ॥

आदेहदाहंकुसुमायुधस्य विधायसौन्दर्यकथादरी द्रम् । त्वदङ्गशिल्पात्पुनरीश्वरेण चिरेणजानेजग दन्वकंपि ॥ ४३ ॥

आदेहदाहमिति । कुसुमायुधस्यकामस्यआदेहदाहंशरीरदाहमारभ्य सकलंजगत्सौन्दर्यकथयादरिद्रंविहीनंविधायेदानींत्वदङ्गस्यशिल्पान्निर्मा णाद्धेतोरीश्वरेणपुनरपिचिरेणचिरकालाद्जगदन्वकंपि कृपयादृष्टमिति जानेऽहमुत्प्रेक्षे कामानन्तरमियन्तंकालंसौन्दर्यवार्तापिनाभूदिदानींतस्या नेतवाभिषेककरणादीश्वरेणजगतःकृपाकृतेत्यर्थः । अन्योपिराजादुःसह

दारिद्र्यपीडितानांदयते मदनादप्यधिकोसीतिभावः ॥ ४३ ॥

महीकृतार्थो यदिमानवोसि जितंदिवायद्यमरेषुकोपि । कुलंत्वयालङ्कृतमौरगंचे न्नाधोपिकस्योपरिनागलोकः ॥ ४४ ॥

महीति । यदित्वंकोपिमानवःमनुष्योसि । तर्हिमहीकृतार्थाकृतकृत्या धन्यात्वयालंकृतत्वादित्यर्थः । अथचकृतःपर्याप्तोर्थोभिधेयंयस्याःसामह्य तेपूज्यतेमह्यतेमहीशब्दार्थे यद्यमरेषुदेवेषुमध्ये त्वंकोपिदेवःस्यातर्हि दिवास्वर्गेणजितंसर्वोत्कृष्टेनजातं पूर्वस्मादेवहेतोः दीव्यतिविजिगीषति इतिद्यौरिति । पूर्वंदिवोविजयेक्षयैवाभूदिदानींतज्जितमित्यर्थः । त्व याचौरगंसर्पसम्बन्धिकुलमलंकृतंतर्ह्यधोपि अधोदेशस्थितोपित्वयाधि ष्ठितोनागलोकोपातालकस्योपरिनऊर्ध्वदेशेनअपितुसर्वस्यापिपूर्वस्यवहे तुः । नगच्छन्तीत्यगानअगा नागास्तेषांलोकः इदानीमप्रतिहतप्रसरत्वा त्सर्वस्याप्युपरिगन्तुंयोग्यइत्यर्थः । पूर्वोक्तेषुमध्येकस्त्वंकथयेतिभावः । संज्ञावनयास्वाभिलषितत्वाच्चदेवंविहायप्रथमंमानवोक्तिः ॥ ४४ ॥

सेयंनधत्तेऽनुपपत्तिमुच्चै र्नचित्तवृत्तिस्त्वयिचिन्त्यमाने ॥ ममौसभद्रंचुलुकेसमुद्र स्त्वयात्तगाम्भीर्यमहत्त्वमुद्रः ॥ ४५ ॥

सेति । सःअगस्त्यः । प्रसृतौअञ्जलौसमुद्रंकथंममौइतिमहतीमनुपपत्तिं पूर्वंयाप्रापसेयंमच्चित्तवृत्तिस्त्वयिचिन्त्यमानेविचार्यमाणेसतितांमहतीमनु पपत्तिमघटमानतामिदानींनधत्ते नधारयति । कुतः यतस्त्वयाआत्तेगृही तेगांभीर्यमहत्त्वेगम्भीरताविशालतेएवमुद्राचिन्हंयस्यससमुद्रो भद्रंसुखेनअ गस्त्यस्यचुलुकेममौ । गाम्भीर्यस्यमहत्त्वस्यचत्वयागृहीतत्वात्तस्याञ्जलौ विद्यमानत्त्वेनकाप्यनुपपत्तिः । समुद्रादप्यतिगम्भीरोतिमहांश्चत्वमिति भावः । आत्तेतिआङ्पूर्वस्यदातेर्घचउपसर्गात्तइतिवा ॥ ४५ ॥

संसारसिन्धावनुबिम्बमत्र जागर्त्तिजानेतववैरसेनिः ॥ बिम्बानुबिम्बौहिविहायधातु र्नजातुदृष्टातिसरूपसृष्टिः ॥ ४६ ॥

संसारेति । अत्र अस्मिन्संसाररूपे जगत्त्रयरूपे सिन्धौ समुद्रे वैरसेनिर्नल सावअनुबिम्बं प्रतिबिम्बं जागर्त्ति स्फुरतिइतिजाने । नलएवत्वत्सदृशोना न्यइत्यर्थः । सिन्धुपदं प्रतिबिम्बसंभावनार्थम् । हियस्माद्धातुब्रह्मणो तिस्वरूपयोरतिसमानसौन्दर्ययोर्वस्तुनोः सृष्टिर्निर्माणंबिम्बानुबिम्बौवि म्बप्रतिबिम्बौविहायत्यक्त्वाजातुकदाचिदपिनदृष्टा । बिम्बस्यसदृशंप्रति बिम्बमेवनान्यदित्यर्थः । अतिसुरूपोनलस्तस्यानुबिम्बस्त्वमित्यर्थः । न लसदृशोसीतिभावः ॥ ४६ ॥

इयत्कृतंकेनमहीजगत्यो महीमहीयःसुकृतंजनेन। पादौयमुद्दिश्यतवापिपद्या रजःसुपद्मश्रियमारजेते ॥ ४७ ॥

इयदिति । केनजनेनमहीजगत्यांभूलोके इयदनिर्वचनीयंमहीयोतित रांमहत्सुकृतंकृतंअहोआश्चर्ये । महीमहेन्द्रइतिपाठेमहीमहेन्द्रेणकेनच महत्सुकृतंकृतं ...इतिसंबुद्धिः । तवापिसम्राजोतिसुकुमारस्यपादौचरणौयं मुद्दिश्यपद्यारजस्सुपद्मश्रियंकमलशोभांलाभारजेते । आचरतः । भूलोकेकःपुण्यवानेवंविधोऽयमुद्दिश्यकार्यार्थंत्वमपिचरणचारीगच्छसितं कथयेतिभावः । स्वर्गेसुकृतीसज्जाव्यतेभूलोकेतुविद्यतइत्याश्चर्यम् । सर णिःपद्धतिःपद्येत्यमरः । पद्यापदमस्मिन्दृश्यमितियत् ॥ ४७ ॥

ब्रवीतितेकिंकिमियंनजाने सन्देहदोलामवलम्ब्यसंवित् ॥ कस्यापिधन्यस्यगृहातिथिस्त्वमलीकसंभावनयाथवालम् ॥ ४८ ॥

ब्रवीतीति । इयंमेसंवित्चेतना सन्देहलक्षणांदोलामवलंब्यअधिरुह्यते तुभ्यकिंकिंब्रवीतीतिनजाने। किंनलएवत्वंमन्योवामामेवोद्दिश्यआगतोन्यं वेत्याद्यनेकप्रकारःसंशयोभवति । सत्यंकिमितिननिश्चिनोमीत्यर्थः । अ थवापूर्वापरितोषे अलीकसंभावनयामामुद्दिश्यागतोसीतिनलोसीतिवम् वासंभावनयालम् सामकार्योयलभ्यत्वमन्यस्यकस्यापिधन्यस्यलोकोत्तरभाग धेयस्यगृहेअतिथिर्भविष्यसिप्रायेणनतुममएतादृग्भागधेयाभावादितिभा वः । कस्यासीतिपाठेगृहातिथिरसिवदेत्यर्थः ॥ ४८ ॥

प्राप्तैव तावन्नलरूपसृष्टिं निपीय दृष्टिर्जनुषः फलं मे ॥ अपि श्रुती नामृतमाद्रियेत तयोः प्रसादीकुरुषे गिरं चेत् ॥ ४९ ॥

प्राप्तेति । मे दृष्टिस्त्वद्रूपसृष्टिं रमणीयकातिशयं निपीय सादरं विलोक्य तावत्प्रथमतः जनुषो जन्मनः फलं साफल्यं प्राप्तैव । परं श्रुती अपि कर्णावपि अमृतं नाद्रियेताम् । अपितु नेऽप्यमृतपानं कुरुताम् । चेद्यदि त्वं गिरं तयोः श्रुत्योः प्रसादीकुरुषे प्रसन्नो भूत्वा किमपि वदिष्यसि तर्ह्यमृतपानजन्यसुखमनयोर्भविष्यतीत्यर्थः । सर्वस्यापि प्रश्नोत्तरं प्रयच्छेति भावः ॥ ४९ ॥

इत्थं मधूत्थं रसमुद्गिरन्ती तदोष्ठबन्धूकधनुर्विसृष्टा ॥ कर्णात्प्रसूनाशुगपञ्चबाणी वाणीमिषेणास्य मनो विवेश ॥ ५० ॥

इत्थमिति । प्रसूनाशुगः कामस्तस्य पंचबाणी वाणीमिषेण कर्णात् कर्णं प्रविश्य अस्य नलस्य मनो विवेश प्रविष्टा । किंभूता । इत्थं पूर्वोक्तप्रकारेणातिस्वादुत्वान्मधूत्थं माक्षिकोद्भवमसृतोद्भवं वा रसमुद्गिरन्ती प्रकटयन्ती पुष्परसं स्रवन्ती । तथा तस्या ओष्ठलक्षणं बन्धूकं तल्लक्षणं कामधनुस्तेन विसृष्टा युगपन्मुक्ता । कामबाणानां युगपदन्तः प्रवेशो यथा कामव्यथा भवति तथा तद्वाणी समाकर्णनमात्रेण तस्याभूदिति भावः । कर्णादिति ल्यप्लोपे पञ्चमी ५०

अमज्जदाकण्ठमसौ सुधासु प्रियं प्रियाया वचनं निपीय ॥ द्विषन्मुखेऽपि स्वदते स्तुतिर्या तन्मिष्टतानेष्टमुखे त्वमेया ॥ ५१ ॥

अमज्जदिति । असौ नलः प्रियायाः प्रियं मधुरं सानुरागं च स्वीयस्तुतिरूपं वचनं निपीय सादरमाकर्ण्य आकण्ठं कण्ठावधि । आमज्जमिति पाठे मज्जापर्यन्तं सुधास्वमृतेषु अमज्जत । सर्वाङ्गीणानन्दमयोऽभूदित्यर्थः । स्वस्तुतिश्रुत्या कथमानन्दयुक्त इत्यत आह । या स्तुतिर्द्विषन्मुखेऽपि विद्यमाना सती स्वदते रोचते । तस्याः स्तुतेर्मिष्टता मधुरता इष्टमुखे तु पुनरमेया न अपरिमिता न भवति । अपितु भवत्येव । वैरिसमाश्रयेणान्यद् रुच्यं भवति स्तुतिस्तु रुच्यैव भवति सा स्वप्रियाश्रया रुच्यतरा कथं न भवतीत्याशयः । आमज्ज

अनर्घं तिटप् ॥ ५१ ॥

पौरस्त्यशैलं जनतोपनीतां गृण्हन्नथान्हःपतिरर्घपूजाम् ॥ तथातिथेयीमथसंप्रतीच्छन्प्रियार्पितामासनमाससाद ॥ ५२ ॥

पौरस्त्येति । अथअन्हःपतिःसूर्योजनतयाजनसमूहेनउपनीतामर्पिताम् अर्घलक्षणांपूजांगृह्णन्अङ्गीकुर्वन्यथापुरःभवंपौरस्त्यशैलंउदयाचलंआसादयतितथाप्रियार्पितांभैम्यावितीर्णामातिथेयीं अतिथिषुसाध्वींपूजांसंप्रतीच्छन्स्वीकुर्वंस्तथा पुरोभवंपौरस्त्यंसनलः अस्याभैम्यावयस्यासनंसख्यासनंआससादभेजे । स्वस्यदूतत्वाद्भैम्यासनंत्यक्त्वासख्यासनंभेजेइत्यर्थः । पौरस्त्यंभवार्थेदक्षिणापश्चात्पुरसस्त्यक् । आतिथेयींसाध्वर्थेपथ्यतिथीतिढञ् ङीप् ॥ ५२ ॥

अयोधितद्वैर्यमनोभवाभ्यां तामेवभूमीमवलम्ब्य भैमीम् ॥ आहस्मयत्रस्मरचापमन्तश्छिन्नंभ्रुवौतज्जयभङ्गवार्त्ता ॥ ५३ ॥

अयोधीति । तद्वैर्यमनोजवाभ्यांतस्यनलस्यधैर्यकामाभ्यांकर्तृभ्यां तां भैमीमेवभूमींस्थानमवलंब्याश्रित्यभैमीमेवविषयं कृत्वापरस्परमयोधियुद्धमकारि भैमीविषयंधैर्यंकर्तृभैमीविषयमदनंजिगीषयायुद्धंचकारमदनश्चधैर्यंजिगीषयेत्यर्थः । यत्रभैमीलक्षणायांयुद्धभूमाअन्तर्मध्येच्छिन्नं भ्रुवौभ्रूरूपंस्मरचापंकर्तृतयोर्धैर्यकामयोर्यथाक्रमंजयस्यभङ्गस्यपराजयस्यवावार्त्तांकथांआहस्मकथयतिस्म भैमीरूपायांसङ्ग्रामभूमौपतितंभैमीभ्रूरूपकामचापच्छिन्नं धैर्यस्यविजयंकामस्यपराजयंकथयतिस्मेतिभावः । यस्यधनुर्भङ्गस्तस्यपराजयःअन्यस्यचजयइतिलोकप्रसिद्धिः भैम्यासुल्भमपिकामधैर्यंनाजीगणदितिभावः । भ्रुवोरसलग्नत्वंसामुद्रिकोक्तंलक्षणम् ॥ ५३ ॥

अथस्मराज्ञामवधीर्यधैर्यादूचेसतद्रूपगुणप्रवीणितोपि ॥ त्रिवेकधाराशतधौतमन्तःसतांनकामःकलुषीकरोति ॥ ५४ ॥

अथेति । अथतस्याभैम्यारूपयावीणयोपवीणितोपिगीतोपिसनलो

धैर्यात्स्मराज्ञामवधीर्यकञ्चे । वीक्ष्योपगायनेत्विकामाधीनत्वंयुक्तम् । धैर्यात्तन्नजातमित्यर्थः । धैर्याधिक्यात्कामोव्यवहितोनतुसर्वथाशान्तइति ज्ञातव्यम् । अन्यथारसभङ्गःस्यात् । अर्थान्तरन्यासमाह । काम विवेक धारयाविचारप्रवाहेणशतवारंधौतमुज्ज्वलीकृतंसतामन्तर्मानसंनकलुषी करोतितस्मादुचितमेतदित्यर्थः । अवधीर्येतिपूर्ववत् ॥ ५४ ॥

हरित्पतीनांसदसःप्रतीहि त्वदर्थमेवातिथिमागतं माम् ॥ वहन्तमन्तर्गुरुणादरेण प्राणानिवस्वःप्रभुवाचिकानि ॥ ५५ ॥

हरिदिति । हेभैमीत्वंमाहरितांदिशांपतयस्तेषांदिक्पालानांसदसःसभातःआगतंत्वदीयमेवअतिथिंप्रतीहिजानीहि । किंभूतमांस्वःप्रभवोदिक्पालास्तेषामिंद्रादीनांवाचिकानिसंदेशवचनानिगुरुणाआदरेणप्राणानिवान्तर्हृदयेवहन्तंधारयन्तं अहंत्वदर्थंदेवैर्दूतःप्रेषितइत्यर्थः । कुतआगतकस्यातिथिरितिप्रश्नस्यउत्तरंदत्तम् । गुरुणादरेणत्यनेनदूतधर्मोदर्शितः ५५

विरम्यतांजातवतीसपर्या निविश्यतामासनमुज्झितकिम् ॥ दूत्यंहियन्नःफलितंविधेयं सैवातिथेयीपृथुरुद्भविन्त्री ॥ ५६ ॥

विरम्यतामिति । हेभैमित्वयाविरम्यतांनिर्व्यापारतयास्थीयताम् । यतःसपर्याजातवतीजातानिविश्यतांदूतदर्शनमात्रेणआसनकिमितित्वयिभिक्तंपरित्यक्तम् । अतिथिदर्शनेचैतत्कर्तव्यमितिकृतमित्याशङ्क्याह । यानोस्माकंदूततासाफलिनीफलवतीविधेयाकरणीयासैवपृथुर्महतीआतिथेयीअतिथिपूजाउतउच्चैस्तरांभवित्रीभविष्यती आसनादिपरित्यागस्तूपचारएवसनकार्यः किंतुयदर्थमागतोस्मितत्सफलयेत्यर्थः । फलितेत्यपिपाठः फलिनीफलवद्भ्यामिनच्स्वार्थे ॥ ५६ ॥

कल्याणिकल्पासितवाङ्ककानि कच्चिन्नमांचिन्नमनाविलंते ॥ अलंविलम्बेनगिरंमदीयां माकर्णयाकर्णतटायताक्षि ॥ ५७ ॥

कल्याणीति हेकल्याणिशोभनरूपे तवाङ्ककानिकोमलान्यङ्गानिकल्पानि

समर्थोनिनीरोगाखिकच्चितमामतिशयेमनीरोगाखिकिंकथयेत्यर्थः । तेषि समनाविलंकालुष्यरहितकच्चिनमांविद्यते । विलम्बेनालएतावानेवकुश लप्रश्नोस्तुअन्यत्प्रष्टुमयुक्तम् ॥ प्रकृतकार्यविरोधात् । प्रकृतमेवाह । हे आकर्णतटायताक्षि । आकर्णपूर्णनयनेभैमी । त्वंमदीयांवल्गमाणांगिर माकर्णय । निरामयःकल्यइत्यमरः । कच्चिन्नमांकिमेस्विक्छ्व्यमेत्याम् ॥५७॥

कौमारमारभ्यगणागुणानां हरन्तितेभैमिदिशामधीशान् ॥ सुराधिराजंसलिलाधिपंत्र हुताशनंचायमनन्दनंच ॥ ५८ ॥

श्लोकत्रयेणचतुर्णामपिसाधारण्येनदूत्यंकरोति । हेभैमी । कौमारम्बाल्यारम्भकृतितेगुणानांगणाःसौंदर्यसुशीलत्वादयः दिक्षुधृतमाधिपत्यमेस्तान्देवेन्द्रान्हरन्ति । तानेवाह । सुराधिराजमिन्द्रंसलिलाधिपंवरुणंच हुताशनमग्निंचअर्यम्णः सूर्यस्यनन्दनंपुत्रंधर्मराजंचत्वद्गुणाकर्णेनागुरागी पिसानुरक्तास्त्वयीत्यर्थः ॥ ५८ ॥

चरच्चिरंशैशवयौवनीय द्वैराज्यभाजित्वयिखिद्यतेत्र ॥ तेषांरुचश्चौरतरेणचित्तं पञ्चेषुणालुण्ठितधैर्यवित्तम् ॥ ५९ ॥

चरदिति । शैशवंयौवनंतत्संबन्धिशैशवयौवनीयंद्वैराज्यंभजतेतस्यांव यःसंधौवर्त्तमानायात्वयि चिरंचरत्तवशैशवमारभ्यचंचलमासक्तंतत्तेषांचित्तंखेदंदुःखमेतिप्राप्नोति । किंभूतंचित्तंपञ्चेषुणाकामेनलुण्ठितंधैर्यमेवचित्तंयस्य । किंभूतेनकामेनअतिपीडितत्वाद्रुचःशरीरकान्तेःचौरतरेण विरहातुरस्यकान्तिर्हीनाभवति । त्वयिआसक्तत्वाच्चौर्योपगमत्वाद्विरहपीडायाअसह्यत्वम् । अन्योपिराजद्वयमध्येसीमायांचरतिसधनुर्वैरेणकेनचिदपहृतधनोदुःखमाप्नोति । द्वैराज्येतिदृष्टविभावेयम् ॥ ५९ ॥

तेषामिदानींकलकेवलंसा हृदन्वदाशाविलसत्यजस्रम् ॥ आसाद्यपाशास्तुतनूरुदाराः पूर्वादयःपूर्वबदात्मदाराः ॥ ६० ॥

तेषामिति । किलनिश्चयेन इदानींत्वत्तारुण्यदशासमयेसात्वदाशात्वत्प्रा

त्वद्विरहांस पीडयतीतिभावः । विरहदंदह्यइतिचपाठः । तेविरहद ग्धदितीन्द्रविशेषणम् ॥ ६२ ॥

त्रिनेत्रमात्रेणरुषाकृतंयत्तदेवयोद्यापिनसंवृणोति नवेद्मिरुष्टेष्वसहस्रनेत्रे गन्तासकामःखलुकामवस्थाम् ॥ ६३ ॥

त्रिनेत्रेति । त्रिनेत्रएवत्रिनेत्रमात्रंतेननेत्रत्रयसहितेनहरेणैवरुषाक्रोधे नकृत्वायदशरीरस्वरूपंदुःखंकृतं यःकामस्तदेवात्यल्पंदुःखमद्यापिएतावद्दि नपर्यन्तंनसंवृणोतिनिश्चितंविस्तरति सकामःअद्यईश्वरादधिकनेत्रसहिते सहस्रनेत्रेमहेन्द्रेक्रुद्धेसतिकतमामवस्थांदशांगन्तागमिष्यतिइत्यहनवेदन जाने । नेत्रत्रयसहितेनहरेणात्रसमसात्कृतः । सहस्रनेत्रसहितेनेन्द्रेणाको द्दशीमवस्थांनेष्यतइत्यहनजानेइत्यर्थः । कामस्तांअतितरांपीडयतीतिभा वः मात्रंकात्स्न्र्येवधारणेइतिविश्वः । वेदविदोलटोवेतिणल् ॥ ६३ ॥

पिकस्यवाङ्मात्रकृतव्यलीका न्नसप्रभुर्नन्दतिनन्दनेपि ॥ बालस्यचूडाशशिनोपराधा न्नाराधनंशीलतिशूलिनोपि ॥ ६४ ॥

इदानींविभावानुभावव्यभिचारिभावानाह ॥ पिकस्येति । सःप्रभुःसम र्थःइन्द्रः पिकस्यकोकिलस्यवागेववाङ्मात्रंतेनकृतात्दूरचितात्व्यलीकादप्रिय द्धेतोःनन्दनेपिवनेपिननन्दतिनआनन्दंप्राप्नोति नन्दयतीतिनन्दनस्तस्मि न्यद्नन्दनंतदाश्चर्यमित्यर्थः । अन्योपिप्रभुर्वाङ्मात्रकृताद्विप्रियाक्षिप्तुर ञ्जाणाद्धेतोर्ननन्दति । तथाबालस्यएककलस्यचूडाशशिनःशिरश्चन्द्रस्यअ पराधात्कृतात्पीडनाद्धेतोः शूलिनोऽपिसेवनीयस्यहरस्यापिआराधनंसेव नशीलति । नकरोति । पूर्वमत्यहमीश्वरसेवायैगच्छति । इदानींतुत्वद्वि रहात्चंद्रपीडाभयाद्धरसेवापिपरित्यक्तेत्यर्थः । अन्योपितेजस्वीस्ववैरिपुर स्कारिणःशत्रुपाणेरपिसेवांनकरोति । त्वद्विरहाच्चन्द्रकलाकोकिलालापा वतितरांतस्यअसह्यौजातावितिभावः । शीलतिशीलसमाधाविति‍म्वा दिः दुःखदैन्यादयोव्यभिचारिभावाःस्वयमूह्याः ॥ ६४ ॥

तमोमयीकृत्यदिशःपरागैःस्मरेषवःशक्रदृशांदिश

न्ति ॥ कुहूंगिरिश्चञ्चुपुटंद्विजस्य राकारजन्याम पिन्यवाचमं ॥ ६५ ॥

तमइति । स्मरेवदःपुष्यरूपत्वात्परागैःकृत्वा दिशःतमोमयीःकृत्वा ऽथका रबहुलाःकृत्वाशक्रस्य:शानेत्राणां कुहूरितिस्वभावतएवगीर्यस्यकुहूगिरो द्विजस्यकोकिलस्य चञ्चुपुट राकारजन्यामपिपूर्णिमारात्रावपि. सत्यावा च्यस्यैतादृशदिशन्तिकथयन्ति पूर्णचन्द्रंपूर्णिमायामपिनष्टचन्द्रंकुहूरसौवा च्यैयमितिकथयत्पिकचञ्चूपुटमिन्द्रं प्रतिसत्यवचनंजातमित्यर्थः त्वद्विर हादिन्द्रोपिमदनान्धोजातइतिभावः । अन्योपिऽज्ञात्वाःकमप्यन्धंप्रतिपू र्णिमाममावास्यांवदतिसोपिमूर्खत्वात्तद्वाचमन्यप्रतिसत्याकथयति । पूर्णे राकानिशाकरइत्यमरः । कुहूःस्यात्कोकिलालापनष्टेन्दुकलयोरपिइतिवि श्वः । पुटश्चःपुल्लिंगेपि । वाचाश्चःछ्रावन्तोपिवा ॥ ६५ ॥

शरैःप्रसूनैस्तुदतःस्मरस्य स्मर्तुंसकिनाशनिनाक रोति ॥ अभेद्यमस्याहृदयमनस्या दनङ्गताचेद्गि रिशप्रसादः ॥ ६६ ॥

शरैरिति । सइन्द्रः प्रसूनैःपुष्यरूपैःशरैस्तुदतःस्मरस्यस्मर्तुंकामंस्मृति विषयंकर्तुंअशनिनावज्रेणकिंनकरोति । अपितुवज्रेणमारयेदेवअहृदय दे । यदिअसकःमस्यगिरीशस्यहरस्यप्रसादःअनङ्गतारूपमभेद्यंवर्मकवचं नस्यात् । हरेणअनङ्गतारूपोनिग्रहोपिअनुग्रहएवकृतोयतस्तस्माद्हृनश क्यत्वाद्वज्रेणमारयितुंनशक्यतइत्यर्थः । कामस्तस्यास्तथापराध्यतियथासा रणार्होभवतिइतिभावः । अस्यअधीगर्थेतिकर्मणिषष्ठी ॥ ६६ ॥

धृताधृतेस्तस्यभवद्वियोगो दन्यान्यशय्यारचना यलूनैः ॥ अप्यन्यदारिद्र्यहराःप्रवाले भूतादरिद्रा स्तरवःसुराणाम् ॥ ६७ ॥

धृतेति । अमराणांदेवानान्तरवोमन्दारादयोन्येषांदारिद्र्यहरादारिद्र्यना शकाअपि प्रवाले पल्लवै,दरिद्राजाताः किंभूते प्रवालेत्वंवद्वियोगात्त्वद्विर हाद्धेतो.धृताअधृतिरधैर्ययेनतस्येन्द्रस्यातिलग्नस्यअन्याअन्याः प्रतिक्षणनू तना.शय्यास्तासांरचनायनिर्माणायलूनैरवचितैः पल्लवरहिताजाताइत्य

अदाहि यस्तेन दशार्द्धबाणः पुरा पुरारेर्नयनालयेन स निर्दहंस्त्वं भवदक्षिवासी नवैः शरैर्धुनाधमर्णः ॥ ७३ ॥

अदाहीति । पुरारेर्हरस्य नयनमेवालयो यस्यैवंभूतेन तेनवह्निना पुरा पूर्वं अनङ्गानाम् अङ्गं मुकामो वसतीति कृत्वा यो दशार्द्धबाणः पञ्चबाणः अदाहि दग्धः स पञ्चबाणः कटाक्षविक्षेपमात्रजन्यत्वाद्भवत्या अक्षिवासी सन् त्वं वह्निं मधुनाद्यदानीं निर्दहन् अतितरां पीडयन् नवैः शरैर्नवैरभियोतनस्याधमर्णो लग्नकीनभवति । अन्यनयनालयस्यात्मदाहकस्य अन्यनयनालयेनैवात्मनैवर्दाहाद्वैरलक्षणाक्षयात् तेनापकृतमित्यर्थः । पुरुषश्रितस्य वह्नेः स्वतोऽकिंचित्करत्वम् अङ्गनानाम् अपाङ्गेषु कामो वसतीति कृत्वाक्षियंश्रितस्य कामस्य महाप्रभुत्वं सूचितम् । पूर्वोक्त एव भावः ॥ ७३ ॥

सोमाय कुप्यन्निव विप्रयुक्तः स सोममाचामति हूयमानम् ॥ नामापि जागर्ति हि यत्र शत्रोस्तेजस्विनस्तेक तमे सहन्ते ॥ ७४ ॥

सोमायेति । विप्रयुक्तः वियोगी त्वस्य वह्निः सोमाय चन्द्राय कुप्यन्निव क्रुध्यन्निव हूयमानं दीयमानं सोमाख्यं लताविशेषरसं न आचामति न पिबति । ननु चन्द्रापराधे सोमलतां किमिति न भक्षितवानित्याशङ्क्यार्थान्तरन्यासेन अपनुदति । हि यस्माद्यत्र जने शत्रोर्नामापि जागर्ति कतमे के तेजस्विनस्तं जनं सहन्ते सोढुं शक्नुवन्ति ॥ अपि तु न कोपीत्यर्थः । स्ववैरिणश्चन्द्रस्य सोमनाम्ना ख्यातायां लतायां सद्भावात् तेजस्विनाग्निना मा न भक्षितेति युक्तमेव चन्द्रस्तं पीडयतीति भावः । सोमाय क्रुधद्रुहेति चतुर्थी ॥ ७४ ॥

शरैरजस्रं कुसुमायुधस्य कदर्थ्यमानस्तरुणि त्वदर्थम् अभ्यर्चयद्भिर्विनिवेद्यमाना दप्येष देवः कुसुमाद्बिभेति ॥ ७५ ॥

शरैरिति । हे तरुणि त्वदर्थे त्वत्कृते कुसुमायुधस्य कामस्य शरैरजस्रं निरन्तरं कदर्थ्यमानः पीड्यमानः सन्नेष वह्निरभ्यर्चयद्भिः पूजकैर्मानवैः पूजार्थं मयि विनिवेद्यमानादेकस्मादपि कुसुमाद्बिभेति । मदनशरबुद्ध्या त्रस्यति । भ्रमं अन्ये एवदेव इत्यपि पाठः । मदनेन वह्निः पीड्यत इति भावः ॥ ७५ ॥

स्मरेन्धनेवक्षसितेनदत्ता संवर्त्तिकाशैवलवल्लिचि
त्रा ॥ चकास्तिचेतोभवपावकस्य धूमाविलाकी
लपरंपरेव ॥ ७६ ॥

स्मरेति । येनवह्निनास्मरन्धनभूतेमदनानलस्यदह्यमानत्वात्काष्ठ
तुल्येस्ववक्षसिदत्तानिहिताशैवालवल्ल्याकृत्वाचित्रवर्णाआश्चर्यरूपावसंव
र्त्तिकामवदलपत्रं चेतोभव.कामस्तल्लक्षणस्यकामस्यपावकस्यअग्नेर्धूमावि
लाधूममिश्रिताकील:परंपराइवचकास्तिशोभते । मदनज्वरशान्त्यर्थंशै
वालनवदलंकमलपत्रवक्षसिनिहितम् । पिङ्गस्यकमलस्यहृदयोपरिविद्यमा
नत्वात्कामपावककीलत्वम् शैवालस्यचश्यामत्वाद्धूमत्वम् । पूर्वएवभा
वः । संवर्त्तिकामवदलमित्यमरः । वह्नेर्द्वयोर्ज्वालकीलावित्यमरकारव
चनात्कीलशब्दःपुंल्लिङ्गोपि ॥ ७६ ॥

पुत्रीसुहृद्यनसरोरुहाणां यत्प्रेयसीचन्दनवासिता
दिक् ॥ धैर्यंविभु:सोपितवैवहेतोः स्मरप्रतापज्व
लनेजुहाव ॥ ७७ ॥

पुत्रीति । विकासकारित्वात्सरोरुहाणांसुहृत्सूर्यःयेनकृत्वापुत्रवान् च
न्दनेनवासितापरिमलाढ्यादक्षिणादिक्यत्प्रेयसीयस्यप्रियतमासोपियम
लक्षणोविभुस्तवैवहेतोः स्मरस्यप्रतापज्वलनेकामजनितसन्तापरूपेऽनले
धैर्यंजुहाव । कामज्वरवशाद्धैर्यंत्यक्तवानित्यर्थः । पितृमित्रत्वाच्छीतला
निकमलानिप्रियायाश्चन्दनावशवर्तिनोयद्यपितथापित्वद्विषयंमस्यविर
हदाहंशमयितुंनशक्नुवन्तीत्याश्चर्यम् । कुलंस्थानंचकथितम् । यमोपित्वद्व
शोजातइत्यर्थः । तवैवहेतोःषष्ठीहेतुप्रयोगइतिषष्ठी ॥ ७७ ॥

तंदह्यमानैरपिमन्मथैधं हस्तैरुपास्तेमलयप्रवालैः
कृच्छ्रेप्यसौनोज्झतितस्यसेवां सदायदाशामवल
म्बतेयः ॥ ७८ ॥

तमिति । मलयःपर्वतोज्वलमानत्वान्मन्मथ मन्मथमिन्धनंतंयमंका
मेन्धनत्वादेवातिशयेनदह्यमानैर्ज्वलमानैरपियद्यंमवचितैः प्रवालैः
पल्लवरूपैर्हस्तैःकृत्वाउपास्ते सेवते । अन्योपिसेवकोहस्ताभ्यांसेवते । मु

त्यं ववियोपिहृदिस्थःस्मरणागोवरोधमध्ये विद्यमानोनिजःस्वीयः पति र्वरुणः संप्रतित्वद्विषयविरहदशायांयथायेनप्रकारेणपयोनिधीनांतापाय भवतितथातेनप्रकारेणक्षुधितोबुभुक्षितोमध्ये विद्यमानःक्षिछितस्वाडवा रिपिवतिवारिपःएवंभूतोपिप्रश्नामुखोत्थोवडवामुखोत्थः शिखावानग्निः पयोनिधीनांसन्तापायनाभूत् । वारिपत्वे हृदिस्थत्वे तुल्येपिकामदाहदुः स्थत्वाभावान्नधानतापकारित्वमित्यर्थः । कामज्वरपीडितजलप्रविष्ट करणसंस्पर्शात्पयोनिधयोपिसन्तप्ताः बभूवुरित्यतोहेतोर्वरुणोतितरांकामेन पीडितइतिभावः । वडवानलादपिविरहानलोधिकइतिभावः । अन्योपि साधुर्दोसास्वामिनंपीडितंस्मरन्सन्तप्यते । क्षुधितोवसतिक्षुधोरिद् ॥ ८१

यत्प्रत्युतत्वन्मृदुबाहुवल्लि स्मृतिस्रजंगुम्फतिदुर्वि नीता ॥ ततोविधत्तेऽधिकमेवतापं तेनाश्रिताशै त्यगुणामृणाली ॥ ८२ ॥

यदिति । शैत्यमेवगुणोयस्याःसा तेनवरुणेनशरीरोपरिश्रितानिक्षिप्ता मृणालीयद्यस्मात्वन्मृदुबाहुवल्लिस्तस्याः स्मृतिस्रजंस्मरणपरम्परांगुम्फति करोतिसादृश्यात् । ततस्तस्माद्वैपरीत्येनपूर्वापेक्षयापि अधिकन्तापंवि धत्तेकरोति । अतएवदुर्विनीतादुष्टा । सन्तापशान्त्यर्थंश्रितस्यशीतल स्याधिकसन्तापकारित्वमेववैपरीत्यम् । सादृश्यत्वाद्बाहुवल्लयाःस्मारकत्वा न्मृणालीलमतितरांतापयतीतिभावः । अन्योपिदुर्विनीतोयदर्थंमाश्रयते तद्विरुद्धमेवकरोति ॥ ८२ ॥

न्यस्तंततस्तेनमृणालदण्डखण्ड बभासेहृदितापभाजि ॥ तच्चित्रमग्नैर्मदनस्यबाणैः कृतंशतच्छि द्रमिवक्षणेन ॥ ८३ ॥

न्यस्तमिति । सकलमृणाली यतस्तापङ्करीतिततः सकलमृणालीत्यागा नन्तरंतापभाजिहृदितेनन्यस्तंमृणालदण्डखण्डंतरवरुणस्यचित्तेमग्नैर्मद नस्यबाणैःक्षणेनशतच्छिद्रं बहुरन्ध्रं कृतमिवबभासेशुशुभे । मग्नंमृणालंस्व तएवशतच्छिद्रं जवति । तस्यशतच्छिद्रत्वमन्यथोत्प्रेक्षितम् । कामवाणै स्तदीयंहृदयंजर्जरीकृतमितिभावः ॥ ८३ ॥

इतित्रिलोकीतिलकेषुतेषु मनोभुवोविक्रमकाम
चारः ॥ अमोघमस्त्रंभवतीमवाप्य मदान्धतानर्ग
लचापलस्य ॥ ८४ ॥

इतीति । त्रिलोक्यास्तिलकेष्वलङ्कारभूतेष्विन्द्रादिषुविषयेभवन्तींत्वामे
वअमोघंअस्त्रंसफलमस्त्रमवाप्यमदान्धतयागर्वान्धत्वेनानर्गलंउच्छृङ्खलंचा
पलं यस्यमनोभुवःकामस्येतिपूर्वोक्तप्रकारेणविक्रमः कामचारः स्वेच्छाचा
रोवत्तं तेइतिशेषः । कामेनत्वन्निमित्तमिन्द्राद्योतितरांपीड्यन्ते । मदा
न्धतेत्यनेनकामस्यद्विरदत्वंसूचितम् । अवाप्यस्थितस्येतियोज्यम् ॥ ८४ ॥

सारोत्थघारेवसुधारसस्य स्वयंवरःश्वोभवितातवे
ति ॥ सन्तर्पयन्तीदमयन्तितेषां श्रुतिःश्रुतीर्नाक
जुषामपासीत् ॥ ८५ ॥

सारेति । हेदमयन्ति तवस्वयम्वरःश्वोभाविनिदिवसेभवितेतिश्रुतिर्वा
र्तातेषांनाकजुषांदेवानांश्रुतीकर्णौ अयासीत्प्रापत् । किंभूतासुधारस
स्यामृतरसस्यसारोत्थधारेवश्रेष्ठजागोत्थितप्रवाहइव सन्तर्पयन्तीतानेवह
र्षयन्ती । स्वयम्वरंश्रुत्वाऽतीवहृष्टाइतिभावः ॥ ८५ ॥

समंसपत्नीभवदुःखतीक्ष्णैः स्वदारनासापथिकैर्म
रुद्भिः ॥ अनङ्गशौर्यानलतापदुःस्थै रथप्रतस्थेहरि
तांमरुद्भिः ॥ ८६ ॥

समभिति । अथस्वयंवरवार्ताश्रवणानन्तरंहरितांदिशांमरुद्भिःस्वामि
भिरिन्द्रादिभिस्तेषांदाराःस्त्रियस्तेषांनासापथिकैर्नासिकामार्गस्थैर्मरुद्भिर्नि
श्वसितानिलैःसमंसहप्रतस्थेप्रस्थितम् । किम्भूतैर्नासावायुभिःसपत्नीमये
नसपत्नीहेतुकेनदुःखेनतीक्ष्णैरत्युष्णैः । किंभूतैर्देवैरनङ्गशौर्यमेवानलोऽग्नि
स्तज्जनितस्तापस्तेनदुःस्थैर्जर्जरीभूतैः । स्वद्रष्टुरागायप्रस्थितान्स्वःपतीन्दृष्ट्वा
दुःखान्नासावायवोऽनुजग्मुरितिभावः । अन्योपिपान्थःपान्थैःसहप्रस्थानंक
रोति पवनवायुभिःसाकंमित्यनेनाशकुनत्वंसूचितम् ॥ ८६ ॥

अपास्तपाथेयसुधोपभोगै स्त्वच्चुम्बिनेवस्वमनो

रथेन ॥ क्षुधं च निर्वासयतां तृषं च स्वादीयसाध्वा गमितः सुखं तैः ॥ ८७ ॥

अपास्तेति । तैरिन्द्रादिभिरत्व चुम्बिना अस्वत्तस्वमित्थिना अ मनोरथेनमैनों प्राप्स्याम इतिस्वीयेनाभिलाषेणैव कल्याणाध्वामार्गः सुखमनायासेनगमितोऽतिवाहितः । किम्भूतेनस्व मनोरथेन । स्वादीयसाअतिस्वादुना अ सएवक्षुधं तृषां च निर्वापयताशमयता । किंभूतैस्तैरतएवापास्तस्त्यक्तः पाथेयः मार्गशम्बलरूपः सुधोपभोगोऽमृतोपभोगोयैस्तैः त्वयिनिविष्टचित्तत्वात्क्षुधोत्तृषावनागूदतएवमार्गशम्बलरूपमपित्यक्तं तलोप्यधिकालवप्राप्स्यामीत्यर्थः । भुवं प्रत्यागमनेमनोलक्षणेनरथेनभुवमागताः सुधोपभोगैरितिपाठेउपभोगः साफल्यमपास्तं यैः । पाथेयं साध्वर्थपथ्यतिथीतिढञ् ८७

प्रियामनोभूः शरदावदाहे देवीस्त्वदर्थे विनमज्जयद्भिः ॥ सुरेषुराजैः क्रियतेऽधुना तैः पादार्पणानुग्रहभूरियं भूः ॥ ८८ ॥

प्रियाइति । सुरेषुसारैः श्रेष्ठैरिन्द्रादिभिरधुनाइयंभूर्भूमिः पादानामर्पणंलदेवानुग्रहः कृपातस्यभूः स्थानं क्रियते । किम्भूतैः प्रियाः स्वस्त्रियः इन्द्राणीप्रमुखादेवीस्त्वदर्थेनत्वत्कारणेनमनोभूशराः कामवाणास्तएवदावः वनवन्हिस्तज्जनितदाहेसन्तापेनिमज्जयद्भिः । कामपीडिताः कुर्वद्भिरित्यर्थः इदानीं भूमौवर्त्तन्तइत्यर्थः । तेषामत्रागमनाद्देवीनां विरहसन्तापः ॥८८॥

अलङ्कृतासन्नमहीविभागे रथ्योजनस्तैरमरैर्भवत्याम् ॥ अवापितोजङ्गमलेख्यलक्ष्मीं निक्षिप्यसन्देशमयाक्षराणि ॥ ८९ ॥

अलमिति । तैरमरैर्भवत्यांत्वयिविषयेऽयंमल्लक्षणोजनः सन्देशमयाक्षराणिनिक्षिप्यजङ्गमलेखलक्ष्मींचलत्पत्रिकाशोभामवापितः प्रापितः । किंभूतैरलंकृतः आसन्नोमहीविभागोयैः समीपस्थितैस्तैस्त्वां प्रार्थयितुमहंस्थापितइत्यर्थः । भवत्यैइतिवापाठः ॥ ८९ ॥

एकैकमेतेपरिरभ्यपीनस्तनोपपीडंत्वयिसंदिशन्ति ॥ त्वंमूर्छतांनः स्मरभल्लशल्ये मुदेविशल्यौष

धिवल्लिरेधि ॥ १० ॥

एकैकमिति । हेभैमि एतदेवाएकैकंपृथक्पृथक्पीनस्तनयोरुपपीड्यसं श्लिष्यतद्यथातथात्वत्पीनस्तनाभ्यामात्मानमुपपीड्यवत्त्वयिइतिसंदिशन्ति इतिकिम् । हेभैमित्वंस्मरभल्लशल्यैःकामलक्षणपापधिकनाराचैःकृत्वामूर्छितानोऽस्माकंमुदेप्रीतयेशल्योद्धरणाद्मूर्छापहाराय विशल्यानाम्नीऔषधिवल्लिरेधिभव।त्वांविनाअस्माकंकामनमूर्छानशाम्यतीत्यस्मान्वृणीष्वेतिभावः। एकैकंवीप्सायांद्विः स्तनोपपीडमस्म्यांचोपपीडेतिणमुलितृतीयाप्रभृतीनीतिसमासः ॥ ९० ॥

त्वत्कान्तिमस्माभिरयंपिपासुर्मनोरथाश्वासनयैकयैव ॥ निजःकटाक्षःखलुविप्रलभ्यः कियन्तिया वद्गुणवासराणि ॥ ११ ॥

त्वदिति ॥ अस्माभिस्त्वत्कान्तिंत्वत्सौन्दर्यंपिपासुःपातुमिच्छन्नयंनिजः स्वीयःकटाक्षः । एकामुख्ययाभैमीकान्तिंत्वामवश्यंवयंपाययिष्यामइत्त्येवंरूपयामनोरथाश्वासनयामनोराज्यजन्ययाआश्वासनया एवसान्त्वनेनैवकत्वाकियन्तिवासराणियावत्कियद्दिनपर्यन्तंविप्रलभ्योस्माभिः प्रतारणीयः खलुनिश्चितंभणकथय । पातुमिच्छन्पिपासुर्बालकादिरिदमुदकमितिमुहूर्तमात्रंप्रतारणंसहतेनतुद्वित्राणिदिनानितथाकटाक्षोपि । अस्मान्वृणीष्वेतिभावः । अवधीयावच्छब्दः । वासराणिअत्यन्तसंयोगेद्वितीया ॥९१॥

निजेसृजास्मासुभुजेभजन्त्या वादित्यवर्गेपरिवेषवेषम् ॥ कण्ठाङ्गनिर्वापयतापमङ्गैरनङ्गलीलालहरीतुषारैः ॥ १२ ॥

निजेइति । हेभैमि त्वंनिजेस्वीयेआदित्यवर्गेआदित्यपत्यसमूहेस्मासु परिवेषस्यवेष्टनस्यवेषमाकारंभजन्त्यौसृजकुरु । अङ्कपालींदेहीतिभावः । आदित्येपरिवेषःपरिधिर्युक्तः तथाअनङ्गलीलैर्वलहर्यस्ताभिस्तुषारैः शीतलैरङ्गैःकृत्वा अस्माकंतापंकामज्वरंनिर्वापयशमयप्रसीदप्रसन्नाभवसकामस्त्वदङ्गसम्पर्कोद्स्माकंकामज्वरशान्तिंप्राप्स्यतीतिभावः । शीतलेनतापशान्तिर्युक्ता । चार्वङ्गिनिर्वापयेतिवापाठः । अनुग्रहोऽस्मासुयदि

स्वदीयस्तद्देहिदेहितुतमङ्कपालीतिपाठःक्वचित्स्पष्टार्थः । भुजाशब्दआ वन्तोपि । परिवेषोरवेःपार्श्वमण्डलवेष्टनेतथेत्यजपालः ॥ ९२ ॥

दयस्वकिंघातयसित्वमस्मा ननङ्गचण्डालशरैरदृश्यैः ॥ च्छिन्नावरंतीक्ष्णकटाक्षबाणैः प्रेमस्तवप्रेमरसत्पवित्रैः ॥ ९३ ॥

दयस्वेति । हेत्रेमिदयस्वत्वंदयाकुरु । अदृश्यैराकस्मिकलग्नैरनङ्गएव चण्डालस्तस्यशरैःप्रयोज्यैःप्रयोजिकात्वंअस्मान्किंकिमितिघातयसिमारय सिअपित्वेवंत्वयानकार्यम् अन्योपिस्ववैरिणंचण्डालेनादृश्यैर्बाणैर्मारय ति तर्हिकिंकार्यमित्यतआह । वयप्रेमरसात्प्रीतिरूपाद्रसात्पवित्रैःपूर्णैः पूतैश्च तवतीक्ष्णकटाक्षलक्षणैर्बाणैर्भिन्नाविदीर्णाः सन्तोयत्प्रेमःम्रियामहे प्राणांस्त्यजामस्तन्मनागवरंश्रेष्ठंचण्डालबाणकर्तृकमारणापेक्षयातवपवि त्रकटाक्षबाणैर्मरणंश्रेष्ठमित्यर्थः । कटाक्षैरस्माननादृत्यस्वृणीष्वेतिभावः । रसादुदकात्पवित्रत्वंयुक्तम् । प्रेमःप्रपूर्वाद्दिणोमरणावचिनोलङुत्तमबहुव चनम् ॥ ९३ ॥

त्वदर्थिनःसन्तुपरःसहस्राः प्राणस्तुनस्त्वच्चरणप्रसादः विशङ्कसेकैतववर्त्तितंचे दन्तःश्वरःपंचशरःप्रमाणम् ॥ ९४ ॥

त्वदर्थिनइति । परःसहस्राःबहुतरःत्वदर्थिनस्त्वदभिलाषुकाःसन्तुनोस्मा कंप्राणास्तुपुनस्त्वच्चरणयोःप्रसादस्त्वच्चरणौचेत्प्रसन्नौभवतस्तर्ह्येवनःप्राणा नंनान्यथेत्यर्थः । इदंकैतववर्त्तितंअलीकभाषितमितिचेद्विशङ्कसेमन्यसेत र्ह्यन्तश्चरोन्तर्वर्ती पञ्चशरःकामःप्रमाणमत्रसाक्षी त्वन्निमित्तमस्माकंकिय तीपीडाजवलीतिकामएवत्वयापृच्छ्यतांवयन्नैनमिथ्याभाषिणइत्यर्थः । का मोन्तर्वर्त्तित्वात्सर्वंवेत्तिकूटसाक्ष्यंनकरोतीत्यर्थः अतोवयमेवानुग्राह्यानान्येइतिभावः । परःसहस्राःपरःशताइतिवत् ॥ ९४ ॥

अस्माकमध्यासितमेतदन्तःप्रियेभवत्याहृदयंचिराय ॥ बहिस्त्वयालङ्क्रियतामिदानी मुरोमुरंद्विद्विषतःश्रियेव ॥ ९५ ॥

अस्माकमिति । हे वैमीभवत्या अस्माकं एतत् हृदयं अन्तरदेशो ताश्चपुन श्चिराय अध्यासितमधिष्ठितं चिरकालं चित्तमध्ये धृतासीत्यर्थः । परमिदानीं तदुरस्त्वया वहिर्देशोपि अलङ्क्रियतां आलिङ्ग्यतामिति भावः । कयाक स्येव । श्रियामुरंद्विषतो विष्णोरिव । द्विषः शतुर्वेति मुरमित्यत्र द्वितीया ९५

दयोदयश्चेतसिचेत्तवाभू दलंकुरुद्यां विफलो विल म्बः ॥ क्ष्मामेवदेवालयतां नयामो भूमौ रतिश्चेत्तवजन्मभूमौ ॥ १६ ॥

दयेति । तव चेतसि अस्माकमुपरि दयायाउदयश्चेद्भूत् तर्हि त्वं द्यां स्वर्गमलङ्कुरु । विलम्बो विफलो न कर्त्तव्य इत्यर्थः । अथ यदि स्वस्य भूमौ उत्पत्तिस्थाने भूमौ भूलोके धृतिं प्रीतिं यासि प्राप्नोषि तर्हि वयं भूलोकस्य स्वरादेशं स्वर्गसञ्ज्ञां आचरामः कुर्मः । यत्र वयं स एव स्वर्गः वयं अप्यागत्य स्वर्गभोगास्तत्रैव कुर्म इति भावः । क्ष्मामेवदेवालयतां नयामो भूमौ रतिश्चेत्तवजन्मभूमाविति च पाठः ॥ ९६ ॥

धिनोतिनास्माञ्जलजेनपूजा त्वयान्वहं तन्विवितन्यमाना ॥ तवप्रसादोपनतेतु मौलौ पूजास्तुनस्त्वत्पदपङ्कजाभ्याम् ॥ १७ ॥

धिनोतीति । हे तन्वि त्वया अन्वहं प्रत्यहं जलजेन वितन्यमाना क्रियमाणा पूजा अस्मान् धिनोति न प्रीणयति । किन्तु तव प्रसादाय प्रीतिकलहे प्रसन्नत्वाय नमस्कारकरणवशादुपनतेन नम्रेण अस्माकं मौलौ शिरसि त्वत्पदपङ्कजाभ्यां चरणाघातवशात् त्वच्चरणकमलाभ्यां तु पूजास्तु । कमलपूजापेक्षया त्वच्चरणकमलयोरुत्कृष्टत्वात् सा अस्माकं सुखाय अलं न कमलपूजा । त्वच्चरणाघातेन वयं यथा सुखिनो भवाम तथा कुर्विति भावः ॥ ९७ ॥

स्वर्णैर्वितीर्णैः करवाम वामनेत्रे भवत्याः किमुपासनासु ॥ अङ्गत्वदङ्गानि निपीतपीतदर्पाणि पाणिः खलुयाचते नः ॥ १८ ॥

स्वर्णैरिति । हे वामनेत्रे सुन्दरनेत्रे भवत्याः त्वया उपासनासु पूजासु वितीर्णैः स्वर्णैः अर्पितैः स्वर्णपुष्पैः किं करवाम अपि तु तानि बहून्यस्माकं विद्यन्ते तैः

किमपिप्रयोजनंनास्ति ॥ तर्हिकिम् । हेअङ्गप्रियेखलुयस्मान्नोऽस्माकंपाणिर्निपीतःपीतादीनां सुवर्णादीनांपदार्थानांदर्पोगर्वोयैस्तानित्वदङ्गानि याचते । यैःसुवर्णादिजितंतदभिलाषिणःपुरुषस्यसुवर्णेनप्रीतिःकथंस्यादित्यर्थः ॥ ९८ ॥

वयंकलादाइवदुर्विदग्धं त्वद्गौरिमस्पर्द्धिदहेमहेम
प्रसूननाराचशरासनेन सहैकवंशप्रभवभ्रुवभ्रु ९९

वयमिति । प्रसूननाराचः कामस्तस्यशरासनेनधनुषासहैकवंशेवेणौकुलेचप्रभवोययोरीदृशेभ्रुवौयस्यास्तत्संबुद्धिःप्रायेणएकवंशोत्पन्नस्तुल्योभवति । वयंकलादाइवस्वर्णकाराइवतवगौरिम्णासहस्पर्द्धित्वद्गौरत्वसाम्याभिलाषिअतएवोत्तमस्पर्द्धयादुर्विदग्धंदुर्विनीतंवभ्रुपिङ्गलं हेमसुवर्णंदहेमअग्नौप्रक्षिपामः वभ्रुत्वादन्यवर्णत्वंसुवर्णस्यसूचितम् । वयन्त्वदीयास्त्वदपराधकारिण-सुवर्णस्यवन्हिप्रक्षेपरूपंदण्डकुर्मइत्यर्थः । अस्माकंसुवर्णेनप्रयोजनंनास्तीत्यभिप्रायः । कलादोरुक्मकारके । वभ्रुःस्यात्पिङ्गलेत्रिष्वित्यमरः नेयङ्कुवङ्स्थितिमदीसंज्ञात्निषेधाद्स्वार्थेतिङ्स्त्रोविमाननासुभ्रुकृत इत्यादिमहाकविप्रयोगदर्शनाज्ज्ञातव्यः समाधानान्तरंचग्रंथान्तराज्ज्ञातव्यम् ॥ ९९ ॥

सुधासरस्सुत्वदनङ्गतापः शान्तोननःकिम्पुनरप्सुरःसु ॥ निर्वातितुत्वन्ममताक्षरेण सूनाशुगेषोर्मधुसीकरेण ॥ १०० ॥

सुधेति । नोऽस्माकंत्वन्निमित्तःअनङ्गताप कामज्वरःसुधारसःसुअमृतसरसीषुपिनिमज्जनेनशान्तःकिम्पुनरपासरःसुउदकसरसीषुच अथचरम्भादिदेवाङ्गनासुनशान्तः तदपेक्षयात्वमधिकेतिभावः । तर्हिकथंशाम्यतीत्याशङ्क्याह ॥ प्रसूनाशुगःकामस्तस्येषुःपुष्पंतस्यमधुसीकररूपेणातवममतारूपेणाक्षरेणइन्द्रादयोमदीयाइतिस्वस्यस्वामित्वंइन्द्रादीनांस्वीयत्वंसूचयतातुपुनर्निर्वाति । अमृतरसस्यापेक्षयाममताक्षररूपस्यमधुसीकरस्याधिक्यादित्यर्थः । योत्रहुत्रिर्नशान्त-सएकेनशान्तइतिचित्रम् । एवंयाअस्मान्वृणीष्वेतिभावः ॥ १०० ॥

खण्डः किमुत्वद्गिरएवखण्डः किंशर्करातत्पथशर्करैव ॥ क्रशांगितद्भंगिरसोत्यकच्छ तृणंनुदिक्षु प्रथितंतादिक्षुः ॥ १०१ ॥

खण्डइति । हेकृशाङ्गित्वद्गिरस्त्वद्वाण्याः खण्डएवलेशएवखण्डः शर्करारसविशेषः किंनु त्वद्वाणीर्शकलवाच्यत्वादेवतस्यखण्डत्वं नाममाधुर्यंचजातमित्युत्प्रेक्षा । तस्याःवाण्याःपन्थाःगमनमार्गस्तस्मिन्शर्कराकर्पराशरूपैवशर्कराख्यइक्षुविकारः किंकर्परांशेनामसाम्याच्छर्करेतिनामजातंमाधुर्यंच । पथिशर्कराशाभवन्ति । तस्यावाण्याःभङ्गिःवक्रोक्त्यादिस्वभावजनितःशृंगारादिरसस्तस्मादुत्पत्तस्वभावादुदकादुत्थंउत्थितंयत्कच्छतृणंजलप्रायदेशजंतृणंतदेवदिक्षुइक्षुइतिप्रथितंनु कच्छतृणस्यचइक्षुरितिसंज्ञातद्रससम्बन्धात्माधुर्यंचजातंकिमित्यर्थः । खण्डादिभ्योपिअधिकत्वात्वाण्यांमधुरताइतिभावः शर्कराखण्डविकृताउपलाकर्परांयोरितिविश्वः १०१

ददामकिन्तेसुधयाधरेण त्वदास्यएवस्वयमास्यतेहि ॥ विधुंविजित्यस्वयमेवभावि भवन्मुखत्तन्मुखभागभोजि ॥ १०२ ॥

तदामेति । हेभैमिवयन्तेतुभ्यंकिंददामअपितुत्वद्दानयोग्यंवस्तुकिमपिनविद्यतइत्यर्थः । अमृतामरत्वयज्ञभागेषुमध्येएकंदेयमित्याशङ्कायामाह । अधरेणसुधयाओष्ठलक्षणेनत्वदास्यएवस्वयंहियस्मादास्यतेस्थीयतेओष्ठेनत्वन्मुखेसुधीभूयएवस्थीयतेयतइतिवा । यतश्चमयन्मुखंत्वदाननंविधुंचन्द्रंविजित्यस्वयमेवतस्यचन्द्रस्यमखभागभोजि । यज्ञभागग्राहिभाग्निभविष्यतितदपिनदेयमित्यर्थः । अमृतभागमोपयोगद्वारोपकर्तुंनशक्नुमइत्यर्थः । सुधाचन्द्राभ्यांसकाशात्त्वदोष्ठमुखमधिकंइतिभावः ॥ १०२ ॥

प्रियेवृणुष्वामरभावमस्म दितित्रपाकृद्वचनंनकिंनः ॥ त्वत्पादपद्मेशरणंप्रविश्य स्वयंवयंयेनजिजीविषामः ॥ १०३ ॥

अमरत्वमपिदातुमशक्यमित्याह ॥ प्रियेइति ॥ इतिनोऽस्माकंवचनंअस्माकमेवत्रपाकृल्लज्जावहंकिंनापितुलज्जावहमेव । इतिकिं हेप्रियेत्व

मस्म:सकाशादमरभावमविनाशत्वंवृणुमे ति । येनकारणेनवयंत्वत्पादप त्वेद्वितीयाद्विवचनम् । शरणप्रविश्यतत्तत्रणमेवरहितारंप्राप्यस्वयमात्म नैवजिजीविषामोजीवितुमिच्छामःस्वयंतीर्णाद्विपरंतारयतिनत्वतीर्णः । त्वच्चरणसेवयाजीवतामस्माकंतुभ्यममरत्वंदातुकाशक्तिः अतएवपूर्वोक्तंव चनलज्जावहमेवेत्यर्थः । अतएवतवोपकर्त्तुनसमर्थोस्तिस्मादस्मान्वृणीष्व तिभावः ॥ १०३ ॥

नास्माकमस्मान्मदनापमृत्यो स्त्राणायपीयूषरसा यनानि ॥ सुधारसादप्यधिकंप्रयच्छ प्रसीदवैद र्भिनिजाधरंनः ॥ १०४ ॥

नेति ॥ यस्मात्पीयूषरूपाणिरसायनान्यौषधानिअस्मान्मदनलक्षणात्स ज्जनिताद्वाअपमृत्योःसकाशादस्माकंत्राणायनभवन्तितस्मात्प्रसीदअस्मा कमुपरिप्रसन्नाभव । त्वंसुधारसादप्यमधिकममृतरसायनेभ्योप्यतिलरांस्वा दुमधिकसामर्थ्यंस्वनिजस्वीयंरदनच्छदमोष्ठन्तुपुनः पातुंनोस्मभ्यप्रयच्छ देहि । अनेनमदनापमृत्युःशान्तिंप्राप्स्यतीतिभावः । सामान्यमौषध मस मृत्युशान्त्यर्थंयत्रनप्रभवतितत्रतदपेक्षयाधिकमौषधंदीयतेयेनापमृ त्युःशाम्यतितद्वत्अस्माकं रसोपिनासाविति पाठेयस्माद्रसादित्यर्थः । अ र्थान्नयसदौ । अपमृत्योःभीत्रेत्यत्रापादानत्वम् ॥ १०४ ॥

प्लुष्टःस्वैश्चापरोधैरपिसहमकरेणात्मभूःकेतुनान्तू द्वानस्त्वत्प्रसादादथमनसिजतांमानसोनन्दनःस न् ॥ भ्रूभ्यांतेतान्वियधन्वीभवतुतवसितैर्जैत्रमल्लः स्मितैःस्ता दस्तुत्वन्नेत्रचञ्चत्तरलशफरयगाधी नमीनध्वजाङ्कः ॥ १०५ ॥

प्लुष्टइति । यःआत्मभूःकामःस्वैश्चापरोपैःधनुर्बाणैःमकरेणमीनरूपे णकेतुनाध्वजेनापिसहप्लुष्टोदग्धोभूत् । सकामःअथानन्तरमिदानीमिति यावत् । त्वत्प्रसादात्नोऽस्माकमानसोमनःसंबन्धीनन्दनोहर्षकः अथचम नसःपुत्रःसन्मनसिजत्वंमनसिजायतेअसौमनसिजः तद्भावंधत्तांधारयतु त्वत्सङ्गमवशादानन्दकोमदनोऽस्मिन्मनसिपुनरुत्पद्यतामतएवमनसिज

त्वमपिधारयत्वित्यर्थः । इत्थं विसकामःतेऽन्वीयांधन्वीभवतु । अन्वयामि तिद्विवचनेनपूर्वापेक्षयाधापद्वयंसूचितम् । तवसितैः श्वेतैस्तीदयैश्च स्मितैः कृत्वाजेतारएवजैत्राएवंभूताः भल्लाः बाणाश्चस्यामियस्यएवंविधस्तावद्भवतु अत्रापिपूर्वापेक्षया ऽधिकंतीक्ष्णत्वजैत्रत्वमनियतसङ्ख्यत्वंचसूचितम् ॥ तवनेत्रे एवचञ्चलतरमपिअतिशयेनशोभमानंचपलतरंवायच्छफरयुगंतस्या धानोमीनध्वजलक्षणोऽङ्कश्चिन्हंयस्यैवंभूतोस्तु । पूर्वमेकएवध्वजोऽधुनाद्वा मीनौद्वौमीनध्वजावितिशफरयुगपदेनसूचितम् । त्वयाऽस्मद्वरणेकृतेसतिपू र्वापेक्षयाऽधिकसामर्थ्यःसाङ्गोमदनःपुनरुत्पद्यतेतस्मादस्मान्वृणीष्वेति भावः । अन्योपिविनष्टोदेवतादिप्रसादात्पुनरुत्पद्यतेऽधिकशक्तिश्चभव ति । मन्दनोहर्षकेसुतइतिविश्वः । धन्वीत्रीह्यादिः ॥ १०५ ॥

**स्वप्नेनप्रापितायाःप्रतिरजनितवश्रीषुमग्नःकटाक्षः श्रोत्रेगीतामृताब्धौत्वगपिननुतनूमञ्जरीसौकुमार्ये ॥ नासाश्वासाधिवासेऽधरमधुनिरसज्ञाजरित्रेषुचित्तं तन्नस्तन्वङ्गिकैश्चिन्नकरणहरिणैर्वागुरालङ्घितासि ॥ १०६ ॥**

स्वप्नेनेति । ननुयस्मात्त्वंबुद्ध्यैवा नोस्माकंकटाक्षंप्रतिरजनिरजन्यांरज न्यांस्वप्नेनप्रापितायाविषयीकृतायास्तवश्रीषुशोभासुयस्मान्मग्नः तथाय स्मान्नःश्रोत्रेकर्णौगीतामृताब्धौगानरूपशोभासमुद्रेमग्नः । यस्माच्चन स्त्वगपिसुकुमारत्वात्तनूमञ्जरीशरीररूपामञ्जरीतस्याः सौकुमार्येमग्नाय स्माच्चनोनासातवश्वासाधिवासेनिश्वासरूपेगन्धमाल्यादिपरिमलेमग्ना । यस्माच्चनोरसज्ञाजिह्वाअधररूपेऽधरसम्बन्धिनिवाऽमृतेनिमग्ना । यस्मा च्चनःचित्तंतवचरित्रेषुविलासादिसर्वव्यापारेषुमग्नम् । तत्तस्मात्तुहेतन्वि कृशाङ्गिनोऽस्माकंकैश्चिदपिकरणहरिणैरिन्द्रियरूपैर्मृगैर्वागुरामृगसम्बन्धि नीरूपानलङ्घितासि । नातिक्रान्तासि । वागुरातुल्ययात्वयाबद्धानि चक्षुरादीनिषडिंद्रियाणित्वद्रूपंस्वंस्वंविषयंप्राप्यत्वामतीत्यगन्तुमशक्नुव न्तीत्यर्थः । स्वप्नेप्यस्माभिरन्यानस्पृष्टेत्येवमनुरागिणोऽस्मान्झटितिवृ णीष्वेतिभावः । देवानामस्वप्नत्वेपिस्वानुभवसिद्धत्वेनैवदूतेनैवमुक्तंप्र तिरजनिस्वप्नेनप्रापितायाइति सधुनोचितीमाशङ्कनीया । यद्वाविरहेव

शात्प्रतिकूलारजनीरात्रिर्यस्याः तादृशिभैमीस्वप्नइवस्वप्नःविपर्ययज्ञानं उन्मादावस्थेतियावत् । तयाप्रापितायाःसर्वत्रदृश्यमानायाःतवेतिव्या ख्येयम् । रजन्याःहरिद्रायाःप्रतिकूला । यद्वाप्रतिकूलारजनीयस्याःगौर त्वातिशयेनजितहरिद्रेभैमीतिवा । वागुरापिमृगैर्लंघितुंनशक्यते । प्रति रजनिवीप्सायामव्ययीभावः पक्षेसमासांतविधेरनित्यत्वात्कवभावः । कै श्चित्शब्दादपिशब्दोद्रष्टव्यः । तन्वङ्गीअङ्गगात्रेतिङीष् ॥ १०६ ॥

इतिघृतसुरसार्थवाचिकस्त्र ग्निजरसनातलपत्रहा रकस्य ॥ सफलयममदूततांवृणीष्व त्वमनुविमृ श्यदिगीशमेकमेषु ॥ १०७ ॥

इतीति । हेभैमित्वंममदूततांसफलयकृतार्थीकुरु । एषुइन्द्रादिषुम ध्येएकंदिगीशंस्वयमवधार्यविचार्यनतुसखीभिःसार्द्धमित्यर्थः । यस्मिन्न नुरागस्तवतंवृणीष्व । कस्यचिदेकस्यवरणान्ममदूत्यंसफलंकुर्वित्यर्थः । किं भूतस्यममइतिपूर्वोक्तप्रकारेणधृतासुरसार्थानामिन्द्रादिदेवसङ्घानांवाचि कस्त्रक्सन्देशवचनपरम्परायेनएवंविधं निजंस्वीयंरसनातलंजिह्वास्वरूपं तद्रूपंयत्पत्रंतस्यहारकः आनायकस्तस्य । अन्योपिलेखपत्रानायकस्यदू तस्यदूत्यंसफलीकरोति ॥ १०७ ॥

आनन्दयेन्द्रमथमन्मथमग्नमग्निं केलीभिरुद्धरत नूदरिनूतनाभिः॥आसादयोदितदयंशमनेमनोवा नोवायदिस्थमथतद्वरुणंवृणीष्व ॥ १०८ ॥

आनन्दयेति । हेतनूदरिभैमि त्वंवरणेनेंद्रमानन्दय । अथवानूतना भिर्नवनवाभिःकेलीभिःसुरतक्रीडाभिः मन्मथमग्नंमदनजनितपीडामग्नं अग्निंकामपीडायाःसकाशादुद्धरपृथक्कुरु । प्रवाहादिमग्नंअन्यदपिनूत नकलश्यादिभिरुद्ध्रियते । वाऽथवाशमनेयमेमनउदितादयायस्यएवंवि धंसकृपमासादयकुरु । वाऽथवायदित्थंएवंनोइन्द्रादिवरणंनक्रियते ॥ अथतर्हिवरुणंवृणीथाःवृणीष्व । चतुर्णांमध्ये यस्यकस्यापिवरणान्ममदू त्यंसफलयेतिभावः ॥ १०८ ॥

श्रीहर्षमितिपूर्वार्द्धंतदेव ॥ -तस्यागादयमष्टमःक

विकुलाद्दृष्टाध्वपान्थेमहा काव्येचारुणिनैषधीय चरितेसर्गोनिसर्गोज्ज्वलः ॥ १०१ ॥ ॥ ॥ ॥

श्रीहर्षमितिपूर्वार्द्धस्यपूर्वोक्तएवार्थः । किंभूतेमहाकाव्येकविकुलेनका लिदासादिमहाकविसमूहेनदृष्टोऽध्वाऽप्रमेयमार्गः तस्यपान्थेनित्यंपथि केऽपूर्वप्रमेयपरिपुष्टेकाव्ये ऽयमष्टमःसर्गोऽगात् समाप्तिंप्राप्तः इतिश्रीवेद करोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृतेनैषधीयप्रकाशेऽष्टमः सर्गःसमाप्तिंप्राप्तः ॥

## ॥ नैषधीयेचरिते नवमसर्गः ॥

### प्रारभ्यते ।

श्रीगणेशायनमः ॥ इतीयमक्षिभ्रुवविभ्रमेङ्गित स्फुटामनिच्छांविवरीतुमुत्सुका ॥ तदुक्तिमात्रश्र वणेच्छयाशृणोद्दिगीशसन्देशगिरंनगौरवात् १॥

श्रीगणेशायनमः ॥ दूतवचनश्रवणानन्तरंकिमभूदितिवर्णयितुनवमसर्ग मारभते । इतीति । इदंभैमीदिगीशसन्देशगिरदिक्पालानांवाचिकतस्य नलतुल्यदूतस्यउक्तिमात्रस्यकेवलोक्तेः श्रवणेच्छयाआकर्णनेच्छयाऽशृणोत् नतुगौरवात् । इन्द्रादीनामाज्ञाश्रोतव्येतिआदरान्नश्रुतवती किंभूता अक्षिभ्रुवस्यविभ्रमः परिस्पन्दविलासस्तल्लक्षणेनइङ्गितेनस्वाभिप्रायसूच केनचेष्टितेनस्फुटामनिच्छांदिक्पालानामनादरंविवरीतुंविशेषेण प्रकटी कर्तुंउत्सुकोत्कण्ठिता । अक्षिणीचभ्रुवौचद्वन्द्वचतुरेतिसाधुः ॥ १ ॥

तदर्पितामस्तुतवद्विधायतां दिगीशसन्देशमयींस रस्वतीम् ॥ इदन्तुमुर्वीतलशीतलद्युति ञ्जगाद वैदर्भनरेन्द्रनन्दिनी ॥ २ ॥

तदिति । वैदर्भनरेन्द्रनन्दिनीभैमी उर्वीतलेभूलोकेआल्हादकत्वाच्छी तलद्युतिंचन्द्रतुल्यंनलंइदंवक्ष्यमाणंजगाद । किंकृत्वातेनदूतेनअर्पितांनु

त्कान्दिगीशसन्देशमयीन्दिक्पालवाचिकबकुलांतांसरस्वतींवाणींअनादरा दप्रत्युत्तराभावादश्रुतेनतुल्यंवर्त्तते । अनाकर्णितमिवविधायप्रत्युत्तरमद त्वा।स्वमनीषितमुक्तवतीत्यर्थः ॥ २ ॥

मयाङ्गपृष्टःकुलनामनीभवा नमूंविमुच्यैवकिम न्यदुक्तवान् ॥ नमह्यमत्रोत्तरधारयस्यकिं ह्रियेपि सेयंत्वत्तोधमर्णता ॥ ३ ॥

मयेति । अङ्गदून मयात्वंवान्कुलनामनीपृष्टःसन्अमूंकुलनामनीविमु च्यअन्यदेवदिग्गीशसन्देशाद्यप्रस्तुतमेवकिमुक्तवान् । अयुक्तमेतदित्यर्थः। अत्रकुलनामविषयेप्रश्नेमह्यमुत्तरन्धारयस्य । प्रत्युत्तरलग्नकस्यभवतोऽपि सेयंप्रस्तुताअधमर्णताह्रियेलज्जायैनकिं ॥ प्रश्नोत्तरमददतःपरमस्यापिह्री र्भवति । उत्तमर्णपतवकथंनेतितस्मात्कुलनामनीकथयेतिभावः । ऋणा पाकरणेसमर्थोन्योपितदपाकरणाल्लज्जापदंप्राप्नोति । निषेधमात्रवाचि नोनकारस्यप्रथमान्तत्वमेवचयुक्तमितिसपूर्वायाः प्रथमायाविभाषेतिवैक ल्पिकत्वान्मयादेशाभावःधारयतीतिधारयः । अनुपसर्गाल्लिम्पविन्देति शः । उत्तरस्यधारयइतिसमासः ॥ ३ ॥

अदृश्यमानोक्वचिदीक्षिताक्वचि न्ममानुयोगेभव तःसरस्वती ॥ क्वचित्प्रकाशाङ्क्वचिदस्फुटार्णसं सरस्वतीजेतुमनासरस्वतीम् ॥ ४ ॥

अदृश्येति । भवतःसरस्वतीवाणी सरस्वतींनाम्नासरस्वतींनदींजेतुंमना स्तत्तुल्याभवतीत्यर्थः । किंभूतांसरस्वतीं । क्वचिद्देशविशेषेप्रकाशांप्रकट जलां । क्वचिच्चास्फुटमप्रकटमर्णउदकंयस्यास्तां । किंभूतातवसरस्वती । क्व चित्कुलनामविषयेममअनुयोगेप्रश्नेउत्तरादानाददृश्यमानागुप्ता । क्वचित्कु तआगतोसीतिममप्रश्नेईक्षिता । उत्तरदानात्प्रकटा । कुलनामप्रश्नस्याप्यु त्तरंप्रयच्छेतिभावः । सरस्वतीनदीभेदेगोवाग्देवतयोरपीतिविश्वः ॥ ४ ॥

गिरःश्रुताएवतवश्रवःसुधाः श्लथाभवन्मान्मेतु नश्रुतिस्पृहा ॥ पिपासुताशान्तिमुपैतिवारिजा नजातुदुग्धान्मधुनोधिकादपि ॥ ५ ॥

गिरइति । अतिमधुरत्वात्तवसोःकर्णयोःसुधाअमृतरूपास्तवतिरःश्रुता एवयद्यपिश्रुतास्तथापितुपुनस्तवनाम्निविषयेश्रुतिस्पृहाश्रवणेच्छानशया नशान्ताभवदतस्तदपिकथयेतिभावः अतिमधुरवाणीसमाकर्णनेनकथंनशा न्तेत्याशङ्कायामुहेतुमाह ।-वारिजात्उदकसंबन्धिनीपिपासुतापानेच्छाअधि कादुदकापेक्षया अतिमधुरादुदुग्धान्मधुनोवाजातुकदाचिदपिशान्तिनोपै तिइत्याभाणकः । तथायुक्तमेतदित्यर्थः । अधिकादपिजलापेक्षयाबहुपी तादपिदुग्धान्मधुनोवेतिवा । दुग्धापेक्षयाअधिकांमधुनोपीतिवा । दुग्धा च्छाम्यतिनापिमधुनः । अधिकादप्यमृतादपिनशाम्यतिइतिवा । दुग्ध मधुभ्यांअधिकादमृतादपिनशाम्यति । अतिबहुकिंवक्तव्यम् ॥ ५ ॥

**विभर्त्तिवंशःकतमस्तमोपहं भवादृशंनायकरत्नमी दृशम् ॥ तमन्यसामान्यधियावमानित न्त्वयाम हान्तंबहुमन्तुमुत्सहे ॥ ६ ॥**

बिभर्तीति । सूर्यादिवंशमध्येकतमोवंशोभवादृशमीदृशंहस्ताद्यभिनय मात्रेणावर्णयितुंशक्यं नत्वेवयथावत्समईश्वरगुणस्तमोपहन्तितिरस्करोति क्रोधरहितमज्ञानविनाशमशोकनुदस्वानायकरत्नंबिभर्ति । यस्मिंस्त्वमुत्प न्नःसकतमोवंशइतिप्रश्नः । अन्यसामान्यधियाअन्यवंशतुल्यत्वबुद्ध्याअव मानितन्तिरस्कृतएवकुलविशिष्टेनत्वयाकत्वा महान्तमत्युत्तमंवंशबहुतित रांमन्तुंसंमानयितुमुत्सहेवस्मादृत्वत्यस्मि । अनन्यतुल्यत्वेनपूजयितुमि च्छामि । तत्वंशंकथयेतिभावः । अथचत्वतेअसातमस्तोमनिराकरणसम र्थलोकोत्तरंहारमध्ययोग्यंरत्नंवंशोधारतितंवंशमन्यवेणुतुल्यत्वबुद्ध्या अव मन्तिरस्करोति । पश्चात्तद्रत्नंदृष्ट्वातस्यवेणोर्भूयोमानःक्रियतेतद्वद्वेणोरपि रत्नोत्पत्तिर्वृद्धैरुक्ता । तमोन्धकारेस्वर्भानौतमःशोकेगुणान्तरे । नायकेने तरिश्रेष्ठेहारमध्यमणावपीतिविश्वः । रत्नंस्वजातिश्रेष्ठेपिइत्यमरः । तमो पहंअपेःक्लेशतमसोरितिअच् ॥ ६ ॥

**इतीरयित्वाविरतांपुनःसताङ्गिरानुजग्राहतरा न्धराधिपः ॥ विरुत्यविश्रान्तवतीन्तपात्यये घ नाघनश्रातकमण्डलीमिव ॥ ७ ॥**

इतीति । स नराधिपो नल इति पूर्वोक्तं ईरयित्वा उक्त्वा विरताम् विश्रान्तां तां भैमीं गिरा वाचा पुनरनुजग्राह तरां अतितराम् अनुगृहीतवानुवाचेत्यर्थः । तां प्रति तत्स्ववधकरवचनमेवानुग्रहः । कः कामिव । तपात्यये ग्रीष्मान्ते प्रावृषि वर्षुको घनाघनो मेघः चातकमरहलीमिव । किंभूतां पिपासावशात् इति रुत्यशब्दितां अविश्रान्तवतीं विश्रान्ताम् । अब्दो घनाघन इत्यमरः । चरिचली त्यादिना द्वित्वम् आगागमे कृते हन्तेर्घत्वञ्चेति साधुः ॥ ७ ॥

अयेमम् ओदासितमेत्र जिह्मया द्वयेऽपि तस्मिन्ननतिप्रयोजने ॥ गरौ गिरः पल्लवनार्थलाघवे मितञ्च सारञ्च वचो हि वाग्मिता ॥ ८ ॥

अयेइति । अयेभैमि मम जिह्वया तस्मिन् कुलनामलक्षणे द्वयेऽपि उदासितम् उदासीनयैव जातं यतोऽनतिप्रयोजने अतिशयितप्रयोजनशून्ये निरर्थकत्वान्मया द्वयं तेन कथितमिति भावः । निष्प्रयोजनेऽपि पृष्टे प्रत्युत्तरं दातव्यमित्याशङ्क्याह । पल्लवनं अल्पेऽपि प्रश्ने यो बहुशब्दवचनार्थलाघवं अर्थसङ्कोचश्च द्वे अपि गिरो वाण्या गरौ विषतुल्यौ दोषौ । अविचार्य एव विषं यथा त्यज्यते तथा एते अपि त्याज्ये इत्यर्थः । तस्मान्निरर्थकं न प्रष्टव्यं पृष्टमपि प्रत्युत्तरार्हं न भवतीति मयोदासितमिति भावः दोषत्वमेव समर्थयते। हि यस्मात् मितं स्वल्पशब्दतः सारं अर्थतो यद्वचः सैव वाग्मिता पण्डितता तद्विपरीतस्य दोषत्वं स्फुटमेवेत्यर्थः चौसामस्त्यं सूचयतः । उदासितं भावे क्तः । पल्लवशब्दो लक्षणया विस्तारवाची तस्मात्तत्करोतीति णयन्तात् ल्युट् एयासश्रन्थ इति युच्वा ॥ ८ ॥

वृथा कथेयं मयि वर्णपद्धतिः कयानुपूर्व्या समकेति केतिच ॥ क्षमे समक्षव्यवहारमावयोः पदे विधातुं खलु युष्मदस्मदी ॥ ९ ॥

नाम्नोऽतिप्रयोजनत्वाभावं समर्थयते । वृथेति हे भैमि मयि का वर्णपद्धतिर्वर्णपङ्क्तिः समकेति सङ्केतितात्वयेति शेषः । कया चानुपूर्व्या परिपाट्या सङ्केतिता चकारः प्रश्नसमुच्चयार्थः । नकाराकारलकारविसर्जनीयात्मिका सञ्ज्ञा सङ्केतिता तत्र तद्विपरीता लङ्कारादिरूपा वा इयं कथा गोष्ठी वृथा निष्प्रयोजना। नामसञ्ज्ञानभिज्ञाने व्यवहारसिद्धिः कथमित्यत आह । खलु यस्मादावयो

स्तत्रममचसमक्षंप्रत्यक्षंव्यवहारं विधातुङ्कर्तुंसाधयितुंयुष्मदस्मदीपदेशुद्रन्ते छमेसमर्थैपरोक्षव्यवहारएवहिसव्क्षासप्रयोजनंप्रत्यक्षव्यवहारेचत्वमेवकुर्व हमेवङ्करिष्यामीतियुष्मदस्मद्भ्यामेवकार्यसिद्धेः पूर्वोक्तकथानिष्प्रयोजनै व। यद्वाचकारा कुलप्रश्नोपिवृथेत्यर्थः। यथानामप्रश्नादुत्तरश्लोकेन कुलस्यदत्तोत्तरत्वाद्व्याख्यानानन्तरंतथाव्यायोनेत्युपेक्ष्यम्। समकेतीति कितनिवासेरोगापनयनेचेतिअस्यकर्मणिलुङिरूपं। आवयोरितिपरत्वा दस्मदःशेषः युष्मदस्मदोश्च्परत्वादादेशाभाव.॥ ९॥

यदिस्वभावान्ममनोज्ज्वलङ्कुलन्ततस्तदुद्भावन मौचितीकुतः॥ अथावदातन्तदहोविडम्बना य थातथाप्रेष्यतयोपसेदुषः॥ १०॥

नामाकथनेहेतुमुक्त्वा कुलाकथनेहेतुमाह। यदिती। ममकुलंस्वभावां द्यदिचज्ज्वलनिर्मलन। ततस्तर्हिसदोषस्यतस्यकुलस्योद्भवनकथनममकु तःकथमौचिती अपितुतादृशस्यकथनमयुक्तमित्यर्थः। अथवावदातंनि र्दोषंतत्कुलन्तर्हिप्रेष्यतयापरदूतत्वेनउपसेदुषः आगतस्यममतथातादृ शीकथातादृक्प्रसिद्धनिर्दोषसङ्कथासाविडम्बना। अहोआश्चर्यमहानुप हासइत्यर्थः। उपहासभियातत्कथनम्प्रेष्यस्यममानुचितमित्यर्थः। अथ दातदैपशोधने। उपसेदुषःभाषायांसदवसेतिक्वसुः॥ १०॥

इतिप्रतीत्यैवमयावधीरिते तवापिनिर्बन्धरसो नशोभते॥ हरित्पतीनांप्रतिवाचिकंप्रति श्रमोगि रान्तेघटतांहिसम्प्रति॥ ११॥

उपसंहरति। इतीति। इतिपूर्वोक्तप्रकारेणवैयर्थ्येनानौचित्येनचहे तुनाप्रतीत्यैवविचार्यैवमयाऽवधारिते कुलनामप्रश्नरूपार्थैतवापिनिर्बन्धे आग्रहेरसःप्रीतिर्नशोभतेनयुक्तमित्यर्थः। तर्हिकिंयुक्तंह्रियस्मात्सम्प्रती दानींहरित्पतीनामिन्द्रादिदेवानाम्प्रतिवाचिकंप्रत्युत्तरप्रतिउद्दिश्यतेतव गिराश्रमःप्रयासोघटतेयुक्तः निरर्थककुलनामप्रश्नेआग्रहन्त्यक्त्वाशीघ्रन्दिक् पालानांप्रत्युत्तरन्देहीतिभावः॥ ११॥

तथापिनिर्बन्धवतितेथवास्पृहा मिहानुरुन्धेमित

यानकिङ्करा ॥ हिमांशुवंशस्यकरीरमेवमां निशम्य किंनासिफलेग्रहिग्रहा ॥ १२ ॥

तथेति । अथवातथापिकुलनामाकथनेकारणेकथितेपिएतत्कथनविष येनिर्बन्धति आग्रहशीलेभैमि अहंइहकुलनामप्रश्नेतवस्पृहांइच्छांमितया गिराखल्पेनवचनेनकिमनुरूपेनावृणोमि अपितुपूरयामि । द्वयोर्मध्ये एकेनाग्रहःपरित्याज्यस्त्वयातुनत्यज्यतेततोमयैवत्यज्यतइत्यथवेत्यनेनसूचि तम् । तमेवाह त्वंहिमांशुवंशस्यचन्द्रवंशस्यकरीरंबालकमेवमांनिशम्याक र्ण्यफलङ्गृह्णातीतिफलेग्रहिःफलितः ग्रहोनिर्बन्धोयस्याःसाएवंभूताकि न्नासिनभवसिअपितुफलितनिर्बन्धाभव । निशम्यैवेतिवायोजना चन्द्रवंशे बहवोविख्यातास्तन्मध्येऽहंप्रसिद्धोनभवामीतिकरीरपदेनस्वक्षोपायति । फलेग्रहिरात्मंभरिश्चेतिसाधुः । स्यादवन्ध्यःफलेग्रहिरित्यमरः ॥ १२ ॥

महाजनाचारपरंपरेदृशी स्वनामनामाददतेनसाध वः ॥ अतोभिधातुंनतदुत्सहेपुन र्जनःकिलाचार मुचंविगायति ॥ १३ ॥

नाम्नस्त्वत्यन्तमकथनीयत्वमाह । महेति । नामप्रसिद्धौ । यत्साध वःस्वनामनाददतेनकथयन्ति । ईदृशीमहाजनानांआचारपरम्परा । यतो ऽत-कारणात्तत्स्वनामअभिधातुंवक्तुंनोत्सहेनेच्छामि । कुलंकथितंनाम नकथनीयमितितात्पर्यार्थः । अत्रहेतुःकिलयस्माज्जनःआचारमुचंपुरुषं पुनर्विगायतिनिन्दति । अतोनकथ्यतइत्यर्थः । आत्मनामगुरोर्नामाम ातिकृपणस्यच । आयुष्कामोनगृह्णीयाज्ज्येष्ठापत्यकलत्रयोरितिसदाचा रोमूलम् । आददतेआङोदोनास्यविहरणइतितङ् ॥ १३ ॥

अदोयमालप्यशिखीवशारदो बभूवतूष्णीमहिता पकारकः ॥ अथास्यरागस्यदधापदेपदे वचांसिहं सीवचिदर्भजाददे ॥ १४ ॥

अदइति।अयंनलोऽद-पूर्वोक्तंवचनमालप्योक्तातूष्णींचबभूव । किंभूतः शारदोनिपुणोहिंसाप्रवादोवाऽतएवाहिताःशत्रवस्तेषामपकारकः। कइव शारदःशरत्सबन्धीशिखीवमयूरइव । यथाअहीनामसर्पाणान्तापङ्करोतिएवं

भूतोमयूरःप्रावृषिरुतंश्रुत्वाशरदिमूकीभवति । अथानन्तरंच्चआस्यरागस्य मुखलौहित्यस्यपदेपदेप्रतिचरणंदधाधारयित्रीहंसीचविदर्भजावचांसिआ ददेउवाचेत्यर्थः । किंभूतेयमस्यनलस्यपदेपदेसुस्निग्धत्तरूपेवराङ्गस्यमधुर त्वादनुरागस्यदधाधारयित्रीपोषयित्री । आस्यस्येववराङ्गस्तस्यदधावाहं सी । प्रावृषिमयूरोमधुरंरौतिशरदिहंसीमधुरस्वरा । आस्येचरणयोश्चलो हितामवति। दधेतिददातिदधात्योर्विभाषेतिशः रागस्येतिकर्मणिषष्ठी १४

सुधांशुवंशाभरणंभवानिति श्रुतेपिनापैतिविशेष संशयः ॥ कियत्सुमौनंविततांकियत्सुवाग् महत्य होवञ्चनचातुरीतव ॥ १५ ॥

सुधेति । भवान्हिमांशुवंशस्याभरणमितिश्रुतेपिनलोवान्योवाकश्चने तिविशेषसंशयोनापैतिनगच्छतितस्मान्नामापिवदेत्यर्थः । कियत्सुद्वित्रेना मादिप्रश्नेषुमौनंप्रत्युत्तरादानंकियत्सुकिमर्थमागतोसीत्यादिषु प्रश्नेषुवा विततातप्रस्तुतबहुतरबहुदेवाशंसाकथनरूपा । अहोआश्चर्यकारिणीम हतीतववचनचातुरीईदृशः प्रतारकोनदृष्टाचारइतिभावः । वंशेचमुक्ता भरणंआभरणंभवति ॥ १५ ॥

मयापिदेयंप्रतिवाचिकंनते स्वनामसत्कर्णसुधाम कुर्वते ॥ परेणपुंसाहिममापिसङ्कथा कुलाबलाचा रसहासनासहा ॥ १६ ॥

त्वयानाम्निअकथितेसतिमयापिप्रत्युत्तरंनदातव्यमित्याह । मयेति।स्व नाममत्कर्णयोः सुधारूपंअकुर्वतेस्वनाममकथयतेतेतुभ्यंमयापिप्रतिवाचि कंप्रत्युत्तरंनदेयंदातुमनुचितं । तत्रहेतुमाह । हियस्मात्परेणपुंसापुरुषे णसहममापिसङ्कथासम्यग्गोष्ठी कुलाबलाकुलस्त्रीतस्याआचारेणसहास नंएकस्मिन्नासनेउपवेशनन्तस्यासहापतिव्रताचारपरपुरुषकथयोः सहाव स्थानलक्षणोविरोधइत्यर्थः। यथात्वयासदाचारभङ्गभीत्यानामनकथ्यतेतथा मयापिस्त्रीकुलाचारभङ्गभीत्यास्वाभिप्रायोनकथ्यतइतिप्रतिबन्दीत्यर्थ॰ १६

हृदाभिनन्द्यप्रतिबन्द्यनुत्तरः प्रियागिरःसस्मित माहसम्मताम् ॥ वदामिवामाङ्किपरेशुमाङ्किप

रत्वमीदृशंमाक्षिकमाक्षिपद्वचः ॥ १७ ॥

दृढेति । सनल. सस्मितंयथातथातांभैमीमाहस्मअवोचत् । किंकृत्वा प्रियागिरोभैमीवचांसिप्रियामनोज्ञावागिरः साधूक्तमितिहृदामनसाभिनन्द्यस्तुत्वा । किंभूत. कुलस्त्रीणामाचारानुचितंपरपुरुषसम्वादमहमपिनकरोमीतिप्रतिवन्दीतयातस्याःसकाशाद्धाऽनुत्तरउत्तरहीनः । इदृग्वक्रोक्तिप्रतिवन्द्यादिचातुर्यंक्कस्यापिनास्तीत्याश्चर्यवशात्स्मितपूर्वोऽभिभाषित्वम् । तदेवाह । हेवामाक्षिसुनेत्रेकटाक्षविक्षेपाद्वक्रनेत्रेवा । अहम्त्वदाभिरुपदिशामि । माक्षिकंमधुआक्षिपक्षिरस्कुर्वदतिमधुरंईदृशंप्रतिवन्द्यादिरूपन्दूत्यलक्षणंवचनंपरेष्विन्द्रादिव्यतिरिक्तेषुमादृशेषुमाक्षिप । त्वमेवप्रत्येवंवदितुंयुक्तं नतुमांप्रतीतिप्रतिवन्दीमुक्त्वाऋजुमार्गेणप्रत्युत्तरन्देहीतिभावः । सस्मितंयथातथामाक्षिकमाक्षिपद्वचनंमास्मेतिअभिप्रायः । ईदृशंत्वमिन्द्रादिदूतत्वात्तदीयएवेतिमह्यमुत्तरंदत्सेयेनपातिव्रत्यक्षतिरितिवा । माक्षिकमाक्षिपद्वचःपरेषुमाक्षिपःकिंतुमय्यिक्षिपेतिमय्येवपरवुद्धिंमाकुर्वितिनलएवाहमित्यर्थोन्नासकथितमित्विवावदामिकथयामिपरेषुअन्येषुअर्थंनलादन्यइतिमाक्षिपइतिवा । सर्वथाअहंनलएवेत्यर्थः । व्याख्यानान्तरंक्लिष्टत्वादुपेक्ष्यम् । वामाक्षि । बहुव्रीहौषषिवित्वात्ङीप्नदीत्वाद्ध्रस्वः माक्षिपपूर्ववक्रोद् ॥ १७ ॥

करोषिनेमंफलिनंममश्रमन्दिशोनुगृह्णासिनकञ्चनप्रभुम् ॥ त्वमित्यमर्हासिसुरानुपासितुं रसामृतस्नानपवित्रयागिरा ॥ १८ ॥

करोषीति । त्वमिमंस्वंस्त्रीयंममश्रमंफलिनंसफलंनकरोषि । प्रश्नेकाकुः । अपितुकुरुइति । तथादिशकञ्चनप्रभुंनानुगृह्णासिअपितुस्वयंवरेणानुगृहाण । यतुर्नेष्वेऽन्यतमस्यापिवरणेनममश्रमंसफलयेत्यर्थः । इत्यंप्रतिवन्दीरूपेणप्रकारेण रसोमाधुर्यंलक्षणामृतंयेनयत्स्नानस्तेनपवित्रयागिरात्वंसुरानुपासितुंअर्हायोग्यासि । एवंविधावाणीतान्प्रतिसन्देशयेतिभावः । यथागिरामांसन्तोषयसितथादेवानपिसन्तोषयेत्यर्थः ॥ १८ ॥

सुरेसुसन्देशयसीदृशीमहुं रसस्रवेणस्तिमितांनभा

रतीम् ॥ मदर्पितादर्पकतापितेषु या प्रयाति दावार्दितदावबृष्टिताम् ॥ १९ ॥

सुरेष्विति । हे भैमि त्वं बहुं विपुलार्थं रसस्रवेणमाधुर्येद्रवेणास्तिमितामार्द्रीनतिरसामनुरागव्याकुल्येन चार्द्रां वक्रोक्तिप्रतिबन्ध्यादिरूपाभारतीं वाचीं देवेषु सुरेषु न सन्देशयसि अपि तु तान्प्रत्येनां सन्देशं कुरु । या वाचीमयिद्यर्पिता सन्देशरूपेण मया चार्पिता कथिता सती दर्पकतापितेषु कामपीडितेषु सुरेषु दावेन वनवह्निनाऽर्दितः दावो वनं तस्य वृष्टितां प्रयाति । दह्यमानस्य वनस्य वह्नौ वृष्टिर्यथा सुखाय भवति तथा कामपीडितानां तेषां त्वद्वाणी सुखाय भविष्यति तस्माद्देवं कुर्विति भावः । प्रयातीति वर्तमानसामीप्ये लट् ॥ १९॥

यथा यथेह त्वदुपेक्षयानया निमेषमप्येष जनो विलम्बते ॥ रुषा शरव्यीकरणे दिवौकसां तथा तथा त्वरतेऽरतेः पतिः ॥ २० ॥

तेषां कामपीडां स्वनिन्दाञ्चाह । यथेति । एष मल्लक्षणो जनोऽनया प्रत्युत्तरदानरूपया त्वदुपेक्षया त्वत्कृतया वज्ञया निमेषं निमेषपरिमितं कालमपि यथा यथा यावद्यावद्दू इह तव सन्निधौ विलम्बते कालक्षेपं करोति । तथा तथा तावत्तावद्दूरते पतिः कामो रुषा दिवौकसां शरव्यीकरणे लक्ष्यताकरणेऽस्मिन्समये त्वरते सत्वरो भवति । तस्मात्सत्वरं प्रत्युत्तरं देहीति भावः । इ होत्तरविषये त्वदुपेक्षयेति वा ॥ २० ॥

इयच्चिरस्यावदधन्ति मत्पथे किमिन्द्रनेत्राण्यथ निर्ननिर्ममौ ॥ धिगस्तु मां सत्वरकार्यमन्थरं स्थितः परप्रेष्यगुणोपि यत्र न ॥ २१ ॥

इयदिति । अथ निर्वेदं इयच्चिरस्यैतावद्बहुकालं सन्त्यथेऽवदधन्ति निर्निमेषं सावधानानि एवंभूतानीन्द्रनेत्राणि किं न निर्ममौ अपि तु तेनैव निर्मितानि । अन्यथा तेषां विलम्बसहनदार्ढ्यं कुतः तस्माद्ब्रह्मनिर्मितानीति सत्यम् । सत्वरे त्वरया कर्तुमर्हे कार्ये मन्थरं मन्दं मां धिगस्तु अहमपि निन्द्य इति भावः । यः सोऽयं मयि परस्य प्रेष्यो दूतस्तस्य गुणः सत्वरलक्षणः सोपि न स्थितः न विद्यते परवत्कष्टो यो दूतगुण इति वा । सत्वरकार्यकारित्वं दासधर्मः । प्रेषितेन

दासेवशीघ्रङ्कार्यंसम्पाद्यगन्तव्यम् । कार्याभावेपिशीघ्रमागत्यनभवतीति झटितिनिवेदनीयंयस्माद्भूमांप्रतीक्षते तत्तस्मात्झटितिप्रत्युत्तरंदत्वामां प्रेषयेतिभावः । अवद्धन्तिवानपुंसकस्येतिनुम् ॥ २१ ॥

इदंनिगद्यक्षितिभर्तरिस्थिते तयाभ्यधायिस्वगतं विदग्धया ॥ ध्रुधिक्षियन्दूतयतांभुवःस्मरं मनो दधत्वानयनैपुणव्यये ॥ २२ ॥

इदमिति । क्षितिभर्तरिनलेइदंपूर्वोक्तंनिगद्योक्त्वास्थितेसतितूष्णींभावेप्राप्तेसतितयाभैम्यास्वगतमप्रकाशमभ्यधायिअवादि । किम्भूतयाभुवोभुलोकस्यस्मरंकामरूपंअतिसुन्दरन्तंनलमधिक्षिस्त्रीविषयेदूतयतान्दूत्यङ्कुर्वतांइन्द्रादीनामयेनैपुण्यङ्कौशलन्तस्यव्यये ऽभावेस्वमनोदधत्याधारयन्त्या स्त्रीषुप्रभव्यःसामान्योदूतःप्रेषणीयइतिनीतिः । अययोतिसुन्दरःप्रेषितइतितेषांनीत्यमभिज्ञता । नीतिशास्त्रंनजानन्तीतिमनसिनिश्चितवत्याऽतो विदग्धयानीतिशास्त्रादौचतुरया यद्वातेषांमनोनयकौशलाभावेदधत्या तेषांमनसिनयकौशलंनास्तीतिनिश्चितवत्येतियोज्यम् । नोज्ज्वलंरूपवत्तम्प्रनार्थंवन्तंनचातुरं । दूतन्वापिहिदूतींवाबुधःकुर्यात्कदाचनेतिनितिः । अधिस्त्रीतिसप्तम्यर्थेऽव्ययीभावः । नैपुणभावेयुवादित्वादण् ॥ २२ ॥

जलाधिपस्त्वामदिशन्मयिध्रुवं परेतराजःप्रजिघायसस्फुटम् ॥ मरुत्वतैवप्रहितोसिनिश्चितं नियोजितश्चोर्ध्वमुखेनतेजसा ॥ २३ ॥

स्वागतन्त्वं प्रतिकिमाहेत्याह । जलेति । जलाधिपोवरुणोमयिविषये त्वान्ध्रुवंनिश्चितमदिशत्आदिष्टवान् । सपरेतराजःयमःस्फुटंनिश्चितंप्रजिघायप्रेषितवान् । मरुत्वतेयेन्द्रेणैवनिश्चितंप्रहितोसि ऊर्ध्वंमुखेनतेजसा वन्हिनानियोजितश्च । चतुर्ष्वप्यन्वयेषुआपाततःकाकुवत्कथयेत्यस्ययोजना । अथवातिसुन्दर्यांमयिअतिसुन्दरन्त्वांय.समादिष्टवान्सपूर्वोक्तनीतिलङ्घनान्निश्चितंजडात्मास्वामीअतिमूर्खइत्यर्थः । पश्चात्ताद्रूश्यांमयिताद्रूशमेवप्रेषितवान्सपरेतानामृतानांराजैवनसचेतनइत्यर्थः । येनताद्रूश्यांमयिताद्रूशस्त्वंप्रेषितःसमरुत्वान्वातूलोभवति । येनताद्रूश्यांमयि

तादृशस्त्वं नियोजितः स ऊर्ध्वं मुखः पिशाचः प्रतिभारहितश्च । पिशाचस्तो र्ध्वंमुखो भवति । अप्रतिभश्च भवति । ऊर्ध्वं मुखत्वेन त्वन्मुखसौन्दर्यं तेन दृष्टमित्यपि सूचितम् । अवज्ञारूपस्त्वात्मनैव न लंसंबोध्येयमुक्तिः ॥२३॥

**अथ प्रकाशं निभृतस्मितासती सतीकुलस्याभरणं किमप्यसौ ॥ पुनस्तदाभाषणविभ्रमोन्मुखं मुखं विदर्भाधिपसंभवादधे ॥ २४ ॥**

अथेति । अथासौ सती निभृतस्मिता गूढस्मिता ईषत्स्मितासती कुलस्य पतिव्रतासमूहस्य किमपि लोकोत्तरमाभरणमेवंभूता विदर्भाधिपसंभवा भैमी स्वमुखं पुनस्तेन सह यदाभाषणन्तयोर्विभ्रमो विलासस्तल्लक्षणो वा तत्रोन्मुखं स्व.? पुनरेवंभूतं दधौ प्रकाशं स्फुट सखीभिरपि यथा कर्ण्यते तथा वददित्यर्थः । प्रकाशमुर्वर्वसभसङ्गेति मुखविशेषणं वा । अयोग्यो अपि इन्द्राद योमां वाञ्छतीति गूढस्मिता । सतीपदेन योमनसा पूर्वं वृतः स एव पतिरिति सूचितम् । तदाभाषणेत्यादिना तेन सह नलबुद्ध्या आभाषणं मुख्यं उत्तरदानप्रासङ्गिकमिति सूचितम् ॥ २४ ॥

**वृथा परीहासइति प्रगल्भता ननेति च त्वादृशि गाढ़मि ग्रगर्हणा ॥ भवत्यवज्ञा च भवत्यनुत्तरा दतः प्रदित्सुः प्रतिवाचमस्मि ते ॥ २५ ॥**

वृथेति । इदेवदूत इतीय प्रगल्भता धृष्टत्वम् । इति किं । वृथा निष्प्रयोजनः परीहास उपहासः । इयअपरिचितेन सहोपहासङ्करोतीति अत्यन्तं धृष्टेयमिति सखीजनो वदिष्यति । त्वादृशि प्रतिबन्द्यादिरूपक्रीडावादः इति कारणाद् वृथा । इति किंप्रगल्भतेति वा । तथायन्नयोपदिश्यते तन्मयानाङ्गि यते इति ननेति त्वादृशे निषेधवाक् त्वत्सदृशस्य विगर्हणा विशेषेण निन्दैव भवति । भवन्तं प्रति सोपपत्तिकमेव वक्तव्यं निरूपपत्तिकन्तु विगर्हणा । तर्हि तूष्णिं स्यातव्यमिति चेदत आह । भवति त्वयि अनुत्तरादुत्तरादानात्तव देवानाञ्च अवज्ञा भवति अतोऽहं प्रतिवाचन्तुभ्यं प्रदित्सुः दातुमिच्छुरस्मि । ननेति देवानां पृथग्निषेधसूचनार्थम् । त्वादृशि भवतीति पदाभ्यान्त्वेव माहात्म्यादुत्तरं दीयते न तु इन्द्रादिमाहात्म्यादिति सूचितम् । अन्यस्मिन्दूते

नेत्यर्थः । परीहासःउपसर्गस्यघञीतिदीर्घः ॥ २५ ॥

**कथंनुतेषाङ्कृपयापिवागसौ गसाविमानुष्यकला ञ्छनेजने ॥ स्वभावभक्तिप्रवणंप्रतीश्वराः कथान वाचामुदमुद्गिरन्तिवा ॥ २६ ॥**

कथमिति । मानुष्यकमेवलाञ्छनंयस्यैवंविधेमल्लक्षणेजने कृपयापिहे तुनासौअस्मान्वृ णीष्वेतितेषान्देवानांवाक्कथङ्केनवाप्रकारेणासाविप्रसूता मानव्यादेवतानर्हत्वात्तेषान्तांप्रत्येवङ्कृपयापिवक्तुमनुचितम् । कथंन इतिनिपातसमुदायःपृथग्वा । नुःस्थिरश्चालनेप्रश्नेवा । तेषाङ्कृपयाकत्र्यो वाकथमसावीतिवा । मानुष्यकलाञ्छनेइतिस्वनिन्दयादेववरणनिषेधेता त्पर्यम् वाशब्दःपूर्वोक्तानौचितीपरिहारार्थं । अथवेतिईश्वराःप्रभवःस्व भावेनभक्त्याप्रवणंनम्रंजनमुद्दिश्यकथावाचामुदंहर्षंनोद्गिरन्तिप्रकटयन्ति । अपितुयया कयापिभक्तोमांप्रतिस्वहर्षंप्रकटनेतेषांतात्पर्यंनतुमद्वचनइति सोढंवचनमितिभावः । तेकेवलंनमस्कारार्हाःनतुवरणार्हाइतिअपिसूचि तम् । प्रथमपक्षेअसावीतिकर्मकर्त्तयचःकर्मकर्त्तरीतिचिण्पक्षेभावकर्मणो रितिचिण् । मानुष्यकेतियोपधाद्वुञ् ॥ २६ ॥

**अहोमहेन्द्रस्यकथंमयौचिती सुराङ्गनासङ्गमशोभिताभृतः ॥ ह्रदस्यहंसावलिमांसलश्रियो बला कयेवप्रबलाविडम्बना ॥ २७ ॥**

अहोइति । सुराङ्गनानामुर्वशीप्रभृतीनांसङ्गमेनशोभितान्भृतःशोभाशी लस्यबिभ्राणस्यमहेन्द्रस्य मानुष्यामयाकृत्वाविडम्बनाकथंऔचितीअपि तुनकथञ्चित् । अहोआश्चर्यंसम्बोधनंवा । अत्यन्तमनौचितीत्यर्थः उ चितैवौचिती कयाकस्येव । बलाकयाकृत्वाहंसावल्यामांसलाबहुलाश्रीः शोभायस्यह्रदस्येवप्रबलाविडम्बनाजुगुप्सिताकारता हंसापेक्षयायथाबला काहीनातथारम्भाद्यपेक्षयाअहमितिइन्द्रवरणनिषेधेतात्पर्यम् ॥ २७ ॥

**पुरःसुरीणांभणकेवमानवी नयत्नतोस्तत्रतुसापि शोभिका ॥ अकांचनेकिंचननायिकाङ्गके किमा रकूटाभरणेननश्रियः ॥ २८ ॥**

पूर्वोक्तमेवद्रढयति ॥ पुरइति सुरसुन्दरीणांदेवाङ्गनानांपुरोग्रेमानवी केवभणकथयअपितुकापितुच्छेत्यर्थः । इवशब्दोवाक्यालङ्कारे । केनेति पाठेमानवीसुरीणांपुरःकेनगुणेनशोभिकाशोभतेभणएतादृशः कोपिगुणो मानुष्यांनविद्यतइत्यर्थः । तर्हिकुत्रशोभतइत्यतआह । यत्रतादेव्योनवि द्यन्तेतत्रतुपुनः पृथिव्यांसापिमानव्यपिशोभते । मानुष्यपेक्षयाअहंसु न्दरीनतुदेव्यपेक्षया । तत्रदृष्टान्तः । यथाअकाञ्चनेसुवर्णालङ्काररहिते अकिञ्चनस्यदरिद्रस्यनायिकास्त्रीतस्याअङ्केअल्पेऽवयवेएकस्मिन्नप्यवय वे आरकूटस्यकृतेन अलङ्कारेणश्रियःशोभाःकिंनभवन्ति अपितुभवन्त्येव तथादेवीरहितायांभुविअन्यरमण्यपेक्षयापिममापिशोभायुक्तैवेत्यर्थः । पूर्वोक्तमेवतात्पर्यम् । रीतिःस्त्रियामारकूटमित्यमरः । लोकेपित्तलमिति वदन्ति । सुरीणांपुंयोगेतिङीष् । मानवीअणन्तत्वात् । शोभिकाकर्त्तरि शुभेर्ण्वुल् । किञ्चनकिमपिधनादिर्यस्यनास्तिसोकिञ्चनः । मयूरव्यंसकादि त्वात्समासः।अङ्ककइत्यल्पेकन्अल्पत्वंसङ्ख्याकृतं । यद्वास्वार्थिकःकन् २८

यथातथानाम गिरःकिरन्तु ते श्रुतिपुनर्मेत्रबधिरेतद क्षरे ॥ पृषत्किशोरीकुरुतामसङ्गताङ्कथंमनोव त्तिमपिद्विपाधिपे ॥ २९ ॥

यथेति । तेदेवायथातथायेनतेनप्रकारेणाभिलाषेणवाक्षपयावरणविष येगिरोवाणीः किरन्तुविक्षिपन्तुनामसुखेनब्रुवन्तुतथापिमेश्रुतीकर्णौपु नस्तासांगिरामक्षरेएकस्मिन्नपिवर्णविषयेबधिरेएकमप्यक्षरंनाकर्णयतःकिं मुबहूनिकिन्तराञ्चार्थमित्यर्थः । श्रुतमप्यनुष्ठेयत्वादश्रुतमेवेत्यर्थः । दृ ष्टान्तेनहेतुमाह । हरिणस्यपृषतःकिशोरीबालापिहरिणी द्विपाधिपेऐ रावतेहस्तिश्रेष्ठेवाविषयेअसङ्गतां अयोग्यांमनोवृत्तिमपिइच्छामात्रमपि कुरुतांइच्छामपिनधारयतिनानुतिष्ठतीतिकिंवाच्यमित्यर्थः । पशुरपिबा लापिसतीयामृगीयोग्यायोग्यविभागंजानातिततोप्यज्ञाकिमहं । तान्न वृणइतिभावः ॥ २९ ॥

अदोनिगद्यैवनतास्यया तयो श्रुतौलगित्वाभिहि तालिरालपत् ॥ प्रविश्ययन्मेहृदयंह्रियाहत द्वि निर्यदाकर्णयतन्मुखाध्वना ॥ ३० ॥

अद इति । आलि.काचित्सखीआलपदवोचत् । किंभूताअदोनिगद्य एवमुक्त्वैवनतास्थयालज्जावशान्नम्रमुख्याऽनयाश्रुतौलगित्वाऽभिहिता एववदेतिउक्ता । हेदूतइयंह्रियामेहृदयंप्रविश्ययदाहत्वमीतित्वन्तनु खाध्वनानिर्यच्छन्निर्गच्छदाकर्णय । इयंलज्जयाकिमपिस्वयंवक्तुंनशक्नो ति । मन्मनसिरहस्यंनिवेश्ययदाहतन्मयानूद्यतेनतुस्वस्फूर्त्याकिमप्युच्य तेतदाकर्णयेत्यर्थः ॥ ३० ॥

**बिभेमिचिन्तामपिकर्तुमीदृशीं चिरायचित्तार्पितनैषधेश्वरा ॥ मृणालतन्तुच्छिदुरासतीस्थितिर्लवादपित्रुट्यतिचापलात्किल ॥ ३१ ॥**

बिभेमीति । यतोहञ्चिरायबहुकालंचित्तेऽर्पितोधृतोनिषधेश्वरःयया लज्जयाएवईदृशीन्द्रादीन्वृणोमीति चिन्तामपिविचारमपिकर्तुंबिभेमि भयप्राप्नोमिनिश्चयंकर्त्तुंकिमुत । मनोव्यापारेपिभयंकिंपुन.कायव्यापारेष्व पिशब्दार्थः । विचारोहिमानसोव्यापारोमनसश्चनलेनाधिष्ठितत्वादन्य विषयविचारस्यावकाशोपिनास्तीदृशेविचारेक्रियमाणेतत्स्थोनलः समाक र्णयेत्सचेश्वरः प्रभुस्तस्मादेवविचारयितुमपिबिभेमीत्यर्थः । मनसानल स्यवृतत्वान्नान्यवरणकथामपिकरोमीतिभावः । मनसैववृतोनतुसाक्षात् तस्मादन्यवरणविषयविचारेपिक्रियमाणेकिमितिभयमित्याशङ्क्याह । कि मयस्मान्मृणालतन्तुवच्छिदुराश्चयमेवभिदुरासतीस्थितिः पतिव्रतामर्या दालवादपिअल्पादपिचापलात्त्रुट्यति । बिसतन्तुर्यथाहस्तस्पर्शमात्राच्छि द्यतेतथासाक्षाद्वरणादपिमनसायद्वरणन्तस्यएवस्यायत्त्वादन्यविषयक्कथ यापिसतीस्थितिर्भज्यतेतस्माद्भयंयुक्तमेवेतिभावः ॥ ३१ ॥

**ममाशयःस्वप्नदशाश्रयापिवा नलभ्रमलङ्घ्येतर मस्पृशद्यदि ॥ कुतःपुनस्तत्रसमस्तसाक्षिणो निजैवबुद्धिर्विबुधैर्नपृच्छ्यते ॥ ३२ ॥**

ममेति । वाशब्दोयदीत्यस्यानन्तरंसम्भावनार्थोद्रष्टव्यः । ममाशयोचित्त ग्रायःस्वप्नदशायाःस्वप्नावस्थायाआश्रयापिवशेनेत्यर्थः । भ्रान्तेवाज्ञातत्क तोमोहस्तेनापिइतिवा नलम्बलङ्घ्यइतरयदिवा अस्पृशत् । तर्हिवि बुधैरिन्द्रादिभि.पण्डितैश्चतत्रतस्मिन्विषयेसमस्तसाक्षिणीसमस्तलोकवृत्त

साक्षात्कारिणीनिजाएवबुद्धिःकुतःपुनर्नपृच्छ्यते । स्वप्नदशायामपिनलादन्यंनचिन्तयामीतिसर्वज्ञत्वाद्देवा अपिजानन्तीतिभावः ॥ ३२ ॥

**अपिस्वमस्वप्नमसूषुपन्नमी परस्यदाराननवैतु**
**मेवमाम् ॥ स्वयन्दुरध्वार्णवनाविकाःकथं स्पृश**
**न्तिविज्ञायहृदापितादृशीम् ॥ ३३ ॥**

निजैवबुद्धिःपृच्छ्यतामितिपूर्वमुक्तमिदानींस्वयमेवाह । अपीति अमीदेवाःपरस्यनलस्यदारान् स्त्रियमनवैतुमेवाज्ञातुमेवअस्वप्नमपिनिद्रारहितमपिस्वमात्मानमसूषुपन्निद्रापयन्तिस्म । देवास्त्वस्वप्नाः । अपिः सम्भावनायाम् । एतदर्थमेवास्वप्नं स्वमसूषुपन्नित्यहंसंभावयामीत्यर्थः । अस्मिन्नर्थेगूढोपहासमन्यथानुपपत्तिंप्रमाणयति । स्वयमात्मनैवदुष्टोऽध्वादुरध्वःपरदारवाञ्छारूपःअमार्गःसएवार्णवस्तमुत्तारयितुंनाविकाः कर्णधारादुराचारप्रवृत्तजननिवारकाएव । एतादृशींपरस्त्रियंविज्ञायविशेषेणज्ञात्वाहृदापिकथंस्पृशन्तुमनसापिपरस्त्रियंकथमिच्छन्तुअपि सदाचाराणाउक्तात्वैतत्कर्तुमनुचितमित्यर्थः । स्वप्नवशादेवाहन्तैर्मनसिअबुद्धिपूर्वंकृतेतितेषांनदोषः । अन्यथायेअन्यानुपदिशन्तितेस्वयंकथंपरदारान्वाञ्छन्तीतिभावः । एवंविधाअपिपरदारानभिलष्यन्तीतिउपहासः । समुद्रकर्णधारत्वेनतेस्पर्शनयोग्या अपिनभवन्तीतिसूचितम् । अध्वोदुरध्वोविपथइत्यमरः । असूषुपत्स्वपन्तात्स्वपे स्वापेश्चङीतिसम्प्रसारणम् । दुरध्वउपसर्गादध्वनइत्यच् । नाविकाःतरतीत्यर्थेनौद्व्यचष्ठन्नितिठन् ॥ ३३ ॥

**अनुग्रहःकेवलएषमादृशे मनुष्यजन्मन्यपियन्म**
**नोजने ॥ सचेद्विधेयस्तदमीतमेवमे प्रसद्यभिक्षां**
**वितरीतुमीशताम् ॥ ३४ ॥**

अनुग्रहइति । मादृशेमनुष्यजन्मन्यपिमल्लक्षणजनेयत्तेषांमनोऽनुरक्तमित्यर्थोदेवकेवलन्तेषामनुग्रहः कृपानतुतत्वतोऽनुरक्तामममायोग्यत्वात्सोनुग्रहश्चेद्यदिविधेयः कर्तव्यस्तर्हिअमीदेवाःप्रसद्यप्रसन्नीभूयमेमह्यन्तमेवनलमेवभिक्षांवितरीतुन्दातुंईशतांसमर्थाभवन्तु अहन्तानेवमनसायाचे । तैःप्रसन्नीभूयनलएवदातव्योनत्वन्योऽभिलाषः। मनुष्याञ्जन्मयस्येतिबहुव्रीहिः । अन्वादेशाम्नतुष्योःसमादेशः । वितरीतुंवृतोवेतिइटोदीर्घः ॥३४॥

अपि द्रढीयः शृणु मे प्रतिश्रुतं सपीडयेत्पाणिमिमं नचेन्नृपः ॥ हुताशनोद्बन्धनवारिकारितां निजायुषस्तत्करवै स्ववैरिताम् ॥ ३५ ॥

नलावरणे स्वप्रतिज्ञामाह । अपीति अपिरन्यश्चेत्यर्थे । त्वं द्रढीयो दृढतरं शीनाप्यनिराकार्यं मम प्रतिश्रुतं प्रतिज्ञातमपि शृणु । तदेवाह यन्नलो नृपः इमं पाणिं अन्नापीडयेत् मदीयपाणिग्रहणं न कुर्यात् तर्हि हुताशनेन उद्बन्धनेन वारिणा च प्रयोज्येन कारितां विधायितां निजायुषः स्वजीवितस्य स्वेनात्मना एव वैरितां शत्रुतां करवै न मा दृष्टवशाद्देवानुरोधाद्वा चेन्मां नलो नाङ्गीकुर्यात् तर्हि वह्न्यादिभिरन्यतमोपायेन स्वजीवितं त्यक्ष्यामि अन्यं कञ्चन न वृणे इति । पूर्वनिपातानित्यत्वं पूर्वोक्तं ज्ञातव्यम् । वारितामिति पाठे निषिद्धम् । अग्न्यादिभिर्मरणं निषिद्धं ॥ ३५ ॥

निषिद्धमप्याचरणीयमापदि क्रिया सती नावति यत्र सर्वथा ॥ घनाम्बुना राजपथेऽतिपिच्छिले क्वचिद्बुधैरप्यपथेन गम्यते ॥ ३६

आत्मघातोऽनुचित इत्यत आह । निषिद्धमिति । यत्र यस्यामापदि सती श्रुत्याद्यविरोधिनी क्रिया सर्वथा केनापि प्रकारेणात्मानं नावति न रक्षति । तस्यामापदि तस्यां निषिद्धमपि कर्माचरणीयमेवेति भावः । तदेवार्थान्तरन्यासेनाह । हि यस्मात् किञ्च घनाम्बुना सान्द्रजलेन मेघजलेन वा राजपथे राजमार्गे पिच्छिले पङ्किले सति बुधैरपि पण्डितैरपि क्वचित् किञ्चिद् दुष्टरूपपथेन कापथेन गम्यते ऋजुमार्गस्य पङ्किलत्वाद्गत्यन्तराभावादमार्गगामित्वेऽपि न दोष इत्यर्थः । पिच्छिलेति पिच्छादित्वादिलच् । अपथेन पथो विज्ञायेति समासान्तः ॥ ३६ ॥

स्त्रियामया त्वामिषुते पुशक्यते न जातु सम्यग्वितरीतुमुत्तरम् ॥ तदत्र मद्वापिन सूत्रपद्धती प्रबन्धतो स्तु प्रतिबन्धतानते ॥ ३७ ॥

श्लोकं निगमयन्ती द्रुतं प्रार्थयति । स्त्रिया मया त्वामिषु अमरिष्टतेषु देवेषु सम्यक् सन्तोषकारि उत्तरं जातु कदाचिदपि वितरीतुं दातुं न शक्यते यस्माद् अत्रा

स्यांममभाषितमेवसूत्रन्तस्यपद्धतीरचनातस्यांविषयेतेतव प्रबन्धताप्रबन्ध कारीत्वं भाष्यकारित्वंवार्त्तिककारित्वंवास्तु । प्रतिबन्धृतातुदूषकत्वन्तु मास्तु । मूत्रप्रायंमद्वचनंस्वकल्पितैर्विवरणपदैः स्वोपस्कारकृत्वादेया त्वयाबोधनीयाः । नतुमद्वचनेदूषणङ्कर्तव्यम् । यथाभाष्यकर्तासूत्रंसमर्थ यतेनतुदूषयते । उभयत्रापितृजन्ताह्णन्धेस्तल् । उपसर्गवशादर्थभेदः ३७

निरस्यदूतःस्मतथाविसर्जितःप्रियोक्तिरप्याहकटु-

त्वमक्षरम् ॥ कुतूहलेनेवमुहुःकुहूरवं विडम्बयाडि

म्भेनपिकःप्रकोपितः ॥ ३८ ॥

निरस्येति । तथापूर्वोक्तप्रकारेणनिरस्यनिराकृत्यप्रियोक्तिरपिमधुरव चनोपिविसर्जित प्रेषितः कटुत्वंसन्तापकरमक्षरंवक्ष्यमाणप्रकारेणाहस्म वदतिस्मकइव । डिम्भेनबालकेनमुहुर्मुहुःपुन.पुनःकुतूहलेनकौतुकेनकु हूरितिस्वंशब्द विडम्ब्यअनुकृत्यप्रकर्षेणकोपितोमधुरवचनोपिकइव । त थातेनप्रकारेणप्रस्थापितोयथाप्रियवचनोपिपरुषवचनंब्रूतेस्मअवज्ञयाप्र स्थापितइत्यर्थः। इतिवायोजना । तथेतिवापाठः बालेनविडम्बितःपिकः कुपितःसन्परुषंरटतीतिजातिः । सर्जसर्जनइत्यतःक्त.सचउपसर्गवशात्प्रे षणार्थः ॥ ३८ ॥

अहोमनस्त्वामनुतेपितन्वते त्वमप्यमीभ्योविमु

खीतिकौतुकम् ॥ क्वानिधिर्निर्धनमेतिकिन्त्वसं

सत्राक्कपाठङ्घटयन्निरस्यति ॥ ३९ ॥

अहोइति । हेभैमिअत्युत्तमास्तेपिदेवाअपि त्वामनुमनस्तन्वतेमानुषी त्वाअभिलष्यन्तिअहोआश्चर्यंमानुषीअतिहीनात्वमप्युत्तमेभ्योऽमीभ्यो देवेभ्योविमुखीपराङ्मुखीतिच आश्चर्यंअहोकौतुकमहदाश्चर्यमितिचोत्र यत्रयोजनीयम्। उत्तमोहीनामभिलष्यतीतिहीनातत्रनानुरज्यतेइतियुक्तं उत्तमेकामयमानेपिहीनातंनकामयतेतिकुत्रचिन्नदृष्टं । इतिमहदाश्चर्यम्। उत्तमायहिसर्वेपिस्पृहयन्तीतिभावः । एतदेवपरुषवचनम् । दृष्टान्तमाह निधिर्महापद्मादिर्निर्धनंदरिद्रं.क्वाकुतोपिदेवादायाति । किन्त्वन्यच्चस दरिद्रः प्रतिषेधकत्वाद्वाक्कपट्कपाटङ्घटयन्नत्समीपेत्वयावायन्तव्यमिति निषेधवचनंब्रुवंस्तंनिधिंनिराकरोति । तादृगेतदित्यर्थः । निधिर्निर्धनमे

लिसवधाक्कपाटक्कुट्टयन्संनिरस्यतीतिक्कवाकुत्रवाद्दृष्टमित्यर्थोद्पितुकुत्रचि क्षेतिवा । सवाकूकवाटमितिपाठः । निर्धनस्यनिधिनिराकरणंयथानुचि तंतथादिग्गीशानाम्त्वय्यनुरागोनुचितः कृतेप्यनुरागेत्वन्तत्रनानुरज्यसेइति महदनुचितमितिभावः ॥ ३९ ॥

सहाखिलस्त्रीषु वहेवहेलया महेन्द्रराग्राद्गुरुमाद रन्त्वयि ॥ त्वमीदृगिन्द्रे यसिसंमुखेपित म्यराङ्मुखीचन्द्रमुखीन्यवीवृत: ॥ ४० ॥

सहेति । हेचन्द्रमुखि महेन्द्रस्त्वय्यनुरागाद्धेतोरखिलस्त्रीषुइन्द्राणी प्रभृतिषुअवहेलयात्ववज्ञयासहत्वयियद्गुरुमादरंमानंवहेधारयेइन्द्रस्त्व य्यनुरागत्वादन्यासुवाननुरागास्त्वदन्याकापिधन्यानास्तीतित्वामेवाहंमन्ये इतिभावः । ईदृशिइन्द्रस्वाराज्यप्राप्तिलक्षणेसंमुखेपित्वामनुस्वयमागच्छ त्यपिश्रेयसिकल्याणे विषयेपराङ्मुखीतदनङ्गीकुर्वाणात्वन्तस्मादरंन्यवी वृतः ॥ व्यनाशयइत्यर्थः । त्वत्सदृशीकापिदुर्मतिर्नास्तीत्यर्थः । न्यवीवृ तःण्यन्ताल्लुङिचङ् ॥ ४० ॥

दिवौकसङ्कामयतेनमानवी नवीनमश्राविवान नादिदम् ॥ कथंनवादुर्ग्रहदोषएषते हितेनसम्यग्गुरुणापिशाम्यते ॥ ४१ ॥

दिवौकसमिति मानवीदिवौकसमपिमकामयतेइतिइदंनवीनंअपूर्वं त्वाननान्मुखाद्अश्राविश्रुतम् । उत्तमस्यवस्तुनोनभिलाषाच्चित्रमित्यर्थः एषमेदुर्ग्रहदोषोदुष्टग्रहलक्षणोदोषः सम्यगतितराहितेनाप्तेनगुरुणापित्रा पिकथंवानशाम्यतेनापनीयतेअग्रितुंअपनेतुमर्हः । अपत्यहितमिच्छता पित्राहिअपत्यग्रहोदुष्ट:केनाप्युपायेननिराकर्तव्य:तवतुनेतिइदञ्चापिचि त्रमित्यर्थः । अथदुष्टग्रहाःशनैश्चरादयस्तज्जनितोदोषःपीडासन्यक्हिते नकेन्द्रस्थानस्थितत्वादनुकूलतरेणगुरुणाबृहस्पतिनानीयतेचित्रम् । किं कुर्वन्तिग्रहाःसर्वेयदिकेन्द्रेबृहस्पतिरितिज्योर्विदः । सर्वथाआग्रहंपरित्य ज्यइन्द्रादिवन्यतमंवृणुष्वेतिभावः । अथचत्वद्वरणंवन्यीदेवानामाग्रहोम न्त्रिणाबृहस्पतिनाकथंनशाम्यतेइतिचित्रम् । दिवौकसमितिपृषोदरादिः अद्भ्रप्रवेशपाक्षिकौ । नवीनंनवस्यनूआप्तनप्तनघनाश्चेतिसः नूवादेशश्च ४१

**अनुग्रहादेवदिवौकसां नरो निरस्य मानुष्यकमेति दिव्यताम्॥ अयोविकारेस्वरितत्वमिष्यते कुतोयसां सिद्धरसस्पृशामपि ॥ ४२**

अनुग्रहादिति । नरःदिवौकसामनुग्रहादेवअनुग्रहमात्रेणमानुष्यकंमनुष्यत्वंनिरस्यपरित्यज्य दिव्यंदेवत्वंएतिप्राप्नोति तत्रदृष्टान्तमाह ।-सिद्धरसस्पृशामपिऔषधसाधितपारदस्पृशांसुवर्णीभूतानामपिअयसांलोहानांयोविकारस्तद्भूतैःपदार्थैमध्येस्वरितत्वंमालिन्यत्वंकुतोहेतोरिष्यते अपितुनकुतोहेतोरिष्यतेअपितुनकुतोपि । सिद्धरसस्पृष्टानसुवर्णभूतानिलोहानिअयोविकारमध्येकेननिक्षिप्यन्ते । एतानिलोहजन्यानीतिलोहजन्यजातौनिकेनक्रियन्ते किंतुसुवर्णमध्येइत्यर्थः । अयोविकारेस्वरितत्वमितिपाठेऽधिकारप्रस्तावेस्वरितेनाधिकारइति पाणिनिर्वचनात्स्वरितत्वाभावेकुतस्त्योधिकारइत्यर्थः । यथासिद्धरसस्पृष्टंलोहंसुवर्णत्वेनवर्ण्यतेनतुलोहत्वेन । तथादेवानुग्रहात्त्वमपिदेव्येवमतुमानुषीतिदेवान्वृणीष्वेतिभावः । स्वरितइतिस्वरआक्षेपइतिचौरादिकात्क्तान्निष्ठा । रसशब्दोविप्रप्रकाशेपारदवाचीउक्तः । स्पृशांस्पृशोनुदकेइतिक्विन् ॥ अनेनमानुष्यकलाञ्छनेननइत्यर्देवत्तरदत्तम् ॥ ४२

**हरिं परित्यज्य नलाभिलाषुका नलं जसे वा विदुषि ब्रुवा कथम्॥ उपेक्षते क्षोःकरभाच्छमीरसादुरुम्वदेस्त्वाङ्करभोरुभोइति ॥ ४३ ॥**

हरिमिति । हेभैमित्वंहरिमिन्द्रंपरित्यज्यनलनामकंराजानंअथचनलाख्यंतृणविशेषञ्चाभिलाषुकाऽभिलाषिणीसतीतथाविदुषिब्रुवाआत्मानंविदुषींपण्डितांब्रुवाणासतीकथंवानलज्जसेअपितुत्वयालज्जितव्यम् । महेन्द्रन्त्यक्त्वातृणतुल्यस्वरंप्रियंवाञ्छसिअहंज्ञात्रीतिचब्रूषे एतन्महच्चित्रम् । त्वादृशीदुर्बुद्धिर्निर्लज्जाचक्वापिनास्तीत्यर्थः । भोकरभोरूकभस्यकनिष्ठासमिबन्धमध्यदेशवदनुवृत्तौकोमलावुरूयस्याएवंविधेभैमिइति पूर्वोक्तात्कारणादहन्त्वामुपेक्षितेवोरत्य क्त्वादुरसेवोः शमीरसात्कटुरसशमीकणकलस्यटात्करभादुष्ट्रादपितद्वत्कष्टांवदेज्ञानपूर्वंकथयामि । उष्ट्रस्यापि

कदाचिन्नारतम्यज्ञानंभविष्यतीत्यपिसंभाव्यनेपितवनतु कदाचित्तस्मात्स्मा दपित्वमूर्खतरेत्यर्थः । इन्दुभ्योयावदन्तरन्तावदिन्द्रनलयोरितिज्ञ नो ह्वीतिभावः । अयमेवात्राभिप्रायोज्ञातव्यः । ननु करभादुरु करभोरुरि तिअस्मिन्नर्थेह्रस्वस्यगुणइतिगुणप्राप्तेः करभोरोइतिस्यात् । इतिशब्दस्या न्वयापत्तेश्च । तस्मात्पूर्वार्धार्थपरामर्शीइतिशब्दोहेत्वर्थोज्ञातव्यः । स ञ्ज्ञापूर्वकोविधिरनित्यइतिह्रस्वसञ्ज्ञामाश्रित्यप्राप्तिकगुणाभावसमाधान ङ्कृत्वाकरभोरुइतिसम्बुद्ध्याख्यानपूर्वङ्कृतयासीतिवा । मनुष्यजातेर्विवक्षा विवक्षेइतिवामनाचार्यवचनात्करभादुरुः करभोरुरितिमनुष्यजातिविव क्षायामूङ्नस्यनदीत्वादम्बार्थेतिह्रस्वे ह्रस्वविधिसामर्थ्याद्गुणाभावेपसाधू क्तस्यकरभोरुपदस्यपूर्वव्याख्यानेयोजनाकार्याइतिवा । कंसुखंरातिददा तिइतिकरा कराभाययोस्तौकरभौदर्शनमात्रेणयूनोमदनाह्लैतानन्दोदधी नितञ्जयन्तावूरुयस्याइतिव्युत्पत्याऽत्रयेतावन्तंकालं प्रयुज्यमानङ्करभोरु इतिप्रातिपदिकन्त्वामिदानीङ्करभादुराद्रुकम्बदेदितिवा नलाभिलाषुके तिलषपतेत्युकञिगम्यादीनामुपसङ्ख्यानमितिसमासः । विदुषीतिङीपः पचाद्यजन्तेभ्रुवशब्दपरेचरूपेतिह्रस्वः । पचादिषुप्रुवेतिपाठसामर्थ्यादेव चवृद्धिगुणौनभवतः । करभादुरुरितियोगविभागात्समासः । वदेइतिम्रा सनोपेतिज्ञानेतङ् ॥ ५३ ॥

**विहायहा सर्वसुपर्वनायक न्त्वयाधृतः किंनरसाधि मभ्रमः ॥ मुखंविमुच्यश्वसितस्यधारया वृथैवनासा पथधावनश्रमः ॥ ५४ ॥**

विहायेति । हेभैमित्वयासर्वेसुपर्वाणोदेवास्तेषांनायकंस्वामिनमिन्द्रं विहायनरेमनुष्येसाधिमभ्रमः साधुत्वविषयः साधुत्वलक्षणोवाभ्रमः अथच नलसाधिमभ्रमः किन्धृतःहाकष्टमनुचितमेतत् । उक्तमर्थंलोकोक्त्याआह श्वसितस्यश्वासानिलस्यधारयापरंपरयामुखंविमुच्यमुखमार्गंविहायसुखरूपा मायासगमनोपायमूलं मुखस्पिधायनासापथेननासिकामार्गेणयद्धावनंशी घ्रगमनन्तज्जनितःश्रमःक्लेशोवृथैवयथाभूतस्तथात्वयेत्यर्थः । अथचेन्द्रंवि हायतदपेक्षयाहीनस्यकिंनरस्यदेवयोनिविशेषस्येन्द्रापेक्षयासाधिमभ्रमो वृथा । अथचरलयोरभेदात्कुत्सितोनरोमनुष्योनलस्तस्मिन्निति । तथा

धृतइत्यपिपाठः । तस्मादेनंत्वमंपरित्यज्यमहेन्द्रोवरणीयइतिभावः । साधुशब्दःपृष्ठादि. ॥ ४४ ॥

तपोनलेजुह्वतिसूरयस्तनूर्दिवेफलायान्यजनुर्भविष्णवे ॥ करेपुनःकर्षतिसैवविह्वला बलादिवत्वामलसेनबालिशे ॥ ४५ ॥

तपोनलेइति । सूरयोबुधा अन्यद्द्वितीयजनुर्जन्मतत्रभविष्णवेभाविनेदिवेस्वर्गलक्षणायफलाय तपोनलेचान्द्रायणादितपोरूपेऽग्नौतनूःशरीराणिजुह्वतिप्रक्षिपन्ति । यदर्थंशरीरपीडामपिकृत्वातपोर्जयन्ति । सैवेन्द्रादिस्वरूपाद्यौरेवपुनस्त्वदनुरागवशाद्विह्वलासतीअस्मिन्नेवजन्मनित्वां बलादिवबलात्कारेणकरेधृत्वाआकर्षति । हेबालिशेऽज्ञेत्वंपुनर्नलनामाभिमुखीभवसिचित्रमित्यर्थः । कर्षतीवेतिवा । जन्मान्तरभाविफलार्थंबुधाःशरीरमपित्यजन्तिनचफलंप्रत्युतस्वः प्राप्त्यर्थंस्वयमेवसाभिलाषसदस्मिन्नेवजन्मन्येतच्छरीरसहितामेवत्वांस्वसमीपंनेतुमिच्छतित्वन्तुतत्संमुखीनभवसीतिमूर्खतराबालिशइत्यनेनसूचितम् । अयहन्त्यस्काइन्द्रादिश्रन्यतरंवृणीष्वेतिभावः । अज्ञेचबालिशोइत्यमरः । जुह्वतिअदभ्यस्तादितिभेरत् । हुश्नुवोरितियणादेशः । भुवश्चेतीष्णुचश्छन्दस्येवविधानमितिवृत्तिकारादिवचनाद्भाषायांभविष्णवइतिचिन्त्यम् । यद्वाभूष्णुर्भविष्णुर्भविता । जगत्प्रभोरप्यसहिष्णुवैष्णवमित्यादिप्रामाणिकप्रायोगदर्शनाच्चेति । भुवश्चेतिकाराद्भुवश्छन्दसियेतिचसंबध्यचकारमाहभाषायामपिक्वचिद्भवतीति व्याख्यानात्समर्थनीयकृत्यन्तरस्यागवेषणीयम् ॥ ४५ ॥

यदिस्वमुद्बन्धुमनाविनानलं भवेर्भवन्तीहरिरन्तरिक्षगाम् ॥ दिविस्थितानांप्रथितःपतिस्ततो हरिष्यतिन्याय्यमुपेक्षतेहिकः ॥ ४६ ॥

हुताशनेवाम्भनेत्यादियदुक्तंतत्श्लोकत्रयेणदूषयति । यदीति । त्वंनलंविनायदिस्वमात्मानंउद्बन्धुमनाभवेःतर्हिहरिरिन्द्रोऽन्तरिक्षगामन्तरिक्षगतान्त्वान्ततः अन्तरिक्षाद्धरिष्यतिनेष्यतियस्माद्दिविस्थितानांअन्तरिक्षस्थानांपतिःस्वामीप्रथितःख्यातः । हियुक्तमेनत्किंन्यायादनपेतंस्वीयंभाग

नुपेक्षतेनाङ्गीकरोति । अपितुसर्वोऽप्यङ्गीकरोति । ततइतितत्त्वार्थेवा । न्यायंधर्मंपथ्यर्थंयत् ॥ ४६ ॥

निवेक्ष्यसेयद्यनलेनलोज्झिता सुरेतदस्मिन्महती दयाधृता ॥ चिरादनेनार्थितयातिदुर्लभं स्वयन्त्वयैवाङ्गयदङ्गमर्प्यते ॥ ४७ ॥

निवेक्ष्यसइति । नलेनोज्झिताअपरिणीतात्वंयदिअनलेऽग्नौनिवेक्ष्यसे आत्मानङ्क्षेप्स्यसितर्हिअस्मिन्सुरेवन्हौत्वयामहतीदयाकृता । यद्य स्मादृहेअङ्गभैमि अनेनाग्निनाचिराद्बहुकालप्रार्थनयाकृत्वादुर्लभमङ्गंत्वयैव स्वयमर्प्यतेदीयते । यच्चिरकालयाचितमपिदुष्प्रापन्तद्दात्रास्वयमेवयदि दीयतेतत्रदयैवनिमित्तमितिज्ञायते । स्वयमेवस्वाङ्गदानात्त्वयागुर्वीदया कृतातर्हिवन्हिप्रवेशोपित्वयाकर्तुंनशक्यतइत्यर्थः । कस्मिन्कृतेकिंभविष्य सीतिनजानामीतिउपहासोऽङ्गेतिसंबुद्ध्यासूचितः ॥ ४७ ॥

जितञ्जितन्तत्खलुपाशपाणिना विनानलम्वारि यदिप्रवेक्ष्यसि ॥ तदात्वदाख्यान्वहिरप्यसूनयं पयःपतिर्वक्ष्यसिवक्ष्यतेतराम् ॥ ४८ ॥

जितमिति । हेभैमियदित्वंनलम्विनापूर्वोक्तदोषाद्नलमपिविना वारिप्रवेक्ष्यसिवारिप्रवेशमनन्यंसरणोपायङ्गीकरिष्यसितत् तर्हिखलुनि श्चितंपाशपाणिनावरुणेनजितंजितंअतितराञ्जितमित्यर्थः । आम्रेडित क्तिः । अतिदुर्लभस्यचिरेप्सितस्यस्वतएवागमनात्सर्वोत्कर्षेणाकृतमित्य र्थः । यतोसौपयःपतिस्तदात्वयिवारिप्रविष्टायांसत्यांत्वदाख्यान्त्वन्नाम काञ्जीयानसून्प्राणान्वहिरपिवक्षसिहृदयेइत्यर्थः । वक्ष्यतेतरान्धारयिष्य तितराम् । इदानीमन्तःकरणेतावच्चिरकालंवहत्येवतदानीमालिङ्गनवशा द्वहिरपिवक्ष्यतेतराम् । अतस्तेनजितमित्यर्थः । अत्रपयःपतित्वमेवहेतुः अयमप्युपायःकर्तुंनशक्यतइत्यर्थः । वक्षसिवक्ष्यतेतरामित्यन्वयः । स तीवह्निर्योगाभावात्पञ्चमी । अथववक्षोपेक्षमेववह्निः । वक्ष्यतेवहेःस्व रितेत्वात्तङ्स्येहोढइतिहस्यढत्वेषढोःकःसीतिकत्वे आदेशप्रत्यययो रितिषत्वम् ॥ ४८ ॥

करिष्यसे यद्यत एव दूषणा दुपायमन्यं विदुषीत्वमृत्यवे प्रियातिथिः स्वेन गता गृहान्कथं न धर्मराजं चरितार्थयिष्यसि ॥ ४९ ॥

मरणोपायान्तरञ्च दूषयति । करिष्यस इति । हे भैमि त्वं अत एव दूषणादुक्तदूषणात् इन्द्राद्यधीनता भविष्यामीति अनुतापात् दूषणाद्धेतोः अन्योपायस्फुरणे प्रतिभानवती त्वं मृत्यवे अन्यमुपायं कूपपूरणादिलक्षणं यदि चेत्करिष्यसे तर्हि स्वेन स्वयमेव गृहान् प्रत्यागता प्रिया प्राणेश्वरी अतिथिरूपा त्वं धर्मराजं यमं कथं न चरितार्थं विध्यसि कृतार्थं न करिष्यसीत्यर्थः । यमगृहे पि गन्तव्यमेव । स्वयं गृहागतायाश्च वरणेन दोषः । तस्मान्मरणोपायान्तरं न विकर्तुं न शक्य इति भावः । विदुषी पूर्वोक्तपक्षे दूषणोपायान्तरं स्फुरति । गृहाः पुंसि च भूम्न्येवेत्यमरः ॥ ४९ ॥

निषेधवेषो विधिरेष तेऽथवा तवैव युक्ता खलु वाचि वक्रता ॥ विजृम्भितं यस्य किल ध्वनेरिदं विदग्धनारीवदनं तदाकरः ॥ ५० ॥

तवाभिप्रायमजानानेनैव मया इन्द्रादीन्वृणुष्वेत्युक्तं त्वया तु नेति वचनभङ्ग्योक्तं । इदानीं त्वदभिप्रायो ज्ञात इत्याह । निषेधेति । अथवा इन्द्रादीन्न वृणे इति एवं ते तव निषेधो वेषो रूपं यस्य एतादृशो विधिरेव न वृणे इति यथाश्रुतार्थग्राहिणा मया पूर्वं न ज्ञातः । इदानीं वृणे इति विधिरेव ज्ञातः । लौकिकवचनरीतिरप्येवं निषेधे विधिप्रतीति कथमित्यत आह । खलु यस्मात्तवैव वाचि वक्रता युक्ता । वक्रोक्तिस्त्वद्वचनविषये एव युक्तेत्यर्थः । एतदपि कुत इत्याशङ्क्याह । खलु यस्माद्यस्य ध्वनेर्ध्वनिसञ्ज्ञकस्योत्तमकाव्यस्येदं निषेधे विधिरूपं खलु प्रसिद्धं विजृम्भितं विलसितं तस्याकरः खनिरुत्पत्तिस्थानं विदग्धनारीवदनं चतुरवनितामुखं वक्रोक्त्यादिध्वनिविलसितं च विदग्धानामेव जानातीति नान्यानां त्वादृशी वक्रोक्त्यादि वक्तुं चतुरा नास्तीत्यर्थः । इदमुत्तमम् अतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथित इति काव्यप्रकाशः । किं च पठ्यमानाद् लिष्टात्स्वरविशेषतो भवति यत्रार्थान्तरप्रतीतिर्या सौकाकुवक्रोक्तिरिति । तथा गाथा प्रोषितपतिका सखीं प्रति मातुलिनगतास्मि न पुनस्तस्याधम स्यान्तिकमिति । अत्र स्याननिषेधे स्यानविधिः प्रियोपसरणविधौ तन्निषेध

वसौन्दर्यमिन्द्रं द्रष्टुमशक्यतेइति सहस्रनेत्रत्वादिन्द्रएवतवसौन्दर्यंदर्शनयोग्य इतिममाप्ययमेवआग्रयइतिभावः तवमतोममतइत्यस्यवर्तमानइति कर्तरिषष्ठी । सहस्रनेत्रात्पृथग्विनेतिपञ्चमी ॥ ५२ ॥

प्रसीदतस्मैदमयन्तिसन्तत न्तदङ्गसङ्गप्रभवैर्जग त्प्रभुः पुलोमजालोचनतीक्ष्णकण्टकै स्तनूं घनामा तनुतांसकण्टकैः ॥ ५३ ॥

प्रसीदेति । हेदमयन्तितस्मैइन्द्रायप्रसीदत्वंप्रसन्नाभवतंवृणुइत्यर्थः । अनन्तरंसजगत्प्रभुरिन्द्रस्त्वदङ्गसङ्गात्प्रभवोयेषान्तैःकण्टकरोमाञ्चैःकृत्वात नुंशरीरंसन्ततंसर्वदाघनामविरलांपरिपूर्णांतनुताम् । किंभूतैःपुलोमजा याइन्द्राण्या लोचनयोरतितरांसोढुमशक्यत्वात्तीक्ष्णकण्टकैः असह्यकण्टक रूपैःसूच्यग्रतुल्यैःक्षुद्रशत्रुरूपैर्वा । त्वयावृत्तेसतीन्द्राणीपरित्यागेनत्वय्ये वानुरक्तोभविष्यतीतिभावः । सपत्नीसुखात्भर्तुरङ्गगतान्क्रीडतोदृष्ट्वाऽन्य स्यानेत्रयोःकण्टकविद्धवेदनाभवतीत्युक्तिः । सूच्यग्रेक्षुद्रशत्रौचरोमहर्षेचक ण्टकइत्यमरः । तस्मैक्रियायामभिप्रेतिसम्प्रदानम् ॥ ५३ ॥

अबोधितत्वन्दहनेनुरज्यसे स्वयङ्खलुक्षत्रियगो त्रजन्मनः ॥ विनातमोजस्विनमन्यतःकथं मनो रथस्तेचलतेविलासिनि ॥ ५४ ॥

वह्निवरणेकारणमाह । अबोधीति । तंस्वयंअप्रवर्तितैवदहनेअग्नौ अनुरज्यसेअनुरक्तासीतिमयातत्वंपरमार्थोऽबोधिअज्ञाति । हेविलासि निखलुयेस्मात्क्षत्रियाणांगोत्रेवंशे जन्मयस्यास्तस्यास्तेतवमनोरथस्तमोज स्विनंवह्निंविनापरिहृत्यअन्यतः अन्यस्मिन्पुरुषेकथञ्चलतेअपितुअयो ग्यत्वान्नयात्येव । तेजोहितेजस्येवानुरज्यते । त्वन्तेजस्विनीवह्निरपिते जस्वीतिवह्नावनुरक्तासीतियुक्तमितिमयाज्ञातमितिभावः । अन्यस्यापि क्षत्रियकुलोत्पन्नस्यमनइवशीघ्रगामीरथस्तेजस्विनमन्यंक्षत्रियंविहायब्रा ह्मणादिपुनचलते । अनुरज्यतेश्यनोङित्वादपिअनिदितामितिनलोपः । अन्यतःसप्तम्यर्थेतसिः ॥ ५४ ॥

त्वयैकसत्यातनुतापशङ्कया ततोनिवर्त्यंनमनःक

थ्वच्चन॥ हिमोपमातस्यपरीक्षणक्षणेसतीपुमृत्तिः शतशोनिरूपिता ॥ ५५ ॥

त्वयेति। त्वादृगन्यपतिव्रताभावात्एकाचासौसतीचतयामुख्यपतिव्रतयात्वयातनोःशरीरस्यतापाद्दाहाद्देहदाहमयङ्करिष्यतीतिशङ्कयाभियास्तापभियाच ततस्तस्मादग्नेःसकाशात्कथञ्चनकेनापिप्रकारेणमनोनिवर्त्यंपरावर्तनीयं यस्मात्परीक्षणक्षणेसाधुत्वासाधुत्वपरीक्षासमयेकोणांसहगमनादिसमयेसतीदिव्यपतिव्रतापरीक्षासमयेतस्यअग्नेर्वृत्तिः स्थितिः शतशोरामायणादौहिमोपमातुषारसदृशीनिरूपिताचदृष्टा तत्वङ्गादिस्वतीधलगःसतीनितिं ॥ ५५ ॥

सधर्मराजःखलुधर्मशीलया त्वयास्तिचिन्नातिथितामवापितः॥ ममापिसाधुः प्रतिभात्यसङ्क्रमस्त्वकास्तियोग्येनहियोग्यसंगमः ॥ ५६ ॥

यमवरणेकारणमाह। सधर्मेति। खलुनिश्चयेसम्भावनायांस्वा। सप्रसिद्धोधर्मराजोयमस्त्वयाचिन्नस्यातिथितान्नोचरत्वंसमवापितः प्रापितोस्तितपोधर्मप्रधानंशीलयस्याधर्मशीलयत्यम्यस्यतिवास्वंभूतया धर्मशीलोहिधर्मशीलेएवानुरज्यतइति। अयङ्क्रमद्वयंपरिपाटीममापिसाधु.समीचीनाप्रतिभाति। एतन्ममापिसम्मतं। हियस्मात्कुलशील दिभिर्योग्यनतत्तनेनसहयोग्यस्यैवसङ्गमश्चकास्तिनत्वयोग्येनयोग्यस्यतस्माद्धर्मराजेनधर्मशीलया.सबन्धोयुक्तइतिभावः। ५६ ॥

अजातविच्छेदलवैःस्मरोत्सवै रगस्त्यभासादिशि निर्मलत्विषि॥ धृतात्रधिङ्कालममृत्युशङ्किता निमेषयन्तेननयस्वकेलिभिः ॥ ५७ ॥

अजातेति। हेभैमि त्व अगस्त्यभामाअगस्त्यनक्षत्रदीप्त्यानिर्मलत्विषि उज्ज्वलकान्तौ सम्भोगयोग्यायान्दक्षिणस्यान्दिशि तेनयमेनसहनजातो विच्छेदलवोवियोगलेशोयेषुतैःस्मरोद्भवैःकेलिभिः इत्वायमस्यैवपतित्वाद मृत्युशङ्किनीमृत्युभयरहितासतीनिमेषवसंमुखमनुभवेतिभावः। स्मरोत्सवैरितिपाठेस्मरस्योत्सवरूपैःकामसंबन्धिभिरुत्सवैश्चुम्बनादिभिः त्वा

जातोऽविच्छेदलवेऽस्य स्वनादिनिरन्तरैरित्यर्थः । नयस्वेतिजित्वात्कर्तृगे भिप्रायेक्रियाफलेतङ् । नयेतिवा ॥ ५७

शिरीषमृद्वीवरुणाङ्कमीहसे पयःप्रकृत्यामृदुमग्ङ्गमासवम् ॥ विहायसर्वान्वृणुते स्मकिंनसा निशापिशीतांशुमनेनहेतुना ॥ ५८ ॥

वरुणवरणेकारणमाह । शिरीषेति । शिरीषमृद्वीशिरीषपुष्पवत्कोमला त्वं वरुणमीहसेइच्छसिकिमित्यर्थे एवंसंभावयामि । यतः किंभूतं । पयः प्रकृत्याउदकस्वभावेनपयोलक्षणयात्कन्योपादानकारणेनवा मृदुवर्गस्यमृदुवस्तुसङ्घस्यवासवइन्द्रस्वामिनमित्यर्थः । किञ्चित्प्रार्थिवायवस्याप्यशरीरस्य ग्रहणान्नेविशिनानत्वान्मृदुत्वमित्यर्थः । त्वमपिमृद्वीसोपिमृदुरिति उभयोर्योग्यत्वम् । दृष्टान्तेनतदेवोपपादयति । सातिशीताअतिमृद्वीनिशापिअनेनमृदुतरत्वेनैवहेतुनासर्वान्देवान्विहायशीतांशुचन्द्रं वृणुतेस्म अपितुवरं योग्यत्वादित्यर्थः । हेतुनेतिपर्वेनाअस्तृतीयाचेतितृतीया ५८

असेवियस्त्वत्कदिवादिवानिशं श्रियःप्रियेणानणुरामणीयकः ॥ सहामुनातत्रपयःपयोनिधौ क्षीरोदरिक्रीडयथामनोरथम् ॥ ५९ ॥

असेवीति । त्वत्कायौ स्वर्गीयेन श्रियः प्रियेणनारायणेन अनणुमहद्रामणीयकं यस्यएवंभूतोयः क्षीरोदः दिवानिशंरात्रिन्दिवमसेवि । हेकृशोदरित्वंतत्रपयसोदुग्धस्यपयोनिधौतत्पतित्वादमुनासहसाईयथा मनोरथं स्वेच्छयाक्रीडक्रीडाकुरु श्रीसहितोविष्णुर्यथातत्रक्रीडतितथात्वमपिअनेनसहेत्यर्थः । दिवानिशङ्कालाध्वनोरितिद्वितीया । यथामनोरथंयथासादृश्यइतिसमासः ॥ ५९ ॥

इतिस्फुटन्तद्वचसस्तयादरा दसुरस्पृहारोपविडम्बनादपि ॥ कराङ्कसुप्तैककपोलकर्णया श्रुतञ्च तद्भावितमश्रुतञ्चतत् ॥ ६० ॥

इतीति । कराङ्केहस्तक्रोडेसुप्तःस्थितएककपोलकर्णौयस्याएवंविधयातत्तस्यद्भूतस्यइतिपूर्वोक्तंभाषितंश्रुतञ्चइन्द्रियपाटवात् अश्रुतश्रुतमनङ्गीका

षतुर्णामपिदूतत्वाद्यमदूतोचितमेवत्वयाकृतमित्यर्थः । अतिसुन्दरस्यवि शेषतोनलतुल्याकारस्यसौम्याकारस्यमांप्रतिअतिपीडाकारित्वमयुक्तमिति त्वयापीत्यपिनासूचितम् । अन्योपिबौद्धादिरदुष्कृतिनीन्द्रोषलेशरहितां श्रेयोरूपांश्रुतिंवेदंदुष्टवचनैर्दूषयति । प्रयातोयातुमारब्धः प्रशब्दः आदि कर्मणि तत्रैवनिष्ठा ॥ ६२ ॥

त्वदास्यनिर्यन्मदलीकदुर्यशो मषीमयंसल्लिपिरूप भागिव ॥ श्रुतिंममाविश्यभवद्दुरक्षरं सृजत्यदः कीटवदुत्कटारुजः ॥ ६३ ॥

उक्तमेवअर्थंसोपस्करमाह । त्वदास्येति । अदोभवदुरक्षरन्त्वयोक्तं दुष्टमक्षरंमत्श्रुतिमाविश्यकीटवदुत्कटा.दुःसहाः रुजःपीडाः सृजन्ति । किंभूतं । तवास्यान्निर्यच्छन्निर्गच्छन्इन्द्राद्यनुरागरूपंमदलीकदुर्यशोरूपंम दीयमिथ्यापयशोरूपंमषीमयंमषीचक्षुरसत्भवत्अतएवलिपिरूपभागि वलेखनस्वरूपंभजद्विवसतीचासौलिपिश्चतद्रूपभाग्वा । कीटोयथाकर्णंप्र विश्यदुःसहांपीडाङ्करोति । अन्यदप्यक्षरंमषीभाजननिर्यन्मषीलिखितं लिपिरूपंभवति ॥ ६३ ॥

तमालिरूचेथविदर्भजेरिता प्रगाढमौनव्रतयैकया सखी ॥ अपांसमाराधयतीयमन्यया भवन्तमाह स्वरसज्ञयामया ॥ ६४ ॥

तमिति । अथविदर्भजेरिताभैमीप्रेरिताआलिः सखीतंऊचेदूत इ यंसखीभैमीप्रगाढमौनव्रतयादृढतरमौनलक्षणव्रतया एकयास्वरस्वरसज्ञ याजिह्वयाअपांसमाराधयतिभजते । अन्ययामयामद्रूपयास्वरसंज्ञयाजि ह्वयाऽथचस्वरसंज्ञस्यभिलापविषयज्ञानत्यामयाकृत्वाभवन्तमाह । इयं लज्जावशात्स्वाभिप्रायंत्वांसाक्षान्नबोधयति । तस्मादेतत्प्रेरिताहमेवद भिप्रायमेवब्रवीमितमाकर्णयेतिभावः । मयालक्ष्म्यासहवर्तमानस्तत्संबु द्धिःसमअभवन्तंत्रैमीविशेषणंवा । अन्योपिमौनीभूत्वाकाञ्चिद्देवताभा राधयति ॥ ६४ ॥

तमर्चितुंमद्गुणस्वजानुपं स्वयम्बरःसम्भावितापरे

द्यवि ॥ ममासुभिर्गन्तुमनाः पुरःसरैस्तदन्तरायः पुनरेषवासरः ॥ ६५ ॥ तदद्यविश्रम्यदयालुरेधिमे दिनंनिनीषामिभवद्विलोकिनी ॥ नखैःकिलाख्यायिविलिख्यपत्रिणातयैवरूपेणसमःसमत्प्रियः॥६६॥

किमाहेत्याह । तमिति । तदद्येति । मद्वरणलज्जामदीयवरणमधूकमालयाकृत्वा तंनलनामानंनृपंअर्चितुपरेद्यविश्वःस्वयम्बरःसम्यक्भवितासएषवासरःपुनस्तस्यस्वयम्बरस्यअन्तरायोविघ्नरूपःएतावानेवविलम्बोस्ति । किंभूतःपुरःएतद्दिवसात्पूर्वमेवगन्तुकामैर्ममासुभिः सहगन्तुमनाजिगमिषुः।अयन्दिवसःकथंनिर्विघ्नोयास्यतीतिचिन्तयाममप्राणाअतिव्याकुलाःयस्मात्तस्मादद्यविश्रम्यमेममत्वन्दयालुरेधिभव।त्वय्यत्रस्थितेसतिममप्राणाअपिस्थास्यन्तीत्यर्थः। नोचेत्तदेयाह । भवद्विलोकिनीभवन्तमवलोकयन्तीसतीवर्तमानन्दिवसंनिनीषामिवा । अतिवाहयितुमिच्छामि । त्वदवलोकनवशात्प्राणधारणवशात्त्वयाममकृपाकृताभविष्यतीतिभावः । परपुरुषविलोकनेनकथंनातिवृत्यन्तवेत्यतआह । किलयस्मात्पत्रिणाराजहंसेननलिनीदलेनखैर्विलिख्यसमप्रियोनलःतथैवरूपेणसमस्तुल्यस्त्वाद्दृशःसुन्दरःआख्यायिकथितः । तस्मात्त्वनलाकारत्वात्कलवुद्ध्येवचत्वदवलोकनान्ममप्राणधारणम्।त्वद्दर्शनेनप्रातिवृत्यक्षतिर्नास्तीत्यर्थः श्लोकद्वयमेकान्वयि । अर्चितुमौवादिकस्यअर्चतेरूपम् । सद्यःपरुत्परारीतिपरेद्यवीतिसाधुः । पुरःसरैःपुरोग्रतोग्रेसरैःतिष्ठतिः ॥ ६५ ॥ ॥ ६६ ॥

दृशोर्द्वयीतेविधिनास्तिवञ्चिता मुखस्यलक्ष्मीतवयन्नवीक्षते ॥ असावपिश्वस्तदिमांनलानने विलोक्यसाफल्यमुपैतुजन्मनः ॥ ६७ ॥

अवस्थितौतवापिकिञ्चित्कार्यंस्यादित्याह । दृशोरिति । विधिनाब्रह्मणादैवेनवा तवदृशोर्द्वयीनेत्रद्वयीवञ्चितास्तीति । कथंयद्यस्मात्त्वयैवातिसुन्दरस्यलक्ष्मींशोभांनवीक्षते । आत्मनासाक्षादित्यर्थः । आदर्शादौतुप्रतिविम्वस्यैवदर्शनात् । तस्मादसावपिनेत्रद्वयीश्वोनलाननेइमांत्वन्मुखशोभाम्विलोक्यजन्मनः साफल्यकृतार्थत्वमुपैतु । सुन्दरवस्तुदर्शनेन

नेत्रयोः साफल्यं भवति । तस्मादत्रात्र स्थित्वा श्रीनलमुखलक्ष्मीविलोकना न्नेत्रसाफल्यं भविष्यतीत्यन्मुखं नलमुखसदृशमिति भावः । अथवाह । अथवाहमेवेमां नलाननेदृष्ट्वा जन्मसाफल्यं लप्स्ये इति न किं त्वसावपि लप्स्यते इत्यपिशब्दार्थः ॥ ६७

**ममैव पाणीकरणेऽग्निसाक्षिकं प्रसह्य सम्पादितमङ्ग सङ्गतम् ॥ न हा सहाधीति धृतः स्पृहा कथ न्तवार्यपुत्रीयमजर्यमर्जितुम् ॥ ६८ ॥**

कारणान्तरमप्याह । ममेति । अङ्ग दूत ममपाणीकरणे एव विहाय सम यएव अग्निः साक्षी यस्मिन् अग्निसाक्षिकं अग्निसमक्षं सङ्गतं मैत्रं अर्थात् तेन सह त्वया प्रसह्य सम्पादितं अनायासमर्जितं स्यादिति शेषः । अन्यार्थमागतेनापि त्वयात्र स्थितेन प्रासङ्गिकी अग्निसाक्षित्वाद्दृढा नलेन सह मैत्र्यपि सम्पादिता स्यात् तदर्थमप्यत्र स्थातव्यमित्यर्थः । तदीयमैत्र्या मम किम् अयोजनमित्यत आह । हा खेदे । सहाधीति धृतोलक्षणया कुलशीलरूपादिना सदृशस्य तव आर्यपुत्रीयं विशिष्टकुलोत्पन्नवीरसेनसुतसंबन्धी अजर्यं मैत्रं अर्जितुं सम्पादयितुं स्पृहाऽभिलाषः कथं न अभिलाषः कर्तुं युक्तः । सदृशयोः मैत्रं भवति । श्रेष्ठेन सह मैत्री प्रयत्नपूर्वं सम्पादनीयाद्दयन्त्वनायासेन लब्धा परित्यक्तुं न युक्तेति भावः । इति भिन्नवाक्यतयाऽन्वयः । एकवाक्ये तु सङ्गतमैत्रं अजर्यं अविनश्वरमिति । अजर्यविशेषणं सङ्गतशब्दस्येति वा । व्याख्यानान्तरं दुर्योजत्वादुपेक्ष्यम् । पाणीकरणे इति नित्यं हस्ते पाणावुपयमने इति पाणावित्येवंरूपस्य निपातस्य गतिसंज्ञत्वात्समासः । आर्यपुत्रीयम् । वृद्धाच्छः । अजर्यं नञ्पूर्वस्य जीर्यतेः सङ्गते कर्तर्यजर्यं सङ्गतमिति निपातनात्साधुत्वम् ॥ ६८ ॥

**दिगीश्वरार्थं न कथञ्चन त्वया कदर्थनीयास्मि कृतो यमञ्जलिः ॥ प्रसाद्य तां नाथ निगाद्य मीदृश न्दधद्दृशौ वाष्पपरायास्पदे भृशम् ॥ ६९ ॥**

पुनर्वाग्वसरायाह । दिगिति । त्वया असौ इत्यहं दिगीश्वरार्थं कथञ्च नकेनापि प्रकारेण तद्गुणादिना तेषु मदनुरागाध्यारोपणादिना च न कदर्थनी

यानपीडनीया । अयमञ्जलिकृतः । प्रसद्यतांममोपरित्वयाप्रसन्नेनभूयतां अद्येदृशंदिक्पालविषयंकिञ्चिन्ननिगाद्यंनवाच्यं इदमेवतवप्रसन्नत्वम् । पूर्णोक्तेनैववाक्येनाह । दृशौभृशंवाष्पवयस्यअश्रुवेगस्यास्पदे आधारभूतेऽश्रुवेगपरिपूर्णेइत्यर्थः । दधेधारयामि । विवाहोत्सवेविशेषतोनकुलस्याश्रुपातस्यनिषिद्धत्वान्मयाचाधः पतनभीत्यानेत्रयोरेवस्तंभितस्वाद्दतःपरमपित्वयाकिमपिनवक्तव्यमित्यर्थः । निगाद्यंसोपसर्गत्वाद्गदमदेतियद्भावात्स्यत् ॥ ६९ ॥

वृणेदिगीशानितिकाकथातथा त्वयीतिनेक्षेनलभामपीहया ॥ सतीव्रतेऽग्नौतृणयामिजीवितं स्मरस्तुकिंवस्तुतदस्तुभस्मयः ॥ ७० ॥

पातिव्रत्यप्रौढिप्रकाशनेनदूत्यानवसरंव्यनक्तिवृणेइति । अहन्दिगीशान्वृणेइतिकाकथावार्तात्वयाप्रवर्तिता स्वतोवृणेइतिमनस्यपिनधारयामीत्यर्थः याऽहंनलभामपिनलकान्तिमपिइहपुरोवर्तिनित्वयिपरपुरुषेवर्तमानाइतिकारणात्तथानलेइवनेत्रेणनपश्यामि । यद्वात्वयिपरपुरुषेनलकान्तिमपितथानसइववइहयाकटाक्षविक्षेपादिचेष्टयानेक्षे । तथाऽनिर्वाच्यार्ईहयामहतानुरागेणतथातादृशींहंसलिखितदृष्टांनलभामपिनावलोकेइतिवा सादिगीशान्वृणइतिकाकथा । एवंविधायाःपुरस्तान्नलसदृशस्यान्यस्यपुरुषस्यकथाकर्तुंमयुक्ताकिंपुनर्नलासदृशस्य देवविषयंविषयंकिमपित्वयानवाच्यमित्यर्थः । कुमारिकयाकामिन्यास्त्वयानलप्राप्त्यभावेऽन्योपिवरणीयइत्यतआह । सतीव्रतेपतिव्रतरूपेऽग्नौअथवतीव्रतयासह वर्तमानेऽतिदारुणेवन्हौजीवितंप्राणानित्यर्थः । तृणयामितृणवत्करोमि नलप्राप्त्यभावेपिपातिव्रत्यात्यावदायुष्यजीवितंनेष्यामिनत्वन्यं वृणइति दिगीशान्वृणइतिकावार्ता । वन्हौपतितंतृणतुल्यत्वादेवनश्यतियथातथा नलाभावेपातिव्रत्यवशाज्जीवितमपीतितृणपदेनसूचितम् । नु मदनप्राबल्यात्कथमन्यनवरिष्यसीत्याशंक्याह । स्मरस्तुपुनःकिन्तुवस्तुअस्तुकीदृग्वस्तुअवस्तुकिमितियः कामः हरनेत्राग्निजनितत्वप्रसिद्धंभस्मीभावरूपःपदार्थःकिमपिकर्तुंशक्नोति । कामस्तुअभावरूपत्वादन्यस्यापिकिमपिकर्तुंनशक्नोतिकिंपुनः पतिव्रतायाममेतिभावः । यःपुनःस्मरोभस्मतस्किंव

स्तुमसित्वतिवाअन्वयः ॥ ७० ॥

न्यवेशि रत्नत्रितये जिनेन यः सधर्मचिन्तामणिरुज्झितो यया ॥ कपालिकोपानलभस्मनः कृते तदेव भस्म स्वकुले स्तुतं त्वया ॥ ७१ ॥

मदनाधीनत्वेदोषमाह न्यवेशीति । जिनेनबुद्धेनयोधर्मचिन्तामणिर्धर्मरूपश्चिन्तामणिःसम्यग्दर्शनसम्यग्ज्ञानसम्यक्चारित्रलक्षणेरत्नत्रितयेन्यवेशि । चारित्रशब्दवाच्योयःप्रक्षिप्तःसकलाभिलाषपूरकत्वात्पालिवृत्यलक्षणधर्मरूपश्चिन्तामणिःययात्वया कपालीहरस्तस्यकोपलक्षणः अनलःअग्निःतस्यभस्मनःकामस्यकृतेकामनिमित्तंउज्झितःपरित्यक्तः तयास्वकुलेतद्भस्मैवस्तुतंविस्तारितं धर्मत्यागेनात्मस्वकुलेतद्भस्मप्रक्षेपतुल्यइत्यर्थः । धर्मद्रोहिणावाधनेनापियोधर्मःअङ्गीकृतःसमदनपीडितयेनयथापरित्यज्यते तथास्वकुलंसकलङ्कमेवक्रियत इतिमदनभीत्यापालिवृत्यंपरित्यक्ष्यामीति दुराशांमाकृथा इतिभावः । उन्मत्तेनापिभस्मार्थेचिन्तामणिर्नत्यज्यते । सययात्यक्तस्तयास्ववंशेभस्मैवक्षिप्तमितियुक्तम् । सद्दृष्टिज्ञानवृत्तानिधर्मधर्मेश्वराजगुरितिबौद्धसिद्धान्तेरत्नत्रयमुक्तम् ॥ ७१ ॥

निपीय पीयूषरसौरसीरसौ गिरः स्वकन्दर्पहुताशनाहुतीः ॥ कृतान्तदूतं न तया यथोदितं कृतान्तमेव स्वममन्यतादयम् ॥ ७२ ॥

निपीयेति । असौनलःपीयूषरसस्यौरस्यःपुत्र्योमृतरसोत्पन्नाःतद्वदतिमधुराः अतएवस्वस्यनलस्यकन्दर्पएवहुताशोग्निस्तस्यआहुतीःउद्दीपकाः गिरःनिपीयसादरमाकर्ण्य स्वमात्मानंतयाभैम्यायथायेनप्रकारेणोदितमुक्तंकृतान्तदूतंयमदूतंनअमन्यत । किंतुअदयंनिष्कृपंस्वंकृतान्तंयममेवअमन्यत । अनयोक्तंयमदूतत्वंतयाप्रकटीकृतंइतितरस्वरूपमुक्तं किंतु निर्दयत्वात्यमएवाहंइत्यमन्यत । मादृशःकोपिनिर्दयोनास्तीतिस्वमात्मानंनिन्दितवानित्यर्थः । इन्द्रादिदूत्येकृतेपिइन्द्रादिष्वननुरागात्स्वस्मिन्ननुरागस्यस्वात्कामोद्दीपनत्वंयुक्तं । औरसीःउरसानिर्मिताइत्यर्थेउरसोऽण्चेत्यणन्तात्ङीप् ॥ ७२ ॥

सभिन्नमर्मापि तदर्तिकाकुभिः स्वदूतधर्मान्न विर
न्तुमैहत ॥ शनैरशक्यान्निभृतं निश्श्वसन्निचित्र
वाक्चित्रशिखण्डिनन्दनः ॥ ७३ ॥

सइति । तदर्तिस्तस्याव्यथातया व्यथयाकाकुभिर्दीनवाक्यैर्भिन्नमर्मापि
सत्यक्तकामोपि सःनल स्वदूतधर्मात् विरन्तुं नैहत नैच्छत् । धीरोदात्तत्वा
त्स्वयमेववरीतुंनैच्छदित्यर्थः । तर्हि किंचकारेत्याह । निभृतन्तथानिशात
ल्यमितिगुप्तंयथातथाकामपीडितत्वाद्धिनिःश्वसन् शनैः पीडितत्वादेवमन्दं
अशंसत् अवोचत् । यतोविचित्रवाक्यनानाविधस्फूर्तियुक्तवाग्विषयेचित्रशि
खण्डिनन्दनोबृहस्पतिरिव । वाचस्पतिश्चित्रशिखण्डिजइत्यमरः ॥ ७३ ॥

दिवौकसस्त्वांयदिकल्पशाखिनङ्कदापियाचेत
निजाङ्गणालयम् ॥ कथम्भवेरस्य नजीवितेश्वरा न
मोघयाच्ञःसहिभीरुभूरुहः ॥ ७४ ॥

दिवइति ॥ पूर्वसर्गेभैम्यान्देवानुरागप्रतिपादनेनसामोक्त्वास्मिन्सर्गे अ
द्यौमनसस्वेत्यादिभिः सप्तभिःश्लोकैर्देवानुग्रहज्ञापनेनदानमुक्त्वायदि स्वकुह
म्मित्यादिश्लोकचतुष्केणमदंप्रश्रयञ्जेददण्डौप्रतिपादयिषुः उपायचतुष्टय
योनलआह । दिवइत्यादि श्लोकचतुष्टयेनभेदःप्रतिपाद्यते । हेभैमिदिवः
पथइन्द्रः निजाङ्गणमेवालयःस्थानंयस्यएवंभूतङ्कल्पशाखिनयदिचेत्कदा
पित्वयाचेभैमीमह्यन्दास्यसीतियाचेततदाहेभीरुभयशीले त्वमस्येन्द्रस्यजीवि
तेश्वराप्राणेश्वरीकथंनभवेः । अभीष्टदःस्वामिनात्रयाचितःसदासन्निहितः
सोस्मैत्वान्दास्यत्येवेतिभावः । हियस्मात्सभूरुहःकल्पवृक्षोमोघानिष्फला
याच्ञायस्यएवंभूतोनभवति । याचितमवश्यन्ददात्येव । निजाजिरालय
मितिवापाठः जीवितेश्वरेतिसमासोदिनेश्वरवज्ज्ञेयः । भीरुभियःक्रुक्लु
कनौ । ऊङुतइत्यूङ् ॥ ७४ ॥

शिखीविधायत्वदवाप्तिकामनां स्वयंहुतस्वात्मह
विःस्वमूर्त्तिषु ॥ कृतंविधत्तेयदिसात्वंकामिकङ्क
थंसमिथ्यास्तुविधिस्तुवैदिकः ॥ ७५ ॥

शिखीति । शिखीवह्निः त्वदवाप्तिकामनान्त्वत्प्राप्त्यभिलाषम्विधाय

स्वमूर्त्तिषुस्वावयवदेवाहवनीयादिषुस्वयमात्मनैवहुतं अग्नयेस्वाहेत्यादिमन्त्रेणान्यैर्यजमानैर्दत्तंस्वांशभूतंहविर्येनैवंविधःसन्सार्वकामिकसर्वकामप्रयोजनकंसर्वकामदातारमित्यर्थः। क्रतुंयदिविधत्से सर्वैदिकोविधिस्तुपुनर्मिथ्याऽसत्यःकथमस्तु । अन्येनानुष्ठितःयज्ञस्तस्मैसर्वान्कामान्ददातिकिंपुनर्वह्निनाऽनुष्ठितः तेनवन्हेस्त्वत्प्राप्तिर्भविष्यतीतिभावः । सार्वकामिकंप्रयोजनइतिठञ् ॥ ७५ ॥

सदोतदाशामधितिष्ठतःकर स्त्वरंप्रदातुञ्चलिताद्वलादपि ॥ मुनेरगस्त्याद्वृणुतेसधर्मराड् यदित्वदाप्तिम्भणकातदागतिः ॥ ७६ ॥

सदेति । सधर्मराट्यमःअगस्त्यान्मुनेःसकाशाद्भैमीमह्यन्देहीतित्वदाप्तिन्त्वत्प्राप्तिंयदिवृणुतेतदाकागतिःकःप्रकारः भणवदअपितुनकोपि किम्भूतात्सदातदाशांयमदिशमधितिष्ठतः । तथातएववरमभीष्टलक्षणंश्रेष्ठम्वाकरंराजग्राह्यं भागंयमायप्रदातुम्बलादपिस्वयमेवचलितात्प्रवृत्तात्। यमदिशिवसतास्मैराज्ञेराजभागोऽवश्यन्देयइतिस्वयमेवविधायस्वयमेव दातुमागतेवत्वांयाचमानाययमायमुनिस्वारिकिञ्चिद्दातुंसमर्थेनागस्त्येनत्वमवश्यन्दातव्या । अगस्त्यनिवारकःकोपिनास्तीत्यर्थः । त्वदाप्तिमपिवलाद्यदिवृणुतेइतिवा । तदाशाअधिशीङितिकर्मत्वम् ॥ ७६ ॥

क्रतोःकृतेजाग्रतिवह्निकःकति प्रज्ञोरपाम्वेश्मनिकामधेनवः ॥ त्वदर्थमेकामपियाचतेसचे त्प्रचेतसःपाणिगतैववर्त्तसे ॥ ७७ ॥

क्रतोरिति । हेभैमिअपाम्पतेर्वरुणस्यवेश्मनिक्रतोःकृतेयागहविरर्थङ्कतिकतिसङ्ख्याकाःकामधेनवः जाग्रतिसन्तीतिकोवेत्ति । अपितुइयत्तयाताःकोपिनजानातीत्यर्थः । ततःकिमतआह । सवरुणःभैमीमह्यन्दातव्येतित्वदर्थन्तासुमध्येएकामपिकामधेनुञ्चेद्याचतेतर्हिप्रचेतसःवरुणस्यपाणिगतैवहस्तप्राप्तैवत्वंवर्त्तसे तस्माच्चतुर्षुमध्येसर्वथाएकोवरणीयोनान्यःप्रकारोस्तीतिभावः ॥ ७७ ॥

नसन्तिधात्रीयदिविघ्नसिद्धये पतिव्रतापत्युरनि

च्छयाशची ॥ सएवराजव्रजवैशसोत्कुतः परस्प
रस्पर्धिवरःस्वयम्वरः ॥ ७८ ॥

दपक्रमाह । नेति शचीइन्द्राणीभर्तुरन्यासक्तत्वेपिपतिव्रतापत्युरनि
च्छयास्वकृतेनइन्द्राणादरेणइन्द्राण्याव्यतिरेकेणेत्यर्थः । विघ्नसिद्ध्येयदि
नसन्निधात्रीनसन्निहिताभवेत् । नैमीस्वयम्बरेमसानागमनात्विघ्नोभव
तुइतितर्हिसतवस्वयम्बरएवराजव्रजस्यत्वदर्थंअन्योन्यस्यद्वन्द्वयुक्तस्यराज
समूहस्यवैशसात्कलहात्मरणाद्धेतो:कुत:क्व । यत:परस्परमन्योन्यंस्पर्धि
न:वरा: वरयितारोराजानोयत्रस्वयम्बरनभविष्यएवतिनलप्राप्तिस्तुदूरतो
निरस्तेत्यर्थः । विवाहेगौर्या:साक्षिध्यंस्वयम्वरेशच्या:सान्निध्यमितीति
हासात् ॥ ७८ ॥

निजस्यवृत्तान्तमजानतांमिथो मुखस्यरोषात्परु
षाणिजल्पतः॥ मृधङ्किमुच्छत्रकदण्डताण्डवं भु
जाभुजिक्षोणिभृतान्दिदृक्षसे ॥ ७९ ॥

तमेवार्थंसप्रपञ्चमाह । निजस्येति । त्वक्षोणिभुजांराज्ञांभुजाभ्यांभु
जाभ्यांप्रहृत्येदंयुद्धंप्रवृत्तंभुजाभुजि भग्नानांछत्राणांअच्छत्रकायेदण्डास्ते
षान्ताण्डवंयस्यांक्रियायांएवंयथातथायुद्धंकिन्दिदृक्षसेद्रष्टुमिच्छसि । किं
भूतानांराज्ञांरोषात्मिथोन्योन्यंपरुषाणिजल्पत:आक्रोशङ्कुर्वतः निजस्य
स्वीयस्यमुखवृत्तान्तव्यापारंअजानतांकंप्रतिकिमहंब्रवीमीतिअविदुषां ।
प्रायेणराजयुद्धदर्शिन्येवत्वंनतुस्वयम्वरार्थिनीत्यर्थः । शचीसन्निधानाभा
वाच्छत्रभङ्गाद्वराजवृजवैशसनेवभवेन्नतुस्वयम्वरइत्यर्थः । भुजाभुजितत्रते
नेदमितिसमासेइच्कर्मव्यतिहारइतिइच् । अन्येषामपीतिदीर्घः । इच
स्तिष्ठद्ग्वादिषुपाठादव्ययत्वम् । दिदृक्षसेज्ञाश्रुस्मृदृशांसनइतितङ् ॥७९॥

अपार्थयन्याजकफूत्कृतिश्रम ज्ज्वलेद्वपाचेद्वपुषा
पिनानलः ॥ अलंनलःकर्तुमनग्निसाक्षिकं विधिं
विवाहेतवसारसाक्षिकम् ॥ ८० ॥

अपेति । अनलोग्नि:याजकानांपुरोधसांवह्निसन्धुक्षणार्थंफूत्कृतिश्रमं
अपार्थयन्व्यर्थीकुर्वन्स्तन्परुषाक्रोधेनैवचेज्ज्वलेत् नतुवपुषाज्वालारूपेण

दीप्तोभवेत् । फूत्कृतेपित्वयानादृतत्वात्क्रोधवशात्सधूमएवभवेन्नज्वाला दीप्तस्तर्हिहेसारसाक्षिकमलनयने नलःअनग्निसाक्षिकंवह्निलक्षणसाक्षिर हितङ्कंविधिलाजाहोमादिकङ्कर्तुं अलंसमर्थोभवेत् । एवंसतिकस्त्वांविवक्ष्यती तिभावः । वैवाहिकोविधिरग्निसाक्षिकोनतुधूमसाक्षिकइत्यर्थः । सारसा क्षिकिमितिपाठेविधिङ्कर्तुंकिमलंअपितुनेत्यर्थः । अपिरेवार्थः ॥ ८० ॥

**पतिम्वरायाःकुलजन्मवरस्ययन्ना यमःकमप्याचरिता तिथिंयदि ॥ कथंनगन्ताविफलीभविष्णुतां स्वय म्वरःसाध्विसमृद्धिमानपि ॥ ८१ ॥**

पतिमिति । यमःपतिम्वरायाःतवकिमपिकुलजन्मवंशजंयुवरश्चनल स्यवाकुलजयदिचेत्अतिथिंआचरिताकल्पयेदित्यर्थः । हेसाध्विपति वृतेतर्हिसमृद्धिमानपिस्वयम्वरोविफलीभविष्णुतांनिष्फलीभवनशीलत्व ङ्कथंनगन्तानप्राप्स्यतिअपितुप्राप्स्यत्येव । मृतकाशौचनिमित्तात्प्रतिकूलाच्च नभवेदेवततःकस्त्वांविवक्ष्यतीतिभावः । पतिंवृणीतेपतिम्वरासञ्ज्ञायांभृतृवृ जीतिखः । अरुर्द्विषदितिमुम् । भविष्णुःपूर्ववत् ॥ ८१ ॥

**अपःप्रतिःस्वामितयाऽपरःसुरः सतान्निषेधेद्यदि नैषधक्रुधा ॥ नलायलोभात्ततपाणयेपिते पिता कथन्त्वामुदसम्प्रदास्यते ॥ ८२ ॥**

अपइति । अपरःअन्यःसुरःवरुणःअपःप्रतिलक्षीकृत्यस्वामितयाप्रभुत्वे नजलपतित्वेनत्वयास्वस्यानादरत्वान्नलस्यवावृतत्वान्निमित्तेनैषनलरोषे णकृत्वानलस्यत्वयान भवितव्यमितिबुद्ध्याभवतीभिस्तन्नगन्तव्यमिति ताःआपःयदिनिषेधेत्निवारयेत्तर्हितेपिताभीमः त्वदभिलाषेणत्वत्प्रतिग्र हायलोभात्ततपाणयेप्रसारितहस्तायनलायत्वाङ्कथंकेन प्रकारेणसम्प्रदास्य तेवदकथयनलस्तुलाभेनजलम्विनापित्वाम्प्रतिग्रहीष्यति सकथन्दास्यती त्यपिशब्दार्थः । केनापिप्रकारेणतवनिस्तारोनेतिभावः । अपाम्पतिरित्य पिपाठः । गान्धर्वादिविवाहेषुकन्यादानेजलपूर्वत्वेस्मृत्यामिसिद्धेसत्यपितथा पी प्रतारणार्थमेवमुक्तमितिज्ञेयम् ॥ ८२ ॥

**इदंमहत्तेभाहितंमयाहित स्त्विहायमोहन्दमय**

न्तिचिन्तय ॥ सुरेषुविघ्नैकपरेषु कोनरः करस्थ मप्यर्थमवाप्तुमीश्वरः ॥ ८३ ॥

इदमिति हे नृपयन्तिमयाइदन्तेलवमहत्हितम्भिहितंउक्तं । त्वमोहं विहायचिन्तय । अनेनहितमुक्तं अभिहितमित्यादिविचारय । प्रतीकारा भावम्विवृणोति । कःनरःसुरेषुविघ्नैकपरेषुसत्सुकरस्थंहस्तस्थितमपिअ र्थंवस्तुअवाप्तुमीश्वरःसमर्थोभवेत् । मनुष्येपिविघ्नपरेअन्येनप्रतिकर्त्तुं न शक्यतेकिंपुनर्देवेष्विदतिस्वंविचारयेतितत्पराथेवायोजना । एकशब्दःकेवल पर्यायः ॥ ८३ ॥

इमागिरस्तस्यविचिन्त्यचेतसा तथेतिसम्प्रत्यय माससादसौ ॥ अवारितावग्रहनीरनिर्झरे नभो नभस्यत्वमलंभयद्दृशौ ॥ ८४ ॥

इमाइति । सानेमीतस्यनलस्यइमाःपूर्वोक्ताःगिरःचेतसाविचिन्त्यतथे तिसुरेषुविघ्नैकपरेष्वित्यादिसत्यमेवेषुसंप्रत्ययंविश्वासमाससादप्राप पश्चा दृष्टशौनेत्रेनभोनभस्यत्वंबहुजलत्वात्श्रावणभाद्रपदत्वन्तुअलम्भयत् । प्रा पयामास । किंभूते । निवारितोनिषिद्धोऽग्रहोवर्षप्रतिबन्धोयस्यएवंविधो प्रतिहतप्रसरःनीरनिर्झरःजलप्रवाहोययोः । बहुरोदइत्यर्थः । श्राव णभाद्रपदयोर्वर्षप्रतिबन्धेजलवृष्टिर्नभवतितदभावे भवतीत्यनेनरोदनंसू चितम् ॥ ८४ ॥

स्फुटोत्पलाभ्यामलिदम्पतीव्रत द्विलोचनाभ्याङ्कुचकुड्मलाशया ॥ निपत्यबिन्दूहृदिकज्जलाविलौ मणीवनीलौतरलौविरेजतुः ॥ ८५ ॥

स्फुटेति । कज्जलाविलौकज्जलकलुषितौ अश्रुबिन्दूकुचकुड्मलाशयाकु चरूपकलिकाभिलाषेणअलिदम्पतीवभ्रमरस्त्रीपुंसाविवस्फुटोत्पलाभ्यां विकसितकमलरूपाभ्यांसकाशात्हृदिनिपत्य तरलौस्फुरन्तौहारमध्यवर्ति त्वयोग्यौमणीवइन्द्रनीलेमणीविरेजतुः । कज्जलकलुषितत्वात्स्थूलत्वाद्व र्तुलत्वात्स्फुटोत्पलतुल्यत्वम्नेत्रनिर्गमनात्कुचकोरकौप्रत्यागमनाच्चपूर्वं बिन्दोरलिस्त्रीपुंसतुल्यत्वं। हृदिस्थितत्वाच्चहारसान्निध्यात्पश्चान्नीलमणि

तुल्यत्वंयुक्त नेत्रयोर्विकसितोत्पलतुल्यत्वम् । कुचयोः कुङ्मलतुल्यत्वंस्वा भाविकम् । अलिस्त्रीपुंसौविकसितंकमलमुपभुज्यविकसिष्यत्कलिकाभि लाषिणौभवतः । अलितुल्यौइन्द्रनीलतुल्यौचाश्रुबिन्दूइहदिनिपतिताविति भावः । इंदूदेहदितिप्रगृह्यत्वस्यमणीवादेर्नैतिनिषेधात्सन्धिः । वस्तुत स्तह्यांलिकमुनित्रयानुक्तत्वादप्रामाणिकमिति इवार्थकववाशब्दयोर्विद्य मानत्वाद्नवशब्दस्याश्रयणम् ॥ ८५ ॥

धुतापतत्पुष्पशिलीमुखाशुगैः शुचेस्तदासीत्सर सीरसस्यया॥रयायवद्धादरयाश्रुधारया सनालनी लोत्पललोललोचना ॥ ८६ ॥

धुतेति ॥ साभैमीआपतन्तःआगच्छन्तःपुष्पशिलीमुखस्यकामस्याशु गावाणास्तैः धुताकम्पितापीडितेतियावत् एवंभूतासतीतदाशुचेःरस स्यविप्रलंभशृङ्गाररसस्यसरसीआसीत् । किंभूतारयायनिरन्तरप्रवृत्तयेबद्धा दरयाकृताभिनिवेशयाश्रुधारयाकृत्वा सनालंयन्नीलोत्पलन्तद्वल्लोलाययो रेवंविधेलोचनेयस्या.सा अथचशुचेर्ग्रीष्मसंबन्धिनोरसस्यउदकस्यसरसीछा याइविवा । किंभूतासरसी । आपतन्तिआगमन्तिपुष्पाणियैस्तेशिली मुखाःभ्रमराःआशुगावायवश्चतैर्धुताकम्पिता यद्वापतद्भिःपक्षिभिःहंसा दिभिःपुष्पसंबन्धीभिःपुष्पेषुस्थितैर्वाशिलीमुखैर्भ्रमरैः आशुगेनवायुनाच धुता । तथाग्रीष्मसोयुदकस्याल्पत्वाद्दृश्यमाननालनीलोत्पलाभवति । अथचशुचेर्निर्मलस्यरसस्यग्रीष्मकालीनासरसीवभूव । अथकामवाणपीडि तत्वाच्छुचेःशोकस्यरसस्यनदीवभूव । बहुरुरोदेतिभावः । नेत्रयोःस्वभा वेनचनीलोत्पलतुल्यत्वम् । अच्छिन्नाश्रुधारयाःनालद्वयतुल्यत्वम् । ग्रीष्म तोवल्पजलत्वाद्वायुवशाच्चोद्भवनीलोत्पलासरसीभवति । शुचिःशुद्धे ऽनुपहतेशृङ्गारापाढयो.स्मृतः । ग्रीष्मेहुतवहेपीतिविश्वः । शुचेःशोकस्येति पक्षेइकधातुर्निर्देशे । रयायरयेणनिर्गन्तुंतुमर्थेतिचतुर्थी । रयेणायोनिर्गम नंतत्रबद्धादरयेति ॥ ८६ ॥

अथोद्भ्रमन्तीरुदतीगतक्षमा ससंभ्रमालुप्तरतिः स्खलन्मतिः ॥ व्यधात्प्रियप्राप्तिविघातनिश्चया न्मृदुर्निदूनापरिदेवितानिसा ८७ ॥

अयीति । अयमेमैमी कृदूनिश्रोतु कल्पोरदाद्कानिपरिद्रुभितानिवि लापचवनानिव्यधात् किंभूताप्रियस्यनलस्यप्राप्तेर्विघातःममनलप्राप्तिः स वेधानभविन्नीतिनिश्चयात्दूनादुःखिता । तथाउद्भ्रन्तीउन्मादवतीतथा रुदतीतथागताक्षमासहनशक्तिर्यस्याः सा किंमयिरोदुधुमसमर्थाक्षणमपि जीवितुमक्षमातथासंत्रमाऽधुनाममजीवननस्याद्दुःखरूपंवाभवेत्इति भयसहिता तथालुप्तरतिर्गतसुखा । तथाऽस्खलन्तीकिञ्चूतंव्यतासूक्तामतिर्बु द्धिर्यस्याःसा । विप्रलम्भाख्यशृङ्गाररसपोषकंवचनमुवाचेत्यर्थः ॥ ८७ ॥

त्वरस्वपञ्चेषुहुताशभात्मन स्तनुप्नमद्भस्ममयंय शश्वयम् ॥ विधेपरेहाफलभक्षणव्रती पताद्यव ष्यन्नसुभिर्ममाफलैः ॥ ८८ ॥

त्वरस्वेति । हेमतिसन्तापकत्वात्पञ्चेषुहुताशनकामाग्नेत्वन्त्वरस्व । सवेगोभव । मान्दग्धामद्गस्मयंआत्मनोयशश्चयंकीर्त्तिसमूहंतनुप्नवि स्तारयशीघ्रंमारयमास्मपीडयइतिभावः । कीवधेनतवमहद्यशोभविष्य तीतिसोपहासम् हेविधेधातःपरस्येहाइच्छातद्विषयेयत्फलंअभीष्टन्तस्यभ क्षणंअन्तरायकरणाद्नित्याद्मत्तदेवव्रतमस्यास्तीतिपराभिलाषहननेप्रय त्नशीलत्वं अद्यनलप्राप्तेरभावाद्फलैर्व्यर्थैःममासुभिस्तृप्यन्पतअधोगच्छन रकंयाहीत्यर्थः । तवपरभक्षणव्रतनतुप्राणरक्षणव्रतम् । कीवधजनिता त्पातकात्स्वर्गात्पतितोभवेत्याक्रोशः । व्रतलोपेनपतितोभवति । एतच्चान र्थकत्वात्प्रलापरूपम् ॥ ८८ ॥

भृशंवियोगानलतप्यमानकिं विलीयसेनत्वमयो मयंयदि ॥ स्मरेषुभिर्भेद्यनवज्रमप्यसि प्रवीषि नस्वान्तकथंनदीर्यसे ॥ ८९ ॥

भृशमिति । हेभृशंसुतरास्वियोगानलतप्यमानस्वान्तहृदय-त्वंयदिअयो मयलोहरूपन्तर्हि किंनविलीयसे । द्रवीभवसि । वह्निनाभृशन्तप्यमानं लोहंविलीयते । त्वन्वेतर्हिकिमितिनविलीयसे । नचविलीयसेतस्माल्लो हादपित्वमतिकठिनःत्वं । हेस्मरेषुभिर्भेद्यत्वंवज्रमपिनासि । त्वन्तु पुष्पबाणैर्भेद्यत्वात्कथंनदीर्यसेनप्रवीषि । अपितुकथयेत्यर्थः । त्वंयदिव

ममपिनासितदात्वङ्कथञ्चस्फुटसि । तस्माद्वज्रमेवत्वमितिवा । दीर्यसे कर्मङ्कर्त्तरितङ् ॥ ८९ ॥

विलम्बसेजीवितकिन्द्रवद्रुत ज्वलत्यदस्तेहृदयं निकेतनम् ॥ जहासिनाद्यापिमृषासुखासिका म पूर्वमालस्यमहोतवेदृशम् ॥ ९० ॥

विलम्बसइति । हेजीवितजीवकिम्बिलम्बसेकालक्षेपङ्करोषि । अपि तुमाकार्षीः । द्रुतंशीघ्रन्द्रवङ्गच्छअदस्तेतवनिकेतनंनिवासस्थानंहृदयं ज्वलति । मदनाग्निनादह्यते । अद्यापिगृहेदह्यमानेपिमृषासुखासिकां सुखासनंनिश्चिन्तावस्थानंनजहासिनत्यजसि । अपितुत्यज । ईदृशेगृह ज्वलनेपिसुखासनरूपमपूर्वंलोकोत्तरन्तवेदमालस्यम् । अन्यलसोप्यन्योगृ हेदह्यमानेसुखासनंहित्वापलाय्यगच्छति । त्वन्तुज्वलत्यपिगृहेवहिर्नंनि र्गच्छसि अन्तरेवतिष्ठसिएतत्तवलोकोत्तरकारिआलस्यमित्यर्थः । त्वयि निर्गतेममपीडानभवेत्तस्माच्छीघ्रंनिर्गच्छेतिभावः । आसिकात्धात्वर्थ निर्देशेण्वुल्वक्तव्यइतिण्वुल् ॥ ९० ॥

दृशौमहापातकिनौमनोरथाः कथंपृथूत्रामपिवि प्रलेभिरे ॥ प्रियःप्रियःप्रेक्षणघातिपातकं स्वम स्रुभिःक्षालयतांशतंसमाः ॥ ९१ ॥

दृशाविति । हेदृशौ पातकिनःसर्वदालोकानांप्रतारकत्वात्पातकयु क्ताःमनोरथाःपृथूअपिवांमृषाअलीकेनकथंविप्रलेभिरेवञ्चितवन्तः युव योर्नलोस्माभिःप्रदर्श्यतइति असत्यरूपपातकोपेतावामपीतिवा । मृ षाव्यर्थावामनोरथावा । अतिविशालयोरपियुवयोस्तैःप्रतारणाकृतेतिअ नुचितङ्कृतमित्यर्थः । विप्रलम्भकरणादपितेषांपातकित्वम् । पातकीह्यव श्यंपरम्प्रतारयति । अल्पोपिप्रतारयितुमनर्हःकिंपुनर्महानिति नलदर्श नयोग्यत्वञ्चपृथूइत्यनेनसूचितं । अणुत्वान्मनसोमनोरथैःप्रतारणायुक्ता युवान्तुपृथूअतःप्रतारणानुचितेतिवा । इदानींयुवाम्प्रियश्रियोनलशोभा याःप्रेक्षणघाति अवलोकनविघ्नकारिस्वंस्वीयंसहजंपातकंमनोरथसंसर्गज नितञ्च शतंसमायावज्जीवमित्यर्थः । अस्रुभिःक्षालयतांयावन्पातकन्ना शन्नलदर्शनंनेतिपातकंसर्वथानिराकुरुतमित्यर्थः । अन्यदपिमलिनमुदके

नद्यात्यते । नलदर्शनंविनायावज्जीवंरोदनमेवयुवयोःप्राप्तमितिभावः । मृषानिकारस्वक्रीडाम्बिनाकथविप्रलेभिरे क्रीडायांविप्रलम्भोयुक्तइति वायोजनीयम् । घतंसमा.अत्यन्तसंयोगेद्वितीया ॥ ९१ ॥

प्रियञ्चमृत्युंनलभेत्वदीप्सित न्तदेवनस्यान्ममयत्त्वमिच्छसि ॥ वियोगमेवेच्छमनःप्रियेणमे त वप्रसादान्नभवत्वसौमम ॥ ९२ ॥

प्रियमिति । हेमनः अहन्त्वदीप्सितंप्रियंनलंनलभेतदभावेत्वदीप्सितं मृत्युञ्चनलभे किमितित्वंयन्ममेप्सितंइच्छसितदेवेप्सितंममस्यात् नैवम वेदिसिवा । तस्मात्त्वप्रियेणनलेनसहमेवियोगमेवेच्छ एवंसतितवप्रसा दान्ममासौवियोगोनभवतु । त्वंममाभिलषितंयद्यद्वाञ्छसितत्तन्नभवति। एवंसतिवियोगमेवेच्छयथासनभवेदितित्वांप्रार्थये । असौममसपूर्वायाः प्रथमायाविभाषेतिविकल्पान्मनादेशोन ॥ ९२ ॥

नकाकुवाक्यैरतिवाममङ्गज न्द्विषत्सुयाचेपवनन्तुदक्षिणम् ॥ दिशापिमद्भस्मकिरत्वयन्त्वया प्रियो यथावैरविधिर्वधावधिः ॥ ९३ ॥

नेति । द्विषत्सुविरहवैरिषुचन्द्रादिषुमध्येकाकुवचनैः कृत्वाअङ्गजङ्का मकयाचेनार्थये । यतोतिवाममतिसुन्दरमतिवक्रञ्च अतिक्रान्तावामाः स्त्रियोयेन स्त्रीवचनाकारिणञ्च वैरिणामनेकत्वेपिअतिप्रगल्भत्वात्द्वावे तौयाचनयोग्यत्वेनतस्माविलौ कामोदक्षिणवायुश्चेति तत्रयाचनेदक्षिण त्वमेवउपयोगिनतुसौन्दर्यं नचप्रतिकूलत्वं नचस्त्रीकृतयाज्ञायांस्त्रीच्छन्दा कारित्वमितिभिवैयाथ्र्यंनियःकामोयाचितुमयोग्यः । अथचरति.वामास्त्री यस्य अथचरतौप्रीतौवामंवक्रंविरहितत्वात्प्रीतिविरोधिनमित्यर्थः । त स्मात्कामनार्थये । तुपुनःकिंतुदक्षिणंपवनंयाचे । यतःपरच्छन्दानुवर्ति नमुदारञ्चसरलमृजुगामिनञ्चमलयानिलन्दीनवचनैर्याचेदाक्षशीलोदम्न स्वापरवचनकारित्वात्स्वयंवातत्वादृजुमार्गगामित्वात्पवित्रत्वाच्चमलया निलएवयाचितुंयोग्यइत्यर्थः अथवाङ्गजः पुत्रोपिअतिवक्रोनयाचितुमर्हः द्विषअप्येतैर्गुणैर्दक्षिणोयाचितुमर्हः दक्षिणहस्तस्यदानार्हत्वात्तयाचनयो ग्यत्वंवामहस्तसदानानर्हत्वान्नयाचनयोग्यत्वं यथातथाप्रकृतेपि । या

ख्रामाह । अयमलयानिलोयथादिशाम्प्रिधोनलोलक्षितस्तातः । यस्मान्दिशि वर्त्ततेतयादिशोपलक्षितनस्तस्यान्दिशिमङ्गस्यापिकिरतुक्षिपतु । दक्षिणा निलः कुण्डिनपुरादुत्तरस्यान्दिशिवर्त्तमानांनलराजधानींप्रतिमङ्गस्मनय त्वित्यर्थः । मरणानन्तरंमङ्गस्मनोनलसम्बन्धकुर्वितिमलयानिलंप्रार्थयइत्य र्थः । एतच्चकामेनकर्तुमशक्यम् । वैरीत्वद्वचनंकथङ्करिष्यतीत्याशङ्क्या ह यतोवैरविधिर्वैरकरणंबधावधिर्मरणावधिः । वैरंमरणपर्यवसायि । ए तच्चकारणंसर्वत्रसाधारणम् । दक्षिणत्वन्त्वसाधारणंद्वतिज्ञेयम् । मङ्गस्मनः नलेनसम्बन्धेसतिममधन्यत्वंस्यादितिभावः । दिशापीति यथास्थितैवयो जना । अङ्गंरुधिरेऽनङ्गेकेशेपुत्रमदेङ्गजेइतिविश्वः ॥ ९३ ॥

अमूनिगच्छन्तियुगानिनक्षणः कियत्सहिष्येनहि मृत्युरस्तिमे ॥ नमान्तुकान्तःस्फुटमन्तरुज्झिता नतनुमनस्तच्चनकायवायवः ॥ ९४ ॥

अमूनीति । अमूनिक्षणरूपाणियुगानिगच्छन्तिमत्थयङ्क्षणाणक्षणः का लः । अमूनियुगानिदु खरूपाणिगच्छन्तिनक्षणस्त्वक्षरूपाणिगच्छन्तीति वा । एकएवक्षणःबहुयुगरूपतयागच्छतीत्यर्थः । सांपिनगतोवत्त तएवे तिलटासूचितम् । कथयुगरूपत्वमित्याशङ्क्याह । कियत्किम्परिमाणदुः खमहसहिष्येअपितुतस्यावधिर्नास्तीत्यर्थः । जीविताबधिभविष्यतीत्यत आह । हियस्मान्मेमृत्युर्नास्ति । ततश्चदुःखावधेरभावात्क्षणस्यापियुग रूपत्वंयुक्तम् । मरणाभावःकथमित्यत्राह । स्फुटयस्मान्निश्चितकान्तो नलस्तुपुनःअन्तःस्थूलशरीरमध्येअहंअन्तर्वाच्यंमांनोज्झितानत्यजतिमम त्वंनलनत्यजति प्राणाख्याःकायवायवःतच्चमनोनत्यजन्ति । एतावत्याः परम्परायाःअविच्छेदेकथंमरणंस्यादित्यर्थः । उज्झिताउज्झिष्यन्तिवा । बु द्धीन्द्रियाणिखलुपञ्चतथापराणिकर्मेन्द्रियाणिमनआदिचतुष्टयञ्च । प्रा णादिपञ्चकमथोवियदादिकञ्चकामश्चकर्मचतमः पुनरष्टमीपूरितिवचना ल्लिङ्गशरीरस्यउपलक्षणंमनस्तद्यावल्लिङ्गशरीरन्तावत्स्थूलशरीरंनत्यजति । जीवेत्युत्क्रामतिइन्द्रियाण्युत्क्रामन्तिलिङ्गेचोत्क्रामतिस्थूलशरीरपात्दूनौ शिकविच्छिद्यते । तथाचश्रुतिः । तमुत्क्रामन्तप्राणोनूत्क्रामति । प्राणमनू त्क्रामन्तंसर्वेप्राणाउत्क्रामन्तीति । ततश्चैतत्क्रमणाभावेसर्वेषामनू

त्क्रमणाभावान्मरणाभावइत्यर्थः । अन्तरन्तःकरणेविद्यमानःकान्तोमां त्यजतिचान्तःकरणन्तुनत्यजतीतिवा । यावज्जीवंनलेख्यानपगमान्नल प्राप्त्यभावाच्चक्षणोपिमयादुरतिक्रमइतिभावः । वक्तिवाहनसुटा ॥ ९४ ॥

मदुग्रतापव्ययज्ञक्तसीकरः सुरासवःकेनपपेकृपा र्णवः ॥ उदेतिकोटिर्नमुदेमदुत्तमा किमाशुसंकल्प कणक्रमेणवः ॥ ९५ ॥

मदिति । हेसुरा.स.प्रसिद्ध.सोयुष्माकङ्कृपार्णव केनपपेपीतः । किंभू तः । ममउग्रतापोमलविरहजन्य.तस्यव्ययेनाशेशक्त.सीकरोविन्दुमात्रंय स्यसः । एकोर्णवःअगस्त्येनपीतःअयद्वितीयःनपीत.एतावन्ति.कृपत्वंङ्क्लिमिति कुरुधेतिकथयतेतिभावः । वोयुष्माकंसङ्कल्पकणक्रमेणइच्छालेशरूपेणक्र मेणाशुमदुत्तमामत्तकाधाद्रूपादिभिरुत्तमासुन्दरीअर्थात् स्त्रीणाङ्कोटिर्नुदे युष्माकंप्रीतयेकिन्नोदेतिजायतेतदेष्यतीत्यर्थः । भवतांसङ्कल्पमात्रेणमत्त दृश्योमन्नवत्तमाश्चपर.अताःस्त्रियः सुलभाइतिकारणान्मद्भिला.वेनिर्दन्यो नकार्यः भवद्भिरियमेवचमदुपरिकर्तुतीकृपा । स्त्रीलोभान्मार्त्तिवन्तापयेर्थ त्यर्थः ॥ ९५ ॥

ममैवचाहर्दिवमश्रुदुर्दिनैः प्रसह्यवर्षासुक्रतौप्र सज्जिते ॥ कथंनशृण्वन्तुसुषुप्यदेवता भवत्वर ण्येरुदितंनमेगिरः ॥ ९६ ॥

ममैवेति । अहर्निशंप्रत्यहंममैवाश्रुदुर्दिनैर्वाअविच्छिन्नाश्रुधारारूपमे घच्छन्नैर्दिवसैः प्रसह्यबलाद्वर्षासुक्रतौवर्षर्तौप्रसज्जितेप्रवर्तितेसतिदेवता इन्द्रादयोदेवाःस्वनिद्राकालत्वात्सुषुप्यसुप्त्वामेगिर.कथंनशृण्वन्तु । अत एवअरण्येरुदितंनभवतुमद्वाक्यमितिशेषः । अपितुभवत्वितिकाकुः । तेषांनिद्रितत्वात्मत्कोकादिवाक्यमरण्यरुदिततुल्यत्वाद्व्यर्थमेवेत्यर्थः । व र्षन्तुदेवरजनीतिज्योतिःशास्त्रम्तस्यांचनिद्रायुक्ता यदिमयारोदनंनकृतं स्यात्तर्हिदुर्दिनत्वाभावाद्वर्षर्तुर्नस्यात् तस्मान्ममैवापराधइत्येवकारेणसू चितम् वर्षानुक्रतावितिऋत्यकइति प्रकृतिभावः । सुषुप्यसुविनिद्रुस्वप्इ तिपत्व।अरण्येरुदितमित्यचेपइतिसमासः तत्पुरुषेकृतिबहुलमित्यलुक् ९६

इयंनतेनैषधदृक्पथातिथिस्त्वदेकतानस्यजनस्य यातना ॥ हृदेहृदेहानकियद्गवेषितः सवेधसा गोपिखगोपिचक्रिय: ॥ ९७ ॥

स्नोकद्वतुष्टयेनननसंप्रतिप्रलपति । हेनैषधत्वदेकतानस्यत्वदेकनिष्टस्य त्वदेकजीवनोपायस्येत्यर्थः । ममजनस्यजनस्यइयंयातनातीव्रवेदनातेदृक्पथातिथिर्नदृग्गोचरोनेतिप्रश्नकाकुः । हाकष्टम् । यश्मांमदीयांवेदनात्वांप्रतिवक्तिसखगोपिइंसोपिवेधसाब्रह्मणाऽगोपिआच्छादितः । गोपनेहेतुमाह । यतोह्रदेह्रदेकियत्कतिवारंनगवेषितोऽपितुबहुवारमन्विष्टोपिनदृश्यते । कुत्रचित्त्वयानगन्तव्यमितिब्रह्मणानिषिद्धःकदाचिन्मदीयावस्थान्तुभ्यव्वेत्कथयेत्तदातवदयोदयोभवेत् तमास्त्वितिवेधसोवैधर्म्यमितिभावः । एकतानोमनन्यवृत्तिरित्यमरः ॥ ९७ ॥

ममापिकिंनोदयसेदयाधन त्वदङ्घ्रिमग्नंयदिवेत्थमन्मनः ॥ निमज्जयन्सन्तमसेपराशयं विधिस्तुवाच्यःक्वतवागसःकथा ॥ ९८ ॥

ममेति । हेदयाधननल त्वंममनोयदित्वदङ्घ्रिमग्नन्त्वच्चरणशरणं यदिवेत्थजानासि । तर्हिंममापिकिनोदयसेममाप्युपरिकृपाङ्किंनकरोषि । दयाधनत्वात्कुर्वित्यर्थः । कृपाकरणेतवापराधोनास्तीत्याह । तुपुनः । परस्याशयमन्तःकरणंसन्तमसेअज्ञानेनिमज्जयन् विधिर्दैवंवाच्यउपालब्धव्यस्तवागसोऽपराधस्यकथाक्व । तवापराधोनास्तिममैवअदृष्टंतथाविधमित्यर्थः । तवान्तःकरणेहंसनिषेधद्वारामदुःखबोधङ्कुर्वन्ब्रह्मैवोपालब्ध्योनतुत्वमित्यर्थइतिवा । ममेतिष्अधीगर्थेतिकर्मणिषष्ठी सन्तमसमिति अवसमन्धेभ्यस्तमसइत्यच् ॥ ९८ ॥

कथावशेषन्तवसाकृतेगते त्युपैष्यतिश्रोत्रपथङ्कथंनते ॥ दयाणुनोमांसमनुग्रहीष्यसे वदापितावद्वदिनाथनाधुना ॥ ९९ ॥

कथेति । साजनोमीतवकृतेकथावशेषंगतात्वयिअनुरक्तासतीस्वरमाप्त्य जावाज्जन्मान्तरेपित्वत्प्राप्त्यर्थंमृतेतितेश्रोत्रपथङ्कथंनोपैष्यति । जनमुखा

स्वमपिश्रोष्यस्येव । तदाश्रुतेपिकिमित्यतआह । हेनाथप्राणेशयद्यप्य धुनामांनगृह्णासितथापितदापितस्मिन्नपिसमयेतावत्दयागुनाकपालेशो नमासमनुग्रहीष्यसे । तावच्छब्दःसंभावनायाम् । सामर्थ्यंनृतेतिसदायह दिष्यसितेनैवकपालेशेनाहंधन्याभविष्यामीतिभावः । अन्योपिस्वामीपू र्वमननुगृह्णन्नपितदर्थंकष्टान्दशांप्राप्तमनुगृह्णाति । ग्रहीष्यसेस्वरितेत्वात्त इ ग्रहोलिटीतिदीर्घः ॥ ९९ ॥

ममादरीदम्विदरीतुमान्तर न्तदर्थिकल्पद्रुमकिं चिदर्थये ॥ भिदांहृदिद्वारमवाप्यमेवमे हतासुभिः प्राणसमःसमागमः ॥ १०० ॥

ममेति । ममेदमान्तरंहृदयंविदरीतुंस्फुटितुंयस्मात्ध्यादरिसादरन्तत्त स्मात्हेअर्थिनाङ्कल्पद्रुम अहङ्किंचिदर्थयाचेकल्पवृक्षत्वात्त्वयातद्दातव्य मित्यर्थः । किंतदित्याह । हृदिभिदाम्विदारणलक्षणान्द्वारंमार्गमवाप्य मेहतैर्विनष्टैरथवानिष्फलैरसुभिःप्राणैःसमंसार्धंप्राणसमः प्राणप्रियःसत्वं मागमः । प्राणान्मद्धृदयाद्गच्छन्तुत्वंमागमः । जन्मान्तरेपिममत्वस्यैवास क्त्याभवितव्यमितित्वांप्रार्थयेइतिभावः । विदरीतुंवृतोवेतिदीर्घः ॥ १००

इतिप्रियाकाकुभिरुन्मिषभृश न्दिगीशदूत्येनहृ दिस्थिरीकृतः ॥ नृपंसयोगेपिवियोगमन्मथः क्षणन्तमुद्भ्रान्तमजीजनत्पुनः ॥ १०१ ॥

इतीति । दिगीशानान्दूत्येनहृदिअस्थिरोप्येतावन्तंस्थिरीकृतःसदर्शं नलक्षणयोगेसत्यपिभैमीविषयोनलमन्मथइतिपूर्वोक्तैः प्रियायाःकाकुभि र्दीनवचनैःकृत्वाभृशमुन्मिषन्नतितरामुद्बुद्धः सन्क्षणंतंनृपंपुनरुद्भ्रान्त मतिशयेनभ्रान्तं अजीजनत्चकार । पूर्वमनेकवारंभ्रान्तःकृतएवेतिपुनः शब्दार्थः । तस्मादवशात्सोपिप्रलपतिस्मेतिभावः सन्निहितामपिभैमीना ज्ञासीदित्यपि ॥ १०१ ॥

महेन्द्रदूत्यादिसमस्तमात्मन स्ततःसविस्मृत्यम नोरथस्थितेः ॥ क्रियाःप्रियायालपितैःकरम्बिता विकल्पयन्नित्यनलीकमालपत् ॥ १०२ ॥

महेन्द्रेति। पूर्वमेवार्थसोपस्कारमाह। स नलः ततोऽनन्तरं आत्मनः समस्तं महेन्द्रदूत्यादि स्वकर्तृकमिन्द्रदूत्यमादिशब्दाद्वन्ह्यादिदूत्यं विस्मृत्य पूर्वविप्रलंभावस्थायां मनोरथस्थितैर्मनोरथकल्पितैः करम्बिताभिर्मिश्रिताः प्रियायाभैम्याः क्रियाविलापचेष्टाः वितर्कयन्नानाप्रकारेणतर्कयन्संभावयन्नित्यं वक्ष्यमाणप्रकारेणालीकमबुद्धिपूर्वकमालपत् अवोचत्। तस्मात्तद्वशात्प्रणयकलहादिसंभावयन्भैमीं प्रति प्रलपतिस्मेति भावः ॥ १०२ ॥

**अयि प्रियेकस्यकृते विलप्यते विलुप्यते हा मुखमस्रुबिन्दुभिः ॥ पुरस्त्वयालोकि नमन्नयं नकिन्तिरश्चलल्लोचनलीलयानलः ॥ १०३ ॥**

अयीति। अयि प्रिये कस्यकृते किमर्थं त्वया विलप्यते। अस्रुबिन्दुभिः कर्तृभिः करणैर्वा कस्यकृते मुखं विलिप्यते व्याप्यते हा कष्टं अनङ्गलमेतन्माकार्षीरित्यर्थः। तिरश्चलन्ती सदा कटाक्षावलोकनाभ्यासेन वक्रगामिनी लोचनलीला यस्याः एवंभूतया त्वया पुरो ग्रे नमंस्त्वच्चरणशरणोऽयमयं नलो नालोकि किमिति प्रश्नः। लोचनयोर्लीलया विलासेन कटाक्षेणेति वा। रोदनवशात्त्वया ऽयं न ज्ञातः किमित्यर्थः। प्रणयकलहं परित्यज्य चरणपतितं मामवलोकनेनानुगृहाण। रोदनं माकार्षीरिति भावः। अत्र कुपितत्वादेव रोदनं नेत्रयोर्वक्रगामित्वञ्च ॥ १०३ ॥

**चकास्ति बिन्दुच्युतकातिचातुरी घनास्रुबिन्दुस्रुतिकैतवात्तव ॥ ससारतारांक्षि ससारमात्मना तनोषि संसारमसंशयं यतः ॥ १०४ ॥**

चकास्तीति। घनाः येऽस्रुबिन्दवस्तेषां स्रुतिः स्रवणं तस्य कैतवात् व्याजात् तव बिन्दुच्युतकाख्यस्य शब्दालङ्कारविशेषस्य विषयाऽतिचातुरी महती चातुरी चकास्ति। बिन्दुच्युतकाख्यमलङ्कारं त्वं सम्यक् जानासि। अथ च बिन्दूनां च्युतमेव च्युतकं तद्विषयातिचातुरी घनास्रुबिन्दुस्रुतिकैतवाच्छोभते। त्वादृशी कापि सम्यगलीकं रोदितुं न जानातीत्यर्थः। तदेवाह। हे ससारवदिन्द्रनीलवन्नीले स्निग्धे तारे कनीनिके ययोरेवंभूते अक्षिणी नेत्रे यस्याः तत्संबुद्धिः। यतो कारणात्त्वं असंशयं निश्चितं ससारं सकलं जगदात्मना ससारं तनोषि। बिन्दो

रनुस्वारस्यच्यवनचातुर्यान्नासानुस्वारस्य संसारस्य ससारत्वमनुस्वाररहि
त्यं कथंकर्तु शक्यमित्यर्थः अथच आत्मना ससारं श्रेष्ठंवस्तु सहितं करोषि।
अस्मिन्संसारेत्वादृशी कापि कुशला नासीदिति अलीकरोदनंकर्तुं त्वमेवनाना
सिनान्येत्यर्थः । अलीकरोदनेप्यतितरां शोभसेइतिभावः । अनुस्वारच्य
वनादर्थान्तरप्रतीतिर्यत्रतद्बिन्दुच्युतकंकान्तोनयनानन्दीबालेन्दुःखेनभव
तिसदेतितदुदाहरणम् । च्युतंनपुंसकेभावेक्तः । स्वार्थेकन् ॥ १०४ ॥

**अपास्तपाथोरुहिशायितंकरे करोषिलीलाकम**
**लङ्किमाननम् ॥ तनोषिहारङ्किंयदश्रुणःस्रुतै**
**रदोषनिर्वासितभूषणेहृदि ॥ १०५ ॥**

अपास्तेति । अपास्तम्विरहवशात्त्यक्तंपाथोरुहंलीलाकमलंयेनएवंवि
धेकरेशायितंचिन्तावशात्स्थापितमाननंलीलाकमलंकिमितिकरोषि । नु
खमेवलीलाकमलस्थानेजातमित्यर्थः । तन्माकुरु । लीलाकमलंगृहाण
चिन्तांमाकार्षीरितिभावः । तथाऽदोषाणिअशासादिदोषरहितानि अथवा
पराधेनविनैवविरहवशान्निर्वासितानिभूषणानिमुक्ताहारादीनियेनतादृ
शेहृदिअश्रुणःस्रवैरश्रुबिन्दुभिः किंयत्किंपरिमाणङ्किंयतम्वकाशंहारंमुक्ता
हारन्तनोषि। अपितुसास्तलानीः । अश्रुबिन्दवःहारस्थानेभवन्तीत्यर्थः ।
तन्माकुरुभूषणान्यङ्गीकुरु । रोदनंमाकार्षीरितिभावः । अन्यत्रसापराधो
हिनिर्वास्यतइतिदृष्टम् किंयत्क्रियाविशेषणंवा ॥ १०५ ॥

**दृशोरमङ्गल्यमिदंमिलज्जलङ् करेणतावत्परिमा**
**र्जयामिते ॥ अथापराधम्भवदङ्घ्रिपङ्कजद्वयी**
**रजोभिःसममात्ममौलिना ॥ १०६ ॥**

दृशोरिति । हेभैमिअहन्तावत्प्रथमतःकरेणकृत्वातेतवदृशोर्नेत्रयोर्मि
लत्सम्बद्धंनिरन्तरञ्जलत्इदममङ्गल्यं अशुभरूपञ्जलवाष्पंपरिमार्जयामिप्रो
ञ्छामीत्यर्थः । अथपश्चाद्भवत्याअङ्घ्रिपङ्कजद्वय्याःरजोभिःसमंसहआत्म
मौलिनास्वमस्तकेनस्वीयंनपराधमपिप्रोञ्छामि । मत्कृतादपराधाद्यदिरो
दिषितस्य मङ्गलरोदनंआदावपनेष्यामि । पश्चान्मस्तकेतवचरणरजोयाव
न्नगिष्यतितावत्तवचरणौशरणंप्रविश्यअपराधमप्यपनेष्यामि । प्रसन्नाभ

वेतिभावः । मङ्क्ष्यंअर्हार्थेयत् । परिमार्जयामि । वर्त्तमानसामीप्येल ट् ॥ १०६ ॥

ममत्वदच्छाङ्घ्रिनखामृतद्युतेः किरीटमाणिक्यमयूखमञ्जरी ॥ उपासनामस्यकरोतुरोहिणी त्यजत्यजाकारणरोषणेरुषम् ॥ १०७ ॥

ममेति । हेजैमि ममरोहिणीरक्तवर्णा किरीटमाणिक्यमयूखानांमञ्जरी तुल्यादीर्घाकारादीप्तिः अस्यपुरोवर्तिनस्तवाच्छाङ्घ्रिनखलक्षणस्यअमृत द्युतेश्चन्द्रस्योपासनांसेवाङ्करोतु । हेजैमिनिष्कारणंरुष्यसीत्यकारणरोषणे प्रियेरोषन्त्यजत्यज । सदाऽहन्त्वच्चरणसेवकोस्मिकोपंमुञ्चमुञ्चेतिभावः । सौम्यस्यस्वामिनःसेवाकर्तुं शक्यानरोषणस्य । चन्द्रप्रियारोहिणीनामता रकाचन्द्रंसेवतेसमीपवर्तिनीचभवतीत्युचितमेव । रोहिणीतिवर्णादनुदा त्तादितिङीप्रकारौ । त्यजत्यजेतिसंभ्रमेनित्यवीप्सयोरितिद्विरुक्तिः रोष णेतिक्रुधमण्डार्थेभ्यश्चेतियुच् ॥ १०७ ॥

तनोषिमानंमयिचेदनागसि त्वयिप्रयेतद्बहुमानमानतः ॥ विनम्यवक्त्रंयदिमन्यसेक्रिय न्नमामिते चाहृतदापदावधि ॥ १०८ ॥

तनोषीति त्वंमयिमनागपिअल्पमपिमानंचेत्तनोषिकरोषितर्हिअ नतोनम्रःसन्नहंत्वयि बहुमानंमहतींपूजांमानापनयनार्थंप्रयेक्ष्येत्वीकरिष्यामी त्याकूतः कोपोमानोऽन्यासंङ्गिनिप्रियेइति चपिहकोपनेरोषवशाद्वक्त्रङ्क्रिय त्स्वल्पमेवविनम्यनम्रीकृत्ययदिचेद्वर्त्तसेतदातर्हितेतवपदावधिचरणपर्य न्तंनमामिदण्डवन्नमस्कारेणरोषशेषमपनेष्यामि बहुमानेन अल्पंमानंब हुमानमनेनचाल्पंनमननपनेष्यामीतिभावः । विनम्यविनमय्येत्यन्तर्भावि तण्यर्थेद्रष्टव्यम् ॥ १०८ ॥

प्रभुत्वभूम्नानुगृहाणवानवा प्रणाममात्राधिगमेपिकःश्रमः ॥ कृपाचताङ्कूरलतासिमांप्रति क्वदृष्टिदानेतवबद्धमुष्टिता ॥ १०९ ॥

प्रभुत्वेति । मज्जीवितस्यत्वदधीनत्वान्मांप्रतितवप्रभुत्वसद्भावात्प्रभु

त्वस्यप्रभुत्वयशक्तेर्नूनंनावहत्वे नअनुगृहाणममानुग्रहङ्कुरु । अथवामांअनुगृहाण । परंप्रणाममात्राधिगमेपिमदीयकेवलप्रणामाङ्गीकारेपितवकःश्रमःप्रयासःप्रत्नु स्वेच्छयासेवककदाचिदनुगृह्णातिकदाचिन्नेतियद्यप्यस्तितथापिप्रणाममङ्गीकरोतित्वन्तुनेतिमयाकिमपराद्धमितिकथयेतिभावः । त्वंयाचतीअभिलाषपूरणसमर्थत्वात्कल्पलतासीतिकिंमां प्रतिदृष्टिदानेपिअवलोकनमात्रेपितववद्धमुष्टितारूपणत्वंइतिकापितुमयमेतन्मिथोविरुद्धम् । कटाक्षावलोकनमात्रेणमामनुगृहाणेतिभावः ॥ १०९ ॥

स्मरेषुमाथंसहसेमृदुःकथं हृदिद्रढीयःकुचसंवृतेतव निपत्यवैसारिणकेतनस्यवा व्रजन्तिवाणाविमुखोत्पत्तिष्णुताम् ॥ ११० ॥

स्मरेष्विति । हेभैमीमृदुरतिमृद्वीत्वंस्मरेषुमाथङ्कामवाणव्यथाङ्कथंसहसिकामपीडाअसह्येतिकृत्वाअतिमानव्यर्थेतिभावः वापूर्वपक्षापरितोषे । अथवावैसारिणकेतनस्यमकरध्वजस्यकामस्यवाणास्तवद्रढीयांसौदृढतरौकुचौताभ्यांसंवृतेहृदिनिपत्यलगित्वातत्रानिमज्यैवविमुखाश्चतेउत्पत्तिष्णवश्चतेषांभावस्तत्तातांव्रजन्तिपराङ्मुखोत्पतनशीलत्वम्व्रजन्ति । पाषाणादौवाणोनिपत्यतत्रानिमज्यैवपराङ्मुखस्तस्मादुच्छलतिसद्वत् । तवकामवाणपीडानभवतीतियुक्तमितिभावः । कुतसक्ताहस्यवाणपीडानभवति । मीनोवैसारिणोवडजइत्यमरः । विसारिणोमत्स्यइतिश्चण् ॥ ११० ॥

स्मितस्यसंभावयसृक्किणाकणान्विधेहिलीलाञ्चलमञ्चलंभ्रुवः ॥ अपाङ्गरथ्यापथिकीञ्चहेलया प्रसद्यसन्धेहिदृशंममोपरि ॥ १११ ॥

स्मितस्येति । हेभैमित्वंसृक्किणाओष्ठप्रान्तेन स्मितस्यईषद्धासस्यकणान्तेशान्संभावयधन्यान्कुरु । तथाभ्रुवोञ्चलंप्रान्तंलीलयाविलासेनचलन्विधेहि । तथाअपाङ्गरथ्यायाःनेत्रप्रान्तवर्गस्यपथिकीनित्यचारिणींदृशञ्चप्रसद्यप्रसन्नीभूयहेलयाविलासेनममोपरिसन्धेहि । स्मितभ्रूचलनपूर्वंप्रसन्नामांसविलासङ्कृपाकटाक्षैर्विलोकयेतिभावः । पथिकीपथकन्षित्वान्ङीप् उपर्युपरिष्टादित्यतसर्थत्वादुपरियोगेषष्ठ्यतसर्थेतिममेतिषष्ठी ॥ १११ ॥

**समापयप्रावृषमश्रुविप्रुषां स्मितेनविश्राणयकौमुदीमुदः ॥ दृशावितःखेलतुखञ्जनद्वयी विकासिपङ्केरुहमस्तुतेमुखम् ॥ ११२ ॥**

समापयेति । त्वं अविच्छिन्नस्रावित्वादश्रुविप्रुषांअश्रुबिन्दूनांप्रावृषंसमापय । तथाअत्युज्ज्वलत्वादत्याह्लादकत्वाच्चस्मितेनकौमुदीमुदःचन्द्रसंबन्धिनोहर्षान् विश्राणयसद्यः वितर तथातिचञ्चलत्वात्खञ्जनाकारत्वाच्चदृशावेवखञ्जनद्वयीइतोस्मल्लग्नेऽस्मिञ्जनेखेलतु समोपरिक्रीडतु । तथालक्ष्मीस्थानत्वाद्वर्तुलत्वाच्चतेमुखंविकासिविकस्वरंपङ्केरुहंकमलमस्तुभवतु । रोदनन्त्यक्त्वाप्रसन्नीभूत्वास्मितपूर्वककटाक्षविलोकनपूर्वकंकिंचिद्ब्रूहीतिभावः । प्रावृषिगतायांशरदिकौमुदीमुद्खञ्जनक्रीडाकमलविकासश्चभवति ॥ ११२ ॥

**सुधारसोद्वेलनकेलिनक्षर स्रजासृजान्तर्ममकर्णकूपयोः ॥ दृशौमदीयेमदिराक्षिकारय स्मितश्रियापायसपारणाविधिम् ॥ ११३ ॥**

सुधेति । हेभैमि ममकर्णकूपयोरन्तर्मध्येअक्षरस्रजावर्णमालयावाक्यरचनयाकृत्वा सुधारस्यामृतरसस्यवद्वेलनान्निर्मर्यादाकेलिःक्रीडातांसृजरचय । अतिमधुरवागमृतपूर्णाविधेहि । किमपिब्रूहीतिभावः । कूपशब्दोत्रजलाशयाभिप्रायः । ततश्चवाप्यादौस्वादूदकेनयथातीरमतिक्रम्यतेतथाक्रीडाक्रियतेइतिचोक्तिः मदयतइतिमदिरेउन्मादजनकेअक्षिणीयस्या.तत्संबुद्धिर्हेमदिराक्षि मदीयेदृशौस्वीयस्मितश्रियाकृत्वापायसेनदुग्धसंस्कृतपायसेनकृत्वायापारणाउपवासानन्तरंभोजनन्तस्यविधिङ्कारय । स्मितस्यशुक्लत्वात्पायसत्वम् । उपोषितस्यपायसपारणायथातृप्तिस्तथात्वदीयस्मितशोभावलोकनेनसन्नेत्रयोरितिस्मितपूर्वकंकिमपिब्रूहि । मामनुगृहाणेतिभावः । उद्गतोवेलामुद्वेलांअत्यादयइतिसमासः । तस्यकरणमुद्वेलनम् । मदिरेत्यत्रइषिमदीत्यादिनाऔणादिकःकिरन्प्रत्ययः। रामायणेनायौमदिरलोचनाः । दृशौदृक्कोरन्यतरस्यामित्यणौकर्तुर्णौकर्मत्वम् । परमान्नन्तुपायसमित्यमरः संस्कृतार्थेऽण् ॥ ११३ ॥

ममासनार्धंभवमण्डनंभव प्रियेमदुत्सङ्गविभूषणं भव ॥ प्रसादप्रमादालपमङ्गमृष्यतां विनाममो रःकृतमन्तआसनम् ॥ ११४ ॥

ममेति । हेप्रियेममासनार्धेसिंहासनार्धेमण्डनंअलङ्करणंभव । आसनस्थेत्यर्थात् । एवंननअंविचार्यमयैतदुक्तङ्किंतुत्वंमदुत्सङ्गविभूषणंभवममाङ्कमण्डयेत्यर्थः । अङ्कापेक्षयाअर्धासनस्यनिकृष्टत्वात्तवचातिप्रियत्वान्ममाङ्कएवउपवेशनयोग्यंइतिभावः । भोअङ्ग अहंइतिएतदुन्मादुन्मादवशादालपम् । त्वयामृष्यताङ्क्षम्यताम् । यतोममउरोविनाकृतमत्अङ्गन्तवासनंभवितुंयुक्तोअपितुनकिमपि । अङ्कापेक्षयापिवक्षसउत्कृष्टत्वात्तत्रैवोपविश्यतामितिभावः । क्षमास्तोपराध.क्षन्तुमर्हः। अङ्गेतिकोमल । सम्बोधने । क्षमादुन्ममितिचपाठः। मतुन्मादुन्मादितिसंज्ञमेद्विरुक्तिः ११४

अधीतपञ्चाशुगबाणवञ्चनौ स्थितामदन्तर्वहिरेषिचेदुरः ॥ स्मराशुगेभ्योहृदयन्विभेतुन प्रविश्यतत्वन्मयसंपुटेमम ॥ ११५ ॥

अधीतेति । हेकामपीडायाअदर्शनादधीताऽभ्यस्तापञ्चाशुगस्यकामस्यवाणवञ्चनायया तत्संबुद्धिः । मदन्त.मन्मनसिस्थितात्वंयदिदेशेपिउरथेत् एषिप्राप्नोषितर्हिकृतमदनवाणवञ्चनायास्तवोमयत्रवर्तमानत्वात्त्वन्मयसम्पुटेत्वद्रूपेसम्पुटेप्रविश्य ममहृदयंस्मराशुगेभ्योनविभेतु । चिरकालंमनसिस्थितापिहृदयंवहिश्चेदा.लिङ्गसितर्हित्वदालिङ्गनवशान्मम क.मज्वरोपिशान्तिमुपेष्यतीतिभावः ॥ ११५ ॥

परिष्वजस्वानवकाशवाणता स्मरस्यलग्नेहृदयद्वयेस्तुनौ ॥ दृढामयत्वत्कुचयोःकठोरयो रुरस्तटीयंपरिचारिकोचिता ॥ ११६ ॥

परीति । हेभैमीत्वंमांपरिष्वजस्वआलिङ्गयकिमितिनौआवयोर्गाढालिङ्गनवशान्निरन्तरंमिथोलग्नेमिलिते हृदयद्वयेवेध्येस्मरस्यानवकाशवाणतानिरवकाशवाणत्वंअस्तुनिविडसंलग्नेवस्तुद्वयेह्यवकाशलेशोपिनलभ्यतइत्यर्थः । ममदृढातिकठोरविशालाचेयमुरस्तटीवक्षस्तटीकठोरयोस्त्व

रकुचयोः परिचारिकासेवाकर्त्रीसमुचिता । तुल्ययोरेवसेव्यसेवकभावोघट तइत्यर्थः । आलिङ्गनयोग्यत्वमेवसूचितम् । द्वयोरपियथाकामपीडानअ वलितयाविधेयम् । गाढालिङ्गनदेहीतिभावः । परिव्रजस्वेतिपरिनिवि श्यइतिषत्वम् ॥ ११६ ॥

तवाधरायस्पृहयामियन्मधु स्रवैःश्रवःसाक्षिक माक्षिकागिरः ॥ अधित्यकासुस्तनयोस्तनोतुते ममेन्दुलेखाभ्युदयाद्भुतंनखः ॥ ११७ ॥

तवेति । हेभैमितस्मैअधरायस्पृहयामित्वदीयमधुरमभिलषामि ।तव गिरोयन्मधुस्रवैः यस्यअधरस्यमधुरनिर्झरैःकृत्वाश्रवसीकर्णौसाक्षिणौयस्य तच्छ्रवःसाक्षिकंमाक्षिकंमधुयासुएवंभूताःसन्ति ओष्ठस्यामृतरूपत्वात्तदुत्प न्नावाचःकर्णयोरमृतरूपाभवन्तीत्यर्थः । तथाममनखस्तेस्तनयोरधित्य कासुऊर्ध्वदेशेषुइन्दुलेखायाअभ्युदयउदयस्तेनयदद्भुतंआश्चर्यन्तत्तनोतुक रोतु । नखक्षतस्यार्धत्वाच्चन्द्रकलाकारत्वाच्चन्द्रोयमचन्द्रकलोदितेतिस ख्यादेर्बुद्धिर्भवत्वित्यर्थः । ओष्ठपाननखक्षतेच्छुरस्मीतिभावः । अधित्य केतिस्तनयोरुदयशैलत्वंचन्द्रकलायास्तत्रोदयात् । कलोदयसमयेरक्ताभ वति । अधरायस्पृहेरीप्सितइतिसंप्रदानत्वम् ॥ ११७ ॥

नवतंसेमन्मथनाटिकोकथं प्रकाशरोमावलिसूत्र धारिणी ॥ तवाङ्गहारेरुचिमेतिनायकः शिखाम णिश्चद्विजराड्विदूषकः ॥ ११८ ॥

नेति । हेजैमिप्रकर्षेणकाशतेशोभतेप्रकाशाशोभमानारोमावलिरेव सूत्रं धारयत्येवंशीलात्वमन्मथनाटिकाकामस्यउन्मादयित्रीकथंनवतंसे अपितु कामंहर्षङ्करोषिअङ्गसम्बोधनेमवहारेमुक्तावलिहारेनायकोमध्यमणिःरुचिं एतिदेदीप्यते । अपरंउज्ज्वलत्वाद्वर्तुलतरत्वादाह्लादकत्वाच्चद्विजराड् विदूषकश्चन्द्रतिरस्करणशीलः शिखामणिर्मुकुटमणिःशिखायांचूडामणिर पिरुचिमेति । द्विजराड्विदूषकत्वंउभयोरपिवा । तवविलोकनान्मदीयः कामःसहर्षोभवतिवर्धतेतरामितिभावः । नाटिकापक्षेप्रकाशरोमावलिरेसू त्रधारोनान्दीश्लोकानन्तरंसञ्चारीकथाप्रस्तावकःपात्रविशेषः सअस्यअस्ती

तथातवअङ्कस्थारेअङ्कविक्षेपनृत्येनायकःसभापतिःरुचिरांप्रीतिमेति । स याद्विजराड्ब्राह्मणएवविदूषकस्वपरिहासकंमित्रंरमिमेति । शिखायांसखि रस्यविदूषकस्यववासः । अङ्कहाङ्कविक्षेपवृत्यनायकस्यरःरो । पीठमर्दो विटश्चैवविदूषकइतित्रिधा । हासकृच्च विदूषकइतिस्मालङ्कारिकाः ॥११८॥

शुभाष्टवर्गस्त्वदनङ्गजन्मन स्तवाधरेलिख्यतयत्र लेखया ॥ मदीयदन्तक्षतराजिरञ्जनैः सञ्जूर्जता मर्जतुविम्बपाटलः ॥ ११९ ॥

शुन्नेति । हेनैमितवानङ्गस्यकामस्यजन्मनःउत्पत्तेःशुभसूचकःअष्टवर्गः ज्योतिःशास्त्रेप्रसिद्धः यलेखयायत्रतवाधरेथलिख्यतज्योतिर्विदाब्रह्मणैवे त्यर्थः । विम्बफलवत्पाटलवर्णःसःअधरःमदीयायादन्तक्षतराजिस्तयाकृ त्वारञ्जनानितैःकृत्वाभूर्जतांअर्जतु । नाङ्गजन्मानङ्गजन्मामानस.पुत्रस्त स्योऽमत्वात्तज्जन्मपत्रिकाज्योतिर्विदाभूर्जपत्रेएवलिख्यते । पुत्रेजातेज्यो तिर्विदातस्यजन्मकालीनःशुभाष्टवर्गोलिख्यते । त्वदोष्ठोष्ठाधररेखावान् । दन्तक्षतसुन्दरोभूर्जपत्रेणउपमीयते । अष्टकवर्गस्तुज्योतिःशास्त्राज्ज्ञात व्यः । लेखयालेखामिरित्यर्थः ॥ ११९ ॥

गिरानुकम्पस्वदयस्वचुम्बनैः प्रसीदशुश्रूषयितुंम याकुचौ ॥ निशेवचान्द्रस्यकरोत्करस्यय न्मम त्वमेकासिनलस्यजीवितम् ॥ १२० ॥

गिरेति । त्वङ्गिराऽनुकम्पस्वअनुगृहाण । चुम्बनैर्दयस्वानुकम्पस्व । मयाप्रयोज्येनकृत्वाकुचौशुश्रूषयितुप्रसीद । यद्यस्मात्त्वमेकाकेवलानल स्यममजीवितमसि । कस्यकेवचान्द्रस्यकरोत्करस्यकिरणसमूहस्यनिशेवरा त्रिरिव । तस्यजीवनंनान्यत्तथेतिपूर्ववत् । त्वदधीनजीवितएवाहमग्न स्वनादिनामामनुगृहाणअन्यथाजीवनमेवनभविष्यतीतिभावः ॥ १२० ॥

मुनिर्यथात्मानमथप्रबोधवान् प्रकाशयन्तंस्वम सावबुध्यत ॥ अपिप्रपन्नांप्रकृतिंविलोक्यता म वाप्तसंस्कारतयासृजद्गिरः ॥ १२१ ॥

मुनिरिति । अथप्रबोधवान्गतभ्रान्तिरसौनलःनलोहमितिनलत्वेनप्र

काशयन्तङ्कथयन्तंस्वमात्मानंअबुध्यतजानातिस्म । आत्मानङ्कथयतामया दूतधर्मःपरित्यक्तःअनुचितङ्कृतमित्यजानादित्यर्थः । नलस्वकथनमात्रेण ताञ्चजैमींप्रकृतिंरोदनात्पूर्वावस्थाम्प्रपन्नांप्राप्तांविलोक्यजातबोधत्वाद्दू तोहमितिअवाप्तसंस्कारतयाप्राप्तबुद्धितया वक्ष्यमाणागिरःअप्यसृजत् । नलस्त्वनिश्चयेनत्यक्तरोदनान्तांदृष्ट्वात्मानमेवोद्दिश्यदूतधर्मोचितनाङ्क स्मेतिभावः । नलस्त्वनिश्चयेनगतमोहत्वन्तेनप्राप्तबोधयाकृत्वाप्रकृतिप्रप न्नाङ्गतिवान्वयः । उद्बुध्यदूत्यसंस्कारत्वेनप्राप्तामागतान्तांदूतधर्मयु क्तांस्वामेवप्रकृतिम्विलोक्यदूतधर्मोचितमेवाबोधदितिवा । मुनिर्यथाय तिरिव । वेदान्ताभ्यासेनशमदमादिद्वाराप्रबोधवान् संसारविनाशसम र्थःप्रकृष्टज्ञानयुक्तोयतिःस्वप्रकाशंसच्चिदानन्दैकरसं आत्मानंअहंब्रह्मास्मी तिबुध्यतेबुद्धाचउद्बुद्धजन्मान्तरीयसंस्कारतयाप्राप्तब्रह्मज्ञानतयावा तां प्रसिद्धांसंसारजनिकासत्त्वरजस्तमःसाम्यावस्थारूपांप्रकृतिमनादिमविद्यां प्रकर्षेणापन्नांपृथक्कृतांज्ञात्वाऽहंमनुरभवंसूर्यश्चाहङ्कक्षीवान् ऋषिरस्मि विप्रः । अहङ्कुत्समार्जुनेयंऋञ्जेहङ्कविरुशनापश्यतामेत्यादिवामदेव ऋषि वदित्यर्थः । मुनिरप्यात्मानंप्रकृतिञ्चविवेकेनज्ञात्वामुक्तःप्रबोधवान्संसा रविनाशसमर्थःप्रकृष्टज्ञानयुक्तोयति सन्वागादिदिव्यव्यवहारान्सृजति मुञ्चतीतिकेचित् ॥ १२१ ॥

**अयेमयात्माकिमनन्हुतीकृतः किमत्रमन्तासतुमां शतक्रतुः ॥ पुरःस्वभक्त्याथनमन्ह्रियाविलो वि लोकिताहेनतदिङ्गितान्यपि ॥ १२२ ॥**

अयेति । मयानलोहमितिआत्माकिमितिअनिह्नुतीकृतःप्रकटीकृ तः । अयेखेदेमहदनुचितङ्कृतमित्यर्थः । अत्रआत्मप्रकटनविषयेशत क्रतुस्तुपुनःमांकिंप्रकारंमन्ताज्ञास्यति । ममअसाधुत्वमेवब्रूयादित्य र्थः । शापदानसामर्थ्यद्योतनायशतक्रतुरितिपदम् । पुरःपूर्वस्वभक्त्यान मन्सन्अथपश्चाद्धियाअकृतकार्यत्वाल्लज्जयाआविलःकलुषितःसन् अति त्तरांनमन्नित्यर्थः । तदिङ्गितान्यपिकोपाविष्टस्येन्द्रस्यभ्रूभङ्गादीन्यपिनवि लोकिताहेनविलोकयिष्यामि । प्रसादस्त्वानिदूरतः । अन्योप्यपराधी स्वामिनःकोपचिन्हंभ्रूकुट्यादिनाविलोकयति ॥ १२२ ॥

स्वनामयन्नाममुधाभ्यधामहो महेन्द्रकार्यं महदेत दुज्झितम् ॥ हनूमदाद्यैर्यशसामयापुन र्द्विषांहसै र्दूत्यपथः सितीकृतः ॥ १२३ ॥

स्वनामेति । नामप्राकाश्येहेदेवाः अहंयत्स्वनामसुधाव्यर्थमेवाभ्यधा यितन्महन्महेन्द्रकार्यमुज्झितन्त्यक्तंविनाशितमित्यर्थः । अहोमहदनु चितमेतत् । अनुचितत्वमेवाह । हनूमदाद्यैः श्रीरामादिदूत्यकारिभिः दूत्यपथःयशसाकीर्त्यासितीकृतःकार्यस्यसाधितत्वात्मयापुनर्द्विषांहसैर्हा स्यैःसितीकृतः । तैस्तुयशोलब्धंमयात्विन्द्रादिदूत्यार्थंकृतःस्वीयमेवदूत्यकृत वानित्यादिवैरिहास्यरूपमयशोलब्धम् । शितीकृतइतिपाठेशितीकृतः श्यामीकृतश्चेतिव्याख्येयम् ॥ १२३ ॥

धियात्मनस्तावदचारुनाचरं परस्तुतद्वेदसयद्वदि ष्यति ॥ जनावनायोद्यमिनञ्जनार्दनङ्क्षयेजग ज्जीवपिबंशिवंवदन् ॥ १२४ ॥

धियेति । अहंआत्मनोधियाबुद्ध्यातावदचारुइन्द्रादिप्रतिकूलंनाचरं नकृतवान् किंतून्मादादेवस्वनामकथितमित्यर्थः । सःप्रसिद्धःपरोन्योदुर्ज नोवातुपुनर्यद्वदिष्यतितदहंवेद । दुर्जनोहियथावृत्तंनवदतिकिन्तुविप रीतमेववदतीतिज्ञातमित्यर्थः । तदेवविशेषणेनाह । किंभूतःपरःजना नामवनायपालनायउद्यमिनङ्कृतोद्यमञ्जनार्दयतिपीडयतीत्येवंशीलंव दत्तथाक्षयेप्रलयेजगज्जीवपिबञ्जरप्राणहरंमहादेवंशिवंमङ्गलंवदत् । अ नर्गलोलोकइत्यर्थः । लोकोक्तेर्निवारणेकश्चनप्रतीकारोनास्तीतिभावः । नन्द्यादित्वाज्जनार्दनः । जीवपिबंपाघ्रादिनाशः ॥ १२४ ॥

स्फुटत्यदःकिंहृदयन्त्रपाभरा द्यदस्पशुद्धिर्विबुधै र्विबुध्यताम् ॥ वदन्तुतेतत्त्वमिदन्तुदन्तुर जना ननेकःकरमर्पयिष्यति ॥ १२५ ॥

स्फुटतीति । आत्मप्रकाशनादकृतकार्यत्वाच्चयस्त्रपाभरोलज्जातिशयस्त स्माददोहृदयङ्किमर्थंस्फुटति । यद्यस्माद्धिबुधैर्देवैरस्यहृदयशुद्धिर्विबुध्य ताज्ञायतां । तुपुनःतेविबुधाःइदन्दन्तुरंविषमन्तत्त्वंमयाबुद्धिपूर्वंकृतंअनु

द्विपूर्वकस्त्वेतिविदन्तु । लोकाजानन्तुवामाजानन्तु । अत्रलौकिकमाभ णकमाह । जनाननेकःकरंहस्तंअर्पपिष्यति । त्वयाएवंनवक्तव्यमितिमु खहस्तदानेनलोकंप्रतिषेद्धुमुक्तःशक्रोत्यपितुनकोपि । लोकोयत्किञ्चिद्व दतुनामेतिभावः। हृदयस्फोटनाज्ञावेपिलेदेवास्तत्वंयथार्थंजानन्तु। अन्य दपिसन्दिग्धंप्रमेयंपण्डितेनपरीक्ष्यतत्वतोनिर्णीयतेनतुसामान्यलोकैः १२५

**ममभ्रमश्चेतनयानयाफली बलीयसालोपिचसैवबे धसा नवस्तुदैवस्वरसाद्विनश्वरं सुरेश्वरोपिप्रति कर्तुमीश्वरः ॥ १२६ ॥**

ममेति । अनयाचेतनयादूतोहमितिदूतत्वप्रतिपत्याकृत्वाममभ्रमः दूत लक्षणः फलीसफलोजातःस्यात् बलीयसावेधसादैवेनचसैवचेतनाअलोपि नाशिता । दैववशाद्भ्रान्त्यात्मकथनात्अभूसोव्यर्थएवजातइत्यर्थः ॥ चेत नारक्षणेत्वयायत्नःकिमितिनकृतइत्यतआह । स्वश्चासौरसश्चस्वरसःस्वे च्छादैवस्यस्वरसात्स्वेच्छयाविनश्वरंविनाशितंवस्तुप्रतिकर्तुञ्चिकित्सितुंसुरे श्वरःशक्रोपिईश्वरोनसमर्थोनकिंपुनःरन्यः । मयाऽबुद्धिपूर्वमेवआत्मप्र काशनकृतमितिभावः । तस्मात्ममापराधोनास्तीत्यर्थः ॥ १२६ ॥

**इतिस्वयंमोहमहोर्मिनिर्मितं प्रकाशनंशोचतिनै षधेनिजम् ॥ तथाव्यथामग्नतदुद्दिधीर्षया दया लुरागाल्लघुहेमहंसराट् ॥ १२७ ॥**

इतीति । निषधेश्वरेनलेस्वयमात्मनैवमोहमहोर्मिनिर्मितंभ्रान्तिबाहुल्य वशात्कृतंनिजंस्वीयंप्रकाशनंप्रकटनंइतिपूर्वोक्तप्रकारेणशोचतिनिन्दतिस तितद्विषयेपश्चात्तापङ्कुर्वतिसति दयालुःहेमहंसानांराजा तथानिर्वचनीया व्यथापीडातस्यांमग्नश्चासौसचतस्यउद्दिधीर्षयाउद्धरणेच्छयालघुशीघ्रं अ गात्नलम्प्रतिप्राप्तवान् ॥ १२७ ॥

**नलंसतत्पक्षरवोर्ध्ववीक्षणं सएषपक्षीतिभणन्त मभ्यधात् ॥ नयोदयैनामतिमानिराज्ञता मसून्वि हातेंयमतःपरंपरम् ॥ १२८ ॥**

नलमिति । सहंसःतस्यहंसस्यपक्षरवःपक्षवातभवःशब्दःतेनकिमेतदा

यातीतिबुद्ध्याऊर्ध्ववीक्षणंउपरिविलोकनंअनन्तरञ्च इतिभणन्तंनलम स्यधात् । इतिकिम् । कृतोमहोपकारःसएवएपपक्षीहंसइति । हेअद्य निष्कृपनलएनांभैमींनिराशतांआशारहितांअतितरांमानयमास्मनैषीः । स्वप्रकाशनकृतस्वनिन्दयामय्यस्याअनुरागोनविद्यतइतिप्रतीत्याएषानिरा शाभविष्यतितथामाकार्षीरितिभावः । अतेरुपसर्गत्वात्तेप्राग्धातोरितिनि यमात्पूर्वमेवप्रयोगस्यऔचित्येपिमहाकविप्रयोगाद्व्यवहितानामपिप्रयोगः साधुः । आविश्वतुषोऽजवत् । विलोलजिह्वायुगलीढोभयसृक्कभागमित्या दय प्रयोगा. । अतिशयितामाशोभाराज्यलक्ष्मीर्वायस्याः इयमित्यस्यविशे षणं एनामनिराशतांनयइत्यन्वयः । हेअतिमअतिशयितामाशोभाराज्यल क्ष्मीर्वायस्येति अतिसुन्दरत्वाद्बहुधनत्वाच्चत्वमेवअस्यायोग्योनान्यइतिनू चितमितिवा । अतिक्रान्तामामतिमा सुन्दरीकेवलंअत परंप्राणांस्त्यक्ष्य तित्वद्विनाएवंविधंसुन्दरंवस्तुवृथाएवयास्यतीतिसूचितम् ॥ १२८ ॥

सुरेषुपश्यन्निजसापराधता मियत्प्रयस्यापितद
र्थसिद्धये ॥ नकूटसाक्षीभवनोचितोभवा न्सतां
हिचेतःशुचितात्मसाक्षिका ॥ १२९ ॥

सुरेष्विति । हेनलभवान्तेषान्देवानामर्थसिद्धयेप्रयोजनसिद्धयेइयदेता वत्प्रयस्यापिबहुतरंप्रयासङ्कृत्वेत्यर्थः । सुरेषुदेवविषयेअनुचितमेतन्मया कृतमितिनिजसापराधतांस्वीयमनुचितकारित्वंपश्यन् जानन्कूटसाक्षीभ वनोचितोनभवति । कूटोऽसत्यश्चासौसाक्षी सत्येपिपरकीयेऽर्थेऽलीकं भाषतेसकूटसाक्षीअकूटसाक्षिणः कूटसाक्षिणोयद्भवनन्तत्कूटसाक्षिभवनन्त दुचितोनभवतीत्यर्थः । हियस्मात्सतांचेतःशुचिताआत्मैवसाक्षीयस्यामेवं विधानतुपरसाक्षिकीमयानिष्कपटन्दूत्यंन्कृतमितित्वन्तावज्जानासि । स न्तश्चालीकंभाषितुमपिस्वचेतसैवलज्जन्तेतवचसत्यत्वंइ्लोकत्रयप्रसिद्धन्दे वाअपिसर्वसाक्षित्वात्स्वयमेवत्वदीयं शुद्धत्वंज्ञास्यन्तिकिमनेनलोकेनेति भावः । आत्मसाक्षिकेतिशेषाद्विभाषेतिकप् ॥ १२९ ॥

इतीरिणापृच्छ्यनलन्विदर्भजा मपिप्रयातेनखग
गेनसान्त्वितः ॥ मृदुर्वभाषेभगिनीन्दमस्वसुः प्र
णम्यचित्तेनहरित्पतीन्नृपः ॥ १३० ॥

इतीति । सनृपः चित्तेन हरित्पतीन्प्रणम्य अतः परं मनकरणीयं किञ्चिदपि नावशिष्टम् । क्षम्यताम् इति मनसैव देवान्नमस्कृत्य मृदुः सदयः सन् दमस्वसुर्भ गिर्नीषजाषे किंभूत इति पूर्वोक्तं हरिणाश्रुवाणेन नलम्बि सर्गे जाम पिआपृच्छ प्रयातेन यातुमारब्धेन खगेन हंसेनान्वितः । प्रयातेनेत्यादिकर्मणिक्तः कर्तरि चेति क्तः ॥ १३० ॥

दुदेऽपि तुभ्यं कियतीः कदर्थनाः सुरेषु रागप्रसवोऽव केशिनीः ॥ अदम्भदूत्येन भजन्तु वा दया न्दिशन्तु वा दण्डममी ममागसा ॥ १३१ ॥

दुदेपीति । हे भैमि अहन्तुभ्यं अपि अतिनिर्दयदूत्यकरणजनिताः कियतीः कतिसङ्ख्याकाः कदर्थनाः पीडाः दुदे ददामि । अतः परन्तद्विषयं किञ्चि पि न वदिष्यामीत्यर्थः । यतः सुरेषु रागोनुरागः तल्लक्षणस्तस्य वा प्रसवोङ्कुरः उत्पत्तिर्वा । तस्या वकेशिनी निष्फला अनुरागानुत्यादिका इत्यर्थः । उद्यमः कार्यजनकश्चेद्भवति तर्हि दुःखमपि दातुमुचितम् । प्रकृते एतावति दूत्ये कृते पि तवतेषु अनुरागाङ्कुरोपि नोत्पन्नस्तस्मात्तव पीडाकरमतः परं किञ्चिदपि न व दिष्यामीति भावः । यत्राङ्कुरोत्पत्तिरपि नो देति तत्र फलाशाकुतस्त्या । तव पीडादानेन ममापि पीडाभवतीति अपिशब्दार्थः । गर्ह्यायां वापि रनुचितमे तदित्यर्थः । एवं सति अमी देवाः अदम्भदूत्येन निष्कपटदूत्येन कृत्वा दयां स कृपां वा भजन्तु कुर्वन्तु । कार्यासाधनरूपेण आगसा अस्मदीयं कार्यं न्विना इयस्वीयं कृतमिति अपराधेन दण्डं शासनं वा दिशन्तु कुर्वन्तु । तत्कृतं दण्ड मपि सहिष्ये परन्तु त्वं दुःखं दातुं नोत्सहे इति भावः ॥ १३१ ॥

अयोगजामन्वभवं न वेदनां हिताय मेभूदियमुन्म दिष्णुता ॥ उदेति दोषादपि दोषलाघवङ्क्षतत्व मज्ञानवशादिवैनसः ॥ १३२ ॥

अयोगजामिति । इयं उन्मदिष्णुता मेमह्यं हिताय अभूत् यतोहं अयोग जाम्विरहजनितां वेदनां पीडां नान्वभवं उन्मादेन सुखवशात् मयाविरहपी डा विस्मृतातस्मादियमुन्मादता ममगुणायैव जातेति भावः । अथवा नयोगः अयोगः तज्जां संसारबन्धिनीं पीडां नान्वभवं किन्तु परमानन्दमन्वभवमित्य

र्थः । तत्रार्थान्तरन्तरन्यासंसोपमानमेवाह । दोषादपिदोषमूलादेकस्माद पिहेतोःदोषमूलस्याप्यन्यस्यलाघवमल्पत्वलक्षणोगुणउदेति । कस्मात्कस्य किमिवअज्ञानवशादज्ञानलक्षणाद्दोषमूलस्यापिएनसः पातकस्यअल्पत्वमि व अल्पत्वलक्षणोगुणोभवति । ज्ञानपूर्वङ्कृतेब्रह्महत्यादौकामात्तद्द्विगुणं भवेदितिबहुप्रायश्चित्ताम्नानात्पातकगौरवमवगम्यते । अज्ञानकृतेलघुप्रा यश्चित्ताम्नानात्पातकलाघवमिति अज्ञानलक्षणाद्दोषाद्दोषमूलस्यपातकस्य लाघवलक्षणोगुणोयथालभ्यतेतथोन्मादलक्षणाद्दोषाद्विरहवेदनादोषस्यला घवलक्षणोगुणोमयापिलब्धइतिभावः । उन्मादितायाक्रियन्तोपिदु खस्य दोषत्वसूचनार्थंस्वेदनापदं । नेतिहितयोगेचतुर्थी । भावप्रत्ययान्तस्यगुण वाचिनःशब्दस्यपूरणगुणेतिसमासनिषेधाद्दोषलाघवमित्यत्रसमासनिषेधा द्दोषलाघवमित्यत्रसमासाप्राप्तेस्तदशिष्यंसञ्ज्ञाप्रमाणत्वादितिज्ञापकाद्बु द्धसमान्याङ्कुरणपाटवमित्यादिमहाकविप्रयोगदर्शनान्निषेधस्यानित्यत्वा द्विनासोद्रष्टव्यः । एवमेवमादिषुप्रयोगेषुज्ञातव्यम् ॥ १३२ ॥

तवेत्ययोगःस्मरपावकोपिमे कदर्थनात्यर्थतया गमद्दयाम् ॥ प्रकाशमुन्माद्ययदस्यकारय न्मयात्म नस्त्वोमनुकम्पतेस्मसः ॥ १३३ ॥

तवेति । तवत्वत्संबन्धीत्वद्विषयमन्निष्ठःसप्रतिद्वः पूर्वङ्कृतपीडःअयो गोवियोगस्तज्जन्यः स्मरपावकःममैवकदर्थनात्यर्थतयापीडाबाहुल्येनापि अतिपीडाकारित्वेनापिइतिपूर्वोक्तप्रकारेणमेममदयामगमत्ऋकारेत्यर्थः । इतिकिं । यद्यस्माद्यत्वद्विलापसमयेमामुन्माद्यउन्मादंप्राप्यमयाप्रयोज्ये नात्मनोममैवनलोहमितिप्रकाशंप्राकट्यङ्कारयन्त्वामनुकम्पतेस्मसैवतेस्म तेनममैवकपाकृतेत्यर्थः । त्वद्विषयोवियोगाग्निर्यदिममातिपीडांनाकरि ष्यत्तदोन्मादाभावान्मयात्मप्रकाशनमपिनाकरिष्यत्ततश्चमत्प्राप्तिविघात निश्चयात्त्वन्मरणमेवस्यात् त्वद्वियोगान्ममापिमरणंस्यात् तस्मात्पीडयात त्यादाधिक्यान्मयात्मनः प्राकट्येकृतेमत्प्राप्तिनिश्चयात्त्वयाप्राणारक्षितास्त स्माच्चमत्प्राणाअपितेनरक्षिताइतिसस्मराग्निर्ममदयामेवचकारेतिभावः । कामाग्निःकदर्थनात्यर्थतयापिमेदयांचकारकुलस्तवेतित्वदीयोहमितित्वां पीडयत्येवत्वत्संबन्धान्मामपिपीडयतिइयन्तस्यकृपैवत्रैमीमामेववरिष्यति

नान्यमितिस्थयात् । योजनान्तरमुपेक्षणीयम् ॥ १३३ ॥

अमीसमीहैकपरास्तत्रामराः स्वकिङ्करंमामपि कर्तुमीशिषे ॥ विचार्यकार्यंसृजमाविधानुमुधा कृतानुतापस्त्वयिपार्ष्णिविग्रहम् ॥ १३४ ॥

अमीइति । अमीअमरास्तवसमीहैकपरास्त्वदभिलाषकेवलंनिष्ठास्त्वामेवाभिलष्यन्तीत्यर्थः । तवतेअनुरागेन त्वंमामपिस्वकिङ्करङ्कर्तु ईशिषेमांस्वीयन्दासङ्कर्तुन्त्वमेवेच्छसीत्यर्थः । ममानुरागोऽप्रयोजकःकिंतुतवमय्यनुरागःप्रयोजकइतिभावः । एवंसतित्वङ्कार्यंकरणीयंविचार्यसृज । विचारेकारणमाह । कृतेयःपश्चात्तापःकृतस्यवायःपश्चात्तापःसत्वयिपार्ष्णेःपाश्चात्त्यस्यवैरिणोविग्रहन्तद्वत्कलहदुःखमितियावत्मुधावृथामाविधान्माकार्षीत् । अविचार्यदेवेवृतेनलमहङ्किंमितिनावरिषमयिवावृतेकस्मनदेवङ्किमितिनावरिषमितिपश्चात्तापस्तव भविष्यतितस्माद्विचार्यैवविधेयकुर्वितिभावः । सन्धिमकृत्वावहिर्निर्गतेविजिगीषौपार्ष्णिग्राहोवैरायते । ईशिषेईशःसइतीट् । माविधाङ्गविष्यतिमाङिलुङ्नमाङ्योगेइत्यडभावः ॥ १३४ ॥

उदासितेनैवमयेदमुच्यते भियोनतेभ्यःस्मरतानवन्नवा ॥ हितंयदिस्यान्मदसुव्ययेनते तदानवप्रेमणिशुद्धिलब्धये ॥ १३५ ॥

उदासितेनेति । हेभैमिउदासितेनैवउदासीनेनैवअमीसमीहैकपराइत्यादिविचार्यैवसृजेत्येवंइदमतमुच्यते तेभ्योदेवेभ्योभयान्नदेवान्वृणुष्वेतिचोच्यते तथास्मरेणाकृतस्वस्यतानवङ्काश्यंन्तस्माद्वास्वंकिङ्करमित्थनेनमांवृणीष्वेतिनोच्यते । भियेत्युभयत्रवायोज्यम् । त्वद्धितार्थमेवविचार्यकुर्विति यथोक्तं नत्वन्येनाशयेनेतिभावः । मयादेवेवृतेसतिमद्वियोगात्त्वन्मृतिरेवस्यादित्याशङ्कायामाह । मदसुव्ययेनमदीयप्राणनाशेनतेतुभ्यंयदिहितंस्यात्तदातर्हिनयिएतावन्तंकालंयस्तवप्रेमानुरागस्तस्मिन्विषये एतदेवप्राणत्यजनमेवतवहितमेवशुद्धिलब्धयेअानृण्यप्राप्तयेस्यान्ममेत्यर्थात् । तवहितायप्राणानपित्यजामीत्यर्थः । मत्प्राणव्ययेनतवहितेजातेअनृणत्वेनममैवहितमित्यर्थः । उद्यसेवदेर्यकियजादित्वात्संप्रसारणम् । उच्यसेइतिचपाठः ॥ १३५ ॥

इतीदृशैर्नैषधसूनृतामृतैर्विदर्भजन्माभृशमुल्ललास सा ॥ ऋतोरधिश्रीःशिशिरानुजन्मनः पिकस्वरैर्दूरविकस्वरैर्यथा ॥ १३६ ॥

इतीति । साविदर्भजा ददेपितुभ्यमितिपूर्वमुक्तैर्नैषधस्यसूनृतामृतैःसत्यवचनामृतैःकृत्वाभृशंउल्ललासहर्षंसाप । नलत्वनिश्चयात्तेनस्वस्मिन्तदनुरागस्यप्रकाशितत्वात्तेभ्योनविमेमीत्युक्तत्वाच्च । ईदृशैरितिपाठेपूर्वोक्तैरितिवक्ष्यमाणप्रकारेणउल्ललासेतियोज्यम् । शिशिरंऋतुमनुलक्षीकृत्यजन्मयस्यऋतोर्वसन्तस्याधिकाश्रीःदूरविकस्वरैरितिविकाशिभिः पिकस्वरै.कोकिलालापैःकृत्वायथाद्दवार्थःउल्लसति । पिकस्वरसाम्येननलवचसांमदनोद्दीपकत्वंसूचितम् । अन्यदपिपीयूषैर्जलैर्वोल्लासस्भवति ॥ १३६ ॥

नलन्तदावेत्यतमाशयेनिजे घृणाम्विगानञ्चमुमोचभीमजा ॥ जुगुप्समानाह्निमनोधृतन्तदा सतीधियादैवतदूतधाविसा ॥ १३७ ॥

तमेवोल्लासमाह । नलमिति । साभीमजातदातन्दूतंनिजेआशयेमनसिनलंअवेत्यनिश्चित्यघृणाञ्जुगुप्साम्विगानंनिन्दाञ्चमुमोच अर्थान्मनस एव । निजाशयेविषयेघृणाम्विगानञ्चमुमोचेतिवायोज्यम् । एतन्मनःस्वभावतोऽप्रशस्तमितिजुगुप्सा अनुचितकारिचैतदितिनिन्दा । यद्वा नलप्राप्त्यनाशयाशरीरेघृणापरपुरुषसम्वादशङ्कयानिन्दा । कीदृशीतदा नलज्ञानावसरेसतीधियापातिव्रत्यबुद्ध्याधृतंनियमितंबलात्कारेणतस्मात्परावर्तितमपीत्यर्थः । दैवदूतंप्रतिधाविमनोह्निनिश्चयेनजुगुप्समानानिन्दती । पतिव्रतयामयानियन्त्रितमपिमनोदूतेधावतीतिजुगुप्समानानिन्दतीत्यर्थः । यद्वाह्नियस्मात्सातदासतीधियाधृतंमनोदेवदूतधाविजुगुप्समानाअजूदितिवायोजना । नलान्यदेवदूतगामित्वादप्रशस्तमेतन्मदीयमन्त.करणमनुचितकारिचेतिपूर्वंयतोजुगुप्सितवतीनिन्दितवतीचनलनिश्चयानन्तरंअत्रानुरक्तंयन्मदीयंमनस्तत्साध्वेवजातमितिजहर्षेतिभावः१३७॥

मनोभुवस्तेभविनांमनःपिता निमज्जयन्नेनासितन्लज्जसे ॥ अमुद्रिसत्पुत्रकथारवयेतिसा स्वि

तासतीमन्मथनिन्दयाधिया ॥ १३८ ॥

मनोभुवइति । अविनांप्राणिनांमनःमनोऽभुवस्तेतवपितायतस्त्वंमनए वजूत्पत्तिस्थानंयस्यतस्मान्मनस्तवपिताहेकामत्वंस्वपितृभूतंतन्मनः ए नसिपरपुरुषाभिलाषजनितेपातकेनिमज्जयन्नलज्जसेकाकुः । त्वयासत्पुत्र कथासद्भिःपुत्रैःपितरःपुण्यान्लोकान्यान्तीतिकथाअमुद्रिसमायिता । नल त्वनिश्चयात्पूर्वेन्धियाबुद्ध्या इतिपूर्वोक्तप्रकारेणमन्मथंनिन्दतीसतीपति व्रताबासाभैमीस्थिता । नलत्वनिश्चयानन्तरङ्कामनिन्दनादुपरतेत्यर्थः १३८॥

प्रसूनमित्यैवतदङ्गवर्णना मसाविशेषात्कतमत्त दित्यभूत् ॥ तदाकदम्बन्तदवर्णिरोमभि र्मुदश्रु णःप्रावृषिहर्षमागतैः ॥ १३९ ॥

प्रसूनमिति । पूर्वंसौकुमार्याद्भैमीशरीरंपुष्पंइति तदङ्गवर्णनासम त्याकारेणाभूत् । परन्तुतत्पुष्पङ्कतमत्किञ्जातीयमितिसावर्णनाविशेषात् विशेषाकारेणभैमीशरीरमेतज्जातीयमितिनाभूत् । तदासदीयनलत्व निश्चयेसमयेमुदश्रुणः प्रावृषिहर्षाश्रुजनितवर्षाकालेहर्षमुद्भिन्नत्वमागतैः प्राप्तैःलोमभिःभैमीरोमभिःकर्तृभिःतद्भैमीशरीरंपुष्पंवाकदम्बपुष्पं अव र्णिकथितम् । कदम्बानिवहप्रावृट्कालेविकसन्ति । भैम्यङ्गमुद्भिन्नैःरोमभिः कदम्बतुल्यमभूदित्यर्थः । हर्षवशादश्रुरोमाञ्चादितस्याजातमितिभावः १३९

मयैवसंम्बोध्यनलंविलापिय त्स्वमाहमद्बुद्धमिद व्यिमृश्यतत् ॥ असावितिभ्रान्तिवशाहमस्वसुः स्वभाषितस्वोद्भ्रमविभ्रमक्रमः ॥ १४० ॥

मयैवेति । स्वेनात्मनाभाषितःस्वोद्भ्रमस्यस्वभ्रान्तेर्विभ्रमाणांविला सानाङ्क्रमोयेनस्वोद्भ्रमविभ्रमयोःक्रमःअयंमयात्माकिमनुकृतीकतव स्यादिश्लोकपञ्चकोक्तोयेनवासः असौनलःदमस्वसुरितिएतादृशींभ्रान्तिं असात्खण्डितवान् । इतिकिं । मयैवनलंसम्बोध्यइयंनतेइत्यादिश्लोक चतुष्टयेननलसम्बोधनान्युक्त्वायद्विलापिविलपितं असौनलस्तदिदंविल पितंविमृश्यविचार्यमद्बुद्धंमयाज्ञातंस्वमात्मानं अयिप्रियेकस्यकृतेविलप्य तइत्यादिसप्तदशभिः श्लोकैराह अहमनयाज्ञातस्तत्किमित्यहंमकथयामी

ति आत्मानङ्कथितयानतुस्वारस्येनेति । भ्रान्तेनमयास्वनामकथितंनतु स्वयाज्ञातमितिस्वभ्रान्तिवर्णनव्याजेनज्ञापयतिस्मेत्यर्थः । मदभिलाषजनितवेगभरभ्रान्तेमानेनस्वनामोक्तमितिज्ञात्वासाभैमीतुतोषेतिभावः । असारदितिषोन्तकर्मणिविभाषाग्रादितिसिचोलुक् । अग्रादितिपाठेतुतनूचकारेत्यर्थः । ग्रीतनूकरणेतेनैवसिचोलुक् ॥ १४० ॥

विदर्भराजप्रभवाततःपर न्त्रपासखीवक्तुमलंन सानल म् ॥ पुरस्तमूचेभिमुखंयदत्रपा ममज्ज तेनैत्रमहाहूदेह्रियः ॥ १४१ ॥

विदर्भेति । ततःपरंनलनिश्चयानन्तरंसाविदर्भराजप्रभवाभैमीत्रपासखीलज्जावतीसतीनलंवक्तुं अलंसमर्थानाभूत् । लज्जाप्रभाववशात्तूष्णीम्बभूवेत्यर्थ. । यतःपुर आदौनलत्वनिश्चयात्पूर्वं अत्रपानिर्लज्जासती अभिमुखंसमक्षंयत्समूचे । तेनैवसमक्षवचनेनहेतुनानलनिश्चयानन्तरंह्रियोमहाहूदेसमुद्रेममज्जनिमग्ना लज्जाल्यत्वेकिञ्चिद्वक्तुंनशक्यतेश्वयंतुलज्जासमुद्रेमग्नावक्तुंसमर्थानाभूदितियुक्तमेवेतिभावः । सखीपदेनलज्जांक्षणमपिनत्यजतीतिसूचितम् ॥ १४१ ॥

यदापवार्यापिनदातुमुत्तरं शशाकसख्याःश्रवसि प्रियायसा ॥ विहस्यसख्येवतमब्रवीत्तदा ह्रिया धुनामौनधनाभवत्प्रिया ॥ १४२ ॥

यदेति । साभैमीयदाऽपवार्यापिजवनिकादिनाव्यवधायापिरहस्यापितिर्यग्वलितकृत्वाचास्या.सख्याः श्रवसिकर्णेपिप्रियस्यनलस्योत्तरन्दातुंनशशाक । समक्षंवक्तुमशक्तैवपरंव्यवधायापिएनंप्रत्येवंवदेतिसखीकर्णेपिलगित्वायस्मिन्कालेवक्तुमशक्ताभूत्तदातस्मिन्कालेसख्येवविहस्येतितंनलंअब्रवीत् । इतिकिं भवत्प्रियाधुनाह्रियामौनमेवधनयस्याः सामौनिनीववर्तते चित्रलिखितंपुरःस्थितन्त्वांप्रतिपूर्वस्वहूक्तत्वादिदानींमौनंव्ययंमित्यधुनेत्यनेनपरिहासःसूचितः । हास्यमप्यतएवकृतं अपवार्यापिसखीद्वारेणैवव्यवधायापिपरंपरयापीत्यर्थइतिवा ॥ १४२ ॥

यदातिथेयाल्लिखितस्यतेस्वय म्भिवतन्वतीलोचन

निर्झरानियम् ॥ जगादयांसैवमुखान्ममत्वया प्रसूनवाणोपनिषन्निशम्यताम् ॥ १४३ ॥

जगादेति हेनलइयंभैमीलोचननिर्झरान्अश्रुप्रवाहान्स्वयंस्वहस्तेनचित्रभित्तौपटेवालिखितस्तेयदातिथेयांश्चरणप्राघुणिकान्वितन्वतीकुर्वतीचरणपतनादिनावियोगजवाष्पनिर्झरैश्चरणक्षालनङ्कुर्वतीसती यांप्रसूनबाणांस्वकामस्योपनिषदङ्कामाद्वैतप्रकाशिकाञ्जगादलिखितन्त्वांप्रत्युवाच। सैवप्रसूनवाणोपनिषन्ममसुखात्त्वयानिशम्यतां अनयाकामपीडावशात्पूर्वमुक्तं मयोच्यते । नतुस्वस्फुर्त्यासत्यंमत्वासमाकर्णयेत्यर्थः । रहस्यप्रतिपादकोग्रन्थविशेषउपनिषत् । निर्झरपदेनाश्रुबाहुल्यंसूचितम् ॥ १४३ ॥

असंशयंसत्वयिहंसएवमां शशंसनत्वाद्विरहाप्रसंशयाम् ॥ क्वचन्द्रवंशस्यवतंसमद्वधा न्नृशंसतासंभविनीभवादृशे ॥ १४४ ॥

असंशयमिति । सहंसएवत्वद्विरहैणप्राप्तः प्राप्तः संशयोजीवसन्देहोयया एवंभूतान्त्वयिविषयेतवाग्रेअसंशयनिश्चितंनशशंसप्रायशोनकथितवान् । यतःचन्द्रवंशस्यावतंसअलङ्कारनलभवादृशेसौन्दर्यादिगुणयुक्तेअतिशूरेजन्हाकुलीनेचमद्वधान्नृशंसतानिर्दयताघातुकताक्वकुतःसंभविनीयुक्ता पूर्वोक्तगुणयुक्तोहिनिर्दोषंपुरुषमपिनहन्तिकिंपुनःस्त्रियमित्यर्थः । तस्माद्धंसएवप्राणपर्यवसायिनीत्वद्विरहजन्यांमदीयामवस्थान्तव पुरस्तान्नकथितवानित्येवनिश्चयः। अन्यथात्वन्तामन्वग्रहीष्यएवनतवकोप्यपराधइतिभावः । असंशयमर्थाभावेव्ययीभावः । वतंसेतिवष्टिभागुरिरित्यल्लोपः । भवादृशेनित्यदादिषुदृशइतिक्विजिज्ञासर्वनाम्नइत्यात्वम् ॥ १४४ ॥

जितस्त्वयास्येनविधुःस्मरःश्रिया कृतप्रतिज्ञौममतौवधेकुतः ॥ तवेतिकृत्वायदितज्जितंमया न मोघसङ्कल्पधराःकिलामराः ॥ १४५ ॥

जितइति । हेनलत्वयाआस्येनविधुर्जितः श्रियाअङ्गकान्त्यास्मरोजितः तौचन्द्रस्मरौममवधेकुतोहेतोःकृतप्रतिज्ञौचइत्यर्थः । त्वदीयमुखकान्त्यामेवत्वयैववालयोरपराद्धत्वात् । त्वान्त्यक्त्वानिरपराधांमांक्लिश्नामितिपी

इयतइतिक्रमयेतिभावः । स्वयमेवहेतुमाशङ्क्यवदति । तयोस्तवबाकि मपिकर्तुमसमर्थौअहन्तवप्रियेतिकृत्वाबुद्ध्यायदिदेन्मांपीडयतस्तर्हिम याजितंशकुनग्रन्थिरेवनिवद्धइतिभावः । किलयस्मादमरामोघसङ्कल्पध राःनिष्फलमानसकर्मधारिणोनभवन्ति । यन्मनसिधारयन्तितत्सत्यमेवभव ति । तवाहमितियद्वाभ्यांसङ्कल्पितन्तत्सत्फलंभविष्यतीतिमयाजितमित्य र्थः । अतिस्मरातिचन्द्रमुखत्वद्विरहाच्चन्द्रकामौमांपीडयतइतिभावः । अन्योपिसाक्षाद्वैरिणोपकर्तुमशक्तस्तत्संबन्धिनोपकारङ्करोति । यौत्वद्व यवाभ्यांजितौतौत्वदर्थाङ्गभूतयामयाजितावेवेत्यर्थइतिवा ॥ १४५ ॥

निजांशुनिर्दग्धमदङ्गभस्मभि र्मुधाविधुर्वाञ्छति लाञ्छनोन्मृजाम् ॥ त्वदास्यतांयास्यतितावतापि किं वधूवधेनैवपुनःकलङ्कितः ॥ १४६ ॥

निजेति । विधुर्निजांशुभिर्निर्दग्धंमदङ्गन्तस्यभस्मभिःकृत्वालाञ्छनोन्मृ जांस्वीयकलङ्कप्रोञ्छनंमुधावृथावाञ्छति । वैयर्थ्यमेवाह । तावतापिम दङ्गभस्मलाञ्छनप्रोञ्छनेकृतेपि त्वदास्यतान्त्वन्मुखत्वंयास्यतिकिंअपितुन किन्तुगतेपिलाञ्छनेवधूवधेनस्त्रीवधजनितपातकेनपुनःकलङ्कितएव । त्व न्मुखसादृश्यङ्कलङ्कित्वान्नप्राप्नोतिइत्येवेत्यर्थः । चन्द्रोपिमांपीडयतीति भावः । अन्यस्याप्यादर्शादेर्मलिनस्यभस्मनालाञ्छनप्रोञ्छनङ्क्रियते कल ङ्कवान्कृतःतत्करोतीतिण्यन्तान्मतुब्लोपेनिष्ठा । वधूवधेनेतिकर्त्तरितृती या करणेतुतारकादिः ॥ १४६ ॥

प्रसीदयच्छस्वशरान्मनोभुवे सहन्तुमान्तैर्धुतकौ सुमाशुगः ॥ त्वदेकचिताहमसून्विमुञ्चती त्वमे वभूत्वातृणवज्जयामितम् ॥ १४७ ॥

प्रसीदेति । हेनलत्वंममोपरिप्रसीदस्वशरान्मनोभुवेयच्छदेहि । स कामोधुताःकौसुमाआशुगाबाणायेनएवंभूतःतैभवदीयैः शरैर्मांहन्तु का मबाणाःपीडयन्तिनतुझटितिमत्प्राणवियोगङ्कुर्वन्ति त्वदीयबाणालोह त्वादतितीक्ष्णत्वाच्चझटितिप्राणवियोगङ्कुर्वन्तुनतुपीडान्तस्मात्तान्मदनाय देहि एतावदेवतवप्रसन्नत्वम् । तैर्बाणैःमांमारयिष्यति । मरणेकोलाभइ त्याशङ्क्याह । त्वदेकचित्ताअसून्विमुञ्चन्तीअहन्त्वमेवत्वद्रूपमेवभूत्वात

ङ्गानन्तृणवतृणमिवअप्रयासेनजयामि । त्वयासौन्दर्येणकामस्यजितत्वा त्वद्रूपलाभात्समयाजेतुंशक्यतइत्यर्थः । मरणेयादृशीजन्तोर्भावनायस्य जायते । तादृशंलभतेजन्मसजूयोहिस्वकर्मभिरितिवचनात् । यंयंवापि स्मरन्भावमित्यादिभगवद्वचनप्रामाण्याद्वामयित्वद्रूपप्राप्तिरित्यर्थः । मुग्ध तीमुग्धेत्तौदादिकत्वादाच्छीनद्योर्नुमितिनुम्विकल्पान्नुमभावः ॥ १४७ ॥

श्रुतिःसुराणाङ्गुणगायनीयदि त्वदङ्घ्रिमग्न स्यजनस्यकिन्ततः ॥ स्तवैरवैरप्सुकृताप्लवैःकृते नमुद्वतीजातुभवेत्कुमुद्वती ॥ १४८ ॥

श्रुतिरिति । श्रुतिर्वेदोयदिसुराणान्देवानाङ्गुणगायनीगुणवर्णनपरातत स्तर्हि त्वदङ्घ्रिमग्नस्यत्वच्चरणानुरागिणोमल्लक्षणस्यजनस्य ततोवेदकृता द्देवगुणवर्णनादपिकिम् । अन्यत्रानुरक्तस्यउत्तमेनान्यवर्णनेकृतेपितवानुरा गोमीत्यद्यतइत्यर्थः । यतःअप्सुकृताप्लवैःकृतस्नानैःपुरुषैःरवेःसूर्यस्यस्तवे कृतेपिकुमुद्वतीकुमुदिनीजातुकदाचिदपिमुद्वतीसूर्यविषयेहर्षवती अनुरा गिणीनभवेत्तस्याश्चन्द्रएवानुरागात् । तद्वन्ममेत्यर्थः ॥ १४८ ॥

कथासुशिष्येवरमद्यनःप्रिये ममावगन्तासिनभा वमन्यथा ॥ त्वदर्थमुक्तासुतयासुनाथमां प्रतीहि जीवाभ्यधिकत्वदेकिकाम् ॥ १४९ ॥

कथास्विति । हेनलअहंअद्यैतावत्यामपिपीडायांसत्याङ्कथासुशिष्ये । गो ष्ठीशेषाभवामिनिश्चयेनवरमेतन्ममाभीष्टंनप्रियेनतिष्ठामिनजीवामीत्यर्थः । अन्यथामरणेनविनात्वंममभावमनुरागंनावगन्तासिनावगमिष्यसिअनएव हेसुनाथसुस्वामिन् । अतएवजीवाधिकप्राणेभ्योप्यतिप्रियत्वदर्थमुक्तासु तयात्वदर्थन्त्यक्तप्राणतयाकृत्वामान्त्वदेकिकान्त्वमेकः-केवलोयस्याःएवं विधान्त्वदेकशरणाम्प्रतीहिजानीहि । यत्प्राणेभ्योऽधिकन्तदर्थमेवप्राणा स्त्यज्यन्तेत्वञ्चममप्राणाधिकःशोभनश्चस्वामीसेवकंस्वार्थेत्यक्तप्राणञ्ज्ञात्वा ऽनुकम्पतेइत्यर्थः । तदर्थंमैय्याप्राणास्त्यक्ताइतिलोकमुखादाकर्ण्यत्वंस्मि न्ननुरागञ्ज्ञास्यसिनान्यथेतिमरणमेवयुक्तमितिभावः । असूनांनाथश्चात एवजीवाधिकेतिवा । नसुनाथोऽसुनाथःसुनाथःकेनचिद्व्यापारेणसेवकंस्वा नुरागिणंजानातित्वन्तुअसुनाथत्वात्प्राणव्ययेनविनानजानासीत्युपालम्भो

पिसूचितः । आशुनाथेतिक्वचित्पाठः । शिष्येइतिदैवादिकस्यलोडुत्त मैकवचनम् । प्रियेलङुत्तमैकवचनम् । स्वदेकिकामितिशेषाद्विज्ञायेतिक म् ॥ १४९ ॥

महेन्द्रहेतेरपिरक्षणंभया यदर्थिसाधारणमस्त्रभृ द्व्रतम् ॥ प्रसूनवाणादपिमामरक्षतः क्षतन्ततु त्रैरवकीर्णिनस्तव ॥ १५० ॥

महेन्द्रेति । महेन्द्रहेतेरिन्द्रायुधादपियद्भयन्तस्माद्भयद्रक्षणं । यद्वाभयन्हे तोर्वज्राद्यद्रक्षणंतदस्त्रभृतांशूराणांव्रतमर्थिषुशरणागतेषुसाधारणम् । पुरु षोरक्षणीयोनतुस्त्रीतिस्त्रीरक्षणीयानतुपुमानितिपक्षपातरहितङ्क्रियाणा म्व्रतनियमःतत्अवकीर्णिनोभग्नव्रतस्यतवव्रतमुत्रैरतितराङ्क्षतम्खिन्नष्टम् । यतःप्रसूनवाणात्कामात्प्रसूनरूपाद्वाणाद्वामामरक्षतः । य.पुष्पादपिरक्षितुं नशक्नोतिसवज्रात्कथंरक्षितुंशक्नोतीतिसम्भावनापिकुतस्त्येति अपिशब्दा र्थः ॥ १५० ॥

तवास्मिमाभूद्घातुकमप्युपेक्षसे मृषामरंहामरगौ रवात्स्मरम् ॥ अवेहिचण्डालमनङ्गमङ्गतं स्वका ण्डकारस्यमधोःसखाहिसः ॥ १५१ ॥

तवेति । अहन्तवास्मित्वन्तुमद्घातुकंहन्तारअपिमृषामरंमिथ्यादेवं स्मरं अमरगौरवाद्देवत्वबुद्ध्याउपेक्षसेहाकष्टं अनुचितमेतत् । देवत्व बुद्धिन्त्यक्त्वाएनंमारयेतिभावः । अन्योपिमारयन्तस्त्रीयंनोपेक्षतेकिंतुतंघ्न न्ति । कामस्यमृषामरत्वमाह । अङ्गमियतस तमनङ्गंचण्डालमेवावेहिजा नीहि । चण्डालेदयानोचिता । हियस्मात्सकामःस्वकाण्डकारस्यस्वस्य काण्डाःपुष्पलक्षणाःवाणास्तेषांनिष्पादकस्यमधोर्वसन्तस्यसखा । वसन्ते पुष्पबाहुल्यात्सएवकाण्डकारःचण्डालएवकाण्डकारोभवति । तत्संसर्गीच पञ्चमइतिवचनात्कामस्यापिचण्डालत्वन्तस्मान्मृषामरत्वङ्कामस्येतिभावः । अङ्गत्याद्यङ्गकर्त्तनाच्चण्डालोप्यनङ्गोभवतितस्मांन्मारयएनमितिभावः । चण्डालोपिमारणार्थंविश्वासजनकंवेषन्धारयति । सामितिनलोकेतिषष्ठी निषेधः । काण्डकारःकर्मण्यण् ॥ १५१ ॥

लघौलघावेवपुरःपरेबुधै विंधेयमुत्तेजनमात्मतेज सः ॥ तृणेतृणेढिज्वलनःखलुज्वलन् क्रमात्करीष द्रुमकाण्डमण्डलम् ॥ १५२ ॥

लघौलघाविति । बुधैःपण्डितैःलघौलघौअल्पेअल्पेपरेशत्रौपुरःप्रथम मात्मतेजसः उत्तेजनंसन्धुक्षणंविधेयङ्करणीयम् । अल्पवैरिजयाभ्यासेनम हान्वैरीजेतव्यः । अल्पतरःशत्रुःसर्वथानोपेक्षणीयइत्यर्थः । खलुयस्माज् ज्वलनोग्निस्तृणेनिःसारेऽधिकरणेज्वलन्क्रमात्परिपाट्याकरीषंशुष्कगोम यचूर्णन्द्रुमकाण्डमण्डलंवृक्षस्कन्धसमूहञ्चतृणेढिदहितिज्वलयति । तेज स्विनामवधिरग्निरप्यादौअल्पंशत्रुंनाशयतिपश्चान्महान्तमितितथात्वया पिकर्तव्यंमदनोनउपेक्षणीयइतिभावः । तृणेढितृणाहत्रमूढत्वादि । हीन तयापिकामस्यावगणनानकर्तव्येत्यर्थः ॥ १५२ ॥

सुरापराधस्तवकोकियानयं स्वयम्वरायामनुक म्प्रतामयि ॥ गिरापिवक्ष्यन्तिमखेषुतर्पणा दिदं नदेवामुखलज्जयैवते ॥ १५३ ॥

सुरेति । वासन्भावनायाम् । स्वयंस्वानुरागेणैवयावृणुतेनतुकेनचित्प्रेरि तातादृश्यांस्वयम्वरायामपिमदङ्गीकारलक्षणया अनुकम्प्रतादयालुत्वंअ यंसुरेषुविषयेऽपराधः कियानपिस्वल्पतरः मयिधर्मपरन्त्यांसुखेषुयत्वक्र तासर्पणात्तृप्तेर्हेतोर्मुखलज्जयैवमुखदाक्षिण्येनैव तेदेवाःइदन्त्वयादूत्येअ स्माकमपराद्धमितिइदङ्गिरापिनवक्ष्यन्ति । अन्तःकरणेनधारयिष्यन्तीति किंवाच्यम् । मनैवस्वेच्छाचरणात्स्वल्पोपितवापराधोनास्तीत्यर्थः । सर्व थात्वयाहमनुग्राह्येतिभावः । तेतवमुखलज्जयेतिवा । अन्योपिवहूपका रीयः अल्पतरेअपराधेकृतेपितन्मुखदाक्षिण्यात्किमपिनवक्ति स्वयम्वरा पचाद्यच् ॥ १५३ ॥

व्रजन्तुतेतेपिवरंस्वयम्वरं प्रसाद्यतानेत्रमयावरि ष्यसे ॥ नसर्वथातानपिनस्पृशेद्दया नतेपितोव न्मदनस्त्वमेववा ॥ १५४ ॥

वृजन्त्विति । तेदेवाअपित्वत्संबंधिनम्वरंश्रेष्ठस्वयम्वरंदेशम्वरंकामंवा

वृजन्तु । तानेवेन्द्रादीन्प्रसाद्यप्रसन्नान्कृत्वामयात्वम्बरिष्यसे । त्वद्वरणा र्थमागतास्त्वयात्यक्तास्तत्कथंप्रसन्नाःस्युरित्यतआह । नेति । दयातानि न्द्रादीन्लेशतोपिसर्वथानस्पृशेदितिन अपितुस्पृशेदेव तेमय्यल्पामपिद याङ्करिष्यन्त्येवेत्यर्थः । यतस्तेपिदेवास्तावत्मदनोनभवन्तित्वमेववानभव न्ति । जगतिद्वावेवयुवानिष्कृपौयुवांविनासकलञ्जगत्सदयमेवेतिभावः । तेसकृपाःस्वयम्बरेकौतुकावलोकनार्थंसुखेनागच्छन्त्वितिभावः । त्वंवानै वेतिवान्वयः ॥ १५४ ॥

इतीयमालिख्यगतेपिवीक्षिते त्वयिस्मरव्रीडसम स्यथानया ॥ पदेपदेमौनमयान्तरीपिणी प्रवर्ति तासारघसारसारणी ।। १५५ ॥

इतीति । हेनलेतिसखीवचनम् । अनयाभैम्या इयमितिपूर्वोक्तप्रकारे णमयाउदिता सरघाभिर्मधुमक्षिकाभिः कृतस्यमधुन-सारस्यश्रेष्ठभागभूतस्या तिमधुरस्यसारणीनदीप्रवर्तिता । किम्भूता । पदेपदेवचनेवचनेअन्तराय कारीत्वान्मौनमयान्तरीपिणीमौनरूपद्वीपवती । किंभूतयाऽनयाआलेख्य गतेपटादिलिखितचित्रप्राप्तेचित्ररूपेअचेतनेपिवीक्षितेत्वयिविषयेस्मरव्री डयोःकामलज्जयोःसमस्यासङ्कटेपोमिश्रीभावोयस्याःसातयाकामलज्जाव त्येत्यर्थः । कामवशाद्वक्तिलज्जावशात्तूष्णीमास्तेइतिभावः । नद्यपिस्था नेस्थानेन्तरीपिणीभवति । अन्ययापिविषमयापदेपदेमौनंलभ्यते।चित्ररू पेऽचेतनेपित्वयिदृष्टेऽनुरागेणोन्मादवशाद्ययैवमुक्तन्तस्याःसचेतनस्यतव स्साक्षात्कारेजातेसत्यन्यवरणेशङ्कापिकथङ्कर्त्तुमर्हाऽपितुनकथचित् तस्मा दिन्द्रादिवरणविषयोमतःपरन्त्वयाकिमपिनवाच्यमितिभावः । सरघाम धुमक्षिकेत्यमरः । सरघाभिःकृतमित्यर्थेमक्षिकादिभ्योऽणितिप्रकृतेतद्विशे षेभ्यश्चेविवार्तिककद्वयोगविभागाद्वाण् । सारयतिपातयतितीरमितिसार णी । बहुलवचनात्कर्तरिल्युट् ॥ १५५ ॥

चण्डालस्तेविषमविशिखःस्पृश्यतेदृश्यतेन त्वया तोनङ्गस्त्वयिजयतिनयःकिंतुकृत्ताङ्गुलीकः ॥ कृत्वामित्रंमधुमधिवनस्थानमन्तश्चरित्वा सख्याः

प्राणान्हरतिहरितस्त्वद्यशस्तज्जुषन्ताम् ॥ १५६ ॥

चण्डालइति । विगमविशिखःकामःतेतवत्वत्संबन्धीचण्डालः । किंच चण्डालान्क्रूरान्च्छरानासमन्ताल्लाति आदत्ते चण्डालोपिविषमविशिखो भवति । क्रूरवाणोथचविशेषामीयतइतिविषमाः विशिखाःयस्यविषलि प्तवाणइत्यर्थः । नस्पृश्यते । अनङ्गत्वंनदृश्यते । यतस्त्वयिजयतिसर्वो त्कर्षेणविद्यमाने अथचसौन्दर्येणपराभवितरिसतियःअनङ्गइतिख्यातःच ण्डालत्वादनङ्गत्वाच्चनस्पृश्यतेनदृश्यते । अनङ्गत्वमाह । यतःकृत्ताछिन्ना कनिष्ठिकाङ्गुलीर्यस्यछिन्नाङ्गुलीकः । चण्डालोहिछिन्नाङ्गुलीकोभवतीति चण्डालजातिः । तस्यचण्डालकर्माह । अधिवनस्थानंवनस्थानमध्येमधु स्वसन्तंमित्रङ्कृत्वावसन्तेनोद्दीपितोन्तःहृदयञ्चरित्वा प्रविश्याथचवनेमधु प्रधानंमद्यपंमित्रङ्कृत्वास्वयम्पीत्वागृहमध्येप्रविश्यसख्योःभैम्याः प्राणान्ह रतिसख्याअन्तश्चरित्वेतिवा । प्राणगमनपर्यवसायिनींपीडाङ्करोति । अ थचप्राणानेवमुष्णाति । तत्तस्माद्धरितोदिशस्त्वद्यशोजुषन्तांसेवन्ताम् । त्वद्दासेनतेनएवङ्कृतेसर्वदिग्व्यापिनीतवकीर्तिर्भवतुइतिसोल्लुण्ठंवचनम् । त्वयिअनुरागबाहुल्यात्त्वत्प्राप्त्यभावात्त्वद्विषयोमदनःसखींपीडयतितरां ततश्चतवकीर्तिर्भवति । तस्माद्यथाऽस्या पीडाशाम्यतितवाकीर्तिर्नभवति तथैवत्वयाविधेयंनत्वन्यथेतिभावः जगतीतिपाठेजगतिअनङ्गःख्यातः । तुपुनःअपि नलेतिपदम् ॥ १५६ ॥

अथभीमभुवैवरहोभिहितां नतमौलिरपत्रपया सनिजाम् ॥ भ्रमरैःसहराजसभाजगती उजगती पतिरभ्युपगम्ययौ ॥ १५७ ॥

अथेति । अथसजगतीपतिर्ययौजगाम । किङ्कृत्वादेवैःसहत्वयाआगन्त व्यमितिभीमजुवैवभैम्यैवाभिहितांरहःएकान्तेचक्तांनिजांस्वीयांभ्रमरैः स हराजसभाजंस्वयम्वरदेशंप्रतिगतंअभ्युपकत्याङ्गीकृत्य । किंभूतः । अप अपयाइन्द्रादिकार्याकरणाल्लज्जानतमौलिरधोमुखः ॥ १५७ ॥

अस्तसख्याः प्रियमाप्तुमङ्कुरधियोधाराःसृजन्त्यार या त्वश्रोन्नमकपोलपालिपुलकैर्वैतस्वतीरश्रुणः ॥

**चत्वारः प्रहराः स्मरार्तिभिरभूत्सा यत्क्षपा दुःक्षपा तन्नस्याः कृपयाखिलैव विधिना रात्रिस्त्रियामा कृता ॥ १५८ ॥**

चत्विति । तस्याश्चत्वारः प्रहराः साप्येकापि क्षपा चतुःप्रहररूपा रात्रिर्वियोगस्य दुःसहत्वात्स्मरार्तिभिः कृत्वा यस्माद्दुःक्षपा अतिवाहितुमशक्या ऽभूत् । तत्तस्माद्धेतोर्विधिना ब्रह्मणा तस्यां भैम्यां कृपयैव अस्थिरा चतुःप्रहरापि रात्रिरद्यप्रति दिनभाविनी सर्वापि रात्रिस्त्रियामा त्रिप्रहरा कृता रात्रेरेकः प्रहरो ह्रस्व इत्यर्थः । आद्यन्तयोश्चतसृषु घटीषु दिनव्यवहारात्त्रियामेति क्षीरस्वामी । सा रात्रिस्त्रियामहता कष्टेनातिक्रान्तेति भावः । किंभूतायाः श्वः परश्वो वा प्रियं नलं प्राप्तुं प्राप्तुं वद्धुरोत्कण्ठता धीर्यस्याः सोत्सुकायाः । तथाऽश्रुणो धाराः सृजन्त्या वियोगवशाद्बाष्पधाराप्रवाहान्नयनाद्वेगेन विस्तारयन्त्याः । किंभूताः धाराः । नलोल्लसैः उन्नतानतैः कपोलपाल्याः पुलकैः रोमाञ्चैः कृत्वा वेतस्वतीः बहुवेतसयुक्ताः । रयाद्धानस्थोन्नमत्त्वम् नदीष्वपि नलोन्नम्रा वेतसा भवन्ति वेतस्वतीः कुमुदनडवेतसेभ्यो ड्मतुप् इति ड्मतुप् ॥ १५८ ॥

**तदखिलमिह भूतं भूतगत्या जगत्याः पतिरभिलपति स्म स्वात्मदूतत्वतत्त्वम् ॥ त्रिभुवनजनवृत्तवृत्तान्तसाक्षात्कृतिकृतिषु निरस्तानन्दमिन्द्रादिषु द्राक् ॥ १५९ ॥**

तदखिलमिति । जगत्याः पतिर्नलः इह भैमीसमीपभूतम् आत्मं अखिलं तत्स्वात्मदूतत्वतत्त्वं स्वीयं दूत्यं तस्य तत्त्वं याथार्थ्यं भूतस्य परमार्थस्वरूपभूतस्य वृत्तस्य गत्या प्रकारेण प्रथमं मायया मयानिष्कपटं दूत्यं कृतं अनन्तरं चुन्मादेषु नामया तत्प्रकटनं कृतमित्यादि स्वरूपेण भूतस्य सत्यस्य प्रकारेण वा इन्द्रादिषु द्राक् शीघ्रं निरस्तानन्दं अकृतकार्यत्वाल्लज्जावशात्त्यक्तहर्षं यथा तथाऽभिलपति स्म कथयति स्म यथावृत्तमकथयदित्यर्थः । किंभूतेष्विन्द्रादिषु जनानां यावान् वृत्तो निश्चलः वृत्तान्तः समाचारस्तस्य साक्षात्कृतौ प्रत्यक्षीकरणे कृतिषु कुशलेषु त्रिभुवने स्वात्मना निष्कपटं दूत्यं कृतमिति आदावेवमिति सूचितम् ॥ १५९ ॥

श्रर्धन्तदेव ॥ संदृब्धार्णववर्णनस्यनवमस्तस्य व्यरंसीन्महा काव्येचारुणिनैषधीयचरितेसर्गोनि सर्गोज्ज्वलः ॥ १६० ॥

इतिनैषधेभैमीनलानुलापोनामनवमःसर्गःसमाप्तः ॥

श्रीहर्षमितिश्रर्धंस्पूर्ववत् । संदृब्धोगुम्फितः अर्णववर्णनाख्योग्रन्थोयेन । अर्णववर्णनाख्योग्रन्थस्तेनकृतइत्यर्थः व्यरंसीत्व्याङ्परिभ्योरमइति परस्मैपदम् । यमरमनमातांसक्चेतीइट्सगागमौ ॥ १६० ॥

इतिश्रीवेदकरोपनामक श्रीमन्नृसिंहपण्डितात्मजनारायणकृतेनैषधप्रकाशेनवमःसर्गःसमाप्तः ॥

## नैषधचरितेदशमःसर्गःप्रारभ्यते ।

### श्रीगणेशायनमः ॥

रथैरथायुःकुलजाःकुमाराः शस्त्रेषुशास्त्रेषचलब्धपाराः ॥ स्वयम्वरंशम्बरवैरिकाय व्यूहःश्रियःश्रीजितयक्षराजः ॥ १ ॥

श्रीगणेशायनमः ॥ अथस्वयम्वरस्यपूर्वरङ्गवर्णनार्थंदशमंसर्गंप्रारभते रथैरिति ॥ अथकुमाराःप्रादुर्भूततरुणिमानोराजानोरथैःकृत्वाप्रारब्धवरं स्वयंवरंश्राययुः श्राजग्मुः । किंभूताःपूर्वमाकारिताकुलजाःकुलीनाः । शस्त्रेषुधनुरादिषुशास्त्रेषुवेदादिशास्त्रेषुचदृष्टपाराः प्राप्तपर्यन्ताःसमन्त्रकशस्त्रप्रयोगोपसंहारविदःवेदादिशास्त्रविदश्च । तथाशम्बरवैरीकामस्तस्यकायव्यूहःशम्बरजयार्थंमाययागृहीतोयःशरीरसङ्घः तद्वत्श्रीः शोभायेषाङ्कामशरीरसङ्घाःएवएतेयुवानःइतियावत् तथाश्रियालक्ष्म्याकृत्वाजितोयक्षराट्कुबेरोयैस्तेकुबेरादपिश्रधिकसम्पदइतियावत् स्वयम्वरस्यानङ्गपिडनंप्राप्ताइत्यर्थः । अन्यवाहनादिसद्भावेपिसम्पदाधिक्यसूचनार्थंमहारथ

स्वादिमधंसासूचमायंस्वरयपदम् । एतैर्विशेषणैर्वरोचितागुणाःकथिताः । यदुक्तम् । कन्यावरयतेरूपंमातावित्तंपिताश्रुतम् । बान्धवाःकुलमिच्छन्तिमिष्टान्नमितरेजनाइति । प्रथमंश्रवग्रहणंतन्नियासांशास्त्रापेक्षयाऽभ्यर्हिततरत्वसूचनार्थम् । आयुःआङ्पूर्वस्ययातेर्लिटिरूपम् ॥ १ ॥

नाभूदभूमिः स्मरसायकानां नासीदगन्ता कुलजः
कुमारः ॥ नास्थादपन्थाधरणेःकणोपि व्रजेपुरा
ज्ञांयुगपद्व्रजत्सु ॥ २ ॥

नाभूदिति ॥ कुलजःकुलीनःकोपिकुमारः स्मरसायकानामभूमिरगोचरोनाभूत् किन्तुस्वयम्वरश्रवणेनकामबाणपीडितएवाभूत् । तथाचकोपि अगन्तानआसीत्सर्वोपिस्वयम्वरेआगतवानित्यर्थः । राज्ञांव्रजेषुयुगपद्व्रजत्सुसत्सुधरणेःपृथिव्याःकणोपिअणुरूपोपिदेशःअपन्थाःमार्गरहितोनास्थात्नस्थितःकिन्तुबाहुल्याद्वहुमार्गः अभूदित्यर्थः । अस्थादितिगातिस्थेतिसिचोलुक् ॥ २ ॥

योग्यैर्व्रजद्भिर्नृपजास्वरीतुमवीरैरनर्हैःप्रसभेनहर्तुम् ॥ द्रष्टुंपरैस्तान्परिकर्तुमन्यैः स्वमात्रशेषाःककुभोबभूवुः ॥ ३ ॥

योग्यैरिति॥कुलादिनायोग्यैःनृपजांभैमींस्वरीतुंव्रजद्भिर्नृपैस्तथानर्हैःकुलादिनाअयोग्यैश्चप्रसभेनहठेनहर्तुंव्रजद्भिः वीरैःशूरैःतथास्वयम्वरकौतुकन्द्रष्टुंव्रजद्भिःपरैःउदासीनैः तथातान्सर्वानपिपरिकर्तुंसेवितुंव्रजद्भिरन्यैर्वैतनग्राहिभिर्दासीभूतैः जनैःकृत्वातैःनिर्गमितैःकृत्वा ककुभःदिशःस्वमात्रशेषाःस्वमात्रावशिष्टाःबभूवुः । सर्वेपिजनाःस्वयम्वरेसमागताइतिभावः अनुरोद्धुमितिपाठेपिसएवार्थः ॥ ३ ॥

लोकैरशेषैरवनेःश्रियन्तामुद्दिश्यदिश्यैर्विहितेप्रयाणे ॥ स्ववर्तितद्वज्जनयन्त्रणार्तिं विश्रान्तिमापुःककुभांविभागाः ॥ ४ ॥

पूर्वोक्तमेवार्थमाह । लोकैरिति । [अशेषैःसकलैःदिश्यैःदिक्भवैःलोकैःअवनेःपृथिव्याःश्रियंलक्ष्मीन्ताम्भैमीमुद्दिश्यप्रयाणेविहितेसतिककुभा

न्दिशास्विभागाःखस्मिन्वर्तिनोवर्तमानास्तेतेजनाः अनेकजातीयाःबहुसंख्याकाःयेजनाःतैःकृत्वायायन्त्रणासङ्कटतातया अर्तिःपीडाततोविश्रान्तिंसुखावस्थानंआपुः भारराहित्यात्स्वोच्छ्वासाजाताइत्यर्थः। दिश्यैःदिगादित्वाद्यत् ॥ ४ ॥

**तलं यथेयुर्न तिला विकीर्णाः सैन्यैस्तथा राजपथा बभूवुः ॥ नैमीसलभ्यामिव तत्र मेने यः प्राप नृभृद्भवितुं पुरस्तात् ॥ ५ ॥**

तलमिति। ऊर्ध्वं विकीर्णा अतिसूक्ष्माः तिला अपि यथा तलम्भूतलं नई युः अधोन पेतुः तथा सैन्यैः कृत्वा राजपथाः राजमार्गा बभूवुः। सैन्यबाहुल्यादतिसङ्कीर्णा जाता इति भावः। तत्रातिसङ्कटे पुरराजपथेषु यः नृभृत्राजा पुरस्तादग्रे भवितुङ्गन्तुं प्राप स शाकस भैमीलभ्यामिवइति मेने लब्धप्रायामिवमेने। एतेयावद्गच्छन्तितावत्पुरोगतंमामेवभैमीवरिष्यतीइतिमेनेइत्यर्थः। सर्वोप्यहमहमिकयाऽग्रेगन्तुमैच्छदिति भावः। तथायथात्राविमुक्तीर्णैःइन्द्रैरितिपाठेराजभिः यथामार्गेणतथाजातमितिव्याख्येयम् ॥ ५ ॥

**नृपः पुरःस्थैः प्रतिबद्धवर्त्मा पश्चात्तनैः कश्चन नुद्यमानः ॥ यन्त्रस्थसिद्धार्थपदाभिषेकं लब्ध्वाप्यसिद्धार्थममन्यत स्वम् ॥ ६ ॥**

नृपइति पुरस्थैः अग्रेस्थितैः मनुष्यादिभिः प्रतिबद्धवर्त्मा तथापश्चात्तनैः पश्चात्स्थितैः नुद्यमानः पुरःप्रेर्यमाणः कश्चननृपः यन्त्रस्यास्तैलकर्षणयन्त्रस्याः सिद्धार्थाः सर्षपाः तेषांपदेस्थाने ऽभिषेकलब्ध्वापिउर्ध्वाधःस्थितपार्श्वनिष्पीडितसर्षपावस्थांलब्ध्वापिस्वंआत्मानंअसिद्धार्थमकृतकार्यममन्यतसर्षपपदाभिषिक्तोपिसर्षपोनभवतीतिविरोधद्योतकोऽपिशब्दः कथञ्चिदपिपुरोगन्तुमशक्तत्वाद्भैमीप्राप्तिर्मेनभविष्यतीतिमृतप्रायंस्वात्मानंविदुःखितोऽभूदितिभावः दक्षिणामपश्चात्पुरसस्त्यगितिविशेषविहितेनत्यकात्यु ट्युलौबाधस्यपुक्तत्वात्पाश्चात्यैरितिभाव्यम् पश्चात्तनैरितिशिष्टप्रयोगदर्शनात्महाविभाषानुवृत्तेर्वासमर्थनीयम् ॥ ६ ॥

**राज्ञां पथि स्त्यानतयानुपूर्व्या विलङ्घनाशक्तिबल**

म्बभाजाम् ॥ अह्वानसङ्केतमिवाग्रकम्पै र्ददुर्विदर्भेन्द्रपुरीपताकाः ॥ ७ ॥

राज्ञामिति विदर्भेन्द्रपुरीपताकाः अग्रकम्पैः कृत्वा राज्ञामाह्वानसङ्केतमाह्वानसङ्केतमददुरिव झटित्यायात विलम्बं माकार्ष्टेत्यादिष्टवत्य इवेत्यर्थः । किंभूतानां राज्ञाम् । पथिस्त्यानतयाऽतिसङ्कटतया निमित्तभूतया कृत्वा आनुपूर्व्या कृत्वा यथा विलम्बमागतिस्तत्र भक्त्याऽसामर्थ्यं न विलम्बभाजाम् । अन्योपि विलम्बेन पश्चादायान्तं हस्तादिनाह्वयति । दूरात्कुण्डिनपुरीपताका दृष्टा इति भावः । स्त्यानं स्त्यै ष्ट्यै शब्दसंघातयोरित्यस्य संयोगादेरातो धातोरित्यादिना निष्ठानत्वम् । पूर्वं पूर्वमनुगतः अनुपूर्वस्तस्य भावः आनुपूर्वी औचितीवत् ॥ ७ ॥

प्राग्भूय कर्कोटक आचकर्ष सकम्बलं नागबलं यदुच्चैः ॥ भुवस्तले कुण्डिनगामि राज्ञा न्तद्वासुकेरश्वतरोन्वगच्छत् ॥ ८ ॥

प्रागिति । कर्कः श्वेतः अश्वः अटतीत्यटकः शुभ्रगतिः सन् प्राग्भूय पुरो भूत्वा उच्चैरतिशयेन भुवस्तले भूपृष्ठे कुण्डिनगामि सकम्बलं नानावर्णकुथ्यसहितं सप्रावरणं यद्राज्ञां नागबलं हस्तिसैन्यं आचकर्ष । अश्वतरो वेसरः तन्नागबलमन्वगच्छत् । करिसैन्यस्य पुरस्तात्पश्चाच्च अश्वा गच्छन्तीति सेनारीतिः । अथ च कर्कोटकः सर्पविशेषः प्राग्भूय पुरस्ताद्भूत्वा उच्चैः सकम्बलाख्येन सर्पेण सहितं भुवस्तले पातालतले स्थितं कुण्डिनगामि वासुकेयं नागबलं सर्पबलमाचकर्ष पातालतः कुण्डिनपुरं नीतवान् अश्वतरनामा सर्पः तन्नागबलमन्वगच्छत् । सर्पमेव सर्वबलस्य वृद्धानुक्रमेण कुण्डिनं आयातम् । सर्वेपि राजानो वासुकिप्रमुखाः सर्पाश्च स्वयम्वरार्थं ससैन्याः कुण्डिनमागता इति भावः कम्बलो नागराजे स्यात्कुथ्यप्रावारयोरपीति विश्वः । प्राग्भूय क्त्वं तं समासत्वात्ल्यप् । अश्वतरः पक्षेवत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे इति तरप् । अथ स्वरूपयोरस्त्री तलं स्यादित्यमरः ॥ ८ ॥

आगच्छदुर्वीन्द्रचमूसमुत्थै र्भूरेणुभिः पाण्डुरितामुखश्रीः ॥ विस्पष्टमोचष्ट हरिद्वधूनां रूपं पतित्याग

दग्धानुरूपम् ॥ ९ ॥

आगच्छदिति । हरिद्वधूनांदिग्वधूनांमुखश्रीः प्रारंजशीतामुखशोभा धपतिभिःकृतःत्यागः तेनयादशातस्याः अनुरूपंयोग्यंरूपम्विस्पष्टंआप ए । किंभूताःआगच्छतीःसर्वीन्द्रचमूत्सयासमुत्थैर्रेणुभिःपाण्डुरिताः । स्वप्रियत्यागेनएतादृशीअवस्थाजीवाम्भवतिदिग्वधूगांइन्द्रादयोराजान श्चपतयः । सर्वाअपिदिशःराजशून्याःसैन्यवाहुल्याद्रूक्षांधूसराश्चजाताइ तिभावः ॥ ९ ॥

आखण्डलोदण्डधरःकृशानुः पाशीतिनाथैःककु भाञ्चतुर्भिः ॥ भैम्यैवचध्वास्वगुणेनकृष्टैः स्वय म्वरेतत्रगतंनशेषैः ॥ १० ॥

पतित्यागमेवविवृणोति । आखण्डलइति । ककुभांचतुर्भिःइतिएत त्सङ्ख्याकैर्नाथैःतत्रस्वयम्वरेगतंशेषैरन्यैर्देवैर्न । इतिकिम् । आखण्डलःइ न्द्रःदण्डधरःयमःकृशानुरग्निःपाशीवरुणइति । किंभूतैरिवेन्द्रादिभिःभै म्यासौन्दर्यादिनास्वगुणेनबध्वाआकृष्टैरिव । यद्वैतदुद्वाहरसाकृष्टैरिति क्वचित् ॥ १० ॥

मन्त्रैःपुरम्भीमपुरोहितस्य तद्रक्षरक्षाम्विशतिक्रूर क्षः ॥ तत्रोद्यमन्दिक्पतिराततान यातुन्ततोजातु नयातुधानः ॥ ११ ॥

शेषानागमनेहेतुमाह । मंत्रैरिति । रक्षोराक्षसः भीमपुरोहितस्यमन्त्रैः वेदोक्तैः वद्धरक्षांकृतरक्षणान्तपुरंकुण्डिनंकथम्विशतिअपितुकथञ्चिदपि न । ततस्तस्माद्यातुधानोनैर्ऋतःदिक्पतिःजातुकदाचित्कथञ्चिदपितत्रया तुंउद्यमंनआततान ॥ ११ ॥

कर्तुंशशाकाभिमुखंनभैम्या मृगंदृगम्भोरुहतर्जितं यत् ॥ अस्याविवाहाययौविदर्भा स्तद्वाहनस्ते ननगन्धवाहः ॥ १२ ॥

कर्तुमिति । गन्धवाहोवायुःतेनकारणेनअस्याभैम्याःविवहायजैमीप रिणेतुंविदर्भाम्नयथौयतःसमृगोवाहनंयस्य । यत्यतःकारणान्मृगंभै

स्याः अजितमुखकुन्तु नशशाक । यतः किं भूतं मृगम् । भैम्याः दृगम्भोरुहाभ्यां नेत्रकमलाभ्यां न्तर्जितम्भर्त्सितम् । दृगम्भोरुहतर्जितत्वाद्भीतस्य मृगस्य गन्तुमसामर्थ्यात् अन्यस्य च वाहनस्याभावात् तेन तत्र न गतमिति भावः । अन्योपि तर्जितः तर्जकसमुखङ्गन्तुं नशक्नोति ॥ १२ ॥

जातौ न वित्तेन गुणेन कामः सौन्दर्य एव प्रवणः स वामः ॥ स्वच्छस्वशैलेङ्गितकुत्सवेर स्तां प्रत्यगान्न क्षितमाङ्कुबेरः ॥ १३ ॥

जाताविति । कामो मदनः जातौ प्रवणो नासक्तो न तथा वित्ते द्रव्ये प्रवणो न तथा गुणे प्रवणो न किन्तु स कामः सौन्दर्य एव प्रवणः यतो वामः वक्रगतिः मनोहरश्च इति विमार्य स्वच्छे निर्मले स्वशैले कैलासे ईङ्गितकुत्सं कुत्सितस्वेर स्व पुः नेत्र स्वार्थेन एवं भूतः कुबेरः तां क्षितमां नारीश्रेष्ठां प्रति उद्दिश्य नागात् । कुतः कन्या वरयते रूपमिति वचनात् कन्यायाः रूपे एव तात्पर्यात् स्वस्य सुरूपाभावात् कामप्राधान्यात् कन्यायाः जात्यादौ तात्पर्यात् कुबेरः स्वयम्वरे न गत इति भावः ॥ १३ ॥

भैमीविवाहं सहते स्म कस्मा दर्द्धन्तनुर्यो गिरिजात्मभर्त्तुः ॥ तेनात्र जन्त्या विदधे विदर्भा नीशानयानायतयान्तरायः ॥ १४ ॥

भैमीति । या गिरीजा पार्वती आत्मभर्त्तुः हरस्य अर्धं तनुः सती हरकर्तृकं भैमीविवाहं कस्मात् सहते स्म अपितु न सहते स्म विदर्भान् अत्र जंत्या तया पार्वत्या ईशानयनाय हरगमनाय तेन कारणेन अन्तरायो विघ्नः विदधे कृतः । शरीरार्धत्वात् पार्वत्या कथं स गच्छतु । पुंस्यर्धोर्धं समेंशक इत्यमरः ॥ १४ ॥

स्वयम्वरं भीमनरेन्द्रजाया दिशः पतिर्न प्रविवेश शेषः ॥ प्रयातु भारं संनिवेश्य कस्मि न्नहिर्महीगौरवसासहिर्यः ॥ १५ ॥

स्वयम्वरमिति । अधरदिशः पतिः शेषः भीमनरेन्द्रजायाः स्वयम्वरं न प्रविवेश । कुतः स शेषः कस्मिन्स्वसदृशे पृथ्वीभारं निवेश्य आयातु । यः अहिः सर्पः महीगौरवभृशं सहते इति महीगौरवसासहिः । सासहिवावदिवा

चलिपापतिप्रभृतयः इकारान्तानिपाताः ॥ १५ ॥

**ययौविमृश्योर्ध्वदिशः पतिर्न स्वयम्वरम्वीक्षितध र्मशास्त्रः ॥ व्यलोकिलोकेश्रुतिषु स्मृतौवा समम्विवाहः क्कपितामहेन ॥ १६ ॥**

ययाविति । वीक्षितंपर्यालोचितन्धर्मशास्त्रंयेनएवम्विधः ऊर्ध्वदिशः पतिःब्रह्मा विमृश्यधर्मतत्वम्विचार्यस्वयम्वरंनययौ। विचारमेवाह पितामहेनअथचपितृपित्रासमम्विवाहः क्कचित्लोकेषुश्रुतिषुस्मृतौवान व्यलोकिलोकश्रुतिस्मृतिविरुद्धइत्यर्थः। असमानार्षगोत्रजामितिस्मृतिनिषेधात्पितृपित्रासहविवाहस्याननुज्ञातत्वात् पितामहेनतत्रनगतमितिभावः। मन्वादिद्वाराखयमेवधर्मशास्त्रंप्रणीयकःकथमेवकुर्यादितिभावः ॥१६॥

**भैमीनिरस्तंस्वमवेत्यदूती मुखात्किलेन्द्रप्रमुखा दिगीशाः ॥ स्वदेमुखेन्दौचवितत्यमान्द्य ञ्चिरंस्यतेराजसमाजमीयुः ॥ १७ ॥**

भैमीति । तेइन्द्रप्रमुखाःदिगीशाःइन्द्रादिलोकपालाःदूतीमुखात्स्वं आत्मानंभैम्यानिरस्तनिराकृतङ्किलनिश्चयेनावेत्यज्ञात्वास्वदेगमनेकिमर्थमस्माभिःतत्रगन्तव्यमितितत्स्वादभङ्गान्मुखेन्दौचचित्तेविषादाच्चिरस्यमांद्यमालस्यम्वित्यतविस्तार्यराजसमाजमीयुर्जग्मुः । चि रस्येतिपाठेःशनैःशनैःस्वदेमान्द्यंशनैःस्वेषुमुखेमांद्यंमलिनताच । एतन्मान्द्यद्वयेनचित्तस्यापिमान्द्यंप्रकाशितमितिभावः ॥ १७ ॥

**नलभ्रमेणापिभजेतभैमी कदाचिदस्मानितिशेषिताशा ॥ अभून्महेन्द्रादिचतुष्टयीसा चतुर्नलीकाचिदलीकरूपा ॥ १८ ॥**

नलेति । सामहेन्द्रादिचतुष्टयी काचित्अनिर्वचनीयाअलीकरूपामिथ्यारूपाचतुर्नलीअभूत् ॥ किंभूतादूतिमुखात्स्वस्मिन्भैमीविरागमाकर्ण्यापि इतिशेषिताशाअवशिष्टाशा। इतिकिम्। भैमीनलभ्रमेणापिअस्मान्कदाचित् भजेतइतिसम्भावनयेत्यर्थः। नलानुरक्ताभैमीनलभ्रान्त्याअस्मानपिवृणुयादितिमिथ्याचतुर्नलीरूपाभूत्वाचत्वारोपिइन्द्रादयस्तत्रागताइतिभावः १८

प्रयस्यतान्तद्भवितुंसुराणां दृष्टेनपृष्ठेनपरस्परेण ॥
नैवानुमेनेनलसाम्यसिद्धिः स्वाभाविकात्कृत्रिमम
न्यदेव ॥ १९ ॥

प्रयास्यतामिति । नसःअसःसभवितुन्तद्भवितुंनलीभवितुंप्रयस्ततांप्रय
त्नङ्कुर्वतांसुराणांमध्येअयंनलतुल्योजातोनवेतिदृष्टेनअवलोकितेनतथाऽहं
नलतुल्योजातोनवेतिकथयेतिपृष्टेनपरस्परेणान्योन्येननलसाम्यसिद्धिः पर
स्परनलतुल्यत्वसिद्धि.नैवअनुमेनेनानुमता । त्वनलसदृशोनाभूस्त्वमपि
नलसदृशोनाभूरितिपरस्परन्नूचुरित्यर्थः । यतःस्वाभाविकात्सहजात्कृत्रि
मंअन्यदेव । सहजस्यकृत्रिमस्यचमहदन्तरंयस्मात्तस्मात्तेदेवानलसदृ
शानजाताइतिभावः । सुराणांनलसाम्यसिद्धिरितिवाअन्वयः । तद्भैतमि
द्धिर्नैवतानुमेनइतिपाठेतुद्धितैवद्वैतंप्रज्ञादित्वात्स्वार्थेअण् तस्यनलस्यद्वैत
न्तद्वैतन्तस्यसिद्धिर्लाभोनानुमेनेयतखेदे ॥ १९ ॥

पूर्णेन्दुमास्यंविदधुःपुरस्ते पुनर्मुखीचक्रुरनिद्रम
ब्जम् ॥ स्ववक्रमादर्शतलेथदर्शं न्दर्शंन्दधभञ्जुर्न
तथातिमञ्जु ॥ २० ॥

पूर्णेन्दुमिति । तेदेवाःपूर्णेन्दुंपूर्णिमाचन्द्रंपुनःआस्यंमुखम्विदधुश्चक्रु.।
तथाअनिद्रम्विकसितंकमलंपुन.पुनःमुखीचक्रुः। पूर्वंपूर्णचन्द्रंमुखीचक्रुः।
तमयोग्यमितिज्ञात्वापश्चात्विकसितङ्कमलन्तदपि अयोग्यंज्ञात्वापुनरपि
चन्द्रन्तदनन्तरंपुरपिकमलंमुखीचक्रुरितिपुनःशब्दयोरर्थः । अथएवंकृते
पिआदर्शतलेदर्पणमण्डलेस्ववक्रन्दर्शन्दर्शं आदरात्परीक्षकदृष्ट्यादृष्ट्वादृ
ष्ट्वाचभञ्जुःजग्मीचक्रुः । पुनस्तथानलमुखवदतिमञ्जुअतिसुन्दरंनाभूत्पू
र्णचन्द्रविकसितकमलाभ्यामपिनलमुखमतिसुन्दरमितिभावः । दर्शंन्दर्शं
आभीक्ष्ण्येणमुल्चेतिणमुल्द्वित्वञ्च ॥ २०

तेपान्तदालब्धुमनीश्वराणां श्रियंनिजास्येननला
ननस्य ॥ नालन्तरीतुंपुनरुक्तिदोष स्त्वर्हिमुखा
नामनलाननत्वम् ॥ २१ ॥

तेषामिति । तदानलरूपनिर्माणावसरे निजास्येननलाननस्यश्रियंनला

ननशोभांलब्धुं अनीश्वराणांअसमर्थानान्तेषाम्वह्निर्मुखानान्देवानांअनला नत्वेअग्निमुखंकर्तुं अथचनलाननमतुल्याननत्वराहित्यं पुनरुक्तिलक्षणान्दोष न्तरीतुपरिहर्तुं अलंसमर्थनाभूत् । अग्निमुखावैदेवाइतिपूर्वंश्रुतिसिद्धेएव तेषाम्वन्हिमुखत्वेपुनर्वन्हिमुखत्वंपुनरुक्तम् । अथचपूर्वमपिनलाननतु ल्याननत्वराहित्येसिद्धेपि अलीकनलीभवनान्तरंपुनरपिनलाननत्वराहि त्यात्पुनरुक्तमेवजातम् । शब्दच्छलात्पौनरुक्त्यमित्यर्थः । तन्मुखनलमुखस कृशङ्कथञ्चिदपिनाभूदितिभावः । अन्यस्याप्यसमर्थस्यआननपुनरुक्तिदोषं परिहर्तुं नशक्नोतीत्युक्तिः । वह्निःकृशहुताशयोरितिविश्वकोशः ॥ २१ ॥

**प्रियावियोगक्कथितादिवैला च्चन्द्राच्चराहुग्रहपी डितात्ते ॥ ध्मातात्द्भवेनस्मरतोपिसारैः सङ्कल्पय न्तिस्मनलानुकल्पम् ॥ २२ ॥**

प्रियावियोगेति । तेदेवाःप्रियावियोगेनउर्वश्याःविरहेणक्कथितात्त्व ऐलात्पुरूरवसः तथाराहुग्रहपीडितादिवचन्द्राच्च तथाध्मातादिवईश्वरेण इत्यर्थात्दग्धादिवस्मरतोपिगृहीतैःसारैःश्रेष्ठभागैःकृत्वास्वं आत्माननला नुकल्पंनलस्यप्रतिनिधिङ्कल्पयन्तिस्म । प्रियावियोगादयःसाराकर्षणोपाय त्वेनोत्प्रेक्षिताः । अन्यस्यापिसारःक्कथनपीडिताग्निदाहादिभिःसमाकृष्य तेप्रियावियोगक्कथनरहितैलग्रहपीडनरहित चन्द्रेश्वरकृतदाहरहितकामतु ल्यस्यनलस्यत्रिभ्योपिअधिकत्वात्इतिभावः । मुख्यःस्यात्प्रथमःकल्पोनु कल्पस्तुततोधमइत्यमरः । किलैलादिपाठेकिलउत्प्रेक्षायाम् ॥ २२ ॥

**नलस्यपश्यत्त्वियदन्तरन्ते भैमीतिभूपान्विधिरा हृतास्यै ॥ स्पर्धान्दिगीशानपिकारयित्वा तस्यैव तेभ्यःप्रथिमानमाख्यत् ॥ २३ ॥**

ननुभैम्याः नलेनिरतिशयंअनुरागंज्ञात्वाश्रुत्वाचइन्द्रादयोराजामध्यकथ न्तत्रागताइत्यतआह । नलस्येति । विधिःब्रह्माऽस्यैभूपान्इतिमनसिधृ त्वाऽऽहृतनीतवान्इतिकिम् । भैमीतैर्भूपैःसहनलस्यइयत्अन्तरन्हस्ताद्य भिनयमात्रेणअनिर्वचनीयङ्कथनीयम्विशेषतःपश्यतु । तथादिगीशानपिन लरूपधारणद्वारानलस्यस्पर्धाङ्कारयित्वातस्यैवप्रथिमानन्तेभ्योदिगीशेभ्यो पिआख्यत्भैमींप्रतिइत्यर्थात् । साक्षाद्दर्शनात्तारतम्यंज्ञायतेनतुपरोक्ष

मितिकारणाद्राजानःसमाहूताः अधिकेनसहस्पर्धाभवतियतोदिगीशैर्नल त्वेनविनाभैमीप्राप्त्यभावात्तत्प्राप्त्यर्थंनलाधिक्यमेवब्रह्मणोक्तमित्यर्थः । उभयेभ्योपिनलएवाधिकइतिभावः । नलरूपेधृतेपितत्तुल्यानजाताः । इ यमन्तरमित्यपिपाठः । दिगीशान्हक्रोरन्यतरस्यामितिकर्मत्वम् ॥ २३ ॥

सभानलश्रीयमकैर्यमाद्यै र्नलम्विनाभूद्धृतदिव्यर त्नैः ॥ भामाङ्गणप्राघुणकेचतुर्भि र्देवद्रुमैर्द्यौरिवपा रिजाते ॥ २४ ॥

समेति । सास्वयम्वरसभा नलश्रियोयमकैःप्रतिनिधिभिर्यमाद्यैश्चतुर्भि र्नलम्विनाद्यौरिवअभूत् । किंभूताद्यौः । पारिजातेभामायाःसत्यभामा याः अङ्गणस्यप्राघुणिकेअतिथौसतिचतुर्भिर्मन्दारसन्तानकल्पवृक्षहरिचन्द नसंज्ञकैर्देवद्रुमैरुपलक्षिता । किंभूतैरुत्तयैः धृतदिव्यरत्नैःधृतदिव्यरत्नाभ रणैः मूलादारभ्यअग्रपर्यन्तन्धृतमुक्तादिदिव्यरत्नैश्च । पारिजातम्विनामंदा रादिषुसत्सु अपिद्यौर्ययानशोभतेतथानलरूपधारिषुइन्द्रादिषुसत्सुमुख्यं नलम्विनासभानशुशुभे इन्द्रादयोयद्यपिसभायामागतानलश्चनागत इति भावः ॥ २४ ॥

तत्रागमद्वासुकिरीशभूषा भस्मोपदेहस्फुटगौरदे हः ॥ फणीन्द्रवृन्दप्रणिगद्यमानः प्रसीदजीवाद्यनु जीविवादः ॥ २५ ॥

तत्रेति । वासुकिस्तत्रस्वयम्वरसभायामगमत् । किंभूतः । ईशस्यभूषा यंभस्मैवउपदेहोङ्गरागस्तेनस्फुटंप्रकटङ्गौरउज्ज्वलोदेहोयस्य । तथाफ णीन्द्रवृन्दैःकर्कोटकादिसर्पश्रेष्ठैः प्रणिगद्यमानउच्यमानःप्रसीदजीवइत्या दिशब्दोयत्र ईदृशोऽनुजीविनांसेवकानांवादःकोलाहलोयस्य । प्राक् भूयेत्यनेनवासुकेः पातालाच्चलनमात्रमेवोक्तंइन्द्रादीनांतुसभागममिति नपौनरुक्त्यम् । ईशवासादितिपाठेईश्वरशरीरेयोगपट्टादिभवनान्निमित्तव सतेर्हेतोः ॥ २५ ॥

द्वीपान्तरेभ्यः पुटभेदनन्त क्षणादथापेतुरभूमि भूपैः ॥ तत्कालमालम्विनकेनयूना स्मरेषुपक्षा

निलतूललीला ॥ २६ ॥

द्वीपेति । सुरभूमिषुदेवभूमिषुद्वीपान्तरलक्षणासुयेभूपाःराजानस्तेद्वीपान्तरेभ्यस्तत्रादिभ्यः सकाशात्ततपुटभेदनकुण्डिननाख्यंनगरतत्रात्झटिति अवापेप्राप्तम् । तत्रागमनेहेतुमाह । केनयूनातत्कालन्तस्मिन्नैमीस्वयम्वरसमयेस्मरेषुपवनानिलतूललीलाकामवाणपवनवातसम्बन्धात्कार्पासविलासोनअलम्बिनअङ्गीकृतः अपितुसर्वैणापितूललीलाअङ्गीकृता । वातेरितस्तूलोयथादूराज्झटितिआयातितथाते अपिकामपीडितासन्तःसर्वेझटितिअनायासेनआयाताइतिभावः ॥ २६ ॥

रम्येषुहर्म्येषुनिवेशनेन सपर्ययाकुण्डिननाकनाथः ॥ प्रियोक्तिदानादरनम्रताद्यै रुपाचरच्चारुसराजचक्रम् ॥ २७ ॥

रम्येष्विति । कुण्डिनमेवनाकःतस्यनाथःभीमःरम्येषुहर्म्येषुनिवेशनेनस्थापनेनकृतयासपर्ययाआतिथ्येन तथाप्रियोक्त्याप्रियवचनेनदानेनउपस्कारादिदानेन आदरेणनम्रतयाचआदरकृतयानम्रतयाआएतदाद्यैः कृत्वाचारुसम्यक्यथातथाराजचक्रं उपाचरत् अतूतुपत् ॥ २७ ॥

चतुःसमुद्रीपरिखेनृपाणा मन्तःपुरेवासितकीर्तिदारे ॥ दानन्दयासूनृतमातिथेयी चतुष्टयीरक्षणसौविदल्लाः ॥ २८ ॥

सार्वभौमेनतेकथंपूजिताइत्याशङ्क्याह । चतुरिति । चतुर्णांसमुद्राणांसमाहारःचतुःसमुद्रीसापरिखायस्यएवम्विधेवासिताःवसतिङ्कारिताःकीर्त्तयएवदाराःयत्रएवंभूतेनृपाणांअन्तःपुरेभूलक्षणेविषयेदानन्दयासूनृतंप्रियवचनं आतिथेयीअर्घोपूजाएवंरूपाचतुष्टयीरक्षणार्थेसौविदल्लाःकञ्चुकिनदानादिचतुष्टयेनराज्ञाङ्कीर्त्तिः परिपाल्यतेनान्यथाइतिहेतोः प्रभुणापितेनकीर्त्तिरक्षणायसपर्यादिभिःपरितोषिताइतिभावः । औदार्यदाक्षिण्यदयादमानामितिपाठः । अन्यत्राप्यन्तःपुरेपरिखाभवतिदाराश्चतिष्ठन्तिरक्षकाश्चभवन्ति ॥ २८ ॥

अभ्यागतैःकुण्डिनवासवस्य परोक्षवृत्तप्रपितेषु

तेषु ॥ जिज्ञासितस्त्रेप्सितलोभलिङ्गं स्वल्पोपिना वापिनृपैर्विशेषः ॥ २९ ॥

अभ्यागतैरिति । अभ्यागतैः समागतैः अतिथिभूतैर्वा नृपैः कुण्डिनवासव स्त्रीनस्यतेषु तेषु परोक्षेषु अपरोक्षेषु अनिर्वचनीयेषु परस्परेणाज्ञातेषु प्रियो क्त्याद्याचरणेषु अपि विषयेपरोक्षवृत्तेषु निष्पन्नेषु प्रियोक्त्यादिषु स्वल्पोपि वि शेषः प्रियोक्त्यादौ तारतम्यं नालम्भि न प्राप्तः । किंभूतः जिज्ञासितस्य ज्ञातुमि ष्टस्य स्वेप्सितस्य भैमीलक्षणस्य लाभ प्राप्तिः तस्य लिङ्गं चिन्हम् । अनेन एत स्य मदपेक्षया प्रियोक्त्यादिना आदरः कृतः तर्हि भैमीमेतस्मै दास्यतीति विशेषः कस्य अनेन महान् आदरः क्रियत इति जिज्ञासायां विशेषस्तैर्नबुद्ध इत्य र्थः । प्रत्यक्षं यस्य प्रियोक्त्यादिकृतं तत्र विशेषो न प्राप्त. किंपुनः परोक्षवृत्तेषु इत्यपिशब्दार्थः । सर्वेषामपि पूजादिसममेव कृतमिति भैमीं ममैव भविष्यति इति सर्वेपि अमंसत इति भावः ॥ जिज्ञासित. सविसर्गोपि पाठ क्वचित् २९

अङ्के विदर्भेन्द्रपुरस्य शङ्के न संममौ नैषतथा समाजः ॥ यथा पयोराशिरगस्त्यहस्ते यथा जगद्वा जठरे मुरारेः ॥ ३० ॥

अङ्क इति । पयोराशि अगस्त्यस्य हस्ते यथा ममौ । यथा वा मुरारेः जठरे जगत् त्रैलोक्यं तथा विदर्भेन्द्रपुरस्य अङ्के मध्ये एष समाजः राजवृन्दं न संममौ इति न किन्तु तथैव संममौ इति अहं शङ्के मन्ये । एतेन नगरस्य अतिविस्तृतत्व मुक्तम् ॥ ३० ॥

पुरे पथि द्वारगृहाणि तत्र चित्रीकृतान्युत्सवयाञ्चयैव ॥ न भ्रोपि किर्मीरमकारि तेषां महीभृतामाभरणप्रभाभिः ॥ ३१ ॥

पुर इति । तत्र पुरे पथि राजमार्गे समीपे द्वारगृहाणि मुख्यपुरोज्ञागैरचिता नि द्वाराणि राजमार्गं उभयतो गृहाणि । यद्वा पन्थानो राजमार्गा. द्वाराणि गृहा णि च । यद्वा पथिषु द्वाराणि येषां तानि गृहाणि उत्सववाञ्छया विवाहोत्सवा भिलाषेण आलेख्यादिना कृत्वा लोकैः चित्रीकृतानि अत एव आश्चर्यरूपा णि कृतान्येव तत्र आश्चर्यं न किन्तु तेषां महीभृतां आभरणप्रभाभिस्तत्रत्य नभ

स्तुआकाशमपिकिर्मोरंनानावर्णमकारिकृतम् । गृहादीनिचित्रीकृतानिइतिकिंवाच्यमाकाशमपिआजरणतेजोभिर्विचित्रितमित्यर्थः ॥ ३१ ॥

**विलासवैदग्ध्यविभूषणश्री स्तेषान्तथासीत्परिचारकेपि ॥ अज्ञासिषुःस्त्रीशिशुवालिशास्तं यथागतंनायकमेवकंचित् ॥ ३२ ॥**

विलासेति । विलासःकटाक्षविक्षेपादिशृङ्गारचेष्टा । तथावैदग्ध्यम्वक्रोक्त्यादिभाषणचातुर्यम्विभूषणंसुवर्णाद्यलङ्कारएतज्जनिताश्रीःशोभातेषांराज्ञांपरिचारकेसेवकेपितथाआसीत् यथायेनप्रकारेणस्त्रीशिशुवालिशास्तापरिचारकमपिकञ्चिदागतंनायकमेवमुख्यंराजानमेवाज्ञासिषुः बुध्यन्तेस्म सेवकस्यविलासादिशोभांदृष्ट्वा अयंराजविशेषएवेतिसेवकेस्त्र्यादीनांभ्रान्तिरभूदितिभावः । शिशावज्ञेचवालिशइत्यमरः ॥ ३२ ॥

**अस्वेदगात्राश्चलचामरौघै रमीलनेत्राःप्रतिवस्तुचित्रैः ॥ अम्लानमालाविधृतातपत्रै र्देवान्नदेवाश्चभिदांनभेजुः ॥ ३३ ॥**

नेति तत्रराजसमाजेदेवाःनृदेवाःराजानोनविभिदुःभेदंनप्रापुःकथंस्वभावतएवदेवाः नस्वेदिनःचलच्चामरमारुतेनउपलक्षितास्तथास्वभावसोमनिमेषनेत्राः निर्निमेषाइत्यर्थं .प्रतिवस्तुचित्रैर्वस्तुनिवस्तुनिआश्चर्यैरुपलक्षितास्तथानग्लानस्रजः आतपवारणेनच्छत्रेणउपलक्षिताएवंभूताइन्द्रादयोराजानश्चचलचामरौघैःकृत्वाअस्वेदगात्राःप्रतिवस्तुचित्रैः अमीलनेत्राःविधृतातपत्रैरम्लानमालाः सर्वथाराजानोदेवतुल्याबभूवुरितिभावः अस्वेदगात्राःअमीलनेत्राःअम्लानमालाइत्यपिपाठः । भिदांनभेजुरितिपाठः ३३ ॥

**अन्योन्यभाषानवबोधभीतेः संस्कृत्रिमाभिर्व्यवहारवत्सु ॥ दिग्भ्यःसमेतेषुनरेषुवाग्भिः सौवर्गवर्गोनजनैरचिह्नि ॥ ३४ ॥**

अन्योन्येति जनै कुचि इनस्थितैः लोकैर्दिग्भ्यःसमेतेषुसमागतेषुनरेषुराजसुमध्येसौवर्गवर्गःदेवसमूहोनाचिह्नितातर्किंदेवत्वेननज्ञातइत्यर्थः । किंभूतेषुनरेषु । अन्योन्यभाषानवबोधात्परस्परभाषावोधाभावात्याभीति

तस्याः हेतोः संस्कृत्रिमाभिः प्रकृतिप्रत्ययनिर्वचनरूपेणसंस्कारेणनिवृत्ता भिः सर्वसाधारणीभिः वाग्भिः कृत्वाव्यवहारवत्सु परस्परंव्यवहारङ्कुर्वत्सु परस्परम्भाषानवबोधभयात्संस्कृतमेववदन्ति । संस्कृतस्यदेवमनुष्यसाधारणत्वात् एतेदेवाएतेमनुष्याइतितत्त्वैर्नेज्ञाताइतिभावः । संस्कृत्रिमाभिरितिसंपर्युपेभ्यइतिसुट् । गुणाधानस्यभूषणशब्दार्थत्वमत्र । स्वर्गेभवाः सौवर्गाः । भवार्थेतत्रभवइत्यण् । द्वारादीनाञ्चेतिऐजागमोवृद्धिनिषेधश्च । स्वर्गीयइतिपाठेभवार्थेवानामधेयस्येतिवृद्धसञ्ज्ञत्वाद्वृद्धाच्छः ॥ ३४ ॥

तेतत्रतैभ्याश्चरितानिचित्रे चित्राणिपौरैःपुरिलेखितानि ॥ निरीक्ष्यनिन्युर्दिवसंनिशाञ्च तत्स्वप्नसम्भोगकलाविलासैः ॥ ३५ ॥

तेतत्रेति । तेदेवाःराजानश्चतत्रपुरितस्यांपुर्यांपौरैःलोकैःलिपिकरैःकृत्वाचित्रेलेखितानिचित्राणिनानाविधानि आश्चर्यरूपाणिवाभैम्याश्चरितानिनिरीक्ष्यदिवसंनिन्युः । तस्याभैम्याःस्वप्नेयःसभोगःरतन्तत्सम्बन्धिभिः कलाविलासैःचुम्बनादिकलाकौशल्यैश्चनिशांनिन्युः अतिवाहयावभूवुःसते अहोरात्रःकथञ्चित्अतिक्रान्तइतिभावः । अस्वप्नानामपिदेवानाङ्कामभ्रान्तिरेवस्वप्नस्थानेद्रष्टव्या ॥ ३५ ॥

साविभ्रमंस्वप्नगतापितस्यां निशिस्वलाभस्यददेयदेभ्यः ॥ तदर्थिनांभूमिभुजाम्बदान्या सतीसतीपूरयतिस्मकामम् ॥ ३६ ॥

साविभ्रममिति ॥ तस्यांनिशिस्वयम्वरात्पूर्वदिनरात्रौ स्वप्नगतास्वप्नदृष्टापिसासतीसाध्वी एभ्योदेवेभ्योराजभ्यश्चस्वलाभस्यस्वप्राप्तेर्विभ्रमम्विलासंभ्रमचविशिष्टंभ्रमंभ्रान्तिंयद्ददेदत्तवती तत्स्वयमेवअर्थिनांअर्थयमानानांभूमिभुजान्देवानांराज्ञांचवदान्यादानशूरासती काममदनमभिलाषञ्चपूरयतिस्म । लाभविभ्रमदानमेवकामपूरणमित्यर्थः । यत्यस्मात्तस्मादितिकेचित् । पतिव्रतायाःसर्वकामपूरकत्वंविरुद्धम् । भ्रान्तिदृश्यश्याश्लीकत्वात्सर्वकामपूरणेपिदोषाभावात्परिहारः ॥ ३६ ॥

वैदर्भदूतानुनयोपहूतैः शृङ्गारभङ्गीरनुभावयद्भिः ॥

स्वयम्बरस्थानजनाश्रयैस्तै र्दिनेपरत्रालमकारि वीरैः ॥ ३७ ॥

वैदर्भेति । तैर्वीरैःशूरैःराजपुत्रैःपरत्रपरस्मिन्दिनेस्वयंवरस्यस्थानन्देशस्तस्यजनाश्रयोमण्डपअलमकारिअलङ्कृतः । सर्वेपिवीरास्तत्रागताइतिभावः । किभूतैःवैदर्भस्यभीमस्यदूतैःकर्तृभिरनुनयेनविनयेनकृत्वाउपहूतैराकारितैः । तथाशृङ्गारभङ्गीःशृङ्गारप्रकारविशेषान् अनुभावयद्भिःप्रकाशयद्भिः । भङ्गीष्वनुभावयद्भिरितिपाठेशृङ्गारविच्छित्तिषुनिपुणैरित्यर्थः । अनुभावःप्रभावेस्यान्निश्चयेभावसूचनेइतिविश्वः । मण्डपोस्त्रीजनाश्रयइत्यमरः ॥ ३७ ॥

भूषाभिरुच्चैरपिसंस्कृतेय न्वीक्ष्याकृतप्राकृतबुद्धिमेव ॥ प्रसूनबाणेविबुधाधिनाथ स्तेनाथसाशोभिसभानलेन ॥ ३८ ॥

भूषाभिरिति । अथतेननलेनसासभाअशोभि । साका । विबुधाधिनाथःइन्द्रोयंनलम्वीक्ष्यभूषाभिरलङ्कारैरुच्चैः अतितरांसंस्कृतेपिमण्डितेपिप्रसूनबाणेकामेविषयेप्राकृतबुद्धिमेवअकृत उच्चैःप्राकृतबुद्धिमितिवासालङ्कृतोमदनोपिएतत्सदृशोनास्तिकिंअन्यदिति । नलोपितत्रागतइतिभावः । पण्डितोपिसंस्कृतेप्राकृतबुद्धिंअकृतइतिविरोधाभासः प्राकृतश्चपृथक्जनइत्यमरः ॥ ३८ ॥

धृताङ्गरागेकलितद्युशोभा न्तस्मिन्सभाञ्चुम्बति राजचन्द्रे ॥ गतावताक्ष्णोर्विषयम्विलङ्घ्य क्षत्रनक्षत्रकुलस्यकान्तिः ॥ ३९ ॥

धृतेति । धृताङ्गरागेकुङ्कुमचन्दनादिनाकृताङ्गानुलेपनेतस्मिन्राजचन्द्रेनलेकलिताकृताद्युशोभास्वर्गशोभाययाएवम्विधांसभाञ्चुम्बतिसति प्राप्तेसतिक्षत्राण्येवनक्षत्राणितेषांकुलस्यसमूहस्यकान्तिः अक्ष्णोर्विषयङ्गोचरम्विलंघ्यक्वकुत्रगतावतखेदे । तन्नज्ञातमित्यर्थः । नक्षत्राणीतिनसमासः । क्षत्राणिचनक्षत्राणिचयेक्षत्रियाःयेचनक्षत्रियाः क्षत्रियव्यतिरिक्ताश्चतेषाङ्कुलमितिवा । उदयसमयेआरक्तवर्णोचन्द्रेसमीपस्थानिनक्षत्राणियथानिः

श्रीकाचिभवन्तितथानलसमीपेतेपोत्यर्थः । अतिसुन्दरंनलंदृष्ट्वामैमीएन मेववरिष्यतीतिनिश्चित्यसर्वेनिश्रीःकाइतिभावः । कलिताव्यामाद्यौर्य याएवञ्चिधाश्रीभारत्यादिभिर्येस्याइतिवा ॥ ३९ ॥

द्राग्दृष्टयःक्षोणिभुजाममुष्मिन्नाश्चर्यपर्युत्सुकितानिपेतुः ॥ अनन्तरन्दन्तुरितभ्रुवान्तु नितान्तमीर्ष्याकलुषादृगन्ताः ॥ ४० ॥

द्रागिति । अतिसुन्दरत्वात्आश्चर्येणपर्युत्सुकिताउत्कण्ठिताःक्षोणीभु जांराज्ञांदृष्टयःअमुष्मिन्नलेद्राक्झटितिनिपेतुः । प्रथमदर्शनमात्रेणाउत्क ण्ठिताःसत्यस्तस्मिन्नेवलग्नाःस्थिताइत्यर्थः । अनन्तरन्तुक्रोधवशाद्दन्तुरित भ्रुवाकुटिलितभ्रुवान्तेषांदृगन्ताःनेत्रप्रान्ताः नितान्तमीर्ष्ययाकलुषाःकषा यिताःनिपेतुः । अतिसौन्दर्यात्ईर्ष्याराहित्येनप्रथमन्तदृष्ट्वाअनन्तरंभैमी अस्मान्विहायएनंवरिष्यतीतिईर्ष्ययातन्दद्दृशुरितिभावः । क्रुद्धोहिपूर्णया दृशानपश्यति । अथवाअनन्तरंराजभिरवलोकितेसतिदन्तुरितभ्रुवांनारी णांअहमहमिकयापरस्परेर्ष्यावशात्कलुषिताःकटाक्षानिपेतुः । सर्वाभिः स्त्रीभिरपिअनुरागवशात्कटाक्षैर्दृष्टइतिभावः । प्राग्दृष्टयइत्यपिपाठः॥४०॥

सुधांशुरेषःप्रथमोभुवीति स्मरोद्वितीयःकिमसावितीमम् ॥ दस्रस्तृतीयोयमितिक्षितीशाः स्तुतिच्छलान्मत्सरिणोनिनिन्दुः ४१

सुधांशुरिति ॥ प्रश्नार्थस्यकाक्वर्थस्यकिमःप्रत्येकंसम्बन्धः । भुविएषःप्र थमोनूतन.अवतीर्णःद्वितीयःसुधांशुःकिंइति । तथाभुविअसौद्वितीयःस्म रःकिंइतितथाभुविअयंतृतीयोदस्र.नासत्यः किंइतिस्तुतिच्छलात्मत्सरि णःईर्ष्यासहिताःक्षितीशाराजानःकेवलस्तुतिव्याजात्इमंनलंनिनिन्दुः । किमःप्रश्नार्थत्वात्तुष्टुवुरित्यर्थः । अपरेमत्सरित्वात्किमःकाक्वर्थादयंसुधां शुःकिमपितुनभवतीतिनिनिन्दुःएवंसर्वत्र । एकेनभुविअयंद्वितीयश्चन्द्रइ तिस्तुतौकृतायामपरेणेर्ष्यावशात्भुविद्वितीयचन्द्रस्यअसम्भवात्अयंनच न्द्रइतिप्रतिषेधतोनिंद्यतेस्मइतिभावः । मत्सरोन्यशुभद्वेषइत्यमरः । प्रश्न पक्षेकिंनिनिन्दुरितिवायोजना ॥ ४१ ॥

आद्यं विधोर्जन्मस एष भूमौ द्वैतं युवासौ रतिवल्लभस्य ॥ नासत्ययोर्मूर्तितृतीयिकेयमिति स्तुतस्तैः क्रमत्सरैः सः ॥ ४२ ॥ इहैद्रुशाः सन्ति कतीति दुष्टे दृष्टान्तिताऽलीकनलावलीतैः ॥ आत्मापकर्षे किल मत्सराणां द्विषः परस्पर्द्धितया समाधिः ॥ ४३ ॥

आद्यमिति । द्वयोर्भावो द्विता द्वितैव द्वैतम् । अयं श्लोको गतार्थत्वादपुनर्व्याख्यातः ॥ ४२ ॥

मयेति । तं नलमसहमानैस्तैः राजभिर्मिथः परस्परं इति कथे । इति किम् । मायानलोदाहरणात् इन्द्राद्यलीकनलदृष्टान्तेन अमुना नलेन समास्तुल्याः । कियन्तो बहवः सन्ति एतेन तुल्या अन्येऽपि बहवः अत्र विद्यन्ते एनमेव पुःपुनः किं इति वर्णयथेति । अन्येषां तत्तुल्यत्वे स्वस्य तत्कर्षः । कथमित्याशङ्कायामाह । मत्सराणामीर्ष्यावतां द्विषः सकाशादात्मापकर्षे सति आत्मनो न्यूनत्वे सति शत्रोः परेण कृतायाः स्पर्द्धाया तुल्यतया समाधिः समाधानं परिहारो भवति । मत्सरिणामात्मापकर्षमविचार्य शत्रोः परेण तुल्यत्वप्रतिपादनात् स्वीयापकर्षपरिहारो भवति । अतिसुन्दरतया तस्यैव नैमीप्राप्तिसम्भावनया सर्वेऽपि ते तं न सहन्ते स्मेति भावः । परस्पर्द्धितयेति पाठे परस्पर्द्धी यस्य तस्य भावस्तत्ता तयेति व्याख्येयम् ॥ इहेदृशाः सन्ति कतीति दुष्टे दृष्टान्तिताऽलीकनलावलीतैरित्यपि पाठः स्पष्टार्थः । मत्सरशब्दः अर्शआदिर्द्रष्टव्यः । स्पर्धनं स्पर्धेति घञन्तात् तत्करोतीति ण्यन्तात् स्त्रियां भावे युच् ॥ ४३ ॥

गुणेन केनापि जनेन वद्ये दोषान्तरोक्तिः खलु तत्खलत्वम् ॥ रूपेण तत्संसददूषितस्य सुरैर्नरत्वं यददूषितस्य ॥ ४४ ॥

गुणेनेति । रूपेण सौन्दर्येण कृत्वा तस्यां संसदि तया संसदा सभया वाऽदूषितस्य अनिन्दितस्यातिसुन्दरस्य तस्य नलस्य सुरैः सुन्दरोऽपि मनुष्योऽयं न तु देव इति नरत्वं यददूषि निन्दितं तत्खलत्वं खलु तत्तैर्दौर्जन्यमेव कृतमित्यर्थः । खलत्वस्वरूपमेवाह । केनापि लोकोत्तरेण गुणेन सौन्दर्यसुशीलत्वादिना कृत्वा अनवद्ये पूज्ये जने पुंसि दोषान्तरोक्तिर्दोषान्तरारोपणम् । यद्वा सुरैस्तत्संसददूषितस्य तस्य नरत्वं रलयोरभेदात् नलस्य रूपेण स्वरूपेण नलत्वं अदूषित त्व

लत्वं तेषान्देवानान्द्वौजन्यंखलुइतियोजना । तत्कलत्वमेकंपदम् । अति सुन्दरन्त्वंदृष्ट्वादेवाअपिसेर्ष्याजाताइतिभावः ॥ ४४ ॥

नलानसत्यादवदत्ससत्यः कृतोपवेशानवदत्सुवेषान् ॥ उभौकिमैलश्चनदर्पकश्च भवन्तिनासत्ययुजौभवन्तः ॥ ४५ ॥

नलानिति । सःसत्यःनलःसविधेसमीपेकृतोपवेशान्कृतस्थितान्सुवेषान् शोभनाकारान्असत्यान्नलानिन्द्रादीन्इतिअवदत् । इतिकिम् । भवन्तश्चत्वारःएतेनभवन्तिकिम् । एतेके इलासूःपुरूरवाःदर्पकःकामश्चउभौकिमु । किम्भूतौसत्ययुतौ आश्विनेयसहितौ । पुरूरवाःकामःअश्विनौकुमारौयमितिनलप्रश्नः । यथानलदृष्ट्वाअन्येषाम्विस्मयः तथानलस्यापिमिथ्यानलदर्शनेनविस्मयोजातइत्यर्थः ॥ ४५ ॥

अमीतमीदृग्जगुरत्रमध्ये कस्यापिनोत्पत्तिरभूदिलायाम् ॥ अदर्पकाःस्मःसविधेस्थितास्ते नासत्यतांनात्रबिभर्त्तिकश्चित् ॥ ४६ ॥

अमीति । अमीमिथ्यानलाःतंसत्यंनलंईदृक्एतादृशंजगुःआहुःस्मवदन्तिस्म । यत्यस्मात्अत्रअस्मासुमध्येइलायांपृथ्व्या अथचइलायापुरूरवसोमातरिकस्यापिउत्पत्तिर्नाभूत्तथातेतवसविधेसमीपेस्थिताः वयअदर्पकाःदर्पकात्कामात् अन्येअथवाऽतिरमणीयत्वकान्तिदर्शनात्दर्पोगर्वस्तद्रहितास्तिष्ठामः । तथाऽत्रास्मासुमध्येकश्चिन्नासत्यतांआश्विनेयत्वं अथचसत्यत्वंनबिभर्ति । अथवाऽस्मासुकश्चित्नानरःसत्यतांनबिभर्ति । वयन्त्वद्रूपधारणादसत्याःएवेतिनलेनपूर्वोक्तंनलप्रश्नंउत्तरयन्तिस्मेत्यर्थः । नात्रपुरूरवाःकामःदस्रौवास्मासुसन्तीति । नासत्येतिनञ्चाश्लिष्टप्रकृत्या ४६

तेभ्यःपरान्नःपरिकल्पयस्व श्रियाविदूरीकृतकामदेवान् ॥ अस्मिन्समाजेबहुषुभ्रमन्तो भैमीकिलास्मासुघटिष्यतेसौ ॥ ४७ ॥

तर्हिकेयूयमित्याशङ्क्याह तेभ्यइति । त्वंश्रियाशोभयाविदूरीकृतोजितोकामदेवोयैस्तान् नोऽस्मांस्तेभ्यःऐलादिभ्योऽन्यान्परिकल्पयस्वजानी

हि । स्वशोभयावा । अत्रागमनेकारणमाहुः । अस्मिन्समाजेबहुषुराजसु विषयेष्वमन्तीअसौभैमीकिलसम्भावनायांघटिष्यतेसंयोगंयास्यति । अथ चसद्रथेषुपद्मसुभ्रमन्तीमुह्यन्तीभैमी अस्मासुमध्ये कस्मिं श्चिद्घटिष्यतेसं योगंयास्यतीतिदुराशया अस्माभिरागतमितिभावः ॥ किमद्देतौवा ॥४७॥

**असामयन्नामतवेहरूपं स्वेनाधिगत्याश्रितमुग्ध भावाः ॥ तन्नोधिगाशापतितांनरेन्द्र धिक्चेदम स्मद्विबुधत्वमस्तु ॥ ४८ ॥**

असामेति । नामेतिसम्भावनायाम् । हेनरेन्द्र साक्षात्स्वेनआत्मनैवत वरूपंसौन्दर्यं अधिगत्यज्ञात्वादृष्ट्वावाभैमीप्राप्तिदुराशावशात् श्रितमुग्ध भावाःअङ्गीकृतमौर्ख्याःसन्तःयत्यस्मादिहसभायां असामतिष्ठाम । अ थचस्वेनआत्मशरीरेणाकृत्वातवरूपं स्वरूपंअधिगत्यप्राप्यत्वदाकारंशरी रंधृत्वाश्रितमुग्धभावाः अङ्गीकृतसौन्दर्याःत्वदाकारधारणादेवश्रितसौ न्दर्याःसन्तोयस्मात् असामतिष्ठामहे । तत्तस्मादाशयाभैमीप्राप्तिदुराशया आपतितान्नःअस्मान्धिक् - निन्द्यावयमित्यर्थः । अथचअस्माकंआशाप तितान्दिक्पतित्वन्धिक्निन्द्यम् । अस्माकमाशामात्रेणपतितांभैमीपति त्वन्धिक्इतिवा । तथाइदंअस्मद्विबुधत्वंअस्माकंपण्डितत्वं अथचदेवत्व न्धिगस्तु अथचस्वेआत्मनिस्वीयरूपेपूर्वंतवरूपंनाधिगत्यनप्राप्यकिमिदा नीङ्कर्त्तव्यमितिप्राप्तमौर्ख्याःभ्रान्तचित्ताःसन्तः मत्सरेणइहस्वयम्बरेनलए वएकोवरणयोग्यइतिप्रसिद्धन्तवनामसंज्ञाख्यातिम्वावयं असामनाश्रितव न्तः स्वरूपधारणात्चतुर्णामस्माकमपिनलत्वात्इत्यर्थः । अस्माकलम्भा न्त्यापिअस्मान्वरिष्यतीतिआशयाआपतितान् आगतान्अस्मान्धिक् अ स्माकज्ञातृत्वन्देवत्वस्वाधिगस्तु । अनिश्चितव्यापारकरणादित्यर्थः । अ थचस्वानांज्ञातीनांमध्ये इनःश्रेष्ठः यद्वाधनानांस्वामिन्नरेन्द्रअसामेतिअ सगतिदीप्त्यादानेषु असन्नुवीत्यस्यचलोडुत्तमवहुवचनम् । पक्षेपोन्तकर्म णिलुङ्डि ॥ ४८ ॥

**सावागवाज्ञायितमांनलेन तेषामनाशङ्कितवाक् कुलेन ॥ क्षीरत्नलाभोचितयत्नमग्न मेनांहिनस्म प्रतिभातिकिञ्चित् ॥ ४९ ॥**

वेति । अनाशङ्कितमननुसंहितन्देवानाम्वाक्ष्छलंयेनतेननलेनसापूर्वो क्तातेषान्देवानाम्वाक् अवज्ञायितमांअतिशयेनअवगणिता । कथंनाज्ञा यीत्यतआह । खीरत्नमै मीतस्याःलाभेउचितोयत्न.उपायःतत्रमग्नन्तत्परं एनंनलप्रतिलक्षीकृत्यहियस्मात्नकिञ्चित् प्रतिभातिस्मस्फुरतिस्म । भै मीप्राप्त्युपायपरत्वात्तैःकथितमपिदेवत्वनज्ञातमितिभावः ॥ ४९ ॥

य:स्पर्धयायेननिजप्रतिष्ठां लिप्सु:सएवाहृतद्रु न्नतत्वम् ॥ कःस्पर्धितुस्वाभिहितस्वहानेः स्था नेवहेलाम्बहुलांनकुर्यात् ॥ ५० ॥

देववाक्यावज्ञायांहेत्वन्तरमाह । यइति यःपुरुषोयेनपुरुषेणसहस्पर्ध यानिजप्रतिष्ठांस्वगौरवलिप्सुःप्राप्तुमिच्छुःसएवपुरुषःतस्यउन्नतत्वंस्वस्मा दाधिक्ययस्मादाहब्रूते । तस्मात्स्वेनआत्मनाअभिहितावक्तास्वस्यहा निःयेनएवंस्विधस्यस्पर्द्धितुः स्थानेविषयेवहूक्तामवहेलांअवज्ञाङ्कोनकुर्या त्अपितुसर्वोपिकरोत्येव । योन्यस्पर्धयास्वस्यप्रतिष्ठांलिप्सतिसस्वस्यन्यू नतान्तस्याधिकतांस्वयमेववदति ॥ अतोऽधिकेनहीनस्यावज्ञाकर्तुंयुक्ता एवेत्यर्थः । प्रकृतेत्वैम्यर्थेनलरूपंदधद्भिर्देवैर्नलस्यैवअधिकतास्वस्यचन्यू नतोक्तैव । तस्मात्तेननलेनतेषांअवज्ञायुक्तैवकृतेतिभावः । स्थानेअव्य यस्थःदुचितमित्यर्थेइतिवा । अवहेलेतिक्षीरस्वामी । प्रतिष्ठामितिनलो केतिषष्ठीनिषेधः ॥ ५० ॥

गीर्दैवतागीतयशःप्रशस्ति श्रियातडित्वल्ललिता भिनेता ॥ मुदातदावैक्षतकेशवस्तं स्वयम्वराड म्बरमम्बरस्थः ॥ ५१ ॥

गीरिति । केशवःतदासमयेतंस्वयम्वरस्याडम्बरंसंभ्रमंमुदाहर्षेणावैक्षत। किंभूतःगीर्दैवतयासरस्वत्यागीताकीर्तितायशःप्रशस्तिःयशोगौरवयस्य त थाश्रियालक्ष्म्यादेहशोभयाचतडित्वतोविद्युत्सहितजलमेघस्यललितम्वि लासःतस्याभिनेताऽभिनयकारीतादृशमेघतुल्यइत्यर्थः । तथाम्बरस्थोव्यो मस्थः स्वयम्वरदर्शनार्थम्विष्णुरपितत्रागवइतिभावः ॥ ५१ ॥

अष्टौतदाष्टासुहरित्सुदृष्टीः सदोदिदृक्षुर्निदिदेशदे

वः॥ लैङ्गीमदृष्ट्वापिशिरःश्रियंयो दृष्टौमृषावादितकेतकीकः ॥ ५२ ॥

अष्टाविति । सद्यःस्वयम्वरसभान्दिदृक्षु द्रष्टुमिच्छुःदेवोब्रह्मातदाअष्टासुहरित्सुदिक्षुअष्टौदृष्टीःनेत्राणिनिदिदेशआदिष्टवान् । किंभूतः । लैङ्गींशिवसम्बन्धिनींशिरः श्रियंमस्तकशोभामदृष्ट्वापिअविलोक्यापिदृष्टौलिङ्गशिरोदर्शनविषयेमृषावादिताऽनृतत्राषणंकारिता । केतकीयेनलिङ्गरूपस्यशिवस्यपादौशिरश्चावलोकनार्थमहमधिकोहमधिकइतिविवदमानौविष्णुब्रह्माणौपातालसत्यलोकञ्चगतौ । विष्णुःपातालेगत्वाशिवचरणौनापश्यत् । ब्रह्मापिशिरोनापश्यत् । अनन्तरंविष्णुनाचरणौनादृष्टाविति सत्यमुक्तम् । ब्रह्मणातुशिरोदृष्टमित्यलीकमुक्तम् । तत्रःसाक्षित्वेनशिवशिरःस्थाहमानीतेतिकूटसाक्षिणीकृतेतिपुराणकथानुसन्धेया॥ ५२ ॥

एकेनपर्यक्षिपदात्मनाद्रिं चक्षुर्मुरारेरभवत्परेण तैर्द्वादशात्मादशभिस्तुशेषै र्दिशोदशालोकतलोकपूर्णाः ५३ ॥

एकेनेति । द्वादशआत्मानोदेहायस्यद्वादशदेहःसूर्यःएकेनआत्मनावपुषाअद्रिंमेरुंपर्यक्षिपत्प्रदक्षिणीचकार । अपरेणात्मनादेहेनमुरारेश्चक्षु दक्षिणनेत्रंअभवत् । शेषैस्तुदशभिस्तैर्देहैःकृत्वालोकैःपूर्णादशापिदिशःअलोकत । विधातृमित्रार्यमणोवरुणेन्द्रभगांशवः । पूषाविवस्वान्पर्जन्यःस्त्वष्टाविष्णुर्दिनेश्वरइति ॥ ५३ ॥

प्रदक्षिणन्दैवतहर्म्यमद्रिं सदैवकुर्वन्नपिशर्वरीशः द्रष्टामहेन्द्रानुजदृष्टिमूर्त्या नप्रापतद्दर्शनविघ्नतापम् ॥ ५४ ॥

प्रदक्षिणमिति । सदैवदेवतानांहर्म्यम्वसतिस्थानंअद्रिंमेरुंप्रदक्षिणकुर्वन्नपिशर्वरीशश्चन्द्रः महेन्द्रानुजस्यमुरारेर्दृष्टिमूर्त्यावामनरूपेणद्रष्टासन्तस्यस्वयम्बरस्यदर्शनेयोविघ्नःतेनतापन्दुःखंनप्राप ॥ ५४ ॥

आलोकमानावरलोकलक्ष्मी न्तोत्कालिकीमप्सरसोरसोत्काः ॥ जनाम्बुधौतत्रनिजाननानि वि

तेनुरम्भोरुहकाननानि ॥ ५५ ॥

आलोकेति । रसोत्कारसदर्शनरसोत्कण्ठितास्तात्कालिकींस्वयम्वरसम यजातास्वरलोकलक्ष्मींराजसङ्घशोभां आलोकयन्त्योप्सरसस्तत्रजनाम्बु धीजनाननानिअम्भोरुहकाननानिकमलवनानिचक्रुः अप्सरसोपितंसमाजं सादरंपश्यन्तिस्मेतिभावः । जलाशयेपिकमलानिभवन्ति ॥ ५५ ॥

नयक्षलक्षैःकिमलक्षिनोवा सिद्धैःकिमध्यासिसभा प्रशोभा ॥ साकिन्नरैःकिंनरसादसेवि नादर्शिहर्षेणमहर्षिभिर्वा ॥ ५६ ॥

नेति । आप्राशोभाययासाअतिसुन्दरासासमायक्षलक्षैः रसात्प्रीत्याकिंनअलक्षिदृष्टा । तथासिद्धैर्वारसात्किनोऽध्यासि । तथाकिन्नरै रसात्किंनासेवि । तथामहर्षिभिर्वाहर्षेणनादर्शि । रसादितिसिद्धेहर्षेणइतिप्रा प्त्यर्थम् ॥ ५६ ॥

वाल्मीकीरश्लाघततामनेक शाखत्रयीभूरुहराजि भाजा ॥ क्लेशम्विनाकण्ठपथेनयस्य दैवीदिवः प्राग्भुवमागमद्वाक् ॥ ५७ ॥

वाल्मीकिरिति । सवाल्मीकिःऋषिःतांसभांअश्लाघतअस्तौत् । यकःदैवीवाक्पद्यमयीयस्यवाल्मीके कण्ठपथेनक्लेशम्विनादिवःसकाशात्प्राक्मानिषादेत्यादिरूपेणभुवंअगमत् आगता । प्रथमभूमौयःसंस्कृतप्रवर्तकः । किंभूतेनकण्ठपथेन । अनेकाःशाखाआश्वलायनाद्यायस्याःसावेदत्रयीतल्लक्षणाभूरुहास्तेषांराजिःपङ्क्तिस्ताम्भजतेएवंभूतेन सशाखवेदत्रयीपाठकेनेत्यर्थः ।अन्येनापिवहुस्कन्धवृक्षयुक्तेनमार्गेणदूरदेशादप्यनायासेनगम्यते ५७

प्राशंसिसंसद्गुरुणापिचार्वी चार्वाकतासर्वविदूषकेन ॥ आस्थानपट्टंरसनांयदीया व्यजानामिवा चामधिदेवतायाः ॥ ५८ ॥

प्राशंसीति । चार्वीसुन्दरासंसत्सभागुरुणाबृहस्पतिनापिप्राशंसि । किम्भूतेनचार्वाकतयानास्तिकतयासर्वस्यवेदादेर्विदूषकेनखण्डकेन । अहंय दीयारसनांजिह्वांवाचमधिदेवतायाःसरस्वत्याः आस्थानपट्ट सिंहासनं

जामामिमन्ये । तस्यजिह्वाग्रे सरस्वतीजागर्त्ति । नास्तिकप्रतारणार्थंवृह स्पतिनाचार्वाकशास्त्रं प्रणीयवेदादिदूषितम् ॥ ५८ ॥

नाकेपिदिव्यत्नमदिव्यवाचि वचःस्रगाचार्यकवि त्ववर्यः ॥ दैतेयनीतेःपथिसार्थवाहः काव्यःसका व्येनसत्नामभाणीत् ॥ ५९ ॥

केनापीति । सःकाव्यःशुक्राचार्यःदोधर्कछन्दप्रबन्धरूपेणकाव्येनकृत्वा तांसभांअभाणीत् अवर्णयत् । सकःयःकविःप्रबन्धकर्त्तादिव्यत्नमाविरा जमानादिव्यासंस्कृतरूपावाक्यस्मिन् एवंभूतेपिनाकेस्वर्गेवचःस्रजिवचन मालागुम्फनेविषये आचार्यकंसंस्कृतवचनचातुर्योपदेशस्तस्मैशीतिवित् तथादैतेयनीतिः दैत्यनीतिशास्त्रस्यपथिमार्गेसार्थवाहोमार्गप्रदर्शकःदैत्य नीतिशास्त्रप्रवर्त्तकःसुरासुरमध्येश्रेष्ठतमइत्यर्थः । आचार्यकंयोपधादिति वुञ् । दैतेयेतिकृदिकारादितिङीषन्तात्स्त्रीभ्योढक्समर्थनीयः ॥ ५९ ॥

अमेलयद्भीमनृपःपरंनना नाकर्षदेतान्दमनस्वसै व ॥ इदम्विधातापिविचन्त्ययूनः स्वशिल्पसर्वस्व मदर्शयन्नः ॥ ६० ॥

तदेवसभावर्णनकाव्यमाह । अमेलयदिति । भीमनृपःपरङ्केवलंएता न्नृपान् भैमीस्वयम्वरार्थंनअमेलयत् । तथादमनस्वसैवएतान् केवलंस्व गुणशीलादिनानाकर्षत् किन्तुविधातापिइदंस्वयम्वरप्रस्तावादिकम्विचि न्त्यस्वशिल्पसर्वस्वंस्वीयनिर्माणकौशलसारभूतम् एतान्यूनस्तरुणान्ए कत्रस्थानेपुञ्जीकृत्यनः अस्माकंअदर्शयत् ॥ ६० ॥

एकाकिभावेनपुरापुरारि र्यःपञ्चतांपञ्चशरंनिना य ॥ तद्भीसमाधानममुष्यकाय नीकायलीलाःकि ममीयुवानः ॥ ६१ ॥

एकेति ॥ यःपुरारिःहरःपुरापूर्वंएकाकिभावेनअसहायत्वेनपञ्चशरङ्का मंपञ्चतांनिनायमारयामास । अमुष्यकामस्यकायनिकायलीलाःशरीरस मूहकान्तयः अमीयुवानस्तरुणाःतस्मात्हरात्भियोभयस्यसमाधानंप्रती कारःकिम्बितर्कं । असहायत्वात् पूर्वंकामस्यहरात्भयंअभूत्इदानींएत

द्रूपेणवहुत्वाद्भयत्नतम् । सर्वेपिएतेकामरूपाइतिभावः ॥ ६१ ॥

पूर्णेन्दुबिम्बाननुमासभिन्ना नस्थापयत्क्वापिवि
धायवेधाः ॥ तैरेवशिल्पीनिरमादमीषां मुखानि
लावण्यमयानिमन्ये ॥ ६२ ॥

पूर्णेति । वेधाःब्रह्माअनुमासभिन्नान्प्रतिमासञ्जिन्नान्पूर्णेन्दुबिम्बा
न्पूर्णचन्द्रबिम्बान्क्वापिकुत्रचित्प्रदेशेनिधायतिरोहितीकृत्यच्छस्थापयत् ।
तैरेवपूर्णचन्द्रबिम्बैःकृत्वा अमीषांलावण्यमयानिमुखानिसःशिल्पीब्रह्मा
निरमात्निर्ममेइतिग्रहंमन्ये । चन्द्रतुल्यानिएतेषाम्वदनानीतिभावः ।
अन्योपिशीलीसुन्दरवस्तुनिर्माणार्थंअपूर्ववस्तुकुत्रचित्तुसंस्थापयति ॥६२॥

मूर्धार्पितंमूर्धसुरत्नमेभि र्यन्नामतानिस्वयमेतदेव
स्वतःप्रकाशेपरमात्मबोधे बोधान्तरंनस्फुरणा
र्थमर्घ्यम् ॥ ६३ ॥

मूर्धेति । एभिर्नृपैर्मूर्धसुरत्नंहीरकादिमूर्धाअर्पितंस्थापितम् । य
त्यस्मात्एतेएवस्वयम्वरेतानिरत्नानिनामप्रसिद्धानि । रत्नानांशिरसिरत्ना
र्पणंवृथैवेत्यर्थः । अर्थान्तरन्यासमाह । स्वतःप्रकाशेस्वप्रकाशेपरमात्म
बोधेपरमात्मज्ञानेसतिस्फुरणार्थंतज्ज्ञानार्थंम्बोधान्तरंज्ञानान्तरंन अर्घ्यं
नयाचनीयम् । स्वप्रकाशत्वात्तस्येत्यर्थः । परमात्मज्ञानेजातेज्ञानान्तरंय
थावृथातथारत्नानांउपरिरत्नान्तरारोपणमित्यर्थः । अतिसुन्दराएतेइतिभा
वः । परमात्मबोधस्यस्वतःप्रकाशत्वम्वेदान्तेभ्योऽवसेयम् ॥ ६३ ॥

प्रवेक्ष्यतःसुन्दरवृन्दमुच्चै रिदंमुदाचेदितरेतरन्त
त् ॥ नशक्ष्यतोलक्षयितुम्विमिश्र न्दस्रौसहस्रैर
पिवत्सराणाम् ॥ ६४ ॥

प्रवेक्ष्यतइति । दस्रौअश्विनीकुमारौमुदाउच्चै उत्कण्ठंसहर्षमित्यर्थः एवं
भूतमिदंसुन्दरंवृन्दञ्चेत्प्रवेक्ष्यतःप्रविष्टौभविष्यतः तत्तर्हिअनेनराजवृन्देन
विशेषेणमिश्रंमिश्रितमितरेतरं अन्योन्यम्वत्सराणांसहस्रैरपिलक्षयितुंनश
क्ष्यतःसमर्थौनभविष्यतः । अयंमेभ्रातेतिपरस्परंज्ञातुमसमर्थौभविष्यतइ
त्यर्थः सर्वेषान्दस्रतुल्यत्वादितिभावः ॥ ६४ ॥

स्थितैरियद्भिर्युवभिर्विदग्धे दग्धेपिकामेजगतःक्षतिःका॥एकोम्बुविन्दुव्ययमम्बुराशेः पूर्णस्यकःशंसतिशोषदोषम् ॥ ६५ ॥

स्थितैरिति । विदग्धैःचतुरैःदाहरहितैर्वाइयद्भिर्बहुसंख्याकैःस्थितैर्विद्यमानैरेतैर्युवभि तरुणैःहेतुभिः हरेणएकस्मिन्कामेदग्धेपिजगतःकाक्षतिःकाहानिः। कामसदृशानामेतेषाम्बहूनांस्थितत्वात् एतदेवअर्थान्तरन्यासेनसमर्थयते । कःपूर्णस्याम्बुराशेःएकाम्बुविन्दुव्ययंशोषरूपन्दोषंशंसतिवदतिअपित्वेकस्मिन्जलकणेव्ययितेसमुद्रःशुष्कइतिनकोपिवदतीत्यर्थः॥६५॥

इतिस्तुवन्हुङ्कृतिवर्गणाभि र्गन्धर्ववर्गैणसगायतैव ॥ ओङ्कारभूम्नापठतैववेदा न्महर्षिवृन्देनतथान्वमानि ॥ ६६ ॥

इतीति इतिपूर्वोक्तप्रकारेणस्तुवन्सशुक्रःगायतैवगानङ्कुर्वतैवगन्धर्वाणांवर्गेणसमूहेनहुंकृतिवर्गणाभिःहुङ्कारसमूहैःकृत्वाऽन्वमानिअनुमतः । तथावेदान्पठतैवमहर्षिवृन्देनोङ्कारस्यभूमावाहुल्येनान्वमानि अनुमतः । गन्धर्ववर्गेणमहर्षिवर्गेणचउभाभ्यामनुमतःसमीचीनम्वदतीति । वर्गणाराशीकरणम् ॥ ६६ ॥

न्यवीविशत्तामथराजसिंहा न्सिंहासनौघेषुविदर्भराजः ॥ शृङ्गेषुयत्रत्रिदशैरिवैभि रशोभिकार्तस्वरभूधरस्य ॥ ६७ ॥

न्यवीविशदिति । अथविदर्भराज.तान्राजसिंहान्सिंहासनौघेषुन्यवीविशत्निवेशयामास । यत्रसिंहासनेषूपविष्टैःराजभिःराजसिंहैः कार्तस्वरभूधरस्यस्वर्णाचलस्यमेरोः शृङ्गेषुउपविष्टैःत्रिदशैःदेवैरिवअशोभिअदीपि । अत्युच्चत्वहेममयत्वंसिंहासनानान्देवतुल्यत्वञ्चतेषांसूचितम् ॥ ६७॥

विचिन्त्यनानाभुवनागतांस्ता नमर्त्यसङ्कीर्त्यचरित्रगोत्रान् ॥ कथ्याःकथङ्कारममीसुतायो मितिव्यषादिक्षितिपेनतेन ॥ ६८ ॥

विचिन्त्येति । तेनक्षितिपेनश्रीमेनइतिपूर्वोक्तेनप्रकारेणव्यपादिविष यणाम् । किंकृत्वा । नानाभुवनेभ्यःस्वर्गमर्त्यपातालेभ्यःआगतान्अमर्त्यैःदे वैः सङ्कीर्त्यानिवर्णनीयानिचरित्रगोत्राणिशीलकुलानियेषान्तान्विचिन्त्य विचार्य । इतिकिम् । अमीपूर्वोक्ताराजसिंहाःसुतायाम्विषयेकथङ्कारङ्के नापिप्रकारेणकथ्याःवर्णयितुंशक्याइति । एतेषाङ्कुलशीलादिर्नैकथंज्ञा सतीत्यर्थः ॥ ६८ ॥

श्रद्धालुसङ्कल्पितकल्पनायाङ्कल्पद्रुमस्याथर थाङ्गपाणेः ॥ तदाकुलोसौकुलकुलदेवतस्यस्मृ तिन्ततानक्षणमेकतानः ॥ ६९ ॥

श्रद्धेति । अथतदातस्मिन्समयेआकुलःसचिन्तःअसौभीमःक्षणंमुहूर्त्तमा त्रङ्कुलदैवतस्यस्वीयवंशपरम्परापूज्यस्यरथाङ्गपाणेः श्रीविष्णोःस्मृतिंक्षणंमु हूर्तमात्रंएकतानःअनन्यवृत्तिःसन्ततान । किंभूतस्यविष्णोःश्रद्धालोःभक्त स्यसङ्कल्पितम्वस्तुतत्वसकल्पनायांसिद्धौकल्पद्रुमस्यसकलाभिलाषपूरकंकु लदैवतस्मरणम्विनाअन्यःकोवा अभिलाषपूरणङ्करोतीतिविष्णुंसस्माऽरेत्य र्थः । एकतानोऽनन्यवृत्तिरित्यमरः ॥ ६९ ॥

तच्चिन्तनानन्तरमेवदेवः सरस्वतींसस्मितमाहस स्म॥स्वयम्वरेराजकगोत्रवृत्तवक्तीभवत्वाङ्करवा णिवाणि ॥ ७० ॥

तदिति ।सदेवोविष्णुःतेनभीमेनकृतस्यस्वचिन्तस्यअनन्तरमेवसस्मितंस रस्वतीमितिआहस्मउवाच । इतिकिम् । हेवाणिसरस्वतिअहन्त्वांइह स्वयम्वरेराजकंराजवृन्दन्तस्यगोत्रवृत्तवक्तीकुलनामशीलादिवर्णयित्रीङ्कर वाणि । राजवर्णनार्थन्त्वयागन्तव्यमितिममनीपितम् । राजकमितिगो त्रचरणेतिवुञ् ॥ ७० ॥

कुलञ्चशीलञ्चबलञ्चयूना त्वज्ञानासिनानोभुव नागतानाम् ॥ एषामतस्त्वम्भवयावदूका मूका यितुङ्कःसमयस्तवायम् ॥ ७१ ॥

कुलमिति । हेसरस्वतित्वंनानाभुवनेभ्यःआगतानांएषांयूनाङ्कुलंशील

स्वलज्ञयतोजानासि । अतस्त्वमेवएतेषाम्वावदूकाअतिलराम्वदनशीला भव । तवमूकायितुंअयक्कःसमयःअवसरःनकोपि । एषाक्कुलादिवर्णयेत्यर्थः । चकाराःपरस्परसमुच्चयार्थाः । वदक्केतिवार्तिकेनवदेर्यङ्लुगन्ताक्तः । वावदूकस्तुवक्तरीतिक्षीरस्वामी ॥ ७१ ॥

जगत्त्रयीपण्डितमण्डितैषा सभानभूतानचभाविनीच ॥ राज्ञांङ्गुणज्ञापनकैतवेन संख्यावतः श्रावयवाङ्मुखानि ॥ ७२ ॥

जगदिति । हेसरस्वतियस्माज्जगत्त्रयीसंबन्धिभिःपण्डितैर्मण्डिताएषासभापूर्वंनचभूतापश्चात्नभाविनीजनिष्यते । चतस्माद्राज्ञांगुणानांज्ञापनस्वोधनन्तस्यकैतवेनव्याजेनसंख्यावतः पण्डितान्वाङ्मुखानिउपन्यासात्श्रावय उपन्यासस्तुवाङ्मुखइत्यमरः संख्यावान्पण्डितःकविरितिच । शब्दकर्मत्वात्संख्यावतइतिकर्मत्वम् ॥ ७२ ॥

इतीरितातच्चरणात्परागं श्रीर्वाग्यचूडामणिमृष्टशेषम् ॥ तस्यप्रसादेनसहाज्ञयासा चादायमूर्धादरिणीबभार ॥ ७३ ॥

इतीति।इतिपूर्वोक्तप्रकारेणविष्णुनाईरितावक्ताअसौसरस्वतीगीर्वाणानान्देवानाञ्चूडामणयःमुकुटरत्नानितैर्मृष्टः गोञ्छितश्चासौशेषोवशिष्टश्चतंतच्चरणाङ्घ्रिस्तच्चरणात्परागंरेणुन्तस्यश्रीविष्णोराज्ञारूपेणप्रसादेनसहमूर्ध्नाआदायआदरिणीआदरयुक्तासतीबभार । नमस्कारपूर्वमाज्ञाम्प्रसादंकृत्वाज्ञाअङ्गीचकारइतिभावः । परागपदेनरुढ्याचरणस्यपद्मत्वंसूचितम् ॥७३॥

मध्येसभंसावततारवाला गन्धर्वविद्याधरकण्ठनाला ॥ त्रयीमयीभूतवलीविभागा साहित्यनिर्वर्तितहृत्करङ्का ॥ ७४ ॥

मध्येसभमिति ॥ सासरस्वतीमध्येसभंसभामध्ये अवततार । वालास्त्रीरूपन्धृत्वातत्रागतेत्यर्थः । किंभूतागन्धर्वविद्यायाःगीतकलायाःधरःकण्ठनालोयस्याःसा गानप्रवीणकण्ठनालेत्यर्थः । तथात्रयीमयीभूतवलीविभक्ताऋक्सामयजूरूपःत्रिसंख्यामयस्त्रयीमयः अत्रयीमयस्त्रयीमयीभूतःवलीवि

भङ्गोवलीरचनायस्याः । तथासाहित्येनमहाकाव्यनाटकचंपूप्रभृतिनाशु क्लनीलरक्तवर्णसाहित्येनमेलनेनवानिर्वर्तिताःनिर्मिताःअतिसरलयाः द्रु क्लरङ्गाःकटाक्षविशेषाःयस्याःसा । कण्ठस्यनालत्वेनमुखस्यपद्मत्वंव्यङ्ग्यम् । गन्धर्वाश्चविद्याधराश्चतद्रूपङ्कण्ठनालंयस्याइतिवा । ७४ ॥

आसीदथर्वात्रिवलीत्रिवेदी मूलाद्विनिर्गत्यविता यमाना ॥ नानाभिचारोचितमेचकश्रीः श्रुतिर्यदीयोदरलोमरेखा ॥ ७५ ॥

वेदादिविद्यामयंसरस्वतीस्वरूपम्वर्णयति । आसीदिति । अथर्वाश्रुतिःयदियासरस्वतीसम्बन्धिनीउदररोमरेखाउदररोमावलीआसीत् । किंभूता । तिसृणाम्वलीनांसमाहारःत्रिवलीत्रिवलीरूपायात्रिवेदीवेदत्रयी तल्लक्षणान्मूलात्विनिर्गत्यब्रह्मणाविनिर्गमय्यवितायमानाविस्तार्यमाणा सथानानाभिचारैः अनेकमारणोच्चाटनाद्यभिचारैःकृत्वोऽचितापापवाहुल्यात्योग्यामेचकाश्यामाश्रीःशोभायस्यासा । अयमअनाभिचारोचितमेनचकश्रीर्नभवतिकिन्तुनाभिचरणोचितमेचकश्रीः । अथर्वणःश्यामत्वंपुराणप्रसिद्धंअभिचारकर्तृत्वञ्च । विनिर्गत्येत्यत्रअन्तर्भावितण्यर्थोज्ञेयः । वितायमानेतितनोतेर्यकीत्यात्वम् ॥ ७५ ॥

शिक्षैवसाक्षाच्चरितंयदीयङ्कल्पस्त्रियाकल्पविधिर्यदीयः ॥ यस्याःसमस्तार्थनिरुक्तिरूपे निरुक्तिविद्याखलुपर्यणंसीत् ॥ ७६ ॥

शिक्षेति । यदीयञ्चरितंआचरणम्वर्णानांस्थानोच्चारणबोधकंनारदप्रणीतंशिक्षैवपर्यणंसीत्परिणतन्तदीयञ्चरितमित्यर्थः । अयमशिक्षैवसाक्षात्लोकस्यहितोपदेशएवेत्यर्थः । कल्पइतिकर्तव्यताबोधकोग्रन्थःतस्यश्रियाकृत्वातदीयःआकल्पविधिरलङ्कारविधिःपर्यणंसीत्परिणतः । यदीयानिअलङ्करणानिकल्पेनैवरचितानीत्यर्थः । तथायस्याःसमस्तार्थानांसकलाभिधेयानांनिरुक्तिरूपैःनिर्वचनस्वरूपैःकृत्वावेदश्रोत्रस्थानीयानिरुक्तिविद्यापर्यणंसीत्परिणता । खलुनिश्चयार्थःसर्वत्रयोजनीयः ॥ ७६ ॥

जात्याचवृत्तेनचभिद्यमानञ्छन्दोभुजद्वन्द्वमभूद्य

दीयम् ॥ श्लोकार्धविश्रान्तिमयीभविघ्नु पर्वद्वयी सन्धिसुचिह्नमध्यम् ॥ ७७ ॥

जात्येति । जात्यामात्रावृत्तेनवर्णवृत्तेनचत्रिद्यमानंद्विधाभूतश्चेद्चरण स्यानीयच्छन्दःयदीयंभुजद्वन्द्वं अभूत् । किंभूतच्छन्दःश्लोकार्धविश्रान्तिर वसानन्तद्रूपोभविघ्नुः श्लोकार्धविश्रान्तिमयीभविघ्नुःपर्वद्वयीसन्धिःपूर्वा सरपर्वद्वयसन्धि कूर्परसन्धिः सएवसुचिह्नंमध्येयस्यजुजपर्वद्वयीसन्धिरेखा द्वयंश्लोकार्द्धयोर्विच्छेदद्योतकेनरेखाद्वयेनैवरचितमित्यर्थः ॥ ७७ ॥

असंशयंसागुणदीर्घभाव कृतान्दधानाचिततांच दीया ॥ विधायिकाशब्दपरंपराणां किन्चारचि व्याकरणेनकाञ्ची ॥ ७८ ॥

असंशयमिति । किञ्चअन्यच्चसाअतिप्रसिद्धायदीयाकाञ्चीमेखलाअ संशयंनिश्चितञ्चेद्मुखभूतेनव्याकरणेनअरचिरचिता । किंभूतागुणस्यपट्ट सूत्रस्यदीर्घभावेनदैर्घ्येणकृताञ्चिततान्विस्तारन्दधाना । तथासिञ्जितरू पाणांशब्दपरंपराणान्विधायिका । व्याकरणमपिगुणाश्चदीर्घाश्चभावाश्चकृ तएतेषाञ्चिततान्दधानम् । भावाःभावप्रत्ययाःकृतःकृत्संज्ञकप्रत्ययाश्च । तथाशब्दानांरामकृष्णादीनांभवत्यादिशब्दपरम्पराणाञ्चविधायकंसाधक म् । अर्थवशाद्विभक्तिवचनविपरिणामः ॥ ७८ ॥

स्थितैवकण्ठेपरिणम्यहार लतावभूवोदिततारवृ त्ता ॥ ज्योतिर्मयीयद्भुजनायविद्या मध्येङ्गमङ्केन भृताविशङ्के ॥ ७९ ॥

स्थितेति । ज्योतिर्मयीज्योतीरूपाग्रहनक्षत्रादिवारसंहिताविद्यायद्भुज नाययस्याःदेव्याः सेवायैकण्ठेस्थितैवपरिणम्यरूपान्तरंप्राप्यहारलताबभूव इत्यहंशङ्के । किंभूता । उदितंउक्तन्तारन्तारासम्बन्धिवृत्तं शुभाशुभफल कथनरूपंयस्यांतथामध्येअङ्कंअङ्कानांशिक्षादीनांमध्येअङ्केनगणमयाभृता धृताषडङ्गमध्येगणितेत्यर्थः । हारलतापिउदितःप्रकाशीभूतस्तारोमध्य मणिर्यस्यासुक्ताशुद्धिर्वायस्यांसाएवंभूतावासीवृत्तावर्तुलमौक्तिकेत्यर्थः । तथामध्येङ्गंशरीरमध्ये अङ्केनक्रोडेनवक्षसाभृताधृतातारांद्दन्तारंवक्ष

न्येऽस्या । यद्वाद्वाविंशेसर्गेतारशब्दस्यापिनक्षत्रवाचित्वमुक्तम् । उदित न्ताराणांवृत्तंयस्यांययावा ॥ ७९ ॥

**अवैमिवादिप्रतिवादिगाढ स्वपक्षरागेणविराज माने ॥ तेपूर्वपक्षोत्तरपक्षशास्त्रे रदच्छदौभूतवती यदीयौ ॥ ८० ॥**

अवैमीति । यदीयौरदच्छदौओष्ठौतेउभेप्रसिद्धेपूर्वपक्षोत्तरपक्षशास्त्रे भूतवतीजातेइति अहमवैमि । किंभूतेवादिप्रतिवादिनोर्गाढोदृढ:स्वपक्ष रागःस्वस्वसिद्धान्तानुसारेणरागस्तेनविराजमाने । अधरावपिवदतइति वादिनौप्रतिवदतइतिवादिनौउक्तिप्रत्युक्तिचतुरौ ॥ ८० ॥

**ब्रह्मार्थकर्मार्थकवेदभेदा द्विधाविधायस्थितयात्म देहम् ॥ चक्रेपराच्छादनचारुयस्या मीमांसयामां सलमूरुयुग्मम् ॥ ८१ ॥**

ब्रह्मेति । ब्रह्मैवार्थःकर्मैवार्थःप्रतिपाद्यंप्रयोजनययोर्वेदयोस्तयोर्भेदा दात्द्वैविध्यात् ब्रह्मकाण्डकर्मकाण्डसंज्ञकवेदविभागाद्धेतोःआत्मदेहंद्वि धाविधायनिर्मायस्थितयामीमांसयायस्यादेव्याःऊरुयुग्मञ्चक्रेकृतम् । किं भूतमात्मदेहंपरेषांवैशेषिकबौद्धादीनांआच्छादनेननिराकरणेनचारु सुन्द वाचतुरम् । तथामांसलंविचारपरिपुष्टम् । अथचउत्तमवस्त्रेणाच्छादनीयंप रिपुष्टञ्च । उत्तरमीमांसयापूर्वमीमांसयाचऊरुयुगंरचितमित्यर्थः ॥ ८१ ॥

**उद्देश्यपर्वण्यपिलक्षणेपि द्विधोदितैःषोडशभिः पदार्थैः ॥ आन्वीक्षिकीयद्दशनद्विमाली न्तांमुक्तिकामाकलितांप्रतीमः ॥ ८२ ॥**

उद्देश्येति । वयंयस्याःदशनद्विमालीन्दन्तपङ्क्तिद्वयीन्तांप्रसिद्धांआ न्वीक्षिकीन्तर्कविद्यांप्रतीमःजानीमहे । अनुपुनःकींदृशींप्रयोजनयस्याःसा अन्वीक्षिकीकीदृशीं । नामतःकथनंउद्देशस्तस्यपर्वणिअवसरेपिसमाना समानजातीयव्यवच्छेदोलक्षणन्तस्मिन्नपिद्विधाउद्देश्यतया लक्ष्यतयाचउ दितैर्निर्दिष्टैःषोडशभिःपदार्थैःप्रमाणादिभिः प्रमाणप्रमेयसंशयप्रयोजन दृष्टान्तसिद्धान्त अवयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजाति

निग्रहस्थानानामितिन्यायस्यादिमसूत्रोक्तपदार्थैःउपलक्षिताम् । तथामुक्तिकामैःएतेषान्तत्त्वज्ञानात् निःश्रेयसाधिगमइत्युक्तत्वान्मुमुक्षुभिराकलितांअभ्यस्ताम् । दन्तपङ्क्तिद्वयीचपर्वसुदिताउत्तेजिताभवतितथाल क्षणोपिसामुद्रिकशास्त्रेपिउदिताउक्ता । तथाद्विधोदितत्वेनद्वात्रिंशत्संख्याकाभवति । दशनद्विमालींआकलिताङ्कुरिततांमुक्तिकांप्रतीमोमौक्तिकान्येवजानीमइतिवा । द्विरुक्तषोडशपदार्थैर्यस्याद्वात्रिंशद्दन्तारचिताइतिभावः । द्विमालीमितिटावन्तस्त्रीत्वेद्विगोरितिङीप् ॥ ८२ ॥

**तर्कारदायद्वदनस्यतर्क्या वादेस्यशक्तिःक्वतथान्यथातैः ॥ पत्रंक्वदातुङ्गुणशालिपूगं क्ववादतःखण्डयितुंप्रभुत्वम् ॥ ८३ ॥**

तर्का इति । यद्ययंनिर्वन्हिःस्यान्निर्धूमोपिस्यादित्यादयस्तर्काः यद्वदनस्यरदाःदन्ताःतर्क्याःऊह्याः । तैर्दन्तैरन्यथाविनाचेत्तर्काःदन्ताःनासविध्यन्तर्हि अस्यमुखस्यवादेकथाविशेषे अथचभाषणेतथाशक्तिःक्व । तर्कैर्दन्तैर्विनावादःकर्तुंनशक्यतेतस्मात्तर्काएवरदाःतर्क्याः । कथमन्यथेतिपाठोवा । अथवा वाचदश्चवादम् । सर्वोद्वन्द्वइत्येकवद्भावः । वाकारदकारयोरुच्चारणेविषयेदन्तैर्विनाशक्तिः कथंस्याद्दकारस्यदन्तौष्ठ्यात् । दकारस्यदन्त्यत्वादित्यर्थः । अन्यच्च वादनिमित्तात्प्रतिवादिनेपत्रंप्रतिपन्नंदातुंन्तस्योपरिपत्रालम्बनंकर्तुंप्रतिवादिनः प्रतिज्ञापत्रंदातुंखण्डयितुम् । अथचअदतःभक्षयतःअस्यकटुरसत्वादिगुणशालिपत्रंनागवल्लीदलंखण्डयितुन्तैर्विनाशक्तिः प्रभुत्वंसामर्थ्यमपितुन । तर्कबलेनविनापत्रादिखण्डनङ्कर्तुमशक्यमित्यर्थः । गुणैःकषायादिभिःशालतइतिदृढंपूगंखण्डयितुम्वाक्वशक्तिः । नहिदन्तहीनेनपर्णानिपूगानिचभक्षयितुंशक्यते । अथचवादतोवादेनगुणेनशालिनास्विदुषांपूगवृन्दंखण्डयितुंक्वसामर्थ्यम् । पदादयःपृथक्शब्दादतिमतेननविद्यन्तेदन्तायस्यदन्तरहितस्यनञावहुव्रीहिणाद्वितीयपक्षेव्याख्येयम् । दन्तानाङ्कर्कशत्वात्कर्कशैःतर्कैःनिर्मोणस्ययुक्तत्वम् । पूगःक्रमुकवृन्दयोरित्यमरः ॥ ८३ ॥

**सपल्लवव्यासपराशराभ्यां प्रणीतमावादुभयीभविष्णु ॥ तन्मतस्यपद्माद्युपलक्ष्यमाण न्तत्पाणि**

युग्मन्बवृतेपुराणम् ॥ ८४ ॥

सपल्लवमिति । पुराणान्तरप्रसिद्धंयस्याःपाणियुग्मंववृतेजातम् । किंभू तम् । सपल्लवम् कथाख्यायिकादियुक्तम् अथचसशृङ्गारं अलक्तकराग तुल्यमित्यर्थः । किसलयसदृशम्वा । तथाव्यासपराशराभ्यांमुनिभ्यांप्र णीतभावान्निर्मितत्वादुभयीभविष्णुपुराणंपुराणतांप्राप्तम् । मत्स्यपद्मकू र्मवराहादिपदैःउपलक्षमाणांनिर्दिश्यमानम् । अथचरेखारूपमत्स्यपद्म कादिचसामुद्रिकलक्षणैर्लक्ष्यमाणम् । पुराणमेवकरयुगाकारेणपरिणतमि त्यर्थः । तत्पुराणमितिवा । सपल्लवमितिपक्षेसादृश्येऽव्ययीभावः ॥ ८४॥

आकल्पविच्छेदविवर्जितोयः सधर्मशास्त्रव्रजएव यस्याः ॥ पश्यामिमूर्धाश्रुतिमूलशाली कण्ठ स्थितःकस्यमुदेनवृत्तः ॥ ८५ ॥

आकल्पेति यः आकल्पविच्छेदविवर्जितः प्रलयपर्यन्तंउच्छेदरहितःअथ चआकल्पः अलङ्कारः तत्सहितः सर्वदासालङ्कारःसधर्मशास्त्रस्यव्रजःसमूह एवयस्याःसरस्वत्याःमूर्धाकस्यमुदेप्रीत्यैनवृत्तः अथचवृत्तोवर्तुलःकस्यमुदे नअपितुमुदेस्यादेवेतिअहंपश्यामिजाने । किंभूतःश्रुतिर्वेदएवमूलन्तेन शालते अथचकर्णयोर्मूलेशोभतेएवंशीलः श्रुतिःशब्दस्तस्यप्रकर्षेणमूलङ्कारण कर्णौताभ्यांशालतइतिवा । तथाकण्ठस्योपरिस्थितः अथवाकण्ठेपाठतो न्यस्तः धर्मशास्त्रमेवयदीयमूर्धाकारेणपरिणतमितिभावः ॥ ८५ ॥

भ्रुवौदलाभ्यांप्रणवस्ययस्या स्तद्बिन्दुनाभालतमा लपत्रम् ॥ तदर्धचन्द्रेणविधिर्विपञ्ची निक्वाणना कोणधनुःप्रणिन्ये ॥ ८६ ॥

भ्रुवाविति विधिःप्रणवस्यओङ्कारस्यदलाभ्यांखण्डिताभ्यांयस्याःभ्रुवौप्र णिन्येनिर्ममे । तद्बिन्दुनाप्रणवानुस्वारेणभालतमालपत्रंललाटतिलकन्तद र्धचन्द्रेणयस्याः विपञ्चीवीणातस्यानिक्वाणनायैवादनार्थंकोणधनुःकोणसं ज्ञकन्धनुःप्रणिन्ये । तमालपत्रतिलकचित्रकाणिविशेषकमित्यमरः । अत्र नागरलिप्याओङ्कारोज्ञातव्यः । कोणोवीणादिवादनमितिकोणशब्देनैव गतार्थत्वात्पूर्वपदंप्रशंसार्थत्वादपुनरुक्तम् । पूर्वपदेनैवगतार्थत्वात्को

यापदन्धनुःप्रशंसार्थम् ॥ ८६ ॥

द्विकुण्डलीवृत्तसमाप्तिलिप्याः कराङ्गुलीकाञ्चन लेखनीनाम् ॥ कैश्यंमषीनांस्मितभाःकठिन्याः कायेयदीयेनिरमायिसारैः ॥ ८७ ॥

द्विकुण्डलीति । विधिनायदीयेकायेवृत्तावर्तुलायासमाप्तिस्तापिकालिपिःविसर्गलिपिःमातृकाग्रन्थस्यसमाप्तिलिपिर्वातस्याःसारैःश्रेष्ठभागैःकृत्वा द्विकुण्डलीनिरमायिनिर्मिता । तथाकाञ्चनलेखनीनांसुवर्णमयलेखनीनां सारैःकराङ्गुलीनिर्मिता । मषीणांसारैःकेशानांसमूहःकैश्यंनिर्मितम् । त थाकठिन्याःखटिकायाःसारैःस्मितस्यजाशोभानिर्मिता । सर्वेषान्तत्तदाका रत्वात्तदीयैरेवसारैर्निर्मितानीत्यर्थः । कराङ्गुलीतिजातावेकवचनम् । यदुक्तंशृङ्गवद्वालवत्सस्यवालिकाकुचयुग्मवत् । नेत्रवत्कस्मसर्पस्यसवि सर्गइतिस्मृतइति । खटिकायांतुकठिनीतिविश्वः । कैश्यंसमूहार्थेकेशाश्वा भ्यांयञ्छावन्यतरस्यामितियञ् ॥ ८७ ॥

यासोमसिद्धान्तमयाननेव शून्यात्मतावादमयोद रेव ॥ विज्ञानसामस्त्यमयान्तरेव साकारतासि द्धिमयाखिलेव ॥ ८८ ॥

येति । यासरस्वतीसोमसिद्धान्तःकापालिकदर्शनन्तन्मयन्तद्रूपम् । अथ चचन्द्रस्ययाथार्थ्यंपूर्वपक्षभूतस्यपूर्णिमाजातस्यवाचन्द्रस्यसिद्धान्तरूपं भूष णरूपंआननंमुखंयस्याःएवंभूतेव तथाशून्यात्मतावादोमाध्यमिकदर्शनन्त न्मयन्तद्रूपंचदरंयस्याःसेव।आत्मानोनसन्तीतिशून्यात्मवादोबौद्धसिद्धान्तः। तथाविज्ञानस्यविशिष्टज्ञानस्यसामस्त्यन्तन्मयन्तत्प्रचुरं आन्तरञ्चित्तंयस्या एवंभूतेव । तथासाकारविज्ञानस्यवादीसौत्रान्तिकोविज्ञानस्यसाकारता सिद्धिस्तद्दर्शनं अथचसौन्दर्यलाभप्रचुरंअखिलंसमस्तंरूपंयस्याएवंभूतेव। सोमसिद्धान्तादिदर्शनैर्यदीयामुखाद्यवयवानिर्मिताः चन्द्राननाअतिकृ शोदरी सर्वविज्ञानमयीअतिसुन्दरीचेतिभावः । इवशब्दउत्प्रेक्षायामस्त्वा क्यालङ्कारेवा । एवंभूतामध्येसमसवततारइत्यादिकुलकम् । शून्यात्मके त्यादिषुनासिकोदरेतिवाङीप् ॥ ८८ ॥

भीमस्तयागद्यतमोदितुन्ते वेलाकिलेयन्तदलम्बिपद्य ॥ मयानिगाद्यं जगतीपतीना क्षेत्रञ्चरित्रञ्चविचित्रमेषाम् ॥ ८९ ॥

भीमइति । तयादेव्याभीमइतिअगद्यतउक्तः । इतिकिम् । इयम्वेला अयंसमयस्तेमोदितुंहर्षंप्राप्तुंउचितः किलयस्मात्तस्माद्विपद्यविषादंकृत्वाअलन्दुःखंनकार्यम् । मयाएषाञ्जगतीपतिनांराज्ञाम्विचित्रक्षेत्रञ्चरित्रंचनिगाद्यंगदितुमर्हम् । तवमोदितुंअयङ्कालइत्यर्थः । मोदितुमितिकालसमयवेलासुतुमुन्इतितुमुन् । विपद्येतिअलंखल्वोःप्रतिषेधयोःप्राचांक्त्वेतिक्त्वाततःल्यप् ॥ ८८ ॥

अविन्दतासौमकरन्दलीलां मन्दाकिनीयच्चरणारविन्दे ॥ अत्रावतीर्णागुणवर्णनाय राज्ञान्तदाज्ञावशगास्मिकापि ॥ ९० ॥

अविन्दतेति । असौमन्दाकिनीयस्यश्रीविष्णोश्चरणारविन्देमकरन्दलीलांपुष्परसशोभांअविन्दतप्राप । कमलेहिमकरन्दोयुक्तः । तस्यविष्णोराज्ञावशगानिदेशकारिणीकापिराज्ञांगुणवर्णनायअत्रस्वयम्वरेअवतीर्णास्मितेनप्रेषितातदाज्ञयाचममसामर्थ्यंमपियुक्तमित्यर्थः । कापीत्यनेनमद्विधास्तन्निदेशकारिण्योबहवःसन्तीतिस्वनाम्नोऽकथनीयत्वञ्चसूचितम् । विन्दत्यसव्यइतिपाठेअसव्येदक्षिणपादेविन्दतिलभते ॥ ९० ॥

तत्कालवेद्यैःशकुनस्वराद्यैः राज्ञामवाप्तांनृपतिःप्रतीत्य ॥ तांलोकपालैकधुरीणएष स्तस्यैसपर्यामुचितान्दिदेश ॥ ९१ ॥

तत्कालेति । लोकपालानामेकधुरम्वहतीतिलोकपालतुल्यःएषनृपतिस्तस्यैदेव्यैउचितांयोग्याम् सपर्याअर्घ्यादिपूजान्दिदेशअकृत । किंकृत्वातत्कालवेद्यैस्तदागमनसमयज्ञेयैःशकुनस्वराद्यैःकाकस्वरादिशकुननासिकास्वरदक्षिणचक्षुःस्पन्दाद्यैःकृत्वातान्देवीमाप्तांअभीष्टां अवाप्तांप्राप्तांप्रतीत्यज्ञात्वा । एकधुरीणःएकधुराल्लुक्चेतिखः आप्तागमनसमयेभुजस्पन्दादयोभवन्ति ॥ ९१ ॥

दिगन्तरेभ्यः पृथिवीपतीना माकर्षकौतूहलसिद्ध विद्याम् ॥ ततः क्षितीशः स निजान्तनूजां मध्येमहा राजकमाजुहाव ॥ १२ ॥

दिगिति । ततोदेवीसपर्यानन्तरंक्षितीशःनिजांस्वीयान्तनूजांजैभर्मी ध्येमहाराजकंराजसमूहमध्ये आजुहावआकारयतिस्म । किंभूतान्तनूजाम् । दिगन्तरेभ्योदिग्प्रान्तेभ्यःसकाशात्पृथिवीपतीनामाकर्षःआकर्षणन्तद्विषयंयत्कौतूहलन्तस्यसिद्धविद्याञ्जपादिपुरश्चरणेनआत्मवशीकृतमन्त्ररूपांस्वसौन्दर्येणसर्वाकर्षणकारिणीम् । राजन्शब्दाद्वुञिकृतेमहच्चतद्राजकंचेतिकर्मधारयएव आजुहावेतिअभ्यस्तस्यचेतिसंप्रसारणम् ॥ १२ ॥

दासीषु नासीरचरीषु जाते स्फीतं क्रमेणालिषु वीक्षितासु ॥ स्वाङ्गेषु रूपोत्थमथाद्भुताब्धि मुद्वेलयन्ती मवलोककानाम् ॥ १३ ॥

दासीष्विति । नासीरचरीषुअग्रेसरीषुदासीषुचेटीषुविषयेजातम्पूर्वंसमुत्थंक्रमेणअनन्तरम्वीक्षितासुआलीषुसखीषुयेस्फीतंअभिवृद्धिङ्गतं अथ पश्चात्स्वाङ्गेषुभैम्यवयवेषुविषयेरूपोत्थंसौन्दर्योदुत्थितअद्भुतमारब्धं अवलोककानांप्रेक्षकाणांअद्भुताब्धिंचद्वेलयन्तींअतिक्रान्तमर्यादङ्कुर्वन्तीम् । दास्यादिषुक्रमेणसुन्दरसुन्दरतरसुन्दरतमत्वदर्शनेनराजानः अतिसाश्चर्या जाताइतिभावः। जैमीपपावपाङ्क्तिरयराजराजिरितिइतःषोडशेनान्वयः१३

स्निग्धत्वमायाजललेपलोप सयत्नरत्नांशुमृजांशुकाभाम् ॥ नेपथ्यहीरद्युतिवारिवर्त्ति स्वच्छायसच्छयनिजालिजालाम् ॥ १४ ॥

स्निग्धेति । किंभूतांस्निग्धत्वन्तैलाभ्यक्तत्याजातत्वंमायाजलकृत्रिमोदकम् लेपःअधोभागीवर्णोत्कर्षकारीद्रव्यान्तरसंयोगः एतेषान्त्रयाणान्दोषाणांलोपेअभावेसयत्नानिकृतप्रयत्नानिअपनीतदोषाणीत्यर्थः । तेषांरत्नानां अंशुमृजाकिरणशुद्धिःसैवअंशुकाआवस्त्रदीप्तिर्यस्यास्ताम् । स्निग्धत्वायनैर्मल्यायमायाजलस्यकृत्रिमोदकस्यलेपःप्रक्षेपः तस्यलोपेमापाकरणेनसयत्नानांकृतगुणाधानानांनिर्मलानांनैर्मल्यार्थंपाणिपादसंक्षकमायाजल प्रक्षेपे

यनिर्मलानामितियावत् । एवंभूतानांरत्नानांअंशवस्तद्वत्सृजाशुद्धिर्यस्यास्ता वम्बिधारत्नकिरणशुद्धियुक्तावांऽशुकाभावत्नदीप्तिर्यस्या एवम्बिधेनांशुकेनाभात्येवम्बिधाया । तथानेपथ्येषुअलंकारेषुहीराःषट्कोणमणयः तेषाम्द्युतिरेववारितप्रवर्तनइतिवर्त्तिस्वच्छायभैम्याएवप्रतिबिम्बन्तस्यसच्छायं समानच्छायं सदृशन्ततुल्यंनिजंस्वीयंआलिजालंसखीवृन्दंयस्यास्ताम् । प्रतिबिम्बतुल्यत्वात्भैम्यपेक्षयाहीनाः । अन्यापेक्षयाचअधिकाःसख्यःयस्याःएवंभूतामित्यर्थः । स्वच्छायबिम्बयोर्वाशब्देनेतिनपुंसकत्वम् । व्याख्यानान्तरंक्लिष्टकल्पनयाग्रन्थगौरवभियाचोपेक्ष्यम् ॥ ९४ ॥

विलेपनामोदमुदागतेन तत्कर्णपूरोत्पलसर्पिणा च ॥ रतीशदूतेनमधुव्रतेन कर्णेरहःकिञ्चिदिवोच्यमानाम् ॥ ९५ ॥

विलेपनेति । विलेपनस्यसकर्पूरचन्दनाद्यङ्गरागस्यआमोदेनपरिमलेनयामुत्हर्षः तेनहेतुनाआगतेनतथातस्याःभैम्याःकर्णपूरोत्पलेसर्पतिएवंशीलेनसमीपगतेनच । तथारतीशदूतेनकामसन्देशहरेणमधुव्रतेनभ्रमरेणरहः एकान्तेनलएवरमणीयोवरणीयोवरणीयइत्यर्थः तिकर्णेकिंचिदुच्यमानामिव । अन्योपिदूतोरहसिकर्णेकथयति ॥ ९५ ॥

विरोधिवर्णाभरणाश्मभासां मल्लाजिकौतूहलमीक्षमाणाम् ॥ स्मरस्वचापभ्रमचालितेनु भ्रुवौविलासाद्वलितेवहन्तीम् ॥ ९६ ॥

विरोधीति । विरोधिनःअन्योन्यविरुद्धाःशुक्लकृष्णनीलादयोवर्णाएषां आभरणाश्मना अलङ्काररत्नानांयाःभासोदीप्तयस्तासांमल्लाजिकौतुकम्मल्लयुद्धकौतुकमीक्षमाणाम् । परस्परोपमर्दङ्कुर्वतीःरत्नदीप्तीर्विलोकयन्तीमित्यर्थः । अन्योपिप्रभुर्मल्लयुद्धकौतुकमीक्षते तथाविलासात्कटाक्षविक्षेपवशाद्वलितेवक्रितेभ्रुवौवहन्तींधारयन्तीम् । किंभूतेभ्रुवौ । स्मरेणसादृश्यात्स्वचापभ्रमात्चापलितेनु । किन्नुवितर्के ॥ ९६ ॥

सामोदपुष्पाशुगवासिताङ्गीं ङ्कुशोरशाखाग्रशयालिमालाम् ॥ वसन्तलक्ष्मीमिवराजभिस्तैः क

ल्पद्रुमैरप्यभिलष्यमाणाम् ॥ ९७ ॥

सामोदेति । तथाअतिसुन्दरतल्पाभेनसामोदःसहर्षःपुष्याशुगःकामस्तेनवासितंअधिष्ठितंअङ्गंयस्यास्ताम् । अथचसामोदानिसुगन्धीनिपुष्याणिआशुगोमलयानिलःतैर्वासिताङ्गीसुरभीकृतरूपाम् । तथाकिशोराणिसूक्ष्माणिशाखाग्राणयङ्गुलयोयेषांएवंविधाःशयाःहस्ताःयस्याःएवंविधाअलिमालासखीसमूहोयस्याः यद्वानूतनशाखाग्रवद्वालपल्लववदतिरक्ताःकराःयस्याःएवंभूताअलिमालायस्यास्ताम् । अथचवाकशाखाकिशलयशयाअलिमालायस्यास्ताम् । अथचबालशाखाकिशलयशयाअलिमालाभ्रमरपंक्तिर्यस्यासातान्तथाते.राजभिरभिलष्यमाणाङ्कामिवस्थिताम् । कल्पद्रुमैरपिअभिलष्यमाणाम्वसन्तलक्ष्मीमिवस्थिताम् । वासितेतिमतुबन्तात्तत्करोतीतिणयन्तात्त्कासशब्दान्निष्ठा ॥ ९७ ॥

पीतावदातारुणनीलभासां देहोपदेहात्किरणैर्मणीनाम् ॥ गोरोचनाचन्दनकुङ्कुमेन नाभीविलोपान्पुनरुक्तयन्तीम् ॥ ९८ ॥

पीतेति । तथापीताऽवदाताश्वेताअरुणानीलाभायेषांमणीनाङ्किरणैःकृत्वादेहोपदेहाच्छरीरानुलेपाद्धेतोः यथाक्रमङ्गोरोचनाचन्दनकुङ्कुमंएणनाभीकस्तूरीएतैःकृतान्विलेपान्पुनरुक्तयन्तींनिरर्थकान्कुर्वन्तीमित्यर्थः । बहुब्रनियमइतिनीलशब्दस्यपूर्वनिपाताभावः । गोरोचनेत्यादीनाञ्चन्दनादिभिःपूर्वंसमासःकार्यः ॥ ९८ ॥

स्मरंप्रसूनेनशरासनेन जेतारमश्रद्दधतीं नलस्य ॥ तस्मैस्वभूषाहृषदंशुशिल्प मवलद्विषःकार्मुकमर्पयन्तीम् ॥ ९९ ॥

स्मरमिति । तथास्मरंप्रसूनेनकुसुमरूपेणातिपेशलेनशरासनेनधनुषानलस्यजेतारञ्चैत्रमश्रद्दधतींअसंभावयन्तींअतः कारणात्तस्मैकामायातिदृढस्वलद्विषःइन्द्रस्यकार्मुकंअर्पयन्तीन्ददतीम् । किंभूतङ्कार्मुकम् । स्वभूषासुखीयकरणेअलङ्कारेयुदृषदोरत्नानितेषां अंशवस्तेषांशिल्पनिर्माणरूपंभेसीभूषारत्नकिरणैरेवसाधनैःस्मरेणनलोजय्योनान्यैरित्यर्थः । नानावर्णत्वाद्धनुर्वत्पदीयारत्नशोभेतिभावः ॥ ९९ ॥

विभूषणेभ्योवरमंशुकेषु ततोवरंसान्द्रमणिप्रभासु ॥ सम्यक्पुनः क्वापिनराजकस्य पातुंदृशाधातुधृतावकाशाम् ॥ १०० ॥

विभूषणेभ्यइति । तथाविभूषणेभ्यः अवरंअर्वाक्भागेवर्तमानेषुअंशुकेषुराजकस्यराजसमूहस्यदृशापातुंनधात्राधृतःकृतः अवकाशःअन्तरालंयस्यांसा । अननैवभूषणेष्वपिनधृतावकाशामित्यप्युक्तम् । तथाततोऽशुकेभ्य.अवरंसान्द्रमणिप्रभासुराजकस्यदृशापातुंनधातृधृतावकाशांसक्वापिकस्मिन्नपि अवयवप्रदेशेपुनःराजकस्यदृशासम्यक्साकल्येनयथावस्थितरूपेणाचद्रष्टुंनधातृधृतावकाशाम्विभूषणांशुकमणिप्रभाच्छादितत्वात्किमप्यङ्गंराजदृष्टिगोचरोनाभूदित्यर्थः । यावत्यावद्वस्तुगोप्यतेतावत्तावद्वलोकनार्थमुत्कण्ठाभवतीतिसर्वैपितदवलोककमार्थंसोत्कण्ठाजाताइतिभावः ॥ १०० ॥

प्राक्पुष्पवर्षैर्वियतःपतद्भि र्द्रष्टुंनदत्तामथतद्विरेफैः ॥ तद्भीतिभुग्नेनततोमुखेन विधेरदोवाञ्छितविघ्नयत्नः ॥ १०१ ॥

प्रकारान्तरेणाप्यमुमर्थमाह ॥ प्रागिति । तथावियतोगगनात्पतद्भिःअतिसौन्दर्यदर्शनेनसन्तुष्टैःदेवैर्निर्मोचितैरसिमुक्तै पुष्पवर्षैःप्राक्प्रथमतःराजकस्यद्रष्टुंनदत्ताम् । अथपश्चात्तदनुगामिभिःद्विरेफैर्द्रष्टुंनदत्ताम् । ततोपिपश्चात्तेभ्योभ्रमरेभ्योभीत्याभयेनभुग्नस्वक्रीकृतस्तेनमुखेनद्रष्टुंनदत्ताम् । विधेर्वाञ्छितस्यविघ्ने यत्न अहोआश्चर्यरूपःकष्टरूपोवा । ब्रह्मणायेनकेनचित्प्रकारेणसर्वोभिलाषंनाशयितुमेवप्रयत्यते । अतोऽसाधुर्विधिव्यापारइत्यर्थः ॥ १०१ ॥

एतद्वरस्यामितिराजकेन मनोरथातिथ्यमवापिताय ॥ सखीमुखायोत्सृजतीमपाङ्गा त्कर्पूरकस्तूरिकयोःप्रवाहम् ॥ १०२ ॥

एतदिति । तथासखीमुखायअपाङ्गात् नेत्रप्रान्तात्कर्पूरकस्तूरिकयोःप्रवाहंश्वेतश्यामकान्तिपूरमुत्सृजन्तीकटाक्षैःअवलोकयन्तीमित्यर्थः । किं

भूतायसखीमुखाय अहमेतत्सखीमुखस्वरंसमागिष्टंस्यांभूयासमितिप्रत्येक राजकेनमनोरथातिथ्यमभिलाषविषयंअवापितायप्रापिताय । सखीमुख त्वेनविनाभैमीकटाक्षलाभोनभवतीतिराजत्वापेक्षयाभैमीसखीमुखत्वमेव अस्माकंवरंनराजत्वमित्यर्थः । कटाक्षस्यसिताऽसितरूपत्वकर्पूरकस्तूरिकापदेनोक्तम् ॥ १०२ ॥

**स्मितेच्छुदन्तच्छदकंपकिंचि द्दिगम्बरीभूतरदांशुवृन्दैः ॥ आनन्दितोर्वीन्द्रमुखारविन्दै र्मुदंनुदन्तींहृदिकौमुदीनाम् ॥ १०३ ॥**

स्मितइति। स्वस्मिन्प्रसादबुद्ध्याआनन्दितानिउर्वीन्द्राणांराज्ञांमुखारविन्दानियैःएवंभूतैः स्मितेच्छूर्ध्वपक्षात्स्वङ्कुनुकामौदन्तच्छदावोष्ठौतयोःकम्पेनकिञ्चित्चलनेनकिञ्चिद्दिगम्बरीभूताःईषत्प्रकटीभूताःरदाःदन्तास्तेषांअंशुवृन्दैःकृत्वाकौमुदीनांहृदिस्थितमदंनुदन्तीम् । अथचअंशुलशेरवौरश्मावित्यभिधानात्रदाएवांशुवृन्दानिसूर्यसङ्घाःतैः नन्दितारविन्दत्वात्कौमुदीमदोहरणंयुक्तम् । ततोप्यधिककान्तित्वात् सूर्येणहिकमलानामानन्दःचन्द्रिकायाश्चतद्भावःक्रियते ॥ १०३ ॥

**प्रत्यङ्गभूषाच्छमणिच्छलेन यत्लग्नयन्निश्चललोकनेत्राम् ॥ हाराग्रजाग्रद्गरुडाग्ररस्मि पीनाभनाभीकुहरान्धकाराम् ॥ १०४ ॥**

प्रत्यङ्गेति । प्रत्यङ्गंप्रत्यवयवंभूषाणांभूषणानां अच्छानिनिर्मला.मणयोरत्नानितेषाञ्छलेनव्याजेनयस्मिन्नवयवेलग्नानि तत्रएवनिश्चलानिलोकनेत्राणियस्याम् । यस्ययस्यावलोककस्यनेत्रेयत्रयत्रतदीये अवयवेलग्नेतत्रैवविलोकविच्छेदभियानिमेषंपरित्यज्यनिश्चलीभूतेयस्यांएवंभूतामित्यर्थः दर्शनोत्सुकलोकनेत्राण्येवैतानिनतुरत्नानीत्यर्थः । अतिसुन्दरीप्रत्यङ्गंरत्नैरलङ्कृतामितिभावः । तथाहाराग्रे मुक्ताहारमध्ये जाग्रन्स्फुरन्गरुडाश्मागरुडाकारोमणिःतस्यरश्मिभिःपीनावर्धिताआभायस्यसः । नाभीकुहरान्धकारोनाभीदरीतिमिरंयस्याःएवंभूताम् ॥ १०४ ॥

**तद्गौरसारस्मितविस्मितेन्दु प्रभोशिर.कंपरुचो**

भिनेतुम् ॥ विपाण्डुतामण्डितचामराली नाना
मरालीकृतलास्यलीलाम् ॥ १०५ ॥

तदिति । तथातस्याः गौरवस्तुसारज्ञूतं अतिगौरं स्मितन्तेनविस्मितासा स्वर्यीजूताइन्दुप्रज्ञायस्या. शिरःकम्पस्यः अभिनेतुन्तत्स्मितदर्शनजनित विस्मयवशाचन्द्रदीप्तिः एवशिरःकम्पङ्करोतीतिदर्शयितुंविपाण्डुतयाम ण्डिताश्चामराल्यश्चामरपङ्क्तिरूपाः नानामराल्य. अनेका. हंसः ताभिः कृतालास्यलीलायस्यास्ताम् । चन्द्रिकाचामरमराळतुल्यस्मिताच्चामरैः वी ज्यमानाञ्चेतिभावः १०५ ॥

तदङ्गभोगावलिगायनीनां मध्येनिरुक्तिक्रमकुण्ठ
तानाम् ॥ स्वयन्धृतामप्सरसांप्रसादं ह्रियंहृदोम
ण्डनमर्पयन्तीम् ॥ १०६ ॥

तदिति । तथातस्याःअङ्गानांभोगावलिः भुज्यन्तेइतिभोगाश्चन्दनाद यस्तत्प्रतिपादकोग्रन्थस्तद्गायनीनांप्रारब्धस्तुतीनांमध्ये असमाप्तायांएव स्तुतौनिरुक्तिक्रमेनिर्वचनपरिपाट्यांस्वविषयेविकुण्ठितानाङ्कुण्ठितपयानामेव अङ्गानांस्तुतिःकृताअनन्तरंस्फूर्त्यभावाद्गतशक्तीनां तूष्णीभूतानांमेनाका दीनामप्सरसांस्वयंस्वेनधृता हृत. श्रीहृदयस्यमण्डनरूपणीभूतांह्रियंल ज्जांप्रसादंलज्जारूपंप्रसादं अर्पयन्तीन्ददतीम् । अतिसौन्दर्यस्तुतिकरणा शक्तेःसरसोपिलज्जिताइतिभावः । मध्ये उदरेविषयेनिरुक्तिक्रमकुण्ठिता नान्तद्वर्णयितुमशक्तानांइतिवा । अन्यापिभोगावलीपाठकानांस्वयन्धृतं उत्तमहारादिहृदयंमण्डनमर्पयति प्रसादमण्डनशब्दावाश्लिष्टलिङ्गौ॥१०६॥

तारारदानाम्वदनस्यचन्द्रं रुचाकचानाञ्चनभो
जयन्तीम् ॥ आकण्ठमक्ष्णोर्द्वितयंमधूनि महीभु
जःकस्यनभोजयन्तीम् ॥ १०७ ॥

तारादति । तथारदानांरुचातारा. वदनस्यरुचाचन्द्रङ्कचानाञ्चरुचानभो जयन्तीमितिसर्वत्रान्वयः । कस्यमहीभुजःअक्ष्णोर्द्वितयंनयनद्वयमाकण्ठं उपचारात् अतिशयंमधूनिमम. जयन्तीअपितुसर्वस्यापिपाययमानां अ तिसुन्दरतद्दर्शनेनराजनेत्राणां अमृतेनेवतृप्तिर्जायतेइतिभावः ॥ १०७ ॥

अलङ्कृताङ्गाद्भुतकेवलाङ्गीं स्तवाधिकाध्यक्षनिवेद्यलक्ष्मीम् ॥ इमामिविमानेनसभामिविशन्तीं ययावपाङ्गैरथराजराजिः॥षोडशभिःकुलकम्१०८॥

अलङ्कृतेति । तथाऽलंकृतादद्भ्यङ्गात्अवयवात् अद्भुतआश्चर्यरूपङ्गेव समलङ्कृतंअङ्गंयस्यास्ताम् । तथास्तवात्स्तुतेरधिकाअध्यक्षनिवेद्याप्रत्यक्षदृश्यालक्ष्मीर्यस्यास्ताम् । स्तूयमानायालक्ष्म्याःसकाशात् अनुभूयमानालक्ष्मीरधिकेत्यर्थः अथविमानेननरवाह्येनचतुरङ्गयानेनस्वयम्वरसभाम्विशन्तींइमांभैमींराजराजिःराजपङ्क्तिः अपाङ्गैःकटाक्षैःययौसादरंपश्यतिस्म कुलकमिति द्वाभ्यांयुग्ममितिप्रोक्तंत्रिभिःस्यात्तुविशेषकम् कलापकंचतुर्भिःस्यात्तदूर्ध्वंविशेषकम् ॥ १०८ ॥

आसीदसौकोपिनतत्रभूपस्तन्मूर्तिरूपोद्भवदद्भुतस्य ॥ उल्लेसुरङ्गानिमुदानयस्य विनिद्ररोमाङ्कुरदन्तुराणि ॥ १०९ ॥

आसीदिति । तस्याभैम्यामूर्तिर्देहस्तस्याभैम्यारूपंसौन्दर्यंतद्विलोकनेनोद्भवज्जातमद्भुतमाश्चर्यंयस्यएवंभूतस्ययस्यअङ्गानिनोल्लेसुः हर्षंनप्रापुः । असौईदृशःकोपिनृपस्तत्रसभायांनासीत् । किम्भूतान्यङ्गानिमुदाऽनुरागेणकृत्वाविनिद्रैःरोमाङ्कुरैर्दन्तुराणिनतोन्नतानि । सर्वेपितत्सौन्दर्यदर्शनात्साश्चर्याःसानुरागाजाताइतिभावः ॥ १०९ ॥

अङ्गुष्ठमूर्ध्नाचनिपीडिताग्रा मध्येनभागेनचमध्यमायाः ॥ आस्फोटिभैमीमवलोक्यतत्र नलर्जनीकेनजनेननाम ॥ ११० ॥

अङ्गुष्ठेति । तत्रकेनलामकेनपुनर्जनेनभैमींअवलोक्यतर्जनीदक्षिणकरप्रदेशिनीनास्फोटिअपितुसर्वेणापिस्फाल्यतेस्म । किंभूता । अङ्गुष्ठस्यमूर्ध्नाअग्रेणमध्यमायाः अङ्गुलेर्मध्येनभागेनचविनिपीडितंनम्रीकृतमग्रंयस्याःसा । लोकरीतिरियमनुभवैकवेद्या ॥ ११० ॥

अस्मिन्समाजेमनुजेश्वरेण तांखञ्जनाक्षीमवलोक्य

केन ॥ पुनःपुनर्लोलितमौलिनान भ्रुवोरुदक्षेपित रां द्रुवीवा ॥ १११ ॥

अस्मिन्निति । अस्मिन्नलाजे पुनःपुनःलोलितमौलिनाकंपितशिरसा केनवाकेनपुनर्मनुजेश्वरेणराज्ञातांखंजनाक्षींखञ्जरीटतुल्यनेत्रां आलोक्य भ्रुवोर्द्वयीनोदक्षेपितरान् । अतिशयेनोत्क्षिप्तैवेत्यर्थः । आश्चर्यवशाच्छिरःकम्पोभ्रुवोरुत्क्षेपश्चकृतइतिभावः ॥ १११ ॥

स्वयम्वरस्याजिरमाजिहाना स्विभाव्यभैमीमथ भूमिनाथैः ॥ इदंमुदाविह्वलचित्तभावा दवाद्वि शहाक्रुरजिह्मजिह्मम् ॥ ११२ ॥

स्वयंवरस्येति । अथलोकनाथैःराजभिःस्वयंवरस्याजिरमाजिहानां आगतांभैमींस्विभाव्यदृष्ट्वाअनुरागवशाद्विह्वलचित्तभावान् विकलचित्तत्वा दखवहाक्षरैरर्थोक्तिरूपैःहेतुभिः जिह्मकुटिलाजिह्वायस्यांक्रियायांयथात थामुदाहर्षेणइदंवक्ष्यमाणंअवादिउदितम् । भैमीदर्शनानन्तरंकामशव शत्वाद्वक्तुमशक्ता वक्तोपिहर्षवशाद्वर्णयामासुरित्यर्थः । आजिहानाम् आगताम् ॥ ११२ ॥

रम्भादिलोभात्कृतकर्मभिर्या शून्यैवभूर्भूसुरभूमि पान्थैः ॥ इत्येतयालोपिदिवोपिपुंसा स्वैमत्य मत्यप्सरसारसायाम् ॥ ११३ ॥

रम्भेति । अत्यन्तरसाभौन्दर्यंयात्यतिक्रान्ताअप्सरसोययाएवंभूतयाएत याभैम्याइतिविचार्यंदिवःस्वर्गस्यपुंसांइन्द्रादीनांरसायाभैमत्यंसम्मतिर निच्छाऽचारुत्वमितियावत्अलोपिलुप्तम् । इतिकिम् । रम्भादिषुअप्सरःसुलोभात्अनुरागात्कृतकर्मंतत्ज्योतिष्टोमसंग्रामादिभिःभूसुरभूमिपान्थैः स्वर्गंगमितिपुभिर्नरैःभूःशून्यैवमाभूदिति । स्वर्गेपिइन्द्रादयःशून्यैवमाभूद्य तइन्द्रादयोपिस्वर्गंपरित्यज्यभूमिमेवस्वर्गाधिकामन्त्वाअत्रमागत्यराजा नस्तुज्योतिष्टोमादिकंपरित्यज्यस्वर्गंनगताइतिकिंवाच्याइतिभावः ॥११३॥

रूपंयदाकर्ण्यंजनाननेभ्यस्त त्वद्दिगन्ताद्भ्रमयमाग मामः ॥ सौन्दर्यसारादनुभूयमाना दस्यास्तद

रूमाद्बहुनाकनीयः ॥ ११४ ॥

रूपमिति । वयंयस्या.यद्रूपश्रुतानेभ्य.आकर्ण्यतस्मात्तस्मात्अतिदूरात् दिगन्तात्प्राच्यादिदिक्प्रान्तात्सकाशादागमाम्आगतवन्तस्तदस्या.सौन्दर्य मनुभूयमाना प्रत्यक्षद्रष्ट्या तत्अस्मात्सौन्दर्यसारात्लावण्योत्कर्षात्बहुअति शयेनाऽकनीयोनाकनीयएव । अस्मदीयंस्वरूपमपिलोकमुखाद्बहुश्रूयते यदीयंयाथात्म्येनवर्णनाशक्तं वेद्रूपिसदृशमेवश्रुतमित्याश्चर्यमितिभावः । आगमामेतिलृदित्वादङ् । कनीयइतियुवाल्पयोरितिकनादेशः ॥११४॥

रसस्यश्रृङ्गारइतिश्रुतस्य क्वनामजागर्तिमहानु दन्वान् ॥ कस्मादुदस्थादियमन्यथाश्री र्लावण्य वैदग्ध्यनिधिःपयोधेः ॥ ११५ ॥

रसस्येति । नवरसमध्येश्रृङ्गारइतिश्रुतस्यख्यातस्यरसस्यअथचउदकस्य महानुदन्वान्समुद्रःक्वजागर्तिकस्मिन्देशेवर्तते । नामप्रश्नेअभ्यर्थेवा । क्वनामकस्मिन्नपिप्रदेशेसंभावनायांवा । अस्तीतिकथमवगतमित्यतआह। अन्यथा श्रृङ्गाररससमुद्राभावेलावण्यस्यसौन्दर्यस्यवैदग्ध्यस्यनिधिरियम्भै मीश्रीर्लक्ष्मी.कस्मात्पयोधेरुदस्थादुत्पन्ना । श्रीःसमुद्रादुत्पन्नेतिपुराणा दौप्रसिद्धइयन्तुश्रियोपिअधिकातस्मात् श्रृङ्गाररससमुद्रादुत्पन्नासक्वापिदे शेविद्यते एवेतिकार्योत्कारणानुमानमितिभावः ॥ ११५ ॥

साक्षात्सुधांशुर्मुखमेवभैम्या दिवःस्फुटंलाक्षणिकः शशांकः ॥एतद्भ्रुवौमुख्यमनङ्गचापंपुष्पंपुनस्तद् गुणमात्रवृत्या ॥ ११६ ॥

साक्षादिति । भैम्याःमुखमेवसाक्षान्मुख्योपमानभूतःसुधांशु अमृतांशुः कविसङ्केतेउपमानत्वेनप्रसिद्धचन्द्रोभैमीमुखलक्षणएव अतिवृत्तत्वाऽकल ङ्कत्वाऽऽल्हादकत्वाऽधरलक्षणत्वाऽऽत्तद्रुसुधावत्त्वादिनाचन्द्रादधिकत्वा दित्यर्थः । अथवसाक्षात्प्रत्यक्षःसन्निहिततरइतियावत् । अथचभैमीमुख मेवसाक्षादभिधावृत्यासुधांशुः शोष्टलक्षणमुख्यसुधासम्बन्धात्सुधांशुपदे नभैमीमुखमेवमुख्यवृत्याअभिधेयमितिभावः । दिवोगगनसम्बन्धीशशा ङ्कःस्फुटंनिश्चितंलाक्षणिक.लक्षणेनकलङ्केनसंसृष्टः अतःसाक्षान्मुख्योपमा

नभूतोनभवतिकिन्तुन्यूनगुणत्वादुपमेयमेवेत्यर्थः । अथचसाक्षादस्मदादिरसनप्रत्यक्षग्रहणयोग्यसुधावत्वात् दिविस्थितस्तुचन्द्रोलाक्षणिक अनुमानिकःतदीयसुधायाःदैवैकभोग्यत्वात् अस्मदाद्यप्रत्यक्षत्वात्प्रत्यक्षानुमानयोर्मध्येप्रत्यक्षस्यैवबलवत्त्वादित्यर्थः । अथचलाक्षणिकोलक्षणावृत्तिवशात्सुधांशुपदेनाभिधेयोनत्वभिधावृत्त्या एतन्मुखंसुधांशुपदेनअभिधावृत्त्याभिधेयम् । चन्द्रस्तुशशाङ्कपदेनअभिधीयतइत्यनयोर्महदन्तरमितिभावः । एतद्योतनार्थंसुधांशुशशाङ्कपदे । तथाएतद्भ्रुवौभैमीभ्रुवौमुख्यंअनंगस्यचापंअभिधावृत्त्या । अथचमुखेभवमुख्यं भ्रूरूपकामचापंमुखेभवत्वान्मुख्यम् । यत्पुनःपुष्पमनङ्गचापत्वेनव्यवह्रियतेतत्तयोर्भ्रुवोर्वक्रत्वोन्मादकत्वलक्षणोयोगुणस्तन्मात्रस्यतदेकदेशभूतस्यउन्मादकत्वस्यैव वृत्यावर्ततेनतुतत्रवक्रत्वस्यवर्तते । ततएकदेशसादृश्यलक्षणाद्गौणीनिमित्ताद्गौणीवृत्त्याऽनङ्गचापत्वेनव्यवहर्तव्यंनतुमुख्ययावृत्त्येत्यर्थः । अथचतत्पुष्पपुनर्दौरकमात्रेयद्वर्तनन्तेनकामचापमित्युपचर्यते । मालारूपस्यकामचापस्यकविभिरुक्तत्वात्अतस्तस्यानङ्गचापत्वंसापेक्षम्भ्रुवोस्तुनिरपेक्षं । भ्रुवाविति द्विवचनेनासलग्नत्वंचापमित्येकवचनेनसमुदितयोश्चापत्वंनतुप्रत्येकमितिसूचितम् । अथचगुणास्तन्तुःसौगन्ध्यादिर्वातन्मात्रस्ययावृत्तिस्तयापुष्पस्यगुणवत्त्वसद्भावाच्चापस्यगुणत्वात्पुष्पकामचापमित्युच्यतेइत्यर्थः । अभिधावृत्तेर्लक्षणापेक्षयाअभ्यर्हितत्वाद्गौण्यपेक्षयाचाभ्यर्हिततरत्वान्मुख्यत्वम् । ततश्चगौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययइतिसापेक्षनिरपेक्षयोर्निरपेक्षत्वस्यबलवदितिन्यायात्भैमीमुखभ्रूयुगमेवमुख्यचन्द्रानङ्गचापत्वाभिलापयोग्यमतिसुन्दरमदनजनकञ्चेतिभावः । अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टातुगौणतेतिअभिधादीनांलक्षणम् । मुख्यार्थबाधेतद्योगेरूढितोऽथप्रयोजनात् । अन्योर्थोलक्ष्यतेयत्सालक्षणारोपिताक्रियेति । लक्षणयालक्षणेनैवसंस्पृष्टइत्यर्थेसंस्पृष्टेइतिठक् । मुख्यंमुखमिवभवतीतिभवार्थेशाखादिभ्योयत् । पक्षेशरीरावयवाच्चेतिभवार्थे॥११६॥

लक्ष्ये धृते कुण्डलिके सुदत्या स्ताटङ्कयुग्मं स्मरचक्रिणेकिम् ॥ सव्यापसव्यं विशिखा विसृष्टा स्ते नैतयोर्यान्ति किमन्तरेव ॥ ११७ ॥

लक्ष्य इति । सुदत्याः भैम्याः कर्णभूषणात्तौ टङ्कयुग्मं स्मरधन्विनैकामथा नुकायकुण्डलाकारे लक्ष्ये कृत्वाधृतङ्किम् । तेन कामेन सव्यापसव्यन्विसृष्टा मुक्ताविशिखाश्च नयोः कुण्डलीकयोरन्तरे मध्ये एवयान्ति किम्वितर्क । भूचा पयोजिताः कटाक्षबाणाः कर्णतौ टङ्कुकुण्डलाभ्यन्तरे यान्ति योन्तीतिभावः । प्रवीणधानुष्कस्यबाणालक्ष्यमन्तरेचयान्तितौ टङ्कयुग्मदर्शनमात्रेणकामोद्द्रेकादेवं संभाव्यत इतिभावः । अतएवेत्येवपदच्छेदः । सव्यापसव्यं यथास्यत्तथा क्रियाविशेषणम् ॥ ११७ ॥

तनोत्यकीर्तिङ्कुसुमायुधस्य सैषाव्रतेन्दीवरकर्णपूरौ । यतः श्रवःकुण्डलिकापराद्धु शरंखलःख्यापयितातमाभ्याम् ॥ ११८ ॥

तनोतीति । सैषाभैमीकुसुमाशुगस्यकामस्यइन्दीवरयोःनीलोत्पलयोः कर्णपूरौश्यामत्वात् अकीर्तिन्तनोतिवतआश्चर्यं । यतः खलोदुर्जनःपुरुषः आभ्यानीलोत्पलकर्णपूराभ्याङ्कृत्वाश्रवसोःकर्णयोः कुण्डलीकरूपाल्लक्ष्य द्वयादपराद्धौच्युतौशरौनीलोत्पलेएवबाणौयस्यतङ्कामंख्यापयिताकथयि ष्यति कर्णद्वयेनीलोत्पलद्वयङ्कर्णपूरीकृतङ्कुंडलिकेलक्ष्ये कामस्यचपुष्पाशुगत्वात् इन्दीवरयोस्तद्बाणत्वंयुक्तम् । धानुष्कस्यबाणाभ्यांलक्ष्यमन्तरागन्तव्यम् इन्दीवरलक्षणौबाणौकर्णयोरुपरिवर्तेते इतिकामोलक्ष्यात्च्युतसायको जात इति खलोवदिष्यतीत्यपकीर्तिरूपौजातावित्यर्थः । कर्णपूरदर्शनात्मदनोद्द्रेकोभवतीतिभावः ॥ ११८ ॥

रजःपदंषट्पदकीटजुष्टंहित्वात्मनःपुष्पमयंपुराणम् अधात्तमभूराद्रियतांसभैम्या भ्रूयुग्ममन्तर्धृतमुष्टिचापम् ॥ ११९ ॥

रज इति । सःआत्मभूःकामःभैम्याःभ्रूयुग्ममेव । अन्तर्मध्येआधेयत्वेन धृतोमुष्टिर्येनमुष्टिनामध्येधृतत्वादद्रूयमध्यंएवंभूतञ्चापं अद्यआद्रियतांनूतनन्धनुःकरोतु। किङ्कृत्वापुष्पमयंपुराणञ्जीर्णंआत्मनश्चापंहित्वायतःरजःपदंपरागस्यानञ्जाहचूर्णस्यानञ्चतथाषट्पदाएवकीटाःतैः सेवितुंघुणादिकीटसेवितञ्च। पुष्पचापापेक्षयाचापस्याधिकसामर्थ्यान्नूतनत्वम् ॥११९॥

पद्मान्हिमेप्रावृषिखंजरीटा न्क्षिप्नुर्यमादायवि धिःक्वचित्तान् ॥ सारेणतेनप्रतिवर्षमुच्चैः पुष्णाति दृष्टिद्वयमेतदीयम् ॥ १२० ॥

पद्मानिति। विधिःब्रह्मापद्मेभ्योखंजरीटेभ्यःयंसारंआदायतान्प्रसिद्धा नीलोत्पलादीन्हिमेशीतकालेखञ्जरीटान्प्रावृषिवर्षाकालेक्वचित् अनिरू पितस्थानेक्षिप्नुःक्षेपणशीलः सन्प्रतिसम्वत्सरन्तेनपद्मखञ्जनेभ्योगृहीते नसारेणैतदीयंदृष्टिद्वयंउच्चैःअतितरांपुष्णातिवर्धयति। प्रतिवर्षंपद्माद्यभा वात्नेत्रद्वयेचशोभाधिक्यात्तदीयेनैवसारेणशोभावृद्धिरितिभावः। पद्मा नित्यादौगलोकेतिषष्ठीनिषेधः। वापुंसिपद्मंनलिनमित्यमरः ॥ १२० ॥

एतद्दृशोरम्बुरुहैर्विशेषं भृङ्गीजनःपृच्छतुतद्गु णज्ञैः॥ इतीवधाताकृततारकालिस्त्रीपुंसमाध्यस्थ्य मिहाक्षियुग्मम् ॥ १२१ ॥

एतदिति। धाताइतीवहेतोःअमुंअर्थंद्योतयत्। इवेतिकिं। अनेना भिप्रायेणवा इहअस्मिन्नक्षिद्वयुग्मेतारकेएवअलिस्त्रीपुंसौत्भ्रमरद्वंयतीत योर्माध्य॰ध्यंमध्यभागवर्तित्वमथचसाक्षित्वमकृत। इतिकिम्। जनःएत द्दृशोर्भैमीनेत्रयोः अंबुरुहैः पद्मैःसहविशेषन्तारतम्यन्तयोःपद्मनेत्रयोःगु णज्ञौतारतम्यवेदिनौभृङ्गीचभृङ्गश्चतौकमलानिरमणीयानिभैमीनेत्रेवा इ तिपृच्छतुमध्यस्थोहिसंशयच्छिनत्तिकमलानिपरित्यज्य अलिजायापत्योर त्रागमनान्नेत्रयोरेवरमणीयत्वन्ताभ्यांकथितम्। भैमीदृशौकमलादधिके अतिनीलकनीनिकेचेतिभावः॥ भृङ्गावितिपुमान्स्त्रियेतिपुंसःशेषः॥ पृ च्छिर्द्विकर्मा। स्त्रीपुंसेत्यचतुरेतिसाधुः ॥ १२१ ॥

व्यधत्तसौधेरतिकामयोस्त द्वक्त्रवयास्याहृदिवा समाजोः तदग्रजाग्रत्पृथुशातकुंभकुंभेनसंभावय तिस्तनौकः ॥१२२॥

व्यधत्तेति। तयोःरतिकामयोर्भक्तस्वयःयौवनद्रूतंअस्याः हृदिवासभा जो॰रतिकामयोः कृतेसौधेद्वौप्रासादौकर्मव्यधत्त। द्वयोःसौधद्वयंयुक्तम्। सौधद्वयकरणेप्रमाणमाह। यस्मात्कःपुरुषःजैम्यास्तनौतयोःसौधयो घ

येतपरिजाग्रतौप्रकाशमानौपृथूपीवरौशातकुंभकुंभौसुवर्णकलशौनसम्भाव यतितर्कयतिसुवर्णकलशौस्तनाविति नसम्भावयति । अतोवयसारतिका मार्थपृथक्सौधेकृतेएवेत्यर्थः । सौधयोरुपरिसुवर्णकलशाभ्यांभाव्यन्तस्या मेकुचौजाताविति भावः । अन्योपिभक्तःस्वर्णकलशभूषितौप्रासादौरचय ति । सर्वदारतिकामयुक्तासुवर्णकुंभतुल्यकुचाचेयमितिभावः ॥ १२२ ॥

**अस्याभुजाभ्यामिव जितो द्विसारिकं पृथक्करोगृह्य ततः प्रसूनम् ॥ इतीष्यतेतन्नगृहाश्रियःकै र्नगी यतेवाकरएवलोकैः ॥ १२३ ॥**

अस्याइति । अस्याःभुजाभ्यांपृथक्प्रत्येकस्विजिताद्बिसात्प्रसूनस्बिस प्रसूनङ्कमलमेवकरोवलिःअगृह्यतकिम् । प्रत्येकन्दण्डोगृहीतःकिम् । अ थचकमलमेवहस्तत्वेनअङ्गीकृतमितिवितर्कः । कुतएतदित्याशङ्क्याह । इहलोकेभुजयोस्तत्करभूतकमलङ्कैर्लोकैःश्रियोगृहाः वसतिस्थानत्वेनशो भालयत्वेनचनेष्यतेकैर्वालोकैः करएवकरशब्देनगीयतेकोर्त्यतेअपितुसर्वै रपि । तैसीहस्तयोःश्रीगृहत्वङ्करशब्दवाच्यत्वञ्चविद्यते । कमलस्यश्री गृहत्वं लोके प्रसिद्धङ्करत्वञ्चविजिताद्बिसात्दण्डरूपत्वेनगृहीतन्तद्युक्तमि त्यर्थः । बिसकमलाभ्यांअपिएतदीयम्बाहुकरंअसुन्दरमितिभावः । गृ हाःपुंसिचभूम्न्येवेत्यमरः ॥ १२३ ॥

**छद्मैवतच्छम्बरजम्बिसिन्या स्तत्यमस्यास्तु भुजाग्रसद्म ॥ उत्कण्टकाद्रुद्गमनेननाला दुत्कण्ट कंशातशिखैर्नखैर्यत् ॥ १२४ ॥**

छद्मेति । तत्प्रसिद्धंशम्बराज्जलाज्जातम्बिसिन्याःकमलंछद्मैवअलीक मेवशम्बरात्दैत्यात्जातञ्छद्ममायारूपमेवअसत्यमित्यर्थः । तर्हितत्किंस त्यन्तत्राह । अस्या तुपुनर्भुजाग्रेसद्मयस्यतत्पद्मंमुख्यंसत्यमित्यर्थः । कुत एतदित्याशंक्याह । यत्यस्मात्उत्कण्ठकाद्रुद्गतरोमाञ्चात् अथचउत्कृष्ट कण्ठकरूपकण्टकात्नालात्भुजदण्डात्उद्गमनेनजातत्वेनशातशिखैः तीक्ष्णा ग्रैःनखैःकृत्वाउत्कण्टकमुद्गतकण्टकपद्मन्तुउत्कण्टकनालात्उद्गतमपिनो त्कण्टकम् । पद्मेकण्टकाभावात्अतोनतत्पद्मङ्किन्तुभैमीपाणिरेव । का र्येङ्कारणगतागुणादृश्यन्ते । कमलाधिकौतोद्गतनखौचएतदीयहस्तौइ

तिभावः । ग्रस्वरो दैत्यभेदे स्याज्जीरजीराम्बुशम्वरमित्यमरः ॥ १२४ ॥

जागर्तिमर्त्येषुतुलार्थमस्या योग्येतियोग्यानुपलम्भनंनः ॥ यद्यस्तिनाकेभुवनेथवाधस्तदानकौत्स्कुतलोकबाधः ॥ १२५ ॥

जागर्तीति । अस्याःतुलार्थंसादृश्यार्थंयोग्यासमुचिताकार्त्येषुमर्त्यलोके नुजागर्तिइत्यर्थःनः अस्माकंराज्ञांयोग्यायाःसत्याःअनुपलम्भनंअनुपलब्धि रेवप्रमाणम् । यदियोग्याविद्यतेतर्हिउपलभ्येतनोपलभ्यतेतस्मान्मर्त्य लोकेनास्तीतिवाच्यमितिभावः । तर्हिस्वर्गेपातालेवाभवेदित्यतआह । य दिनाकेऽथवाऽधोभुवनेपातालेएतत्सदृशी अस्तितदाकुत कुतआगतःकौ तस्कुतस्तस्यसर्वतःसमागतस्यस्वर्गपाताललोकाभ्यामपिसमागतस्यदेवना गलोकस्यबाधोऽसंमर्दोनस्यात् जातश्चसंमर्दस्तस्माल्लोकत्रयेपिएतादृशी नास्ति । अन्यथादेवानागाश्चनागच्छेयुरितिभावः कुतःकुतआगतइत्यर्थे ततआगतइत्यर्थेकस्कादित्वात्सः तातस्ततेतिपाठेततस्ततआगतइत्यर्थे तेनैवअण् ॥ १२५ ॥

नमःकरेभ्योस्तुविधेर्नचास्तु स्पृष्टन्धियाप्यस्यनकिंपुनस्तैः ॥ स्पर्शादिदंस्याल्लुलितंहिशिल्पं मनोभुवोनङ्गतयानुरूपम् ॥ १२६ ॥

नमइति । विधेःकरेभ्यःनमःअस्तु । कुतःअस्यविधेःधियाबुद्ध्यापिइदंदृश्यं शिल्पंनस्पृष्टम् । तैर्हस्तैर्नस्पृष्टमितिकिंपुनर्वाच्यम् । श्रोत्रियत्वादीदृशशरी रस्यनिर्माणेस्फुर्तिरेवनाभूत् किमितिहस्तैः स्पृश्येत् अथवयंनिरवयवयाबु द्ध्यानिस्पृष्टन्तत्सावयवैर्हस्तैःकथंस्पृश्येतइत्यर्थः । तैर्नस्पृष्टमित्यत्रहेतुः । हियस्मात् इदंअतिमृदुशिल्पंस्पर्शात्हस्तस्पर्शात्लुलितंअतिघृष्टंस्यात् । तर्हिकेननिर्मितन्तत्राह । इदंशिल्पंअनङ्गतयानिरवयवत्वे नमनोभुवःका मस्यअनुरूपंकामएवअस्यकर्तानविधिःतस्मात्कामायएवनमः अस्त्वित्य र्थः ॥ १२६ ॥

इमामनङ्गीमसृजत्कराभ्यां क्वेधाःकृशाभ्यासनकर्कशाभ्याम् ॥ शृङ्गारधारांमनसानशांनित विश्वा

न्तिधन्वाध्वमहीरुहेण ॥ १२७ ॥

इमामिति । वेधाःमृद्वींइमाङ्कराभ्यांनासृजत् । कुत कुशाभ्यासनेनदर्भ धारणेनकर्कशाभ्याम् । तर्हिइयंमानसीस्यात्तत्राह । श्रृङ्गारधारांशृङ्गारन दीरूपांइमांमनसाअपिनासृजत् । यतःशान्तिरसस्यविश्रान्त्यैधन्वाध्वाम रुदेशमार्गःतत्रमहीरुहेणवृक्षरूपेणातिनीरसेनअतिकठिनेनेत्यर्थः । अति कठिनेनातिमृद्वीशृङ्गाररसरूपाचनिर्मातुमशक्येत्यर्थः ॥ १२७ ॥

उल्लासयधातुस्तुलिताकरेण श्रोणीकिमेषास्तन योर्गुर्वा ॥ तेनान्तरालैस्त्रिभिरङ्गुलीना मुदी तमध्यत्रिवलीविलासा ॥ १२८ ॥

उल्लास्येति । एषाश्रोणीनितम्बदेशेगुरुःस्तनयोर्वागुर्वी । गुरुत्वतार तम्यज्ञानार्थंधातु करेणउल्लास्यवत्तिप्यतुलितांकिंइतिवितर्कः । श्रोणी किङ्गुरुःस्तनयोर्वाकिंगुरुरितिवा । तेनैवहेतुनाचतस्यांअङ्गुलीनांत्रिभिर न्तरालैःअवकाशैःकृत्वाउदीतःमध्यदेशेत्रिवलीविलासोयस्याःसा । उदी तमध्यत्रिवलीविलासाकिमितिवाकिंशब्दोयोज्यः । गुरुश्रोणीगुरुस्तनीच इयमितिभावः ॥ १२८ ॥

निजामृतोद्यन्नवनीतजाङ्गी मेनांक्रमोन्मीलित पीनिमानम् ॥ कृत्वेन्दुरस्यामुखमात्मनाभून्नि द्रालुनादुर्घटमम्बुजेन ॥ १२९ ॥

निजेति इन्दुः एनांकृत्वानवनीतेनैवएनांनिर्मायआत्मनास्वेनैवरूपेण आस्यंमुखअभूत् । किंभूतांएनांनिजामृतात्स्वीयामृतादुद्यत्समुत्पन्नन्त क्सारभूतंनवनीतन्तस्मात्जातंअङ्गंयस्याःतां अतएवदिनवृद्धिक्रमेणउ न्मीलितःपीतिमागौरत्वंयस्यास्ताम् । नवनीतेहिक्रमेणपीतिमाभवति । तन्निर्मितत्वाच्चअत्रापिपीतत्वञ्ज्ञातम् । यावत्यावत्तारुण्यन्तावत्तावत्अ स्याअधिकङ्गौरत्वंदृश्यतइत्यर्थः । यतश्चन्द्रकिरणसम्बन्धान्निद्रालुनासङ्को चशीलेन अम्बुजेनकमलेनदुर्घटन्दुष्करङ्कमलेननिर्माणेसर्वावयवानाञ्चन्द्र किरणैरेवनिर्मितत्वात्तत्सम्बन्धात्कमलंसङ्कुचेदेव । अथवरात्रौसर्वदाक मलसङ्कोचात्स्वेनैववदनाकारेणजातम् । चन्द्रएवास्यनिर्मितमित्यर्थः । अतिसुकुमाराऽतिगौराचन्द्रवदनाचइयमितिभावः ॥ १२९ ॥

अस्याः सचारुर्मधुरेवकारुः श्वासस्त्ववितेनेमलयानिलेन ॥ अमूनिपुष्पैर्विदधेङ्गकानि चकारवाचंपिकपञ्चमेन ॥ १३० ॥

अस्याइति। सः प्रसिद्धोमधुरेववसन्तएवअस्याः कारुःशिल्पीचारुःयोग्यः अन्योन। यतः सोऽस्याः श्वासमलयानिलेनवितेनेनिर्ममे। तथाअमूनिप्रत्यङ्गदृश्यानिअतिमृदूनिअङ्गकानिह्रस्वान्यङ्गानिचंपकादिपुष्पैःविदधेनिर्ममे। वाचंपिकस्यपञ्चमस्वरेणचकार। एतत्सर्वंवसन्ताधीनमेवेतितेनैवश्यंनिर्मिता। सुगन्धिश्वासापुष्पवत्मृद्वङ्गीकोकिलालापाचेतिभावः। यदुक्तंमयूरोवदतिसचेन्मतस्तुपञ्चमम्। पुष्पसाधारणेकालेपिकःकूजतिपञ्चमम्॥१३०

कृतिः स्मरस्यैवनधातुरेषा नास्याहिशिल्पीतरकारुजेयः ॥ रूपस्यशिल्पेत्रयसापिवेधा निर्जीयतेसस्मरकिङ्करेण ॥ १३१ ॥

कृतिरिति। एषास्मरस्यैवकृतिर्निर्माणंनधातुः। हियस्मात्अस्याःशिल्पीइतरकारुभिर्जेयोनयतोवेधाः रूपस्यशिल्पेनिर्माणविषयेस्मरस्यकिङ्करेणवयसाकामोद्दीपकेनतारुण्येन नितरांजीयतेवाल्यापेक्षयातारुण्येरामणीयकस्याधिक्यात्सदनेनजीयतइतिवाच्यमित्यपेरर्थः। तस्मान्मदनस्यैवकृतिःतारुण्येनसमदनातिरमणीयाचकृतेयमितिभावः॥ १३१ ॥

गुरोरपीमांभणदोष्ठकण्ठं निरुक्तिगर्वच्छिदयाविनेतुम्॥ श्रमः स्मरस्यैवभवम्विहाय मुक्तिङ्गतानामनुतापनाय ॥ १३२ ॥

गुरोरिति। इमांभैमीःम्भणन्वर्णयतगुरोर्बृहस्पतेरप्योष्ठकण्ठंअतिभीन्द्योद्वर्णयितुमशक्तत्वाद्धन्तुनिर्वचनङ्कर्तुमहमेवकुशलम्नत्वन्यदितिनिरुक्तौनिर्वचनविषयेगर्वस्यच्छिदयानिरकरणेनकृत्वाविनेतुम्विनीतङ्कर्तुंअद्यप्रभृतित्वयानिर्वचनंनकार्यमितिशिक्षयितुंभैमीनिर्माणरूपः स्मरस्यैवश्रमोनविध्यादेः। तथाभवम्विहायसंसारंत्यक्त्वामुक्तिङ्गतानापुरुषाणांअनुतापनायस्मरस्यैवश्रमःभैमीसद्भावात्संसारएवमोक्षोवयसंसारत्यक्ताक्किमितिमुक्ताजाताइतितेषापश्चात्तापः। तथातिसौन्दर्याद्वाचस्पतेरपिवाग

गोचरः । अन्येनाधिअतिसमर्थेनसर्वंगर्वेशातनंक्रियते । ओष्ठकण्ठमित्य त्रप्राण्यङ्गत्वादेकवद्भावः ॥ १३२ ॥

आख्यातुमक्षिव्रजसर्वपीतां भैमीतदेकाङ्गनिखात चक्षुः ॥ गाथासुधाश्लेषकलाविलासै रलञ्चकारा ननचन्द्रमिन्द्रः ॥ १३३ ॥

अख्यातुमिति । इन्द्रःतस्याःएकाङ्गेएकैकस्मिन्अवयवेनिखातासमारोपितादृक्दृष्टि·यैःतेषुराजसुमध्ये अक्षिव्रजै·सर्वांगेषुपीतांदृष्टांनेत्रसहस्रेणदृष्टसर्वावयवाभैमींआख्यातुर्वर्णयितुंगाथाःश्लोकाएवसुधातस्या·आश्लेषाख्याः कलाअलङ्कारविद्यास्तासांविलासैःश्लेषालङ्कारयुक्तश्लोकनिर्माणकौशलैः अथचगाथारूपायाःसुधायाःआसामन्त्येनयः श्लेषःसम्बन्धःतेनपञ्चदशकलाविलासैःसुधासम्बन्धस्यकलानांविलासैर्वा आननचन्द्रंअलञ्चकार । वक्ष्यमाणप्रकारेणाश्लेषेणवर्णयामासेत्यर्थः ॥ १३३ ॥

स्मितेनगौरीहरिणीदृशेय म्वीणावतीसुस्वरकण्ठ भासा ॥ हेमैवकायप्रभयाङ्गशेषै स्तन्वीमतिक्राम तितेनकापि ॥ १३४ ॥

स्मितेनेति ॥ इयंभैमीस्मितेनकृत्वागौरीअप्सरोविशेष पार्वतीवा तथादृशाहरिणीकुरङ्गीदेवाङ्गनाच तथासुस्वरकण्ठभासा अतिमधुरस्वरकण्ठश्रियावीणावतीदेवाङ्गनावीणायुक्ताच । तथाकायप्रभयाअङ्गकान्त्याहेमैवहेमादेवाङ्गनासुवर्णंचतथाअङ्गानांअवयवानांशेषै·भागै·शिष्टैः अवयवैःइत्यर्थंतैःकृत्वा । मेनकापितन्वीसुन्दरीअतिक्रामतिबुद्धिस्थाभवतीत्यर्थः । कापितन्वीमेनतिंनक्रामतिबुद्धिस्थानभवतीत्यर्थः । केनचिदङ्गेनकासाञ्चिदेवसाम्यंनतुसर्वथेतिसर्वाभ्योप्सरोभ्य·सकाशादियंरमणीतरानिरूपणीयेतिभावः ॥ १३४ ॥

इतिस्तुवानःसविधेनलेन विलोकितःशङ्कितमानसेन ॥ व्याकृत्यमर्त्यांचितमर्थमुक्ते राखण्डलस्तस्यनुनोदशङ्काम् ॥ १३५ ॥

इतीति । आखण्डल·इन्द्रस्तस्यनलस्यसमीपेइतिएवङ्गीर्याद्यप्सरस्त्वे

नन्वेतांस्तुवानोवर्णयन्नूनंअयंभैमीअप्सरस्त्वेनवर्णयतिचेत्मदीयंरूपंगृही त्वाभैमीप्राप्त्यर्थमागतःइन्द्रः अयमितिशङ्कितमानसेनमलेर्नविलोकितः सन्लस्यनलस्येन्द्रोयमितिइमांशङ्कांनुनोद्स्फोटयामास। किङ्कृत्वाउक्त गीर्याप्सरःप्रतिपादिकायाअर्थंमर्त्योचितमनुष्ययोग्यंस्मितेनधवलेत्या दिरूपमर्थंव्याकृत्यव्याख्याय। मनैवअन्यथाबुद्धिर्जातानतुअयंइन्द्रःकिन्तु कश्चनराजेतितस्यइन्द्रत्वशङ्कान्दूरीकृतवानितिभावः ॥ १३५ ॥

**स्वंनैषधादेशमहोविधाय कार्यस्यहेतोरपिनान लःसन् ॥ किंस्थानिवद्भावमधत्तदुष्ट न्तादृक्कृत व्याकरणःपुनःसः ॥ १३६ ॥**

स्वमिति। अहेआश्चर्येविषादेवा। सइन्द्रःभैमीप्राप्तिलक्षणस्यकार्यस्य हेतोःस्वंआत्माननैषधादेशनैषधरूपमादेशीयस्यएवम्विधङ्कृत्वानलरूपंकृ ऽनलोनलव्यतिरिक्तोनसन्अपितुनलएवभवन् अयचनलोनाममनुष्योभव न्नपिस्थानिवदिन्द्रवद्दुष्टंभावमाशयङ्किङ्किमर्थंमधत्तधृतवान् कुतोऽवगत मित्यतआह। सइन्द्रःपुनपश्चात्नलशङ्कानन्तरन्तादृक्मर्त्योचितकृतंव्याक रणंव्याख्यानंयेनसः।इन्द्रस्वरूपत्वेदुष्टाशयत्वंयुक्तम्। सर्वदालस्यप्रतारक स्वभावत्वात्।नलस्वरूपेणधृतेपियःस्वीयन्दुष्टाशयत्वंअधृततदनुचितम्। नलस्यदुष्टाशयत्वात्तस्वरूपेधृतेऽदुष्टाशयस्यैवअङ्गीकर्तुंयुक्तत्वादित्यर्थः नलरूपधारणेनअन्यथाव्याख्यानेनचनलम्पैवप्रतारितवानितिभावः। अयसमन्विद्वान्नैषतादृक्कृतव्याकरणशास्त्रोपिसशक्रःस्वनिजकर्तृकन्यादे शंनहोधत्तितिएवमादिकमादेशम्विधायन अनलन्नविद्यतेऽनलयस्मिन्का र्येतत्त्वानलत्स्याल्सम्बन्धिनइत्यर्थः। कार्यस्यकृतेदुष्टंस्थानिवद्भावङ्किंनाध त्तअपितुचकार। स्थानिवदादेशोनल्विधाविविधअलाश्रितकार्येस्थानिव द्भावोनिषिद्धः। तेनपथिमथ्यृभुक्षामादित्यात्वेकृतेआकारगतस्थानिव द्भावागतंहल्त्वंआश्रित्यहल्ङ्याभ्यइतिसुलोपोनभवति। विद्वानिन्द्र स्तुतथापिस्थानिवद्भावम्व्यधत्तेत्याश्चर्यम्। अथचसइन्द्रःदुष्टंस्थानिवद्भा वंमादेशङ्किंअधत्त। देवत्वम्विहायमनुष्यत्वङ्किमितिकृतवान्। कीदृशः नापुरुषः। तादृक्अपूर्वंकृतस्विशिष्टंआकरणंआकारोयेनसइन्द्रमूर्तिरेव नलरूपेणपरिणतेत्यर्थः। किङ्कृत्वास्वआत्माननैषधादेशङ्कृत्वादमयन्तीप्रा

मिलक्षणकार्यस्यहेतोःप्रयोजनेसत्यपिअयुक्तंनकर्त्तव्यमितिभावः । कीदृशः अवलोनलः अनलः देवत्वन्त्यक्त्वागात् इत्येतदाश्रयम् । सर्वेहिदेवत्वाय यतन्तेइत्यादियथाज्ञानंज्ञातव्यम् ॥ १३६ ॥

इयमियमधिरथ्यंयातिनेपथ्यमंजु विंशतिविज्ञातिवेदीमुर्वशीसेयमुर्व्याः ॥ इतिजनजनितैःसानन्दनादैर्विजघ्ने नलहृदिपरभैमीवर्णनाकर्णनाप्तिः १३७

इयमिति । जनजनितैःलोककृतैःइतिसानन्दैर्नादैःकर्तृभिःनलहृदिनलान्तःकरणेवर्त्तमानापरोश्रेष्ठापरैःकृतावायाभैमीवर्णनातस्याः आकर्णनेन श्रवणेनयाआप्तिः साविजघ्ने विह्वला । इतिकिम् । नेपथ्यमञ्जुःअलङ्काररुचिरयमियंअधिरथ्यंरथ्यायांयातिगच्छति । साइयंअतिप्रसिद्धाउर्व्याःउर्वशीदेवाङ्गनाइवअतिसुन्दरीवेदिंस्वयम्वरभूमिम्विशति । आनन्दयुक्तैः नादैः सापरभैमीवर्णनाकर्णनाप्तिरितिवा । भैमीदर्शनविषयेसंभ्रमंलोकं दृष्ट्वास्वयम्भ्रमोभूत्वाभैमीस्तुतिंनाशृणोतिइतिभावः । नलहृदीत्यनेनआकर्णितमपिहृदयस्यान्यत्रगतत्वादनाकर्णितप्रायमेवेतिसूचितम् । इयमित्यादिषुसम्भ्रमाद्विरुक्तिः ॥ १३७ ॥

श्रीहर्षमितिपूर्वार्धन्तदेव ॥ तर्केष्वप्यसमश्रमस्य दशमस्तस्यव्यरंसीन्महा काव्येचारुणिवैरसेनिचरितेसर्गोनिसर्गोज्ज्वलः ॥ १३८ ॥

श्रीहर्षमिति । नकेवलङ्काव्यनिर्माणेएवकुशलःकिन्तुतर्कशास्त्रेप्यसमः केनाप्यतुल्य अभ्यासोयस्य ॥ १३८ ॥

इतिश्रीवेदकरोपनामकश्रीमन्नृसिंहपण्डितात्मजनारायण कृतेनैषधीयप्रकाशेदशमः सर्गः ॥ समाप्तः ॥

# नैषधचरिते एकादशः सर्गः प्रारभ्यते ॥

श्रीगणेशायनमः ॥

तान्देवतामिवमुखेन्दुलसत्प्रसादा मक्ष्णोरसाद
निमिषेणनिभालयन्तीम् ॥ लाभायचेतसिधृत
स्यवरस्यभीम भूमीन्द्रजांतदनुराजसभांवभाज १

श्रीगणेशायनमः ॥ इदानींराजवर्णनार्थंएकादशसर्गमारभते । तामि ति ॥ तदनुअनन्तरंभीमभूमीन्द्रजाभैमीचेतसिधृतस्यनलस्यलाभायतांरा जसभान्देवतामिवइष्टदेवतामिववभाजविवेशश्रियेवच । किंभूतां । मुखेन्दु षुलसन्लभ्यमाणःप्रसादःप्रसन्नतायस्याःतां । भैम्यागमनात्सहर्षा अथच मुखचन्द्रेलसन्वरदानलक्षण.प्रसादोयस्यास्तास्वरन्दातुमुद्यतां । तथारसा दनुरागात्अनिमिषेणअक्ष्णोर्मीनिभालयन्तींविलोकयन्तीम् । अथचदे वत्वात्स्वभावादेवनिमेषरहितेननेत्रेणरसात्स्नेहेनभक्तं विलोकयन्तीम् ॥१

तन्निर्मलावयवभित्तिषु तद्विभूपा रत्नेषु चप्रतिफ
लन्निजदेहदम्भात् ॥ दृष्ट्वापरंनहृदयेननकेवल
न्तैः सर्वात्मनैवसुतनौयुवभिर्ममज्जे ॥ २ ॥

तदिति । तै.युवभिःसुतनौभैम्यांपरंकेवलंदृष्ट्याकृत्वाममज्जेनिमग्नमि तिन । तथाकेवलंहृदयेननिमग्नमितिन । किंतुतस्यानिर्मलावयवभित्तिषु निर्मलाङ्गकुड्येषुतद्विभूपारत्नेषुचप्रतिफलन्प्रतिविम्बितोनिजदेहस्तस्यदं भात्व्याजात्सर्वात्मनाएवसर्वेणापिशरीरेणनिमग्नम् । तेषांनयनमानसेए तदायत्तेजातेइतिनकिंतुसर्वमपिशरीरन्तदायत्तञ्जातम् । तदीयावयवभूपा रत्नेषुसर्वेषामपिशरीराणिप्रतिफलितानिइतिभावः । सर्वेपिसर्वथातत्पर वशाजाताइत्यर्थः । निर्मलत्वादवयवेषुअपिप्रतिविम्बोयुक्तः भित्तिश ब्द.प्रशंसार्थोवा ॥ २ ॥

द्यामन्तरावसुमतीमपिगाधिजन्मा यद्यन्यमेत्रनि

मास्यत्तनाकलोकम् ॥ चारुः सयाद्रुदभविष्यदनूद्वि
माने स्तादृक्कदभ्रमवलोकितुमागतानाम् ॥ ३ ॥

यास्यदिति । गाधिजन्माविश्वामित्रोद्याम्वसुमतीमपिअन्तरास्वर्गभूम्यो र्मध्येयदिअन्यमेवनाकलोकंनिरमास्यत अकरिष्यत्तर्हिसस्वर्गलोकोयादृक् यादृश·चारुःसुन्दरः अभविष्यत् तर्हिस्वयम्वरंअवलोकयितुमागताना न्देवानांविमानैःकृत्वातास्वयम्वरदेशादुपरिवर्त्तमानं अभ्रंगगनंतादृक्ता दृशंअभूत् । गाधिजोयदिस्वर्गमर्त्यमध्येअन्यंस्वर्गंअकरिष्यत्तर्हिभुवि उत्कृष्टानिविमानानिजैमीवरणार्थं भूमिमागतानान्देवानांविमानानितानि समभवन्ति । अनूनिविमानानिअन्तरिक्षगतानितैर्विमानैःकृत्वातद्गगनंया दृक्चारुतादृक्अभविष्यत्इतिवा । अन्तरिक्षनिर्मितस्वर्गतुल्यन्तदाकाश मभूदितिभावः । पूर्वव्याख्यानेविश्वामित्रअभूदित्यत्रक्रियातिपत्तौलृङ्न तावत्मात्रक्रियातिपत्तेःपर्यन्तमानात् ॥ ३ ॥

कुर्वद्भिरात्मभवसौरभसंप्रदानंभू पालचक्रचलचाम
रमारुतौघम् ॥ आलोकनाय दिविलब्धरतांसुरा
णा न्तत्रार्चनाविधिरभूदधिवासधूपैः ॥ ४ ॥

कुर्वद्भिरिति । तत्रस्वयम्वरदेशेआलोकनायदिविलब्धरतांसुराणामधि वासार्थंसौगन्ध्यार्थंज्वालितैःकालागुरादिधूपैःकृत्वाअर्चनाविधिः पूजावि धानंअभूत् । किंभूतैःभूपालानांचक्रंतस्यचलन्तिचामराणितेषांमारुतौघं वायुसङ्घंआत्मजवस्यसौरभस्यसंप्रदानन्दानपात्रंकुर्वद्भिः मलचामरवा युवशात् गगनचारिभिः धूपैर्देवाःपरितुष्टाबभूवुरित्यर्थः ॥ ४ ॥

तत्रावनीन्द्रचयचन्दनचन्द्रलेप नेपथ्यगन्धमय
गन्धवहप्रवाहम् ॥ आलीभिरापतदनङ्गशरानु
सारी संरुध्यसौरभमगाहतभृङ्गवर्गः ॥ ५ ॥

तत्रेति । तत्रस्वयम्वरदेशेभृङ्गवर्गःभ्रमरसङ्घःसौरभंसौगन्ध्यं अगाहत बुभुजे । किंकृत्वा अवनीन्द्रचयस्राजसङ्घस्यचन्दनचन्द्रःचन्दनयुक्तःकर्पू रः वकुलकर्पूरचन्दनमितियावत् तेनकृतंलेपनेपथ्यं अङ्गराग भूषणंतस्यगन्ध वहःसौगन्ध्यवाहीयोगन्धवहोवायुस्तस्यप्रवाहंसङ्घंआलीभिःस्वपङ्क्तिभिः

संरुध्यकुत्रचिद्वन्तुमदत्त्वा । किंभूताः आपतन्तः आगच्छन्तोयेअनङ्गशरास्ता न् अनुसरतिअनुकरोतिएवंशीलः । आपतन्तःस्वर्गात्पतन्तःकामशराः पुष्पाणितदनुगामीवा । सौगन्ध्यबाहुल्यात्सर्वत्रभ्रमरा विचरन्तिस्मेति भावः । अन्योपिवस्त्रादिनावायुंसंरुध्यसौरभमाहृते । वक्रपङ्क्तीनांभ्रम रायान्देव्योकामोद्दीपकत्वात्पञ्चकामवाणतुल्यत्वम् ॥ ५ ॥

उत्तुङ्गमङ्गलमृदङ्गनिनादभङ्गी सर्वानुवाद विधिबोधितसाधुमेधाः ॥ सौधस्रजःप्लुतपताक तयाभिनिन्युर्मन्येजनेषु निजताण्डवपण्डितत्वम् ६

उत्तुङ्गेति । सौधस्रजःधवलगृहपङ्क्तयःप्लुतपताकतयाचलत्पताकत याकत्वाजनेषुजनानांसमीपइत्यर्थः निजतांडवपण्डितत्वस्वीयनृत्तचातु र्यंअभिनिन्युः अभिनयेनदर्शयामासुरितिअहंमन्ये । किंभूताःउत्तुङ्गोऽति तरः मङ्गलमृदङ्गनिनादःविवाहमृदङ्गध्वनिस्तस्यभंग्यःप्रकारविशेषास्ता सांसर्व सकल अनुवादविधिः अनूच्चारणविधिः सकलस्यमृदङ्गशब्दस्यय प्रतिशब्दविधिरितियावत् । तेनबोधिताज्ञापितासाध्वीमेधालयज्ञानयाग म्भीरतायाभिः अन्याअपिनर्त्तक्योमङ्गलमृदङ्गनिनादभङ्गीनां अनुवादेन स्वीयंनृत्यकौशलंहस्ताद्यभिनयेनलोकेषुप्रदर्शयन्ति । अन्योपिमेधावीगु रुणाव्याख्यातस्य अर्थस्यअनुवादेनबोधितसाधुमेधःसज्जनेषुस्वीयंपाण्डि त्यंप्रकाशयति । एतत्श्लोकार्थोऽनुभवैकगम्यः । नत्रदुःसुष्ठुएवपरान्मे धाशब्दादसिप्तान्येभ्यः परादितिनासिच् ॥ ६ ॥

संभाषणंभगवतीसदृशंविधाय वाग्देवताविनय बन्धुरकन्धरायाः ॥ ऊचेचतुर्दशजगज्जनतानम स्यातत्राश्रितंसदसिदक्षिणपक्षमस्याः ॥ ७ ॥

सम्भाषणमिति । भगवतीषड्गुणैश्वर्यसंपन्ना तथाचतुर्दशसुजगत्सुजनत यानमस्यापूज्यावाग्देवतातत्रसदसिअस्या भैम्या दक्षिणपक्षम्यार्श्वं अथच अनुकूलपक्षं आश्रितासतीऊचे ॥ किंकृत्वा सदृशन्देवादिवर्णनविषयंभै म्यासहसदृशअनुगुणंभाषणंविधाय । किंभूतायाः अस्याविनयेनबन्धुरान म्राकन्धराग्रीवाशिरोधरायस्याः । भगवतीत्यादिविशेषणैर्देवादिवर्णनस्य सामर्थ्यम् । दक्षिणपक्षमित्यनेनभैमीपक्षपातित्वञ्चसूचितम् ॥ ७ ॥

अभ्यागमन्मखभुजामिहकोटिरेषा येषांपृथक्कथ
नमब्दशतातिपाति ॥ अस्यांवृणीष्वमनसापरिभा
व्यकांचि च्चित्तवृत्तिरनुधावतितावकीना ॥ ८ ॥

किमुवाचेत्याह । अभ्यागमदिति । इंद्रमयन्तिइहस्वयम्बरेमखभुजा न्देवानांएषाकोटिरभ्यागमत्आययौ कोटिसङ्ख्याकादेवाःसमागताइत्यर्थः । येषान्देवानांपृथक्कथनंपार्थक्येनवर्णनं अब्दशतंवर्षशतमतिपतति अतिक्रामतिएवंशीलम् । वर्षशतेनापिकर्तुंनशक्यतइत्यर्थः । तस्मात्त्वंमनसापरिभाव्यविचार्य अस्यान्देवकोटीयङ्कांचित्तावकीनाचित्तवृत्तिरनुधावतिअभिलष्यतितंवृणीष्व । मनसाविचार्यवृणीष्ववा ताःकीनाचित्तवृत्तिर्मनसाविचार्येत्यनेनसरस्वत्यानादरःसूचितः । तावकीनेतियुष्मदस्मदोरन्यतरस्यान्खिञ्च तवकममकेतितवकादेशः ॥ ८ ॥

एषान्त्वदीक्षणरसादनिमेषतैषा स्वाभाविकानि
मिषतामिलितायथाभूत् ॥ आस्येतथैवतवनन्व
धरोपभोगैर्मुग्धेविधावमृतपानमपिद्विधास्तु ९

एषामिति । ननुमुग्धेसुन्दरिएषान्त्वदीक्षणरसात्प्रीतेर्हेतोरेषाप्रत्यक्षदृश्याअनिमेषतानिर्निमेषतास्वाभाविकीसहजा अनिमिषतातयामिलिता संयुक्तासतीद्विधाद्विप्रकाराअभूत् । तथैवअमृतपानमपितव आस्यं विधौ मुखचन्द्रेअधरोपभोगैःअधरचुम्बनैःकृत्वाद्विधाद्विःप्रकारंअस्तुभवतु । यथादेवाःदेवत्वादनिमेषा अपित्वदवलोकनप्रसादात्पुनरपि अनिमेषाजातास्तथादेवत्वाच्चन्द्रामृतादाः अपित्वदधरामृतस्वादादमृतादाःपुनरुक्ताभवन्त्वित्यर्थः । चन्द्रास्ययोस्तुल्यत्वंसूचितम् । मुखेतुअधरोपभोगैश्चन्द्रेतुधराव्यतिरिक्तोपभोगैः । स्वर्गोपभोगैरित्यर्थः ॥ ९ ॥

एषाङ्गिरेःसकलरत्नफलस्तरुःसा प्राक्तुग्धनूमि
सुरत्नःखलुपञ्चशाखः । मुक्ताफलंफलनसान्वय
नामतत्वं नाभातिबिन्दुभिरिवच्छुरितःपयोधेः १०

एषामिति । सकलानिरत्नान्येवफलानियस्यतानिफलतीतिवा । सकलरत्नफलःसःप्रसिद्धस्तरुःकल्पवृक्षःएषान्देवानाङ्गिरेःसुमेरोः पञ्चशाखःखलु

हस्तइवाभातिशोभते । किंभूतस्यमेरोःप्राक्पूर्वंन्दुग्धाभूमिरेवसुरभिर्धेनुः येनधृतः । गोरूपाभूरेवरत्नादीनिदुग्धायेनतस्यांकिंभूतःतरुःपयोधेःक्षीर समुद्रस्यविन्दुभिस्ततत्तरत्पन्नरत्नैःस्फुरितः । पयोधिरितिपाठेदुग्धरूपैःवि न्दुभिरितिव्याख्येयम् । उत्प्रेक्षते मुक्ताफलंफलत्वेनसान्वयंसार्थकमेतदेव नामनान्यस्यएवंविधन्तन्वन्निव । कस्यचिद्वृक्षस्यफलंहिफलशब्देनव्यपदि श्यतेतथामुक्ताफलस्यापिफलत्वङ्कल्पवृक्षफलत्वादितिभावः । प्रारब्धगो दोहनस्यपाणिनाविनादोग्धुमशक्तेः वएववृक्षोमेरोःकरआसीत् । दोहने दुग्धसंपर्कस्यापिसम्भवात् तेनचरत्नानामेवदुग्धत्वादस्यचरत्नसहितत्वा त्प्रायेणमेरोः पाणिरेवायमित्यर्थः । क्षीरसागरादस्यउत्पन्नत्वान्मुक्तादी निरत्नानिदुग्धविन्दुतुल्यानिशोभन्तइत्यर्थः । अथचपञ्चशाखास्कन्धायस्य कल्पवृक्षःकिलपञ्चकरोभवतिअङ्गुलीभि पञ्चशाखाः । पृथूपदिष्टापृथि वीमेरुणारत्नानिमहौषधीश्चदुग्धेत्यागमः । फलनेनइष्टसम्पादनेनसान्व यसंयोगंनामयस्यएवंविधमुक्ताफलंसम्पादयन्इवइतिवा । गोपालेनसह चारित्वात् अत्रापिअनादरःसूचितः ॥ १० ॥

वक्त्रेन्दुसन्निधिनिमीलदलारविन्द द्वन्द्वभ्रमक्षम मथाञ्जलिमात्ममौलौ ॥ कृत्वापराधभयचञ्चल मीक्षमाणा सान्यत्रगन्तुममरैःकृपयान्वमानि ११

वक्त्रेति । अथसरस्वतीवचनानन्तरंअमरःसाभैमीअन्यत्रसर्पराजादिस मीपेगन्तुंकृपया अन्वमानिअनुज्ञाता । किंभूता आत्ममौलावञ्जलिङ्कृ त्वादेवान्नमस्कृत्य अवरणजन्योपराधस्तज्जनितंभयंशापादितेनचञ्चलंय थातथादेवानीक्षमाणा । किंभूतमञ्जलिं । वक्त्रेन्दोर्मुखचन्द्रस्यसन्निधिः तस्मात्निमीलन्तिसङ्कुचन्तिदलानिपत्राणियस्यतदरविन्दद्वन्द्वन्तस्यभ्रमेण मंसमर्थंसङ्कुचद्दलकमलयुगतुल्यम् । त्वंयुअनुरागिणीन्ताङ्ज्ञात्वायन्नतवा नुरागस्तंवृणुमाभैमीरितिदेवैरनुज्ञातेतिभावः । अन्योपिएवमीक्षमाणाः सकृपैःअनुकम्प्यते । निमीलन्तिनिमीलानिपचाद्यच् । निमीलिदलेति पाठेनिमीलनशीलेत्यर्थः ॥ ११ ॥

तत्ताद्विरागमुदितंशिविकाधरस्थाः साक्षाद्विदुःस्म

नमनागपियानधुर्याः ॥ आसन्ननायकाविवर्णमु
खानुमेय भैमीविरक्तिचरितानुमयानुजग्मुः १२

तद्वीति । यानधुर्याः शिबिकावाहिनः वदितं समुत्पन्नं तेषु तेषु विरागस
र्गाद्वैम्याः साक्षात्प्रत्यक्षतोपियद्यपिमनागपिलेशतोपिनविदुःस्मनजानते
स्म । यतः शिबिकायाः अधरे अधोदेशे तिष्ठन्ति शिबिकाधरस्याः तथापि आ
सन्नाः संनिहिताः नायकाः देवादयस्तेषां विवर्णानि म्लानानि मुखानि तैः कृ
त्वाऽनुमेयानि भैम्या विरक्तिं रचितानि नमस्कारादीनि तेषां अनुमया अनु
मानेन तत्कर्मैव तु पुनः जग्मुः ज्ञातवन्तः स्म । तुरवधारणे वा जग्मुरेव । यत एते विव
र्णमुखास्तस्मात् एतेषु भैम्या नानुरक्तेति ज्ञातवन्त इत्यर्थः । अनुजग्मुरिति
भैमीविरक्तिं ज्ञात्वा अनुपश्चात् यानं त्यादिवचनविनैव अन्यत्र जग्मु रिति ते
षां पण्डितत्वं सूचितम् ॥ १२ ॥

रक्षः स्वरक्षगमवेक्ष्य निजं निवृत्तो विद्याधरेष्वधर
तां वपुषैव भैम्याः ॥ गन्धर्वसंसदि न गन्धमपि स्व
रस्य तस्या विमृश्य विमुखो जनिया निवर्गः १३

रक्षः स्विति । यानिवर्गः वाहकसार्थः रक्षःसु निजमरक्षणं अवेत्य राक्षसाः
अस्मान् खादिष्यन्तीति भिया तेभ्यः निवृत्तः पराङ्मुखः । तथा अमुखनराङ्गेषु न
रमुखाश्वाङ्गेषु विद्याधरेषु भैम्याः वपुषैव कृत्वाऽधरतां न्यूनतां अवेत्य विचार्य
निवृत्तः । एते भैमीवरणयोग्या न भवन्तीति । तथा गन्धर्वसंसदि गन्धर्वसभ
यां तस्याः भैम्याः स्वरस्य कण्ठमाधुर्यस्य गन्धमपि नेति विमृश्य अवेत्य विमुखः
अजनि जातः । अधरतां अवेत्येत्यर्थः । राक्षसादीनामयोग्यत्वात् तान्प्र
ति न गच्छति स्मेति भावः ॥ १३ ॥

दीनेषु सत्स्वपि कृताफलवित्तरक्षै र्यक्षैरदर्शि नमुख
न्त्रपयैव भैम्याः ॥ ते जानते स्म सुरत्नाखिपतिव्रता
ङ्कि न्ताङ्कलवीरुधमधिक्षितिनावतीर्णाम् १४

दीनेष्विति । यक्षैः त्रपयैव भैम्यां विषये मुखं न दर्शि न दर्शितम् । यतः ।
किंभूतैः दीनेषु दरिद्रेषु जनेषु सत्स्वपि कृता अफला विहरणा धनपालनं यै
र्दीनेभ्यो न वितीर्णधनैः अतिकृपणैरित्यर्थः । भैम्या इति पाठे तस्याः सकाशा

तल्लज्जयेतियोज्यम्। यक्षेषुधनोधिपत्वंप्रसिद्धं। लज्जाकिमितिजातेत्याश ङ्क्याह। तेयक्षाःतांभैमींअधिक्षितिपृथिव्यामवतीर्णांसुरशाखिनःपत्युः कल्पवृक्षस्यपत्युरिवदानशूरत्वलक्षणं व्रतंयस्यास्ताङ्कल्पवीरुधंश्रियङ्कल्पव ल्लीमतिबहुदात्रीं। अथयक्षुरशाखीनलएवतस्याःपतिव्रताङ्कल्पवल्लीनजा नतेस्म। अतिवदान्यान्तांप्रतिअतिकृपणस्यात्मन.अयोग्यत्वाद्यक्षैः मुखं नादर्शीतिभावः। अन्योपिकृपणःवदान्यमुखनिरीक्षणेलज्जते ॥ १४ ॥

जन्यास्ततःफणभृतामधिपंसुरौघा न्माञ्जिष्ठम ञ्जिमविगाहिपदोष्ठलक्ष्मीम्॥ तांमानसन्निखि लवारिचयान्नवीन हंसावलीमिवघनागमयाम्ब भूवुः ॥ १५ ॥

जन्याइति। ततःजनींवहन्तीतिजन्याःवाहकाःतांभैमींसुरौघाद्देवसमू हात्सकाशात्फणाभृतामधिपंसर्पराजंवासुकिङ्गमयांबभुवुःप्रापयामासुः। किंभूतांमाञ्जिष्ठयारक्तं वस्त्रमाञ्जिष्ठन्तस्यमञ्जिमानंरस्यतांस्विगाहते एवं शीलापदोष्ठलक्ष्मीःचरणाधरशोभायस्याःसा। केकस्मात्कामिव। न वीनान्नूतनाघनागमेघानिखिलवारिचयात् करग्रजलौघात्सकाशात्हंसा वलीराजहंसपङ्क्तिमानसंसरइव। यान्याइतिपाठेयानेयानवाहनेसाधुरि ति। माञ्जिष्ठन्तेमरक्तमित्यण्॥ १५ ॥

यस्याविभोरखिलवाङ्मयविस्तरोय माख्यायते परिणतिर्मुनिभिःपुनःसा ॥ उद्गत्वरामृतकरार्धप रार्घ्यभाला म्वालामभाषतसभासततप्रगल्भा १६

यस्याइति। सापुनर्वालाभैमींअभाषत। किंभूतासभायांसततंप्रगल्भा साकावाल्मीकिप्रमुखैर्मुनिभिः अथर्ववेदादिःअखिलवाङ्मयविस्तरःविभो र्व्यापिकायाःयस्या.देव्याःपरिणतिपरिणामः आख्यायतेकथ्यतेतद्रूपेणैव याव्यवस्थिता किंभूतां। उद्गत्वरःउदयाचलस्थोऽमृतकरश्चन्द्र तस्यअर्धन्त द्वत्पराघ्यंन्तत्सदृशंभालंयस्यास्तां। जयादीरंयासद्दवर्तमानेतिभिक्तंवा। वाङ्मयंएकान्तेनित्यमयट्। गत्वरश्चेतिनिपातनात्उद्गत्वरइतिसाधुः १६॥

आश्लेषलग्नगिरिजाकुचकुङ्कुमेन ·र:पटूमूत्रप

रिरम्भणश्रोणशोभः ॥ यज्ञोपवीतपदवीं भजते स शम्भोः सेवासु वासुकिरयं प्रसितः सितश्रीः ॥ १७ ॥

आश्लेषेति । सः अयं वासुकिः । किंभूतः । शम्भोः सेवासु प्रसितः आसक्तः । तथा सितश्रीः श्वेतशोभश्च । सकः यः शम्भोर्यज्ञोपवीतपदवीं भजते किंभूतः यः आश्लेषेण आलिङ्गनेन लग्नं यद्गिरिजाकुचकुङ्कुमं तेन कृत्वा पट्टसूत्रस्य परिरम्भणेनेव संबन्धेनेव शोणशोभः रक्तशोभः । यज्ञोपवीतमपि श्वेतं ग्रन्थिस्थाने पट्टसूत्रेण शोणं संभवति । सर्वदा शंभुसेवया संभोगाभावेन नावृणीध्रेति भावः । पुराणेषु देवानां ब्रातुर्वर्ण्याधिकारे । ब्रह्मा विप्रो रुद्रः क्षत्रियो विष्णुर्वैश्यः दस्रौ शूद्रौ । माञ्जिष्ठं क्षत्रियस्य इति वचनात् यज्ञोपवीतस्यारक्तत्वं कथितमिति वा । प्रथित इति पाठे सेवासु ख्यातः ॥ १७ ॥

पाणौ फणी भजति कङ्कणभूयमैशे सोऽयं मनोहरमणीरमणीयमुच्चैः ॥ कोटीरबन्धनधनुर्गुणयोगपट्ट व्यापारपारगममुं भज भूतभर्त्तुः ॥ १८ ॥

पाणाविति । हे भैमि सोऽयं वासुकिः ऐशे शांभवे पाणौ कङ्कणभूयं कङ्कणत्वं भजति याती त्यर्थः । किंभूयं कङ्कणत्वम् । उच्चैर्मनोहरमणीभिः रमणीभिः रमणीयं । कङ्कणमपि रत्नै रमणीयं भवति । त्वं अमुं भज । किंभूतं भूतभर्त्तुः शिवस्य कोटीरबन्धनं जटाजूटबन्धनं धनुर्गुणो धनुर्ज्यायोगपट्टश्च तेषां व्यापारस्य भवनलक्षणस्य पारगन्तारं कुशलं कोटीरबन्धनं धनुर्गुणयोगपट्टीभूतं मनोहरमणिः सुन्दरफणारत्न इति वा । उच्चै रमणीयममुमिति वा । हरस्य कोटीरादिविशेषणेन वरणाभावः सूचित ॥ १८ ॥

धृत्वैकया रसनयामृतमीश्वरेन्दो रप्यन्यया त्वदधरस्य रसं द्विजिह्वः ॥ आस्वादयन्युगपदेष परं विशेषं निर्णेतुमेतदुभयस्य यदि क्षमः स्यात् ॥ १९ ॥

धृत्वेति । जटाजूटसंबन्धोदेकया रसनया जिह्वया ईश्वरस्य इन्दोः चन्द्रस्य अमृतं धृत्वा अन्यया द्वितीयया त्वदधरस्य रसमपि धृत्वा चन्द्रामृतमोष्ठामृतं च युगपत् एककालं आस्वादयन् पिबन् एतदुभयस्य चन्द्रामृतौष्ठरसलक्षणस्य द्वयस्य परं विशेषं तारतम्यं निश्चेतुं यदि क्षमः समर्थः स्यात्तर्हि अयमेष वासुकिरे

वनात्यइत्यर्थः । यतोद्विजिव्होद्विजिव्हेयस्य युगपदास्वादनेहेतुःपरंसूक्ष्मं विशेषंवातर्हिपरकेवलञ्चेत्यन्वयः । राज्ञांवरणयोग्यत्वेपिचन्द्रामृतसंबन्धस्यासंभवात्देवानान्तत्पानसंभवेपिद्विजिव्हत्वाभावात् समकालंपाना संभवात्सर्पाणान्द्विजिव्हत्वसंभवेपिचन्द्रामृतसंबन्धाभावात् । एतस्यतुउभयसम्भवाद्द्वयोर्विशेषनिर्णयेऽयमेवक्षमोनान्यइत्यर्थः ॥ १९ ॥

आशीविषेणरदनच्छददंशदान मेतेनतेपुनरनर्थ
तयानगण्यम् ॥ बाधांविधातुमधरेहिनतावकी
ने पीयूषसारघटितेघटतेस्यशक्तिः ॥ २० ॥

आशीति आशीतालुगतादंष्ट्रातयाविद्धोनजीवतीतिवृद्धाः । आश्यांविषंयस्यएवंभूतेनएतेनवासुकिनाकृतंरदनच्छददंशदानन्त्वदधरखण्डनन्तत्त्वयाऽनर्थतयाऽपमृत्युहेतुतयापुनर्नगण्यंनसंभावनीयं । तस्यवरणेचुम्बनेविषसञ्चारादपमृत्युभयेनएनंनवृणुइतिनशङ्कनीयं । हियस्मात्पीयूषसारघटितेऽमृतसारसृष्टेतावकीनेत्वदीये अधरेबाधाम्विधातुंअस्यदन्तच्छदस्यवासुकेर्वाशक्तिःसामर्थ्यंनघटतेनयुज्यते । अमृतेहिविषंनजवतीत्यर्थः आशिषिदंष्ट्रायांविषंयस्येतिषकारान्तस्यपृषोदरादित्वात्षलोपोवा । ते इतिरूत्पानामितिषष्ठी । गण्यंगणतेर्यत् ॥ २० ॥

तद्विस्फुरत्फणविलोकनभूतभीतेः कम्पञ्चवीक्ष्यपु
लकञ्चततोनुतस्याः ॥ सञ्जातसात्विकविकारधि
यःस्वभृत्यान्नृत्यान्न्यषेधदुरगाधिपतिर्विलक्षः २१

तदिति । उरगाधिपतिःविलक्षःसलज्जःसन्स्वसेवकान्भृत्यान्नर्तितुंअर्हान्हस्तकादिपदार्थात्सकाशात्न्यवारयत् । किम्भूतान्स्वभृत्यान् तस्यवासुकेर्विस्फुरतःफणस्यविलोकनाद्भूतासञ्जातायाभीतिस्तस्याःसकाशात्तस्याःभैम्याःकम्पंसमीक्ष्य । ततोऽनुअनन्तरंअविलम्बितमित्यर्थः । पुलकञ्चसमीक्ष्यसञ्जातासात्विकविकारसंबन्धिनीधीर्बुद्धिर्येषान्तान् । भैम्याःकम्पंपुलकञ्चदृष्ट्वाऽस्मत्स्वामिन्यनुरक्ताइयमितिविचार्यनृत्यङ्कुर्वन्तइत्यर्थः । तद्विस्फुरदितितस्याःविशेषणंवा । भूताभीतिर्यस्याःइतिविग्रहः स्वाम्यभिलाषेपूर्णेभृत्यानृत्यन्ति । भयेनअस्याःकम्पादिप्रवृत्तंनतुअनुरागादितिनृत्यमैवकुर्वितिन्यषेधदित्यर्थः । भृत्यसौख्यार्थंभैम्यायाऽवृतत्वात्सलज्ज

त्वं । फणाद्वयोरितिफणाशब्दःपुंल्लिङ्गोपि । ततोनुनिपातसमुदायः भूत्वा नञ्ञ्रदुपधात्क्यप् ॥ २१ ॥

तद्दर्शिभिःस्ववरणेफणिभिर्निराशै र्निश्वस्यतत्किमपिसृष्टमनात्मनीनम् ॥ यत्तान्प्रयातुमनसोपि विमानवाहा हाहाप्रतीपपवनाशकुनाञ्जजग्मुः२२

तद्दर्शिभिरिति । तद्दर्शिभिरवृतस्तामिविलोकयद्भिर्वासुकिर्वेलत्यदर्शिभिर्वा । अतएवस्ववरणेनिराशैःकर्कोटकादिभिःनिश्वस्यफूत्कृत्यतत्किमप्यपूर्वमनात्मनीनंस्वीयमहितंसृष्टङ्कृतं । यत्तान्सर्पान्प्रयातुमनसोपिगन्तुकामाअपिविमानवाहाःप्रतीपपवनाः प्रतिकूलवातास्तद्रूपंयदशकुनन्तस्माद्धेतोर्हाहाकष्टं अशुभमेतदितिकृत्वानजग्मुःप्रतिकूलस्यवायोरशकुनत्वात्सर्पसंमुखंनजग्मुः अयोग्यत्वात्तन्नगताइतिभावः । आत्मनेहितमात्मनीनंआत्मन्विश्वजनेतिखः ॥ २२ ॥

ह्रीसंकुचत्फणगणादुरगप्रधाना त्तांराजसङ्घमनयन्तविमानवाहाः ॥ सन्ध्यानमद्दलकुलात्कमलाद्द्वितीय कल्हारमिन्दुकिरणाइवहासभासम् २३

ह्रीति । विमानवाहाःह्रियासङ्कुचत्फणगणंफणावृन्दंयस्यतस्मात्उरगप्रधानात्सर्पराजाद्वासुकेःविनीयअपनीयतांराजसङ्घं अनयन्तप्रापयामासुः केकस्मात्कांकिमिव । इन्दुकिरणाःसन्ध्यायांनमन्तिसङ्कुचंतिदलकुलानिपत्रसमूहायस्यतस्मात्कमलात्विनीयहासभासम्विकसन्तींदीप्तिंकल्हारसौगन्धिकमिव ॥ २३ ॥

देव्याभ्यधायिभवभीरुधृतावधाना भूमीभुजोभजतभीमभुवोनिरीक्षाम् ॥ आलोकितामपिपुनःपिबतांदृशौना मिच्छापिगच्छतिनवत्सरकोटिभिर्वः ॥ २४ ॥

देव्येति । साभैमीदेव्याअभ्यधायिवक्ष्यमाणंउक्ता । हेभीरुचलत्फणदर्शनाद्भयशीलेत्वन्धृतावधानासावधानाजवभयंपरित्यज्याराज्ञोविलोकयेत्यर्थः । हेभूमिभुजोराजानोयूयमपूर्वांभीमभुवःभैम्याःनिरीक्षान्दर्शनंभ

जतपश्यत । दृष्टायाः पुनर्दर्शनेनकिमतआह । आलोकितामपिएनांदृशा पुनः पिबतांसादरंपश्यतांबोयुष्माकंएतद्दर्शनेच्छावत्सराणांवर्षाणांकोटिभिरपिनगच्छतिनशाम्यति । अतःपुनर्यथेच्छंविलोकयतेत्यर्थः त्यजतेति पाठेऽमीविलोकनंमाकुरुध्वं । युष्मासुपश्यत्सुलज्जावशादियंयुष्मान्नपश्येत्तस्माल्लज्जांविहाययथापश्यतितथाकुरुतेत्यर्थः । वरणेसन्देहाद्दर्शनमपिकथन्त्याज्यंइत्यतआह । आलोकितामितिवा ॥ २४ ॥

**लोकेशकेशवशिवानपियश्चकार शृङ्गारसान्तरभृशान्तरशान्तभावान् ॥ पञ्चेन्द्रियाणिजगतामिषुपञ्चकेन संक्षोभयन्वितनुतांविततनुर्मुदंवः २५**

लोकेशेति । योवितनुःकामःलोकेशःब्रह्माकेशवःशिवश्चएतानपित्रीन् शृङ्गारेणरसेनसान्तरोव्यवहितःभृशःअतिशयितःआन्तरोमानसः शान्तभावोविरक्तत्वंयेषान्तान्विरक्तानपिअनुरक्तान्चकार सःकामःवोयुष्माकंमुदंवितनुताद्विस्तारयतु । किङ्कुर्वन्इषुपञ्चकेनजगताङ्सुरादीनांपञ्चेन्द्रियाणिक्षोभयन्विकारंप्रापयन् । सृष्टिस्थितिप्रलयकारिणोदेवेशानपिय.स्ववशान्चकारतस्यभवद्वशीकरणेकःप्रयासइतितदधीनाःसन्तः पुनर्यथेच्छंएनाम्विलोकयतेतिभावः । सृष्ट्यादिक्रमेणाभ्यर्हितत्वात्पूर्वनिपातः । पञ्चकेनपञ्चपरिमाणमस्येत्यर्थेसंख्यायाः संज्ञासङ्घेतिकन् ॥ २५ ॥

**पुष्येषुणाध्रुवममूनिषुवर्षजप्तिहुङ्कारमन्त्रबलभस्मितशान्तिशक्तीन् ॥ शृङ्गारसर्गरसिकद्रुणकोदरित्वन्द्वीपाधिपान्नयनयोर्नयगोचरत्वम् २६**

पुष्येति । शृङ्गाररसस्यसर्गेनिर्माणेरसिकन्तन्निर्माणकुशलं द्रुणकन्तद्वत् अतिकृशन्तदेववाउदरंयस्यास्तत्सम्बुद्धिर्हेकृशोदरित्वं अमून्द्वीपाधिपान् पुष्करादिसप्तद्वीपेश्वरान्राज्ञोनयनगोचरत्वंनयप्रापय । अनुग्रहबुद्ध्यावि लोकयेत्यर्थः । किंभूतान् । ध्रुवंनिश्चितंइषुवर्षेबाणविमोचनेजप्यतइति जप्तिर्जपतोः हुङ्काररूपोमन्त्रस्तस्यबलेनशक्त्याकृत्वाभस्मितानाशिताशान्ताशक्तिरुपशमप्रज्ञाबोयेषान्तान् । जप्तिरित्येवपाठःसाधुः । अन्योपिहुंफडादिमन्त्रबलेनकस्यचिच्छक्तिन्दूरीकृत्यवशीकरोतीति ॥ २६ ॥

स्वादूदकेजलनिधौसवनेनसार्धं भव्याभवन्तुतव वारिविहारलीलाः ॥ द्वीपस्यतत्पतिममुंभजपुष्क रस्य निस्तन्द्रपुष्करतिरस्करणक्षमाक्षि ॥ २७

स्वाद्विति । हेनिस्तन्द्रस्यविकसितस्यपुष्करस्यकमलस्यतिरस्करणेजयेक्ष मेसमर्थेअक्षिणीलोचनेयस्यास्तत्संबोधनंनिस्तन्द्रपुष्करतिरस्करणक्षमाक्षि भैमि स्वादूदकेमधुरसलिलेजलनिधौसमुद्रेसवनेननाम्नाअनेनराज्ञासार्द्धन्त ववारिविहारलीलाजलक्रीडाभव्यारमणीयाभवतु । अस्मात्पुष्करस्यद्वीप स्यपतिन्तंप्रसिद्धंसवननामानंअमुंराजानंभजवृणीष्व तन्द्रीनिद्राप्रमीलयो रित्यमरः ॥ २७ ॥

सावर्तभावमवदद्भुतनाभिकूपे स्वर्भौममेतदुपव र्तनमात्मनैव ॥ स्वाराज्यमर्जयसिनस्त्रियमेतदी शा मेतद्गृहेपरिगृहाणशचीविलासम् ॥ २८ ॥

सावर्तेति । आवर्तेनदक्षिणावर्तेनसहवर्त्तमानःसावर्तःतस्यभावस्तेनम वदुत्पद्यमानं अद्भुतमाश्चर्ययस्मात्एवंभूतोनाभिकूपोयस्याःतत्संबुद्धिःस लक्षणगम्भीरनाभिकूपेभैमि एतस्यसवनस्यउपवर्तनन्देशः आत्मनैवस्वय मेवभौमंभूमौभवंस्वःस्वर्गःअस्ति । त्वंएतदीयामेतद्देशसम्बन्धिनींएत द्राजसम्बन्धिनींवाश्रियमेवस्वाराज्यंस्वर्गराज्यंनार्जयसिअपितुअर्जय । त्वं एतद्गृहेशचीविलासम्परिगृहाण ॥ इन्द्रतुल्यमेनंशचीवत्त्वम्वृणीष्वेति भावः । कूपस्यचसावर्तत्वमाश्चर्यकारि । नीवृज्जनपदोदेशविषयौतूपव र्त्तनमित्यमरः ॥ २८ ॥

देवःस्वयम्वसतितत्रकिलस्वयंभू न्यग्रोधमण्डप तलेहिमशीतलेयः ॥ सत्वाम्बिलोक्यनिजशिल्प मनन्यकल्पं सर्वेषुकारुषुकरेणकरोतुदर्पम् ॥ २९

देवइति । तत्रपुष्करद्वीपेहिमवत्शीतलेशीतलच्छायेन्यग्रोधमण्डलत लेमण्डलाकारवटवृक्षच्छायप्रदेशेः यःस्वयंभूःब्रह्मादेवःस्वयमाजात्स्वरूपे णकिलप्रसिद्धंवसति । सःब्रह्मात्वान्तल्लक्षणांअनन्यकल्पअनन्यसदृशांनिज शिल्पनिजनिर्माणंविलोक्यसर्वेषुकारुषुशिल्पिषुविषयेकरेणदर्पगर्वङ्करोतु ।

एवंसुन्दरतरशिल्पनिर्माणकुशलोमदन्यस्यहस्तोनविद्यतेइति त्वाम्बवीत्य तस्यबुद्धिरुदेष्यतीतिभावः । अन्येनकल्पान्तैर्निर्मीयतेइत्यन्यकल्पंनभवति अनन्यकल्पंअन्येननिर्मातुमशक्यमित्यर्थः । अन्यस्मादीषदूनमेवनभवति इतिकल्पवन्तंवा ॥ २९ ॥

न्यग्रोधनादिवदिवःपतदातपादे न्यग्रोधमात्मभ रधारमिवावरोहैः ॥ तन्तस्यपाकिफलनीलदल द्युतिभ्या न्द्वीपस्यपश्यशिखिपत्रजमातपत्रम् ३० 

न्यगिति । हेभैमित्वन्तं न्यग्रोधंवदन्तस्यद्वीपस्यातपत्रमिवच्छत्रतुल्यंपश्य किंभूतंन्यग्रोधंदिवःआकाशात्पततः आपततआतपादेरुष्णस्यवृष्ट्यादेः न्यक्अधोदेशेरोधनात्निराकरणादिवन्यग्रोधं न्यक्रुणद्धिइतिसान्वयना मानं अतिशीतलच्छायमित्यर्थः । तथाऽवरोहैः शाखोत्पन्नैःमूलैः कृत्वा आत्मभरन्धारयतिएवंभूतमिवस्थितं । किंभूतमातपत्रंपाकीनिफलानि नीलानिदलानिपर्णानिचतेषान्द्युतिभ्यांरक्तनीलशोभाभ्याङ्कृत्वाशिखिपत्र जंरक्तनीलमयूरपिच्छविरचितंसमस्तमपिद्वीपन्तच्छायेवर्ततइतिशेषः । अ न्योपिबहुतरंभारंहस्तादिनाधारयति । न्यग्रोधस्यचकेवलस्येतिनिपात नान्न्यग्रोधःसाधुः ॥ ३० ॥

नश्वेतताञ्चरतुवाभुवनेषु राज हंसस्यनप्रियतमा कथमस्यकीर्तिः ॥ चित्रन्तुयद्विशदिमाद्वयमादि शन्ती क्षीरञ्चनाम्बुचमिथःपृथगातनोति ३१

नेति । अस्यराजहंसस्यराजसुश्रेष्ठस्यप्रियतमात्यन्तमभिमताकीर्तिःश्वे तताशुभ्रताङ्कथंनचरतुगच्छतुअपितुगच्छत्वेव । तथाभुवनेषुलोकत्रयेष पिकथंनगच्छतुलोकत्रयमपिव्याप्नोत्येव । यद्वाकथंनश्वेततांश्वेतात्वन्तुए वत्रैलोक्येचचरत्वेव हंसस्यापिप्रियातमायोषित्श्वेताभवतितथाभुवनेषूद केषुवाक्रीडतिविसादिञ्चरयतिवा अत्रनाश्चर्यं विशदिम्नोऽधवलिताया अद्वैतंऐक्यमादिशन्तीत्रैलोक्यं श्वेतीकुर्वन्तीक्षीरंदुग्धंअम्बुचमिथः परस्पर स्माद्यत्पृथक्नआतनोतिभिन्नंनकरोतिइदन्तुचित्रं । हंसीहिमिश्रंक्षीरंनी रञ्चविविक्तंकरोति । इयन्तुतयोरभेदंकरोतीत्याश्चर्यं । अतिशुभ्रात्रैलो

कव्यापिनीचास्यकीर्त्तिर्वदान्यश्चायमितिभावः । अद्वैतेवाऽभेदएवउक्तः । जीवनंजुवनमित्यमरः । पक्षेश्वितावर्णेइतिधातोर्लोटस्तङ् ॥ ३१ ॥

शूरेऽपिसूरिपरिषत्प्रथमार्चितेऽपि शृङ्गारभङ्गिमधुरेऽपिकलाधरेऽपि ॥ तस्मिन्नवद्यमियमापतदेवनाम यत्कोमलंनकिलतस्यनलेतिनाम ॥ ३२ ॥

शूरइति । इयंभैमीतस्मिन्राज्ञितदेवअवद्यंदूषणंनामेतिप्रसिद्धौआपप्रापतत्किंयत्तस्यकिलप्रसिद्धंनलेत्यामन्त्रणयोग्यंसंबुध्यन्तंकोमलंमधुरार्हंनामनास्तिइतिएतदेवदूषणं । किंभूतेशूरेऽपितथासूरिपरिषदिविद्वत्सभायांप्रथमार्चितेऽपिप्रथमगण्येऽपि । तथाशृङ्गारभङ्ग्याशृंगाररचनयामधुरेमनोज्ञेऽपि । तथाकलानांचतु षष्टिगीतकलानांआकरेऽपिशौर्यपाण्डित्यशृङ्गारिककलाकौशलादिगुणयुक्तेऽपिनवरसेषुसत्स्वपिनलेनुरागाप्तंनावरिष्टेभावः ३२

भ्रूवल्लिवेल्लितमथाकृतिभङ्गिमेषा लिङ्गञ्चकारतदनादरणस्यविज्ञा ॥ राज्ञोऽपितस्यतदलाभजतापवह्नि चिह्नीबभूवमलिनच्छविभूमधूमः ॥ ३३ ॥

भ्रूवल्लीति । अथविज्ञाप्राज्ञीएषाभैमी तदनादरणस्यसवनानादरस्यलिङ्गचिन्हंभ्रूवल्लिवेल्लितंभ्रूलताचेष्टितमेवआकृतिभङ्गिं आकारविच्छित्तिंयद्वापूर्वंभ्रूवल्लिर्वेल्लितंअथानन्तरंआकृतिभङ्गिञ्चकार । भ्रूवलनेनअङ्गमोटनेनचतंनिराचकारइत्यर्थः । तस्यराज्ञोऽपिमलिनछव्यामलिनाकारेणयोभूमावाहुल्यमेवधूमः तस्यदमयन्त्याअलाभात्जातः तापस्तल्लक्षणोयोवन्हिःतस्यचिन्हीबभूवलिङ्गमासीत् । श्यामशोभांदृष्ट्वाजनेनतस्यविरहज्वरोऽनुमितइत्यर्थः । धूमोऽग्नेर्लिङ्गम् ॥ ३३ ॥

राजान्तराभिमुखमिन्दुमुखीमथैना ञ्जन्याजनीहृदयवेदितयैवनिन्युः ॥ अन्यानपेक्षितविधौनखलुप्रधान वाचांभवत्यवरःसतिभव्यभृत्ये ॥ ३४

राजेति । अथजन्याःयानवाहाःइन्दुमुखीमेनांवधूंहृदयवेदितयाएवजन्याशयज्ञातृतयाएवपुरःगच्छतइत्यादिभैमीवचनमन्तरेणैवराजान्तरस्याभिमुखंनिन्युः । यतोभिप्रायज्ञाः । खलुयस्मात्अन्येनस्वामिवचनादिना

स्वीयप्रवर्त्तनाविषयत्वेनअनपेक्षितोविधिर्व्यापारोयस्याएवंविधेस्वामिवच नानपेक्षकारिणिभव्येकुशलतरेभृत्येसेवकेसतिप्रधानवाचांस्वामिवचसांन अवसरःप्रस्तावएवनभवति । तस्मादभिप्रायंज्ञात्वाअन्यत्रनिन्युरितियु क्तं । अनपेक्षितमन्यस्वामिवचनादियेनएवंविध·विधिर्यस्येति । अन्य शब्दस्यआहिताग्न्यादित्वात्पूर्वनिपातः ॥ ३४ ॥

ऊचेपुनर्भगवतीनृपमन्यमस्यै निर्दिश्यदृश्यतमया वमताश्विनेयम् ॥ आलोक्यतामयमयेकुलशील शाली शालीनतानतमुदस्यनिजास्यबिम्बम् ३५

ऊचेइति। साभगवतीदेवीदृश्यतमतयासुन्दरतत्वेनअवमतौजितौआश्वि नेयौअश्विनीकुमारौयेनएवंभूतमन्यनृपमस्यैनिर्दिश्यदर्शयित्वापुनरूचे । किमूचइत्यतआह । अयेभैमिशालीनतयालज्जयाआनतंनम्रं निजास्यवि म्बमुदस्यउन्नमय्यकुलशीलाभ्यांशालतेएवंभूतःअयंराजाआलोक्यतां ॥३५॥

एतत्पुरःपठदपभ्रमबन्दिवृन्द वाग्डम्बरैरनवका शतरेम्बरेस्मिन् ॥ उत्पत्तुमस्तिपदमेवनमत्पदा ना मर्थोपिनार्थपुनरुक्तिषु पातुकानाम् ॥ ३६ ॥

एतदिति । हेभैमिएतस्यपुरःपठत्अपभ्रमक्कतभ्रमंयद्बन्दिवृन्दंतस्यवा गडम्बरैर्वचनविलासैः कृत्वाऽनवकाशतरेअतितरांनिरवकाशेऽस्मिन्न म्बरेआकाशेमत्पदानांममैतद्वर्णनसंबन्धिनांशुभिडन्तानांपदानांउत्पत्तुमु देतुपदमेवअकाशएवनास्ति । आकाशाश्रिताहिशब्दा·तैःतस्यचनिरव काशत्वात्मद्वचनामवकाश· । तथार्थपुनरुक्तिषुपातुकानामत्पदानांअर्थो पिनास्तियथाभिधेयाःशब्दाः तेषामर्थाश्चैतदीयैर्मागधैरेवोच्यन्तेततश्चशब्द पौनरुक्त्यमर्थपौनरुक्त्यञ्चदोषोममापत्स्यतइत्यर्थः । एतद्वचनममापिसं मतंइतिएनंवृणीष्वेतिभावः । बहुभिर्व्याप्तेअन्यस्मिन्नपिस्थानेचरणावका शोनभवति । उत्पत्तुंअनिटःपद्यतेस्तुमुन् ॥ ३६ ॥

नन्वत्रहव्यइतिविश्रुतनाम्निशाक द्वीपप्रशासि निसुधीषुसुधीभवन्त्या ॥ एतद्भुजाविरुदवादिज यानयापि किंरागिराजनिगिराजनिनान्तरन्ते ३७

नन्विति । ननुभैमि तेऽभ्यान्तरंमानसंएतस्यराज्ञोभुजयोर्वीरुदंप्रतापस्त स्यस्तुतिपाठकाःयेवन्दिनस्तेभ्योजाताएवंभूतयाऽनयापिगिरा हृष्यइति विश्रुतनाम्निअत्रअस्मिन्राजनिरागिअनुरागयुक्तं किंनाजनिप्रश्नःकाकुः । कुतोनाजनीतिवा किंभूतेशाकद्वीपप्रशासिनिशाकद्वीपाधिपे । किंभूतया गिरासुधीषुपण्डितेषुसुधीभवन्त्याअमृतीभवन्त्या आकर्णयताम्विदुषांअ मृतरूपयानतुसर्वजनानामितिविरागसूचनम् ॥ ३७ ॥

शाकःशुकच्छदसमच्छविपत्रमाल भारीहरिष्यति तरुस्तवतत्रचित्तम् ॥ यत्पल्लवौघपरिरंभविजृम्भि तेन ख्याताजगत्सुहरितोहरितःस्फुरन्ति ॥ ३८ ॥

शाकइति । तत्रद्वीपेसशाकनामातरुस्तवचित्तं हरिष्यति । किंभूतःशु कच्छदैःकीरपक्षैःसमाछविर्येषांएवंभूतानिपत्राणितेषांमालांबिभर्तीति । सकःयस्यशाकस्यपल्लवौघानांपरिरंभःसंबन्धस्तस्यविजृम्भितेनविलसितेन हरितोनीलवर्णाःसत्योजगत्सुहरितइतिख्याताःस्फुरन्ति । एतत्पत्रसंब न्धेनदिशांहरितइतिसान्वयंनामजातमित्यर्थः । भालभारीत्यट्केपीतिह्र स्वः ॥ ३८ ॥

स्पर्शेनतत्रकिलतत्तरुपत्रजन्मा यन्मारुतःकमपि संमदमादधाति ॥ कौतूहलन्तदनुभूयविधेहिभू यः श्रद्धांपराशरपुराणकथान्तरेपि ॥ ३९ ॥

स्पर्शेनेति । तत्रशाकद्वीपेसचासौतरुश्चतत्तरुःशाकस्तस्यपत्रेभ्योजन्मय स्यएवंभूतःमारुतःस्पर्शेनकत्वाकमप्यपूर्वंसंमदंहर्षं आदधातिकरोतीतिय त्किलश्रूयते । त्वन्तत्कौतूहलमनुभूयभूयःपुनःपराशरपुराणस्यविष्णुपुरा णस्यकथान्तरेपिआख्यानान्तरेपिश्रद्धामास्तिक्यबुद्धिंविधेहिकुरु । यत्रत्य वातसंस्पर्शादाह्लादोजायतेपरमितिविष्णुपुराणवचनम् । अस्यश्रवणा त्सत्यत्वं विद्यते । अनुभवादपिसत्यत्वज्ञानीहिइत्यपिभूयःशब्दार्थः । भूयसीचासौश्रद्धाचेतिवा ॥ ३९ ॥

क्षीरार्णवस्तवकटाक्षरुचिच्छटाना मन्वेतुतत्रविक टायितमायताक्षि ॥ वेलावनीवनततिप्रतिबिम्ब

चुम्बि किर्मीरितोर्मिचयचारिमचापलाभ्याम् ४०

क्षीरेति । हे आयताक्षि विशालनयने क्षीरार्णवः वेलावन्याः वेलाभूमौ वनततिर्वनपङ्क्तिस्तस्याः प्रतिबिम्बचुम्बी प्रतिबिम्बधारी अतएव किर्मीरितः नानावर्णोजातः किर्मीरितः ऊर्मिचयस्तरङ्गसङ्घस्तस्य चारिमा सौन्दर्यं चापलं चञ्चलत्वञ्च ताभ्यां कृत्वा तव कटाक्षस्य यद्वीनाञ्चटाः परंपरास्तासां विकटायितं विलसितं कटाक्षितं अन्वेतु अनुकरोतु । क्षीरमयत्वात्स्वतः शुक्लादीर्घं वनप्रतिबिम्बसम्बन्धाच्च नीलाः क्षीरोदतरङ्गास्त्वदीयश्वेतनीलविशालकटाक्षकान्तितुल्या भवन्त्वित्यर्थः । विकटायितं लोहितादेराकृतिगणत्वात्क्यषन्ताद्भावे निष्ठा ॥ ४० ॥

कल्लोलजालचलनोपनतेन पीवा जीवातुनानवरतेन पयोरसेन ॥ अस्मिन्नखण्डपरिमण्डलितोरुमूर्तिं रध्यास्यते मधुभिदा भुजगाधिराजः ॥ ४१ ॥

कल्लोलेति । अस्मिन्क्षीरोदे मधुभिदा श्रीविष्णुना भुजगाधिराजः शेषः अध्यास्यतेऽधिष्ठीयते । किंभूतः शेषः अनवरतेन भूयसा पयोरसेन दुग्धरसेन कृत्वा पीवापुष्टः । किंभूतेन कल्लोलजालस्य तरङ्गसङ्घस्य चलनेन कृत्वा उपनतेन अन्तिकागतेन तथा जीवातुना प्राणधारणहेतुत्वात् जीवनौषधभूतेन । किंभूतः अखण्डं सर्वदा परिमण्डलिता वर्तुलीकृता उर्वी मूर्तिः शरीरं यस्य । श्रीविष्णुस्त्व अपूज्यो देव इत्यर्थः । पीवाङ्कनिपिधुनास्येतीकारः ॥ ४१ ॥

त्वद्रूपसम्यगवलोकनजातशङ्का पादाब्जयोरिह कराङ्गुलिलालनेन ॥ भूयाच्चिराय कमलाकलिता वधाना निद्रानुबन्धमनुरोधयितुं धवस्य ॥ ४२ ॥

त्वदिति । हे वैदर्भि इह क्षीरोदे कमलाश्रीः पादाब्जयोश्चरणकमलयोः कराङ्गुलिभिर्लालनेन संवाहनेन धवस्य श्रीविष्णोर्निद्रानुबन्धं निद्रानैरन्तर्यं चिराय अनुरोधयितुं वर्द्धयितुं कलिता वधाना अङ्गीकृतावधाना सावधाना भूयात् भवतु । किंभूता त्वद्रूपस्य यासम्यक् तस्या अवलोकनेन जाता शङ्का भयं यस्याः । अयं श्रीविष्णुरिमां त्वद्रूपवतीं दृष्ट्वा मां विहाय अस्यामनुरक्तो भविष्यतीति त्रासभूदिति भिया सुतरां निद्रागमनार्थं करतलेन चरणसंवाहनपरैव भवतु इ

त्यर्थः । भैम्याः लक्ष्मीतोऽप्यतिसौन्दर्यं सूचितम् ॥ ४२ ॥

बालातपैः कृतकगैरिकताङ्कृतन्द्रि स्तत्रोदयाचलशिलाः परिशीलयन्तु ॥ त्वद्विभ्रमभ्रमणजश्रमवारिधारि पदाङ्गुलीगलितयानखलाक्तयापि ॥ ४३ ॥

बालेति । तत्र शाकद्वीपे उदयाचलस्य पर्वतस्य शिला बालातपैः उदयाचलस्य सूर्यकिरणैः तथा नखलाक्तयापि कृताङ्कृतकगैरिकताङ्कृत्रिमगैरिकताङ्घ्रिः परिशीलयन्तु अनुभवन्तु । द्वाभ्यां प्रकाराभ्यां गैरिकतुल्या भवन्त्वित्यर्थः । किंभूतया नखलाक्तया । तव विभ्रमेण विलासेन भ्रमणं वनविहारः तस्माज्जातं श्रमवारि स्वेदजलं तद्धारयति एवं शीलाभ्यः पादाङ्गुलीभ्यो गलितया निःसृतया एतस्मिन्कृते उदयाचले क्रीडिष्यसे इति भावः ॥ ४३ ॥

तृणाङ्करञ्चितमुदामुदयन्मृगाङ्क शङ्कां सृजत्वनघजङ्घिपरिभ्रमन्त्याः ॥ तत्रोदयाद्रिशिखरे तव दृश्यमास्यं काश्मीरसम्भवसमारचनाभिराम म्॥ ४४ ॥

तृणामिति । हे अनघजङ्घि सुन्दरजङ्घि तत्र द्वीपे प्रसिद्धे वा उदयाद्रिशिखरे परिभ्रमन्त्यास्तव दृश्यं दर्शनयोग्यं आस्यं मुखं कुरंचितमुदां सञ्जातानन्दानां नृणां उदयन् मृगाङ्क उदयावस्थश्चन्द्रस्तस्य शङ्कां भ्रमं सृजतु करोतु । किंभूतं मुखं काश्मीरसम्भवकुङ्कुमं तस्य समारचनयोद्वर्तनेनाभिरामं रमणीयं उदयाचले आरक्तत्वदीयमुखदर्शनात् चन्द्र एवायं उदितः किमिति बुद्ध्या सर्वेषां हर्षो भविष्यति तस्मादेनं वृणीष्वेति भावः । अनघजंघीनासिकोदरेति ङीष् ॥ ४४ ॥

एतेन ते विरहया वक्रमेत्य तावत् कामं स्वनामकलितान्वयमन्वभावि ॥ अङ्गीकरोषि यदि तत्तव नन्दनाद्यैर्लब्धान्वयं स्वमपि नन्वयमातनोतु ॥ ४५ ॥

तेनेति । हे भैमि एतेन राज्ञा ते तव विरहया वकं एत्य प्राप्य कामं निश्चितं तावत्प्रथमं स्वनाम हव्य इति कलितान्वयमनुगतार्थं अन्वभावि अन्वभूयत । हव्येन अग्निं प्राप्य यथा अनुभूयते तदनेन अनुभूयते तदनेन अनुभूतमित्यर्थः ततो हूयत इति हव्यं यदि अधुना त्वमेनमङ्गीकरोषि वृणुपे तर्हि अयं तव न

न्दनाद्यैः पुत्रपौत्राद्यैः कृत्वास्वमात्मानंअपिलब्धान्वयंननुनिश्चितंप्राप्तवंशं आतनोतु । ननुसंबोधनेवा । अन्वय.संबन्धोवंशश्च । यदीत्यनेनस्वीकारस्यपाक्षिकत्वंद्योतयति ॥ ४५ ॥

लक्ष्मीलतासमवलम्बभुजद्रुमेपि वाग्देवतायतन
मञ्जुमुखाम्बुजेपि ॥ सामुत्रदूषणमजीगणदेकदे
व नार्थीबभूवमघवायदमुष्यदेवः ॥ ४६ ॥

लक्ष्मीति । साभैमीअमुत्रद्वयेएकमेवदूषणंअजीगत् । यन्मघवादेवः अमुष्यअर्थीयाचकोनबभूव । किंभूते । लक्ष्मीरूपायाःलतायाःसमवलम्बआधारभूतोभुजलक्षणोद्रुमोयस्यतस्मिन्सकृद्वराख्येपि तथावाग्देवतायाःसरस्वत्याःआयतनंस्थानंमञ्जुसुन्दरंमुखाम्बुजंयस्यएवंविधेपिचतुःषष्टिकलाप्रवीणेपि । इन्द्रोनलस्ययाचकोजातःनत्वस्यनलस्यमहदन्तरमित्यर्थः ॥ ४६ ॥

लक्ष्मीविलासवसतेःसुमनःसुमुख्या दस्माद्विकृष्य
भुविलब्धगुणप्रसिद्धिम् ॥ स्थानान्तरंतदनुनिन्यु
रिमांविमान वाहाःपुनःसुरभितामिवगन्धवाहाः४७

लक्ष्मीति । विमानवाहाःअस्माद्द्वाझोविकृष्यअपनीयतदनुतदनन्तरं पुन.स्थानान्तरंइमांभैमीं निन्युःअन्यंराजानंप्रापयामासुः । केकामिव । गन्धवाहाःवायव.सुमनसः पुष्पेषुसुमुख्याःपत्रीविकृष्यसुगन्धितामिवस्थानान्तरंनयन्तितथेत्यर्थः। किंभूतादस्माल्लक्ष्मीविलासस्यवसतेर्गृहात्पक्षमपिलषातथासुमनःसुपण्डितेषुसुमुख्यात् । किंभूतामिमां । भुविलब्धागुणेनसौन्दर्यादिनाप्रसिद्धिर्यया ॥ ४७ ॥

भूयस्ततोनिखिलवाङ्मयदेवतासा हेमोपमेयतनु
भासमभाषतैनाम् ॥ एनंस्ववाहुवहुवारनिवारि
तारि विचक्षकुरुष्वकुरुविन्दसकान्तिदन्ति ॥४८॥

भूयइति । ततःसानिखिलवाङ्मयदेवताहेमानामदेवाङ्गनातदुपमेयातस्सदृशीतनुभाःकायकान्तिर्यस्यास्तामेनांसुवर्णसदृशकायकान्तिंवाभैमींभूय.अभाषतऊचे । हेकुरुविन्दैर्माणिक्यमणीभिःसकान्तयःसदृशादन्ताःय

स्यास्तस्य बुद्धिः । त्वं स्वबाहुभ्यां बहुवारं निवारिता अरयो येन एनं पुरोव र्तिनं नृपं चित्ते कुरुष्व वृणीष्वेति भावः स्ववाह्वित्यनेन परानपेक्षं शौर्यं सूचितं । कुरुविन्देत्यनेन बहुताम्बूलचर्वणेन दन्तानामारक्तत्वं सूचितं । सकान्तीत्यत्र सदृशशब्दपर्यायैर्वा सहपदेन वा स्वपदविग्रहः समासः कार्यः । तत्र वोपसर्ज नस्येति सभावः । दन्तीत्यत्र संयोगोपधत्वेपि नासिकोदरौष्ठेति ङीप् ॥४८॥

द्वीपस्य पश्य दयितं द्युतिमन्तमेनं क्रौञ्चस्य चञ्चलदृगञ्चलविभ्रमेण ॥ यन्मण्डले किल मण्डल संनिवेशः पाण्डुश्चकास्ति दधिमण्डपयोधिपूरः ४९

द्वीपस्येति । हे भैमि त्वं क्रौञ्चस्य द्वीपस्य दयितं पतिं द्युतिमन्तं द्युतिमन्ना मानं । अथच तेजस्विनं एनं राजानं चञ्चलो योदृगञ्चलः दृक्प्रान्तस्तस्य विभ्र मेण विलासेन कटाक्षेण पश्य । अनुरागेण पश्येत्यर्थः । यस्य राज्ञो मण्डले राज्ये क्रौञ्चद्वीपपरितो मण्डलो वर्तुलः संनिवेशो वस्थानं यस्य सः प्रसिद्धः पाण्डुशु भ्रः दधिमण्डसञ्ज्ञकः पयोधिस्तस्य पूरः प्रवाहः चकास्ति किल इति पुराणा दौ श्रूयते । क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन च । आवृतः सर्वतः क्रौञ्चद्वी पतुल्येन मानतः इति विष्णु पुराणे । मरिचशर्करादिमिश्रं मस्तित्वस्य पर्यायं किञ्चिद्द्रवीभूतं दधिमण्डमुच्यते । मण्डं दधिभवं मस्त्वित्यमरः ॥ ४९ ॥

तत्राद्रिरस्ति भवदङ्घ्रिविहारयाची क्रौञ्चः स्फुरि ष्यति गुणानिव यस्त्वदीयान् ॥ हंसावलीकलकल प्रतिनादवाग्भिः स्कंदेषुवृन्दविवरैर्विवरीतुकामः ५०

तत्रेति । तत्र द्वीपे स क्रौञ्चः अद्रिः भवत्यास्तव अङ्घ्रिविहारस्य चरणविलासग तिस्तं याचते एवं शीलोस्ति । सकः यस्त्वदीयान्गुणान्सौन्दर्यादीन् हंसाव ल्याः कलकलानां विरुतां प्रतिनादः प्रतिशब्दः स एव वाग्येषां एवंभूतैर्मुखतु ल्यैः स्कंदस्य षण्मुखस्य बाणास्तेषां वृन्दानि तैः कृतानि विवराणि छिद्राणि तैः कृत्वा विवरीतुकामो वर्णयितुकाम इव स्फुरिष्यति । स्कंदेन बाणैः पर्वते छिद्राणि कृ तानि तेन क्रौञ्चदारण इति तस्य नाम सजातमिति पुराणम् ॥ ५० ॥

वैदर्भि दर्भदलपूजनयापि यस्य गर्भे जनः पुनरुदेति न जातु मातुः ॥ तस्यार्चनां रचयतत्र मृगाङ्कमौले

स्तन्मात्रदैवतजनाभिजनः सदेशः ॥ ५१ ॥

वैदर्भीति । हेवैदर्भिभैमिजनोयस्यदर्भदलेनयापूजनात्तयायिमातुर्गर्भेजा तुकदाचिदपिपुनर्नोदेत्तिनोत्पद्यते तस्मात्रैवमुक्तत्वात्पुनः संसारंनयातीत्यर्थः । पुष्पादिपूजयापुनर्नोदेतीतिकिंवाच्यमित्यपेरर्थः । स्वं तत्रदेशेषु शाक्ममौलेःतस्यहरस्यार्चनांपूजांरचय । यतःसदेशःसएवतन्मात्रंशिवएव दैवतंयेषान्तेजनास्तेषामभिजनः उत्पत्तिस्थानं । यस्मात्त्वमपितंपूजयेत्यर्थः । कुलेप्यभिजनोजन्मभूमावप्यथहायनाइत्यमरः ॥ ५१ ॥

चूडाग्रचुम्बिमिहिरोदयशैलशील स्तेनाःस्तनन्धयसुधाकरशेखरस्य ॥ तस्मिन्सुवर्णरसभूषणरम्यहर्म्यं भूभृद्घटाघटयहेमघटावतंसाः ॥ ५२ ॥

चूडाग्रेति । तस्मिन्देशेस्तनन्धयोवालःसुधाकरश्चन्द्रःशेखरेमौलौयस्य शिवस्यसुवर्णरसएवभूषणमेषां एवंभूतानिअतएवरम्याणियानिहर्म्याणिता न्येवभूभृतःपर्वताःतेषांघटाःपरंपराःघटयरचय । किंभूताःहेमघटावतंसाउपरिसुवर्णकलशभूषिताः अतएवचूडाग्रचुम्बीशृङ्गाग्रेस्थितोमिहिरःसूर्योयस्यएवंभूतःउदयशैलःतस्यशीलंस्वभावःस्वरूपंतस्यस्तेनाःचौराः । शिवप्रीत्यर्थंउदयाचलतुल्यान्प्रासादान्रचयेतिभावः । घटयेतिमित्वाद्ध्रस्वः ५२

तस्मिन्मलिम्लुचइवस्मरकेलिजन्म घर्मोदविन्दुमयमौक्तिकमण्डनन्ते ॥ जालैर्मिलद्दधिमहोदधिपूरलोल कल्लोलचामरमरुत्तरुणिच्छिनत्तु ॥ ५३ ॥

तस्मिन्निति । भोतरुणिप्रादुर्भूतयौवने तस्मिन्देशेजालैर्गवाक्षैर्मिलन्प्राप्नुवन्दध्नोमहोदधिःतस्यपूरःतस्यलोलाःकल्लोलाः तेएवशुभ्रत्वाद्दीर्घत्वाच्चचामराणितेषांमरुत् मलिम्लुचश्चोरइवस्मरकेलेर्जन्मयेषान्तेघर्मोदविन्दवः तन्मयानिमौक्तिकानितद्रूपंमण्डनन्छिनत्तु अपनयतुअपहरतु । शीतलवायुसंस्पर्शात्सुरतश्रमजातंघर्मोदकंशाम्यंतुइत्यर्थः । चौरोप्यपद्वारेणप्रविश्य मुक्ताद्याभरणानिहरति । उदविन्द्वित्यत्रमन्थौदनेतिउदादेशः ॥ ५३ ॥

एतद्यशोनवनवंखलुहंसवेषं वेशन्तसन्तरणदूरगमक्रमेण ॥ अभ्यासमर्जयतिसन्तरितुंसमुद्रा न्हन्तुं

चनिःश्रममितःसकलान्दिगन्तान् ॥ ५४ ॥

एतदिति । हंसस्यैषः आकारोयस्मनवनवंप्रतिदिनमपूर्वंनभवत् । एतस्ययशोवेशन्तस्यपल्वलस्यसन्तरणादूरगमनयोः क्रमेणपरिपाट्यापल्वलस्यसन्तरणेविषयेदूरगमनक्रमेणपूर्वंसरसोर्द्धंपश्चात् किलयदधिकन्ततोपि परतीरं अनयापरिपाट्याचासमुद्रान्सन्तरीतुमुत्तरीतुंइतःसमुद्रेभ्यएतद्दे शाद्वाजिःश्रमंश्रमरहितंयथातथासकलान्दिगन्तान्दिक्प्रान्तान्गन्तुंप्राप्तुंश्रेभ्यासमर्जयतिखलुनिश्चयेउत्प्रेक्षायांवा । श्वेतत्वात्हंसानान्तद्रूपंयशसा भूतं । हंसानभवन्तिकिंतुतद्यशएव अन्योपिमहानद्यादितरणार्थेवाप्यादौ अभ्यासन्तरणक्रमेणकरोति । नवशब्दाभ्यासयोग्यंभवतिबालाभ्यासोहिदृढवरइत्यर्थः । नवंनवमितिप्रकारेद्विरुक्तिः । अर्जयतीसिवर्तमानप्रयोगाद्यशसः अल्पत्वसूचनादनादरःसूचितः ॥ ५४ ॥

तस्मिन्गुणैरपिभृतेगणनादरिद्रैस्तन्वीनसाहृदयं वन्धमवापभूपे ॥ दैवेनिरुन्धतिनिबन्धनतांवहन्ति हन्तप्रयासपरुषाणिनपौरुषाणि ॥ ५५ ॥

तस्मिन्निति । सातन्वीभैमी गणनादरिद्रैरसङ्ख्यातैर्गुणैर्भृतेपूर्णेपि तस्मिन्भूपेद्युतिमतिहृदयबन्धनंमनोभिलाषंनावाप गुणवतितस्मिन्कथंन प्रापेत्यतआह । दैवेविरुन्धतिकार्यप्रतिबन्धकेसतिप्रयासेनयुद्धादिप्रयत्नेन परुषाणिदुःसहान्यपिपौरुषाणिपुरुषकाराःकार्यंप्रतिनिबन्धनताङ्कारणतां नवहन्तिनधारयन्तिहन्तखेदे । दैवविरोधाद्गुणवत्तापिअनुरागहेतुर्नाभूदित्यर्थः । वागुरादिगुणेषुहरिणादिर्बन्धनंप्राप्नोति । अस्यास्तुहृदयङ्गुणेषु पतितमपिबन्धनंनप्रापइत्याश्चर्यमित्यर्थः ॥ ५५ ॥

तेनिन्यिरेनृपतिमन्यमिमांममुष्मा दंसावतंसशिविकांशभृतःपुमांसः ॥ रत्नाकरादिवतुषारमयूखलेखा लेखानुजीविपुरुषागिरिशोत्तमाङ्गम् ॥५६॥

तइति । अंसयोःस्कन्धयोःअवतंसाःभूषणीभूताःशिविकांशास्तान्बिभ्रतितेपुमांसःयानवाहाःइमांभैमीं अमुष्यराज्ञःसकाशादन्यंनृपतिंनिन्यिरे । तत्रदृष्टान्तः । लेखाःदेवाएवअनुजीविपुरुषाःसेवकपुरुषाःरत्नाकरा

तुषारमयूखलेखां चन्द्रकलां गिरिशोत्तमाङ्गं शङ्करमूर्धानमिव । लेखाऽदि तिनन्दना इत्यमरः ॥ ५६ ॥

एकैकमद्भुतगुणन्धुतदूषणञ्च हित्वान्यमन्यमुपगत्यपरित्यजन्ती ॥ एनाञ्जगादजगदर्चितपादपद्मा पद्मामिवाच्युतभुजान्तरविच्युतांसा ॥५७॥

एकैकमिति॥ जगदर्चितपादपद्मा त्रिलोकीपूजितचरणकमला सा सरस्वतीएनां जैमीं जगाद । किंभूता अद्भुता गुणा यस्य सं तथा धुतदूषणं त्यक्तदूषणं एकैकं नृपं हित्वा अन्यं अन्यन्ताद्दृशं एव नृपं उपगत्य प्राप्य परित्यजन्ती तथा अच्युतभुजान्तरात् विष्णुवक्षःस्थलात् विच्युतांसमागतां पद्मां लक्ष्मीमिव स्थितां । लक्ष्मीरपि चाञ्चल्यात् एकैकं त्यक्त्वा अन्यं अन्यं प्राप्य तमपि त्यजति । यथा लक्ष्मीः विष्णुं विना अन्यत्र स्थिरा न भवति तथा जैमी नलं विना ऽन्यत्र स्थिरा नेति सूचितम् ॥ ५७ ॥

ईशः कुशेशयसनाभिशये कुशेन द्वीपस्य लाञ्छिततनोर्यदि वाञ्छितस्ते ॥ ज्योतिष्मता सममनेन वनीघनासु तत्वं विनोदय घृतोदतटीषु चेतः ॥ ५८ ॥

ईश इति । हे कुशेशयं कमलं तस्य समानौ तत्तुल्यौ शयौ हस्तौ यस्यास्तत्संबुद्धिः । कुशेन कुश स्तंबेन लाञ्छिततनोश्चिन्हितवपुषो द्वीपस्य य ईशः स्वामी यदि तव वाञ्छितः अभीष्टः तर्हि ज्योतिष्मता अनेन राज्ञा समं सह वनीभिः वनैः घनासु निविडासु घृतोदः घृतसमुद्रः तस्य तटीषु चेतो विनोदय हर्षय । निविडच्छायेषु घृतसमुद्रतटेषु एतेन सार्धं विहरणं कुर्वीथा इति भावः । घृतोद इति उदकस्योदः संज्ञायामित्युदादेशः । कुशेशये ति शय वा चेत्यलुक् ॥ ५८॥

वातोर्मिदोलनचलद्दलमण्डलाग्र भिन्नाभ्रमण्डलगलज्जलजातसेकः ॥ स्तम्बः कुशस्य भवितास्वरचुम्बिचूड चित्राय तत्र तव नेत्रनिपीयमानः ॥५९॥

वातेति । हे भैमि तत्र द्वीपे नेत्रनिपीयमानः नेत्राभ्यां सादरमवलोक्यमानः कुशस्तम्बः तत्र चित्राय आश्चर्याय भविता । किंभूतः अम्बरचुम्बिचूडः गगनलग्नशिखः तथा अत एव वातोर्मीणां वातपरम्पराणां यद्दोलनं तेन चलन्ति

यञ्जलानिदलानिपत्राणितान्येवमथलायाःखड्गाः तैर्भिन्नं विदारितंमस्
अथमथलंतस्माद्गलताश्रवताजलेजालःसेकःसेचनंयस्य । दलमथलस्य
स्यदलमूर्ध्वस्थअग्रैरितिवा । ५९ ॥

पाथोधिमाथसमयोत्थितसिन्धुपुत्री पत्यङ्कजार्प
णपवित्रशिलासुतत्र ॥ पत्यासहाबहुविहारमयै
र्विलासै रानन्दमिन्दुमुखिमन्दरकन्दरासु ॥ ६० ॥

पाथोधीति । हेइन्दुमुखितत्रकुशद्वीपे त्वंमन्दरकन्दरासुपत्यासहविहा
रमयैर्क्रीडाबहुलै,कटाक्षविक्षेपादिर्भिर्विलासैरानन्दंआवहधारय । किंभू
तासु पाथोधेःसमुद्रस्यमाथसमयेमन्थनकालेउत्थितायासिन्धुपुत्रीलक्ष्मीः
यस्याः पत्यङ्कजार्पणेनतत्कमलार्पणेनपवित्राशिशिलातलानियासु स
क्ष्मीवत्त्वमपिशिलासोपानान्यलङ्कुर्वित्यर्थः । विहारमयैरितिपाठेसुरता
दिक्रीडासमुत्थैरित्यर्थः ॥ ६० ॥

आरोहणायतवसज्जइवास्तितत्र सोपानशोभि
वपुरश्मवलिच्छटाभिः ॥ भोगीन्द्रवेष्टशतघृष्टिकृ
ताभिरब्धिःक्षुब्धाचलःकनककेतकगौरगात्रि ६१

आरोहणायेति । हेकनककेतकंस्वर्णकेतकंतस्यगौरंसदृशगात्रंयस्यास्त
त्संबुद्धिः अतिगौरि तत्रद्वीपेअब्धेःक्षुब्धाचलोमन्थाचलोमन्दरःतवआरोह
णायसज्जःसन्नद्धःइवअस्ति । किंभूतः । भोगीन्द्रोवासुकिस्तेनकृतंवेष्टश
तन्तेनकृतायाःघृष्टघोघर्षणानिलतकृताभिः अश्मवलिच्छटाभिःशिलाभङ्गि
परंपराभिःकृत्वासोपानैरिवशोभितवपुःस्वरूपंयस्य । आरोहणायहमिति
वा क्षुभसञ्चलनेतिक्षुब्धशब्दःसाधुः । गात्रीतिअङ्गगात्रेतिङीष् ॥ ६१

मन्थानगःसभुजगप्रभुवेष्टघृष्टि लेखाचलद्वलानि
र्भरवारिधारः ॥ त्वन्नेत्रयोःस्वभरयन्त्रितशीर्ष
शेष शेषाङ्कवेष्टिततनुभ्रममातनोतु ॥ ६२ ॥

मन्थाइति हेभैमि सपन्थानगोमन्दरःत्वन्नेत्रयोःस्वस्यभरेणयन्त्रितानि
आक्रान्तानिशीर्षाणिमस्तकानियस्यसःशेषोनागराजस्तस्यशेषेणअवशिष्टेन
अङ्गेनवेष्टितातनुस्तस्यभ्रमंभ्रान्तिमातनोतु । किंभूतःभुजगप्रभुर्वासुकिस्तस्यवे

ष्टेनघृष्टिर्घर्षणातयाकृतासुवलयाकारासुरेखासुवलयाकारेणैवचलन्त्योधव
मलनिर्झरवारिधारायस्मिन् । शेषस्यशुभ्रत्वाद्वारिधाराणाम्बरेखासुचलित
त्वाद्भ्रान्तिःशिरसिगाढभाराक्रान्तःसर्पः अवशिष्टेनअङ्गेनतस्यैवजङ्घादि
वेष्टयतिइतिसर्पजातिः । मन्थदोरकःशेषइतिकेचित् ॥ ६२ ॥

एतेनतेस्तनयुगेनसुरेभकुम्भौ पाणिद्वयेनदिविषद्द्रुमपल्लवानि ॥ आस्येनसस्मरतुनीरधिमन्थनोत्थं स्वच्छन्दमिन्दुमपिसुन्दरिमन्दराद्रिः ॥ ६३ ॥

एतेनेति । हेसुन्दरि समन्दराद्रिःतेएतेनस्तनयुगेनकृत्वासुरेभःऐरावत
स्तस्यकुम्भौतथातेपाणिद्वयेनदिविषद्द्रुमः कल्पवृक्षस्तस्यपल्लवानितथाते
आस्येनइन्दुमपिस्वच्छन्दंयथेच्छंस्मरत्वितिसर्वत्रसंबन्धः । किंभूतंएतत्सर्व
न् नीरधिमन्थनोत्थंसमुद्रमन्थनादुत्थितं । समुद्रमन्थनसमयेएतत्सर्वंदृष्ट
मासीदिदानींत्वांदृष्ट्वातत्सर्वंस्मरतुऐरावतकुम्भतुल्यौतेस्तनौकल्पवृक्षपल्ल
वसदृशौतेपाणीचन्द्रसदृशन्तेमुखमितिभावः अतःसुन्दरिइतिसंबोधनं स्व
च्छन्दमितिसर्वत्रसम्बन्धः । छन्दःपद्येभिलाषेचेत्यमरः । नपुंसकमनपुंस
केत्येकवद्भावः नपुंसकत्वञ्च ॥ ६३ ॥

वेदैर्वचोभिरखिलैःकृतकीर्तिरत्ने हेतुंविनैवधृतानित्यपरार्थयत्ने ॥ मीमांसयैवभगवत्यमृतांशुमौलौ तस्मिन्महीभुजितयानुमितिर्नभेजे ॥ ६४ ॥

वेदैरिति । तयाभैम्यातस्मिन्महीभुजि अनुमतिःसंमतिर्नभेजे कयाक
स्मिन्निव । पूर्वमीमांसयाभगवतिअमृतांशुमौलौशिवेइव । किंभूतेअखि
लैर्लौकिकैर्वेदतुल्यैः सत्यैःवचोभिःकृत्वाकृताकीर्तिःस्तुतिर्यस्यसकृतकीर्तिस्था
सौरत्नञ्चेति । कृतकीर्तिरत्नंयस्येतिवा । तथाहेतुंकारणंविनैवधृतोनि
त्यंपरार्थंपरकार्यैयत्नोयेन स्वोपकारानपेक्षकृतोपकारे किंभूतेशिवेअखिलै
श्चतुर्भिर्वेदैर्वचोभिर्महावाक्यैः कृत्वाकृतंकीर्तिरत्नंयशोरत्नंयस्येति तथाहे
तुङ्कारणंअन्तरेणधृतनित्यपरार्थयत्नेपरमकारुणिकेइत्यर्थः । मीमांसापिवे
दप्रतिकर्त्त्वमात्रेणेश्वरमङ्गीकृतवतीनतुसर्वथानास्तीति । विशुद्धज्ञानदे
हायत्रिवेदीदिव्यचक्षुषे । श्रेयःप्राप्तिनिमित्तायनमःसोमार्धधारिणेइतिन
मस्कारश्रवणात् ॥ ६४ ॥

तस्मादिमां नरपतेरपनीय तन्वीं राजन्यमन्यमथ जन्यजनः स निन्ये॥ स्त्रीभावधावितपदामविमृश्य याञ्चामर्थीनिवर्त्य विधनादिव वित्तविघ्नम् ६५॥

तस्मादिति । अथानन्तरं स जन्यजनो वाहकलोकः स्त्रीभावेन स्त्रीत्वेन धावितपदां चालितचरणां कृच्छ्रेति चिरचरणचालनेन सञ्ज्ञाप्रयन्तीं इमां तन्वीं कृशाङ्गीं तस्मान्नरपतेरपनीय आकृष्य अन्यं राजन्यं निन्ये प्रापयामास । तत्र दृष्टान्तः । अर्थी याचकः अविमृश्य दातुर्निर्धनत्वमविचार्य याञ्चां विधनाद्दरिद्रात् निवर्त्य वित्तेन धनेन विघ्नं प्रतिबद्धं वित्तं यस्येति वा एवंभूतमिव प्रापयतीत्यर्थः । किंभूतां याञ्चां । यजयाचयतविच्छप्रच्छरक्षो नङित्यस्मिन् सूत्रे सर्वेषु पुल्लिङ्गेषु पदेषु याञ्चाशब्दो नङन्तो व्युत्पादितः शक्तिस्वाभाव्यात् स्त्रियां वर्तत इत्यर्थः ।स्त्रीभावेन स्त्रीलिङ्गतया धावितं शोधितं पदं रूपं यस्यास्तां६५

देवी पवित्रितचतुर्भुजवामभागा वागालपत्पुनरिमां परमाभिरामाम्॥ अस्यारिनिःकृपकृपाणसनाथपाणेः पाणिग्रहादनुगृहाण गणं गुणानाम् ६६

देवीति । पवित्रितः शोधितः चतुर्भुजवामभागो यया एवंभूता वाग्रूपा देवी पुनरिमां भैमीं आलपत् उवाच । किंभूतां परमा कुलशीलसौन्दर्यादिगौरवेण सरस्वत्यागमनाद्वा गौरवेण अभिरामां मनोज्ञां । हे भैमि अरिषु निःकृपकृपाणेन खड्गेन सनाथो युक्तः पाणिर्यस्य एवंभूतस्य अस्य पाणिग्रहात् परिणयनात् स्वीयकुलानां सौन्दर्यादीनाङ्गणं अस्य गुणसंबन्धं वा अनुगृहाण तुल्यगुणस्य अस्य लाभात् ॥ ६६ ॥

द्वीपस्य शाल्मल इति प्रथितस्य नाथः पाथोधिना वलयितस्य सुराम्बुनायम् ॥ अस्मिन्नपुष्पमतिनिविस्मयसे गुणाढ्यौ रक्तातिलप्रसवनासिकिनासि किम्वा ॥ ६७ ॥

द्वीपस्येति । सुरैव मदिरैव अम्बु यस्य एवंभूतेन पाथोधिना ऽब्धिना वलयितस्य शाल्मल इति प्रथितस्य द्वीपस्य पतिरयं । हे तिलस्य प्रसवः पुष्पं तस्य समा नासिका तस्संबुद्धिः । स्वकुलाढ्यै गुणसमुद्रे वपुष्मामनिप्रथचसुन्दर

शरीरेऽस्मिन्राजनिनविस्मयवेऽद्भुतक्रिमितिनप्राप्नोषिअपितुआश्चर्यंप्र
स्तुतंउचितं । एवंविधेऽस्मिन्रक्काबाकिंनास्ति । अपितुरत्नमवश्यनंवृणीष्व
त्यर्थः । सुरासमुद्रपतिस्त्वन्दीपः शरीरधारिणिगुणसमुद्रेविस्मयेयुक्तः ।
मपुष्पलिअतिशायनेमतुप् । मस्तिकीलिनासिकोदरोष्ठेतिङीष् ॥ ६७ ॥

विप्रेधयत्युदधिमेकतमन्त्रसत्सु यस्तेषुपञ्चसुवि
भायनसीधुसिन्धुः ॥ तस्मिन्ननेनचनिजालिज
नेनचत्वं सार्धंविधेहिमधुरामधुपानकेलीः ६८

विप्रइति । यःसीधुसिन्धुःसुरासमुद्रःविप्रेअगस्त्येएकतमङ्क्षारजलनि
धिन्धयतिपिबतिसतिसेषुपञ्चसुदधिमण्डादिसमुद्रेषु अस्मानयंपास्यतीति
असत्सुसत्सुनविभायनतत्रसे । ब्राह्मणस्यसुरापाननिषेधात्मांनपास्यती
तियोमयन्तत्याज । त्वन्तस्मिन्नयेसीधुसमुद्रे अनेनराज्ञासार्धंनिजालिज
नेनचसार्धंमधुराःरम्याःमधुपानकेलीःमधुपानक्रीडाःविधेहिकुरु । एतद्व
रणेमधुपानंसुलभम् ॥ ६८ ॥

द्रोणः सतत्रवितरिष्यतिभाग्यलभ्य सौभाग्यका
र्मणमयीमुपदाङ्क्रिरिस्ते ॥ तद्वीनदीपइवदीप्तिभि
रौषधीना च्चूडामिलज्जलदकज्जलदर्शनीयः६९

द्रोणइति । तत्रद्वीपेसप्रसिद्धःलक्ष्मणविशल्यकरणार्थंहनुमतानीतोद्रो
णनामागिरिःभाग्यैःसुकृतविशेषैर्लभ्यंसौभाग्यसंबन्धिकार्मणमौषधीभि
र्मूलैः वशीकरणंतद्रूपांउपदांउपायनं अन्यपरित्यागेनस्वयमेवपतिर्यथा
उपभुङ्क्तेतथावशीकरणं औषधिरूपंउपहारन्तेतुभ्यंवितरिष्यतिधन्यात्व
मित्यर्थः । किंभूतःऔषधीनांमृतसञ्जीविन्यादीनांदीप्तिभिःतस्यद्वीपस्य
दीपइवस्थितः । यतःचूडासुशिखरेषुमीलन्तःसलग्नाःजलदाएवकज्जलं
तेनदर्शनीयःसुन्दरः । मूलकर्मतुकार्मणमित्यमरः । वशीकरणेकज्जला
दिज्ञवति ॥ ६९ ॥

तद्वीपलक्ष्मपृथुशाल्मलितूलजालैः क्षोणीतलेमृदु
निमारुतचारुकीर्णैः ॥ लीलाविहारसमयेचरणा
र्पणानि योग्यानितेसरसुसारसकोमलाङ्घ्रि ॥७०॥

तदिति । हेसरसंनूलनंसारसंकमलन्तस्यकोशोमुकुलंराशिर्वातद्वत्मृद्धि सुकुमाराङ्घि मारुतेनचारुसंनिवेशविशेषेणनिविडस्याकीर्णैः प्रसारितैःत स्यद्वीपस्यलक्ष्मचिन्हभूतःपृथुर्महान्शाल्मलिवृक्षस्तस्यतूलजालैः कार्पास मूहैः कृत्वामृदूनिक्षोणीतलेलीलाविहारसमयेविलासगमनकालेतेतवचर णार्पणानियोग्यानिजयवन्त्वितिशेषः । अतिमृद्व्याहिअतिमृदुस्थलेगति र्युक्ता ॥ ७० ॥

एतद्गुणश्रवणकालविजृम्भमाण तल्लोचनाञ्च लनिकोचनसूचितस्य ॥ भावस्यचक्रुरुचितंशिबि काभृतस्ते तामेकतःक्षितिपतेरपरंनयन्तः ॥ ७१ ॥

एतदिति । तेशिबिकाभृतः भावस्यभैम्यभिप्रायस्यउचितंयोग्यंव्यापारं चक्रुः । किंभूतस्यएतस्यराज्ञोगुणश्रवणकालेविजृम्भमाणासाभैमीतस्यालो चनाञ्चलनिकोचनेननेत्रप्रान्तसङ्कोचनेनसूचितस्यनृपालंकरणरत्नेषु दृष्टेन भैमीनेत्रसङ्कोचेनज्ञापितस्य । किंभूतास्ते । एकतःक्षितिपतेःएकस्मान्नृ पात्अस्माद्वपुष्मतइत्यर्थः । तांभैमींअपरराजानंनयन्तःप्रापयन्तः नयति द्विकर्मा ॥ ७१ ॥

तांभारतीपुनरभाषतनन्वमुष्मि न्काश्मीरपङ्कनि भलग्नजनानुरागे ॥ श्रीखण्डलेपमयदिग्जयकी र्तिराजि राजद्भुजेभजमहीभुजिभैमिभावम् ७२

तामिति । भारतीतांपुनरभाषत । ननुभैमित्वंअमुष्मिन्महीभुजिभा वंअनुरागंभजकुरु । किंभूतेकाश्मीरपङ्कनिभेनकुङ्कुमानुलेपनव्याजेनल ग्नोजनानांअनुरागोयस्मिन् तथाश्रीखण्डलेपमयीचन्दनानुलेपनरूपादि क्जयजनिताकीर्तिराजिःकीर्तिपरंपरातयाराजंतौभुजौयस्य रागस्यलौ हित्यात्कीर्तेश्वशुभ्रत्वात्कुङ्कुमत्वंचन्दनत्वञ्चसूचितम् ॥ ७२ ॥

द्वीपन्द्वीपाधिपतिमन्दगतिप्रशास्ति प्लक्षोपलक्षि तमयंक्षितिपस्तदस्य ॥ मेधातिथेस्त्वमुरसिस्फु रसृष्टसौख्या साक्षाद्यथैवकमलायमलार्जुनारेः७३

द्वीपमिति । हेद्वीपाधिपतिवत्मत्तमातङ्गराजवत्मन्दगतेलसद्गमनेभैमि

अयंद्वितियःप्रष्टाभ्येनवृत्तेणउपलक्षितजन्द्वीपंप्रशास्तिपालयतितरां । तद्द स्मात्त्वंअस्यमेधातिथिनाम्नोराज्ञःउरसिआलिङ्गनेनसृष्टसौख्यासतीतथैव स्फुरराज्ञस्त्व यथायमलार्जुनारेःविष्णोः उरसिसाक्षात्कमलासृष्टसौख्यास तीस्फुरति । मेधाधारणावलीबुद्धिरतिथिर्येस्यअस्यैवत्वंयोग्येतिएवकारो योज्यः । सृष्टसौख्यैवेतिवा ॥ ७३ ॥

प्लक्षेमहीयसिमहीवलयातपत्रे तत्रेङ्कितेखलुतवा पिमतिर्भवित्री॥खेलाम्बिधातुदधिशाखविलम्बि दोला लीलाखिलाङ्गजनताजनितानुरागे ॥ ७४ ॥

प्लक्षइति । तत्रद्वीपेमहीवलयस्यातपत्ररूपेमहियस्यतिमहतिप्लक्षेइङ्कि तेचलतिखलुनिश्चितन्तवापिखेलांदोलाक्रीडाम्बिधातुकुलं मतिर्बुद्धिर्भविन्त्रि र्भविष्यति । किंभूते।अधिशाखासुविलम्बिन्योदोलास्ताभिर्लीलांअखिलंअङ्गं यस्याःतयाजनतयाजनितःअनुरागोयस्मिन्तस्यांसमुदितः अनुरागःयेन वा । लोकन्दोलारूढंदृष्ट्वादोलाक्रीडायान्तवापिइच्छासमुदेष्यतीत्यर्थः ७४

पीत्वातवाधरसुधांवसुधासुधांशु र्नश्रद्दधातुरस मिक्षुरसोदवाराम् ॥ द्वीपस्यतस्यदधतारुपरिवेष वेषं सोयञ्चमत्कृतचकोरचलायिताक्षि ॥ ७५ ॥

पीत्वेति । हेचमत्कृतोभीतश्चकोरस्तद्वच्चञ्चलेअक्षिणीयस्यास्तस्सम्बु द्धिः । सोयंवसुधासुधांशुर्भूचन्द्रोराजातवाधरसुधांओष्ठामृतंपीत्वाइक्षुर सोदवारांइक्षुरससमुद्रोदकानांरसंस्वादंनश्रद्दधातुनाभिलषतु । किंभूता नांवारान्तस्यद्वीपस्यपरिवेषवेषंपरिवेषाकारन्दधतांबिभ्रतां । अन्यत्रच कोराःचन्द्रस्यसुधास्पिबन्ति । अत्रतुचन्द्रएवचकोराद्यास्तवअधरसुधां पिबतिइतिचमत्कृतेत्यनेनसूचितम् ॥ ७५ ॥

सूरंनसौरइवनेन्दुमवीक्ष्यतस्मि न्नाश्नातियस्तदि तरत्रिदशानभिज्ञः ॥ तस्यैन्दवस्यभवदास्यनिरी क्षयैव दर्शेऽप्यतोपिनभवत्ववकीर्णिभावः ॥ ७६ ॥

सूरमिति । तस्मिन्द्वीपेयश्चन्द्रजःकोजनःइन्दुमवीत्यअदृष्ट्वानाश्नाति यतस्तस्माच्चन्द्रात्इतरः अन्योयस्त्रिदशोदेवस्तस्यानभिज्ञःचन्द्रातिरिक्तदे

वामभिज्ञः । कःकमिव । सौरःसूर्यभक्तोजनःसूर्यव्यतिरिक्तदेवतानभिज्ञः सूरंसूर्यमदृष्ट्वानैवअश्नाति । तस्यैन्दवस्यइन्दुभक्तस्यचन्द्रलेखारहितेपिदर्शे अश्नतोपिभुञ्जानस्यापिभवदास्यनिरीक्षयैवभवन्मुखचन्द्रदर्शनेनैव अकीर्तिभावोनभवतुलुप्तव्रतत्वंनभवतु । चन्द्रादधिकंभवन्मुखचन्द्रंदृष्ट्वैवभोजनादित्यर्थः । एतदेवचन्द्रस्यस्थानेभविष्यतीतिभावः । नामनुष्यइति वा । सौरःऐन्दवइत्यत्रभक्तिरित्यण् ॥ ७६ ॥

**उत्सर्पिणीनकिलतत्रयतरङ्गिणीया त्वन्नेत्रयोरह हतत्रविपाशिजाता ॥ नीराजनायनवनीरजराजिरास्ता मत्राङ्गसानुरजराजनिराजमाने ॥७७॥**

उत्सर्पिणीति । तस्यद्वीपस्ययातरङ्गिणीविपाड्नाम्नीनदीप्रावृट्कालेपि उत्सर्पिणीकूलङ्कषानेतिअहहआश्चर्यम्किलेतिअन्यद्वीपेप्रसरन्तीदृश्यते अत्रतुनेतिपुराणप्रसिद्धिः । तत्रतस्यांविपाशिनद्यांजातानवास्तत्कालंविकसितानीरजराजिःत्वन्नेत्रयोःनीराजनायआस्तांभवतु । राजमानेशोभमाने ऽत्रास्मिन्राजनिअङ्गसात्वतएवअनुरजअनुरागंप्राप्नुहि । अस्यांनद्यांपूराभावात्सदाकमलानांसत्त्वान्नीराजनमपि अविच्छिन्नंभविष्यतीतिमोत्सर्पिणीत्यनेनसूचितं । अतएवएनंभजेत्यर्थः नीराजनायेतिनेत्रापेक्षयाकमलानांहीनत्वसूचितं । अनुरजेतिरञ्जेर्वेतिनलोपः ॥ ७७ ॥

**एतद्यशोभिरखिलांबुनिसन्तुहंसा दुग्धीकृतेतदुभयव्यतिभेदमुग्धाः ॥ क्षीरेपयस्यपिपदेद्वयवाचिभूयं नानार्थकोशविषयोद्यमृषोद्यमस्तु ॥ ७८ ॥**

एतदिति । हंसाः अखिलेंबुनिएतद्यशोभिःदुग्धीकृतेसतितयोःक्षीरनीरयोःव्यतिभेदःपरस्परविवेकस्तद्विषयेमुग्धाःमूर्खाःसन्तु । सर्वपयसिदुग्धरूपेजातेसतिप्रतियोगिनोऽभावात्सर्वंदुग्धत्वंनजानन्त्वित्यर्थः । तथा नानार्थकोशविषयोनानार्थकोशसंग्राहिनिघंटोरमरकोशादेर्विषयः प्रतिपाद्यंक्षीरेपदेपयस्यपिपदेविषयेद्वयवाचिभूयंउभयार्थवाचित्वंअद्यत्वया एतस्मिन् अङ्गीकृतेसतिपयःक्षीरंपयोम्बुचेतिमृषोद्यंमिथ्यावाच्यअस्तुभवतु । अस्ययशसाक्षीरनीरयोरेकत्वेकृतेप्रतियोगिनोजलस्याभावाद्द्विती

यस्याभिधेयस्याभावात्तदर्थवाचित्वमयुक्तमित्यर्थः । एवंविधंयशोन्यस्य कस्यापिनविद्यतइतिभावः ॥ ७८ ॥

अर्मः किमस्यनलमप्यलमाजुहूषोः कीर्तिःसचैषच समादिशतःस्मकर्तुः ॥ स्वर्द्वीपसीमसरिदीश्वरपूर पार वेलाचलाक्रमणविक्रमणक्रमेण ॥ ७९ ॥

अर्म इति । इमैमिवयंसर्वोत्कृष्टंनलंअपिअलमत्यर्थंआजुहूषोःस्पर्धेमा नस्यास्यसंबन्धिकिंअर्मः । अस्यचरितवाणगोचरइत्यर्थः । स्पर्धामेवाह । सचनलःएषचसेधातिथिश्चउभौकीर्तीःस्वयशांसिअक्रमेणायुगपत्स्वर्द्वीपयो जंबूलक्षद्वीपयोःसीमायांमर्यादारूपेवायःसरिदीश्वरः समुद्रस्तस्यपूरःप्र वाहस्तस्यपारवेलायांपरतीरमर्यादायांयोचलः पर्वतस्तस्यानुक्रमणविक्र मंआरोहणलघणंपराक्रमंकर्तुंसमादिशतःस्मसंदिष्टवन्तौ। स्वदीयाकीर्तिर्दू रगामिनीमदीयानइतिनिर्णेतुंकीर्तिद्वयंप्रेषितवन्तौइत्यर्थः । नलस्य स्पर्धयातस्यन्यूनत्वंसूचितम् । आह्वातुमिच्छतिनत्वाहूयतइतिच । वेलाच लेतिपाठेवेलायावलेनाक्रमणमित्यर्थः । नलंनलोकेतिषष्ठीनिषेधः ॥ ७९ ॥

अंभोजगर्भरुचिराधविदर्भसुभ्रू स्तद्भर्तृरूपमपिरू पजितत्रिलोकम् ॥ वैराग्यरुक्षमवलोकयतिस्मरू पं दृष्टिःपुरत्रयरिपोरिवपुष्पचापम् ॥ ८० ॥

अंभोजेति । अथअंभोजस्यगर्भोमध्यस्तद्वत्रुचिराश्रतिगौरीविदर्भ सुभ्रूः रूपेणसौन्दर्येणजितत्रिलोकंभर्तृरूपंवयःसंधौवर्तमानंयुवानमपिनृ पंवैराग्येण अननुरागेणरुक्षंयथातथाअवलोकयतिस्मअनुरक्तानासीदित्य र्थः । कमिव । पुरत्रयरिपोर्हरस्यदृष्टिःपुष्पचापमिवकाममिव । स्वप्रि यस्यनलस्यस्पर्धितयासक्रोधत्वात्परुषेक्षणंज्ञेयम् द्विगोरितिङीप्विधेःस्र ज्ञापूर्वकत्वेनअनित्यत्वाद्द्वृत्रीह्णिवाजितत्रिलोकमितिसमर्थनीयम् ८०

तेतान्ततोपिचकृष्टुजगठेकदीपा दंसस्थलस्थित समानविमानदण्डाः ॥ चण्डद्युतेरुदयिनीमिवच न्द्रलेखां सोत्कण्ठकैरववनीसुकृतप्रवाहाः ॥ ८१ ॥

तइति । अंसस्थलेस्थिताःसमानास्तुल्याःविमानदण्डाःयेषान्तेशिबिका

भूतस्तांभैमीन्तेजस्वित्वात् जगदेकदीपात्लोकत्रयेएकदीपरूपात्ततोपित स्मादपिराज्ञःस्तकाशात्चक्षुरन्यंप्रापयामासुरित्यर्थः । केकस्मात्कामि व । सोत्सुकाकैरववनीकुमुदवनीतस्याःसुकृतप्ररोहाःपुण्यांकुराश्च तेःसूर्यात्तद्वंशसूर्यंप्रविहायउदयिनीं उदयोन्मुखांशुक्लपक्षेप्रतिपदादिक्रमेण चन्द्रलेखामिवसमाकर्षति ॥ ८१ ॥

भूपेषुतेषुनमनागपिदत्तचित्ता विस्मेरयावचनदेवतयात्तया ॥ वाणीगुणोदयतृणीकृतपाणिवीणा निक्काणयापुनरभाणिमृगेक्षणासा ॥ ८२ ॥

भूपेष्विति अथतयावचनदेवतयासरस्वत्यासामृगेक्षणापुनरभाणिउक्ता । किंभूतातेषुभूपेषुमनागपिनदत्तचित्ता अतएव । किंभूतयाविस्मितया त याचास्यागुणोदयेनमाधुर्यादिगुणोदयेनकत्वात्तृणीकृतोजितोपाणौस्थिता याचवीणायानिक्काणःस्वनोयया ॥ ८२ ॥

यन्मौलिरत्नमुदितासिसएषजम्बू द्वीपस्त्वदर्थमिलितैर्युवभिर्विभाति ॥ दोलायितेनबहुनाभवभीतिकंप्रः कन्दर्पलोकइवख्यात्पतितस्त्रुटित्वा ॥८३

यन्मौलीति । हेभैमियस्यमौलिरत्नंशिरोरत्नंत्वमुदितासित्वमासि स एषजम्बूद्वीपः त्वदर्थमिलितैस्त्वदर्थमागतैर्युवभिःकत्वाभवात्हरात्भी त्याकंप्रःकंपनशीलः बहुनादोलायितेनदोलनेनकत्वात्त्रुटित्वाविच्छिद्यखात्प तितःकन्दर्पलोकइवविभाति।सर्वेपियुवानःकामतुल्याइत्यर्थः । द्वीपेरत्न मुत्पद्यतेअन्यदप्यान्तरालिकंवस्तुबहुनादोलनेनगगनात्त्रुटित्वापतति ८३

विष्वग्वृतःपरिजनैरयमन्तरीयै स्तेषामधीशइवराजतिराजपुत्रि ॥ हेमाद्रिणाकनकदण्डमहातपत्रः कैलाशरश्मिमयचामरचक्रचिन्हः ॥ ८४ ॥

विष्वगिति । हेराजपुत्रिअयञ्जम्बूद्वीपःतेषांशाकद्वीपादीनांअधीश्वरराजाइवराजति । राजचिन्हमेवचक्ति । किंभूतः । अन्तरीयैःसिंहला दिद्वीपैरेवपरिजनैःसेवकैर्विष्वक्सर्वतोवृतः । तथाहेमाद्रिणासुमेरुणाक त्वाकनकदण्डंसुवर्णदण्डंमहातपत्रंमहच्छत्रंयस्य तथाकैलाशरश्मिम

य.किरणसमूहरूपञ्चामरचक्रञ्चामरसङ्कुचिन्हंयस्य । अन्योपिराजापरिज नै.सेव्यते कनकदण्डातपत्रःचामरचिन्हितश्चभवति ॥ ८४ ॥

एतत्तरुस्तरुणिराजनिराजजम्बू स्थूलोपलानिव फलानिविमुञ्चयस्याः ॥ सिद्धस्त्रियःप्रियमिदंनि गदन्तिदन्ति यूथानिकेनतरुमारुरुहुःपथेति॥८५॥

एतदिति । हेतरुणिएतस्यजम्बूद्वीपस्यचिन्हन्तरुःराजजम्बूराजति । एषक.सिद्धस्त्रियेःयस्याःजम्बाफलानिस्थूलोपलानिवस्थूलपाषाणतुल्यानि विमुश्ययद्दृष्ट्वाप्रियभर्तारंप्रतिइदंवृष्टप्रश्नंइतिनिगदन्तिपृच्छन्ति । इतिकिम् । हेप्रियदन्तियूथानिहस्तिसमूहाःकेनपथातरुञ्जम्बूवृक्षं आरुरुहुरारूढाः । जम्बूसंबन्धादेवअस्यजम्बूद्वीपइत्यतिनाम । राजजम्बूइत्यत्रराजदन्तादि त्वात्परनिपातः ॥ ८५ ॥

जाम्बूनदञ्जगतिविश्रुतिमेतिमृत्स्ना कृत्स्नापिसा तवरुचाविजितश्रियस्याः ॥ तज्जाम्बवद्रवभ वाम्यसुधाविधाम्बु जम्बूसरिद्वहतिसीमनिकम्बु कण्ठि ॥ ८६ ॥

जाम्बूनदमिति । भोकम्बुकण्ठिशङ्खवद्रेखात्रययुक्तकण्ठि । रेखात्रया ङ्किताग्रीवाकम्बुग्रीवेतिकथ्यतइतिहलायुधः । साजम्बूसरित् अस्यजम्बू द्वीपस्यसीमनिमर्यादायांवहति । किंभूतातस्याजम्बाजाववन्तिफलानि तेषाञ्द्रवः रसःतस्माद्भवाजाता तथासुधायाः विधाप्रकारोयस्यतादृशं अम्बुयस्याःपियूषतुल्यजला साका । यस्याःजम्बूनद्या.कृत्स्नासकलापिमृ त्स्नाप्रशस्तामृत्तिकाजगतितवरुचाकान्त्याविजितश्रिजितशोभं जम्बूनद्या इदञ्जाम्बूनदंसुवर्णं इति विश्रुतिमेतिप्राप्नोति । यन्मृत्तिकाउत्तमसुवर्णं त्वदपित्वदङ्गकान्त्याजितम् । प्रशस्तातुमृत्स्नामृत्स्नातुमृत्तिकेत्यमरः । मृ दस्तिकन् । सस्नौप्रशसायांइतिस्नप्रत्ययः जाम्बवञ्जम्ब्वावेत्यण् । कम्बुक ण्ठीअङ्गगात्रकण्ठेभ्यइतिङीष् ॥ ८६ ॥

अस्मिजयन्तिजगतीपतयःसहस्र मस्त्राश्रुसार्द्र रिपुलद्वनितेषुतेषु ॥ रंभोरुचारुकतिचित्तवचित्त

बन्धि रूपान्निरूपयमुदाहमुदाहरामि ॥ ८७ ॥

अस्मिन्निति अस्मिन्द्वीपेसहस्रमनेकेजगतीपतयोराजानः जयन्तिसर्वो त्कर्षेणवर्तन्ते । हेरंभोरु अत्राञुभ्यांरक्तनेत्राभ्यांयथाक्रमंसान्द्रारिपवस्ते षाम्वनिताश्चयेषान्तेषुअतिशूरेषुराजसुमध्येअहङ्कतिचिद्राङ्गःउदाहरामि चारुवदामि त्वञ्चारुतावन्मन्निरूपितान्पश्य किंभूतान्तवचित्तरूपव न्धिरूपान्मनोहारिसौन्दर्यान् ॥ ८७ ॥

प्रत्यर्थियौवतवतंसतमालमालो न्मीलत्तमःप्रक रतस्करशौर्यसूर्ये ॥ अस्मिन्नवन्तिनृपतौगुणसन्त तीनां विश्रान्तिधामनिमनोदमयन्तिकिन्ते ८८

प्रत्यर्थीति । हेदमयन्तिगुणसन्ततीनांसौन्दर्यादिगुणसङ्घानांविश्रान्ति धामनिविश्रान्तिस्थानेअस्मिन्नवन्तिनृपतौमनःकिंवर्ततइतिशेषः । किं भूतेप्रत्यर्थिनांयौवतंस्त्रीसमूहस्तस्यवतंसभूतास्तमालमालाएवउन्मीलन्ति प्रकटीभूतानितमांसितेषांप्रकरः समूहःतस्यतस्करोविनाशकःशौर्यमेवसू र्योयस्यवैरिणांमृत्युरूपः । वीरानुरागिण्योहियोषितइतिप्रायेणअस्मिन् अनुरक्तासिइतिममप्रतिभातीतियुक्तमितिभावः ॥ ८८ ॥

तत्रानुतीरवनवासितपस्विविप्रा शिप्रातवोर्मि भुजयाजलकेलिकाले ॥ आलिङ्गनानिददतीभवि तावयस्या हास्यानुबन्धिरमणीयसरोरुहास्या८९

तत्रेति । तत्रावन्त्यांशिप्रानदीतववयस्यासखीभविताभविष्यति । अनुतीरन्तीरसमीपवनेषुवासिनस्तपस्विनोविप्रायस्याः । तथाजलकेलि कालेजलक्रीडासमयेऊर्मिभुजयातरङ्गबाहुनातव आलिङ्गनानिददती । तथाहास्यस्यविकारस्य अनुवन्धोनैरन्तर्यतेनरमणीयंसरोरुहकमलमेवआ स्यंयस्याः । तीरमनुसमयातीरवद्दायतानिवेति । अनुर्यत्समयायस्याया सइतिअव्ययीभावः ॥ ८९

अस्याधिशय्यपुरभुज्जयनींभवानी जागर्तियासु भगयौवतमौलिमाला ॥ पत्योर्धकायघटनायमृगा क्षितस्याःशिष्याभविष्यसिचिरंवरिवस्ययापि ९०

अस्याइति । हेमृगाक्षियाभवानीपार्वतीअस्यउज्जयिनींपुरंअधिशय्यअ धिष्ठायजागर्तिस्फुरद्रूपावर्तते । किंभूता । सुभगंसुन्दरंयौवतंस्त्रीवृन्दन्तस्य मौलिमालाशिरोमाला त्वंतस्याभवान्याःचिरंवरिवस्ययाशुश्रूषया एतेनप त्याअर्धकायघटनायशिष्यापिभविष्यसि । एतद्वरणेनप्राणेशार्धशरीरत्वंसु लभमित्यपिशब्दार्थः॥ रूपेणशिष्याजातैवासिसेवयापिशिष्याभविष्यसीति चापेरर्थः । स्त्रीयंप्राणेशार्द्धन्तवापिवितरिष्यतीत्यर्थः । पुरमितिअधिशी ङित्याधारस्यकर्मत्वम् । भवानीत्यत्रइन्द्रवरुणेतिपुंयोगेङीषानुक्च ९०

नि:शङ्कमंकुरिततांरतिवल्लभस्य देवःस्वचन्द्रकिं
रणामृतसेचनेन ॥ तत्रावलोक्यसुदृशांहृदयेपुरुद्र
स्तद्देहदाहफलमाहसकिंनविद्मः ॥ ९१ ॥

नि:शङ्कमिति । तत्रोज्जयिन्यांसदेवोरुद्रःस्वचन्द्रकिरणामृतसेचनेनसु दृशांहृदयेपुरतिवल्लभस्यकामस्यनिःशंकंनिर्भयंअङ्कुरिततांप्रादुर्भावमवलो क्यतद्देहदाहस्यफलंप्रयोजनंकिमाहकिंब्रूतेतद्वयंनविद्मः । तत्रत्याःस्त्रि यःसर्वदासकामाःदृष्टामयाकृतःकामदेहदाहोव्यर्थएवइतितस्यबुद्धिर्जाय तइत्यर्थः । पुनश्चतस्यसहस्त्रधोत्पत्तेः ॥ ९१ ॥

आगःशतंविदधतोपिसमृद्धकामा नाधीयतेपरु
षमक्षरमस्यरामाः॥ चान्द्रीनतत्रहरमौलिशयालुरे
का नध्यायहेतुतिथिकेतुरपैतिलेखा ॥ ९२ ॥

आगइति । वामाःस्त्रियःआगःशतंसपत्नीसंभोगादिनाअपराधसहस्त्रं विदधतोपिकुर्वतोपिअस्यराज्ञःपरुषंनिष्ठुरमक्षरंनाधीयतेनब्रुवते । यतः समृद्धकामाःसकामत्वादस्यापराधनगणयन्तीतिभावः । वामाइत्यनेनव क्रस्वभावत्वात्परुषभाषणयोग्यत्वेपिसकामत्वान्नोचुरित्यर्थः । अनध्याये हेतुमाह । तत्रोज्जयिन्यांहरमौलौशयालुःस्थिताअनध्यायहेतुःतिथि प्र तिपत्तस्याःकेतुःचिह्नंचान्द्रीएकालेखाकलानापैतिनगच्छति । सदात त्रशंभोःसत्वात्चन्द्रकलायाअपिसत्वात् चन्द्रकलादर्शनात्समुत्पन्नकामाः सत्यःपरुषंनभाषन्तइतिभावः। अथचप्रतिपत्पाठशीलस्येतिवचनात्सर्वान ध्यायापेक्षया प्रतिपदोमुख्यत्वात्सर्वास्वपितिथिषुशुक्लप्रतिपद्वुद्धेरक्षरम पिनपठन्तीतियुक्तमित्यर्थः । आगःशतकारित्वमेवास्यदोषः ॥ ९२ ॥

भूपंव्यलोकतनदूरतरानुरक्तं साकुंडिनावनिपुरन्दरनन्दिनीतम् ॥ अन्यानुरागविरसेनविलोकनाद्वा जानामिसम्यगविलोकनमेवरम्यम् ॥ १३ ॥

भूपमिति । साकुण्डिनावनिपुरन्दरस्यभीमस्यनन्दिनीपुत्रीदूरतरंसुतरामनुरक्तंसानुरागमपितंभूपंनव्यलोकत । वायस्मादन्यस्मिन्नलेअनुरागेणतदतिरिक्तेविरसेनअनुरागेणविलोकनाद्विलोकनापेक्षया ऽविलोकनंसर्वथाअनवेक्षणमेवरम्यंश्रेष्ठंजानामिमन्ये । यत्रानुरागोनास्तितद्विलोकनेनापिप्रयोजनंनास्तीत्यर्थः ॥ ८३ ॥

भैमीङ्गितानिशिविकांमधरेवहन्तः साक्षान्नयद्यपिकथंचनजानतेस्म॥ ऊहुस्तथापिसविधस्थितसंमुखीन भूपालभूषणमणिप्रतिबिंबितेन ॥ १४ ॥

भैमीति । अधरेअधोभागेशिविकांवहन्तोदधानाःभैमीङ्गितानिजृंभणादीनिअनलुरागचिन्हानियद्यपिसाक्षात्कथंचनकेनापिप्रकारेणनजानतेस्म तथापिसविधेस्थिताःसंमुखीनाःभूपालाः तेषांभूषणमणिमुरत्नादिषुप्रतिबिंबितेनहेतुनाजज्ञुः। अननुरागचिन्हानिप्रतिबिम्बवशात्जानतेस्मेत्यर्थः । संमुखंदृश्यतेऽस्मिन्नित्यत्रप्रतिबिम्बाधिकरणेरत्नादौयथामुखसंमुखस्यदर्शनःखइतिखः । भूषणमणीनांवाविशेषणम् ॥ ९४ ॥

भैमीमवापयतजन्यगणस्तदन्य द्वङ्गामिवक्षितितलंरघुवंशदीपः ॥ गाङ्गेयपीतकुचकुंभयुगाञ्चहारचूडासमागमवशेनविभूषिताञ्च ॥ १५ ॥

भैमीमिति । जन्यजनोवाहकसंघोभैमींतस्मादन्यंनृपंअवापयत । कःकामिव रघुवंशदीपोभगीरथःगङ्गामवनितलक्षितितलमिव । किंभूताभैमीगङ्गाञ्च । गाङ्गेयंसुवर्णन्तद्वत्पीतङ्गौरङ्कुचकुंभयुगंयस्याः । गाङ्गेयाभ्यांस्कन्दभीष्माभ्यांपीतङ्कुचकुंभयुगंयस्याउभयोःपुत्रत्वात् । तथाहारोमुक्ताभूषणङ्कण्ठस्थितंचूडावाकुभूषणशिरस्थितंवाभूषणन्तयोःसमागमवशेनविभूषिताशोभमानां हरस्येयंहारीचूडाशिरोभागस्तस्याःसमागमवशेनविभूषितांअलङ्कृताम्विशेषेणानुविभूषितांच । गाङ्गेयःस्त्रीभ्योढक् । हारी

चासौचूडाचपुंवद्भावः ॥ ९५ ॥

तांमत्स्यलाञ्छनदरांचितचापभासो नीराजितभ्रु वमभाषतभाषितेशा ॥ क्रीडाजडेकिमपिसूचय चेतसाचे त्क्रीडारसंवहसिगौडविडौजसीह ॥ ९६ ॥

तामिति । भाषितस्यवाच·ईशावाणीतांभैमींअभाषत । किंभूतांमत्स्य लाञ्छनेनकामेनदरं ईषत्लाञ्छितस्याकृष्टस्यचापस्यभासाकान्त्यानीराजि तेभ्रुवौयस्यास्ताम् । किमुवाचेत्यतआह । हेक्रीडाजडेलज्जयाऽप्रगल्भे इहअस्मिन्गौडविडौडसिगौडदेशाधीशेगौडेन्द्रेचेतसाचेत्क्रीडारसं उप भोगेच्छाम्वहसिचेत् लज्जयासाक्षान्नकथयसितथापिकिमपिकटाक्षादि नामांसूचयबोधय । ततोहमेनम्वर्णयिष्यामीति ॥ ९६ ॥

एतद्यशोभिरमलानिकुलानिभासा न्तथ्यन्तुषार किरणस्यतृणीकृतानि ॥ स्थानेततोवसतितत्रसुधां वुराशौ रङ्कुस्तदङ्कुरवनीकवलाभिलाषात् ॥ ९७ ॥

एतदिति । हेभैमि एतस्ययशोभिस्तुषारकिरणस्यइन्दोर्भासाकिरणाना ममलानिशुभ्राणिकुलानितृणीकृतानिइतिसत्यन्तथ्यं ततस्तस्मादेवहेतोः रङ्कुश्चित्रहरिणः सुधालक्षणंअम्बुतस्यसिंधौसमुद्रेतत्रतस्मिन्चन्द्रेतेषांका न्तितृणानांअङ्कुराःतेषाम्वनीवृन्दन्तस्याः कवलाभिलाषात्ग्रासाभिलाषाद्व सतिइदंस्थानेउचितम् । मृगोहिस्वादुजलतृणाङ्कुरवहुलेदेशेवसति । च न्द्ररूपेस्थानेइतिवा । अतितरामयंयशस्वीतिभावः ॥ ९७ ॥

आलिङ्गितःकमलवत्ककरस्त्वयायं श्यामसमेरु शिखयैवनवःपयोदः ॥ कन्दर्पमूर्धरुहमदनचं पकस्र ग्दामत्वदङ्गरुचिकञ्चुकितश्चकास्तु ॥ ९८ ॥

आलिङ्गितइति ॥ हेभैमित्वयाआलिङ्गितोयंनृप·सुमेरोःशिखयाशृङ्गेणान व·पयोद·मेघइवचकास्तुभासताम्। किंभूतः भाग्यचिन्हङ्कमलन्तद्वद्ककःक रोयस्य तथास्वभावाच्छ्यामः तथाकन्दर्पस्यमूर्धरुहाःकेशास्तेषांमदनंचं पकपुष्पस्रग्दामतद्वत्यास्त्वदङ्गरुचिःस्रक्दामरूपामदनोदयकारिणीअ तिगौरीत्वदीयङ्गकान्तिर्वातयाकंचुकितःप्रवलितः । मेघोपिकमलंजलन्त

द्रूत्यःकरकावार्षपलायस्य । तथासजलत्वान्नीलःतथासुमेरुशिखयाश्रालि ङ्गितःसंबद्धोविद्युतासवलितश्च । गौरश्यामयो.संवन्धःसुतरांशोभते । स्र ग्धामेतिसमुदितोमालावाचकःशब्दः ॥ ९८ ॥

**एतेनसंमुखमिलत्करिकुंभमुक्ताः कौक्षेयकाभिहतिभिर्विबभुःविमुक्ताः ॥ एतद्भुजोष्मभृशनिःसहयावकीर्णाः प्रस्वेदबिन्दवइवारिनरेन्द्रलक्ष्म्या ॥ ९९ ॥**

एतेनेति । हेभैमि एतेनराज्ञाकौक्षेयकाभिहतिभिःखङ्गप्रहारैःकृत्वाविमुक्ताःकुम्भस्थलेभ्योभूमौपतिताःसंग्रामार्थंसमुखंमिलताम्गच्छतांकरिणांकुम्भस्थलस्थामुक्ताःमुक्ताफलानि एतस्यराज्ञोभुजोष्मणोबाहुप्रतापस्यभृशमतिशयेननिःसहयासोढुमसमर्थया अरिनरेन्द्राःएतस्यवैरिणोराजानस्तेषांलक्ष्म्याविकीर्णाविसृष्टाःप्रस्वेदबिन्दवः प्रकृष्टघर्मोदबिन्दवइवविबभुः । इत्तियोचित्वादतिशूरोयमितिभावः । कौक्षेयकोमण्डलाग्रइत्यमरः । कुक्षौभवःकुलकुक्षीतिखङ्गेभिधेयेढकञ्प्रत्ययः ॥ ९९ ॥

**आश्चर्यमस्यककुभामवधीनवाप दाजानुगाद्भुजयुगादुदितःप्रतापः ॥ व्यापत्सदाशयविसारितसप्ततन्तु जन्माचतुर्दशजगन्तियशःपटश्च ॥१००॥**

आश्चर्यमिति । अस्यआजानुगात्जानुपर्यन्तंगामिनोदीर्घाद्भुजयुगात् उदितःप्रतापःककुभान्दिशांअवधीन्प्रान्तानवापत्प्राप । एतदाश्चर्यम् । तथासंश्चासावाशयश्चतेनशुचिनाचित्तेनविसारिताः कृताःसप्ततन्तवोमखाःतेभ्योजन्मयस्यएवंविध.यशःपटः चतुर्दशजगन्तिव्यापत्एतदाश्चर्यम् । अस्यराज्ञोदिक्प्रान्तगामिचतुर्दशजगद्व्यापिनोः प्रतापयशःपटयोर्दर्शनादेवआश्चर्यम् । अथवाकारणगुणानांकार्यसमवायस्यआवश्यकत्वात्जानुपर्यन्तगामिनोभुजयुगादुत्पन्नस्यप्रतापस्यातिदूरदिक्प्रान्तगामित्वादाश्चर्यम् । तथासदासर्वदाशयेनहस्तेनप्रसारिताःसप्तसंख्यास्तन्तवस्तेभ्यःअल्पपरिमाणेभ्यः कारणेभ्यःसमुत्पन्नस्यपटस्यचतुर्दशजगद्व्यापित्वान्महदाश्चर्यमित्यर्थः । एवंविधःप्रतापवान्यशस्वीचअन्यःकोपिनास्तीतिभावः सप्ततन्तुर्मखःक्रतुरित्यमरः ॥ १०० ॥

औदास्यसंविदविलंबितशून्यमुद्रा मस्मिन्दृशोर्नि
पतितामवगम्यभैम्याः॥ स्वेनैवजन्यजनतान्यमजी
गमत्तां सूक्ष्मप्रतीङ्गितविभावनमेववाचः १०१

औदास्यइति । जन्यजनताजनसमूहः स्वेनैववचनंविनाआत्मनैवतां भैमींअन्यंनृपंअजीगमत्प्रापयामास । किंकृत्वाअस्मिन्नृपेनिपतितांभैमीदृशोरौदास्यस्यसंवित्बुद्धिरियतिवर्णनेकृतेपि अनवलोकनेनऔदास्यज्ञानं तयाऽवलंविताशून्यमुद्रातांप्रेमराहित्यचिन्हान्तामवगम्यज्ञात्वा । आज्ञां विनाकथंनीतवानत्रार्थेअर्थान्तरन्यासमाह । सूक्ष्मंपरिहितंप्रतिइङ्गितवि भावनंचेष्टितज्ञापनमेववाच उपदेशाः । उदास्तइत्युदास्यपचाद्यजन्तः ब्राह्मणादित्वात्ष्यञ् ॥ १०१ ॥

एतांकुमारिनिपुणांपुनरप्यभाणि द्वाणीसरोजमु
खिनिर्भरमारभस्व॥अस्मिन्नसंकुचितपंकजसख्य
शिक्षा निघ्नातदृष्टिपरिरंभविजृंभितानि ॥१०२॥

एतामिति । वाणीसरस्वती कुमारीचासौनिपुणाचनलान्यतारतम्यज्ञां तामेतांपुनरपिइतिअभाणीत्कथे । हेसरोजमुखिअस्मिन्नृपेअसंकुचित विकसितस्यपंकजस्यसख्यशिक्षायांसादृश्याभ्यासेनिघ्नातानिपुणादृष्टिर्वि कसितकमलतुल्येत्यर्थः । तयातस्यावापरिरंभविजृंभितानिआलिङ्गनवि लासान्निर्भरसुतरांआरभस्व । एनंसादरमवलोकयेतिभाव. १०२

प्रत्यर्थिपार्थिपयोनिधिमाथमंथ पृथ्वीधरःपृथुर
यंमधुराधिनाथः॥ अश्रमश्रुजातमनुयातिनशर्वरी
शः श्यामांककर्बुरवपुर्वदनाब्जमस्य ॥ १०३ ॥

प्रत्यर्थीति । भैमिपृथुनामामधुरायाः अधिनाथोराजायम् । किंभूतः । प्रत्यर्थिपार्थिवाःशत्रुभूतानृपा.तएवपयोनिधय.तेषांमाथेमथनेमंथःपृथ्वी धरोमंथशैलोमन्दरःतथाशर्वरीशश्चन्द्रःअस्यअश्मश्रुजातअनुत्पन्नश्मश्रुक चरहितंवदनाब्जंनानुयाति । नअनुकरोति । यतःश्यामेनअंकेनकलंकेन कर्बुरविचित्रंवपुर्यस्यकलकश्चन्द्रःश्मश्रुरहितैतन्मुखतुल्योनभवतीत्यर्थः । वयःसन्धीवर्ततइतिभावः । नजातंश्मश्रुयस्मिन्वाहिताग्न्यादिषुितिपर

निपातः । पार्थिवेलितत्रविदितइत्यर्थः ॥ १७३ ॥

वालेधराधरितनैकविधप्रवाले पाणौजगद्विजय कार्मणमस्यपश्य ॥ ज्याघातजेनरिपुराजकधूमके तु तारायमाणमुपरज्यमणिड्किणेन ॥१०४॥

वालइति । अधरेणओष्ठेनाधरितानिअनेकविधानिनानाजातीयानिप्र वालानिपल्लवाविद्रुमावायया । तथावालेत्वंअस्यराज्ञ·पाणौजगद्विजयस्य कार्मणंवशीकरणंमणिकंकणरत्नंपश्य किंभूतंमणिंज्याघातजकिणेनउपरज्य श्यामीभूयरिपुराजकस्यरिपुनृपवृन्दस्यलदर्थंधूमकेतुतारायमाणंधूमकेतुन क्षत्रतुल्यआचरितम् । धूमकेतुनक्षत्रमुदितंसत्यथाराजक्षयंकरोतितथे ति । नैकविधंविविधंप्रवालंययेतिब । रिपवश्चतद्राजकंचेति अन्यथाआ दिवृद्धिःस्यात् । संज्ञापूर्वकविधेरनित्यत्वाद्वावृध्यभावः ॥ १०४ ॥

एतद्भुजारणिसमुद्भवविक्रमाग्नि चिन्हंधनुर्गुण किणःखलुधूमलेखा ॥ जातंययारिपरिषन्मशको र्थयाम्रु विश्राणनायरिपुदारदृगंवुजेभ्यः ॥१०५॥

· एतदिति । धनुर्गुणकिणःज्याघातजःकिणःएतस्यभुजःएवअरणिःवन्ह्युत्पत्तिकाष्ठन्तस्मात्समुद्भवःविक्रमाग्नि·समुत्पन्नप्रतापाग्निस्तस्यचिन्हं चिन्हभूताधूमलेखाखलुनिश्चये । यथाधूमोग्नेर्लिङ्गम् । ययाधूमरेखया रिपूणान्दारास्तेषांदृगंबुजेभ्यः ·अश्रुविश्राणनायरोदनविश्राणनायजातंप तिवधादित्यर्थः । किंभूतयाअरिपरिषद्वैरिसभस्तल्लक्षणामशकाःतन्निवृ तिरूपःअर्थ·प्रयोजनंयस्याःसातया । अत्रार्थशब्दोनिवृत्तिवचनः । धू मलेखाहिदृशांचाश्रुणिजनयति । अतिशूरोयमितिभावः । अर्थोभिधेयो रैवस्तुप्रयोजननिवृत्तिषुइत्यमरः ॥ १०५ ॥

श्यामीकृतांमृगमदैरिवमाधुरीणा न्धौतैःकलिन्द तनयामधिमध्यदेशम् ॥ तत्राप्तकालियमहाह्रदना भिशोभां रोमावलीमिवविलोकयितासिनूमेः१०६

श्यामीति । तत्रमथुरायांअधिमध्यदेशंमध्यदेशेकलिन्दतनयांयमुनां नृमे·रोमावलिमिवत्वविलोकयितासि । किंभूतांमाधुरीणांमथुरास्त्रीणां

धौतैर्जलक्रीडाक्षालितैर्मृगमदैःकस्तूरीभिरिवश्यामीकृतांनतुस्वतःश्यामा मित्यर्थः । तथाऽऽप्तमाप्तमाकालियस्यमहाह्रदेनकल्वानाभिशोभाययातां रोमराजिस्वत श्यामापिमृद्भमदैश्यामतराकालियमहाह्रदवद्गम्भीरयाना भ्याप्तामशोभाऽऽचमध्यदेशेषजयति । अनेनसहकालिंद्याञ्जलक्रीडांकुर्विति भावः ॥ १०६ ॥

गोवर्धनाचलकलापिचयप्रचार निर्वासिताहिनि घनेसुरभिप्रसूने ॥ तस्मिन्ननेनसहनिर्विशनिर्वि शंकं वृन्दावनेत्वनविहारकुतूहलानि ॥ १०७ ॥

गोवर्धनेति । हेभैमितस्मिन्श्रीकृष्णक्रीडया अतिप्रसिद्धेश्रीरूपंवृन्द भवतीतिवृन्दावनंमथुरासमीपंवनवृन्दस्यगोपालसंघस्यवनेवात्वमनेनरा ज्ञासहनिर्विशंकंसर्पादिभयरहितंयथा पुष्पावचयादीनिवनविहारकुतूह लानिवनक्रीडाकौतुकानिनिर्विशउपभुंक्ष्व । किंभूतेगोवर्धननामाचलोगि रिस्तत्रवर्तमानाःकलापिचयामयूरसंघास्तेषां प्रचारेणनिर्वासितानिष्का शिताःअहयःसर्पायस्मात् तथाघनेनिबिडच्छाये । तथासुरभीणिसुग न्धीनिप्रसूनानिपुष्पाणियस्मिन् । वृन्दावनेइत्तिवननिर्याःसंज्ञायामिति कोटरादित्वाद्दीर्घः ॥ १०७ ॥

भावीकरःकररुहांकुरकोरकोपि तद्वल्लिपल्लवचयेत वसौख्यलक्ष्यः ॥ अन्तस्त्वदास्यहृतसारतुषारभा नु शोभानुकारिकरिदन्तजकंकणांकः ॥ १०८ ॥

भावीति । हेभैमितस्यवृन्दावनस्यवल्लिपल्लवचयेलतानांकिसलयवृन्द मध्येकररुहाएवनखाएवअंकुराःतेएवकोरकायस्यएवंभूतस्तवकरःसौख्येन अनायासेनलक्ष्योज्ञेयोभावीभविष्यति । रक्तत्वादतिमृदुत्वात्कोमलाकार नखरूपकोरकयुक्तत्वाच्चकिमयंकोरकयुक्तःपल्लवः अथवानखयुक्तोभैमीकर इतिसंदेहविषयत्वयोग्योपीत्यपिशब्दार्थः । यतःअन्तर्मध्येत्वदास्येनहृत सारः त्वदीयमुखनिर्माणार्थंहृतोमध्यस्थस्निग्धभागोयस्यएवंभूतोयस्तु षारभानुश्चन्द्रस्तस्यशोभानुकारितदाकारंकरिदन्तजकंकणतदेवअंकश्चिन्हं यस्य हस्तिदंतवलययुक्तोभैमीकरस्तद्रूहिसश्चपल्लवइतिपल्लवमध्येकरःसुखे नज्ञास्यतइत्यर्थः । तत्रत्याःस्त्रियःप्रायशोदन्तवलयानिबिभ्रति ॥ १०८ ॥

तज्जःश्रमांबुसुरतान्तमुदानितान्त मुत्कण्टकैस्त नयुगेतवसञ्चरिष्णुः ॥ खञ्जन्प्रभञ्जनजनःपथि कःपिपासुः पाताकुरङ्गमदपङ्किलमप्यशङ्कम् १०९

तज्जइति । हेभैमितज्जोवृन्दावनेजातःप्रभञ्जनजनः वायुसङ्घोवायुल क्षणोवाजनः कुरङ्गमदेनकस्तूरिकयापङ्किलङ्कलुषमपिश्रमाम्बुसुरतश्रमज नितङ्घर्मोदकंपाताअशङ्कंनिःशङ्कंपास्यति अपनेष्यतीत्यर्थः । किंभूतःसुर तान्तमुदासुरतावसानहर्षेणनितान्तं उत्कण्टकैरोमाञ्चितैतवस्तनयुगेस्तन तटेसञ्चरिष्णुःसञ्चरणशीलः । तथाखञ्जन्वृक्षादिबाहुल्येनमन्दीभवन् । पथिकोपिनित्यंमार्गस्थः अतएवपिपासुःसतृषः । अन्योपिपान्थःकण्टकिते देशेसञ्चरिष्णुः अतएवखञ्जन्कण्टकत्वात्पङ्गुर्भवन् उदकपानेच्छुर्निर्मलोद कप्राप्त्यभावात्कर्दमयुक्तं अपिजलंनिर्विचारंपिबति ॥ १०९ ॥

पूजाविधौमखभुजामुपयोगिनोये विद्वत्कराःकम लनिर्मलकान्तिभाजः ॥ लक्ष्मीमनेनदधतानुदिन म्वितीर्णै स्तेहाटकैःस्फुटवराटकगौरगर्भाः ११०

पूजेति । येविदुषांपण्डितानाङ्कराः मखभुजान्देवानांपूजाविधौउपयो गिनस्तत्पराःकमलेनदानसंबन्धिनाजलेननिर्मलकान्तयोऽथचपद्मतुल्याः । तेविद्वत्कराः अनेनराज्ञाअनुदिनवितीर्णैर्दत्तैर्हाटकैः सुवर्णैःकृत्वालक्ष्मीं दधतेधारयन्ति । किंभूताःसुवर्णधारणादेवस्फुटःप्रकटोवराटकोबीजकोश स्तद्वत्गौरमध्याः । पद्माअपिदेवपूजाविधौउपयोगिनःस्फुटेनबीजकोशे नगौरमध्याः । अतितरान्दाताऽयमितिभावः । बीजकोशोवराटकइत्य मरः । कमलमध्यस्थितापीतवर्णाकर्णिकेत्यर्थः ॥ ११० ॥

वैरिश्रियःप्रतिनियुद्धमवाप्नुवन्यः किंचिन्नतृप्य तिधरावलयैकवीरः ॥ सत्वामवाप्यनियतन्मदने षुवृन्दं स्वयंदीनितृप्यतुमघूर्निपिबन्निवायम् १११

वैरीति । योराजावैरिश्रियःवैरिराज्यलक्ष्मींप्रतिलक्षीकृत्यवैरिभिःसह नियुद्धनितरांयुद्धमनाप्नुवन्किंचिदिकमपिनतृप्यतिनतुष्यति । यतःधरा वलयेएकोवीरःशूरः । युद्धमकृत्वैववैरिभिर्दत्ताःश्रियोलब्ध्वापियुद्धेच्छाम

प्राप्य अवृप्तः सोयमद्यत्वामवाप्यत्वद्धिययेत्समुद्दिश्यनितरांयतन्तोमदने
षव पुष्पाणितेषांवृन्दानितेभ्य स्यन्दीनिमधूनिपुष्परसान्पिवन्निव तृप्य
तु । स्वतुल्यमदनयुद्धलाभादित्यर्थः । एनंवृणीष्वेतिभावः । अवाप्नुवन्नि
तिपाठेनियुद्धंयुद्धयुद्धप्रतियुद्धमात्रैवैरिश्रियः प्राप्त वन्नतृप्यतिसत्वांप्राप्य
तु । श्रीभ्योपित्वं अधिकेत्यर्थः । अन्योपिमद्यपानेनपूर्वमसन्तोषहेतुंवि
स्मरन्सन्तुष्यति ॥ १११ ॥

तस्मादियङ्क्षितिपतिक्रमगम्यमान मध्वानमैक्ष
तनृपादवतारिताक्षी ॥ तद्भावबोधबुधतांनिजचे
ष्टयैव व्याचक्रुतेंस्मशिविकानयनेनियुक्ताः ११२

तस्मादिति । तस्मान्नृपादवतारिताक्षीइयंभैमी क्षितिपतिशिरोजभिः
क्रमेणपरिपाट्यागम्यमानंराजसंबन्धिनंक्रमेणागम्यंवाध्वानंऐक्षत । शिवि
कानयनेनियुक्ताजन्या.निजचेष्टयैवान्यप्रापणरूपेणस्वव्यापारेणैवनृपरत्नेषु
प्रतिबिम्बवशेनतस्यात्रैम्याभावोभिप्रायः तस्यबोधोज्ञानन्तेनबुधतांपंडित
ततांव्याचक्षतेस्मज्ञापितवन्तः तामन्यंनृपंप्रापयामासुरित्यर्थः । अन्योपि
ज्ञावबोधेननिजंपाण्डित्यंप्रकटीकरोति ॥ ११२ ॥

भूयोपिभूपमपरंप्रतिभारतीता मत्रस्यच्चमूरुचल
चक्षुषमाचचक्षे ॥ एतस्यकाशिनृपतेरबलोक्यल
क्ष्मी मक्ष्णोःसुखञ्जनयखञ्जनमञ्जुनेत्रे ॥ ११३

भूपइति । भारती त्रस्यन्यश्चमूरुमृगःतद्वच्चलच्चक्षुपंचञ्चलनेत्रीन्तांभैमींप्र
तिअपरंनृपंभूयोप्याचचक्षे । हेखञ्जननेत्रवन्मञ्जुनेत्रेसुन्दरनेत्रेभैमि त्वंएत
स्यकाशिनृपतेर्लक्ष्मींकायकान्तिं अवेक्ष्याक्ष्णो.सुखञ्जनय । एतदीयाखिल
लक्ष्मीमवेक्ष्येतिवा।काशिकेत्यादिप्रयोगदर्शनाद्ध्रस्वोपिकाशिकाशब्दः११३

एतस्यसार्वभौमिभुजःकुलराजधानी काशीभवोत्तर
णधर्मतरिःस्मरारेः ॥ यामागतान्दुरितपूरितचेत
सोपि पापंनिरस्यचिरजंविरजीभवन्ति ॥ ११४ ॥

एतस्येति । हेभैमि याकाशिकास्मरारेर्हरस्यजवोत्तरणेऽरयसंसारसमुद्र
स्यतरणेमूल्यानपेक्षत्वाद्धर्मतरिर्द्धर्मनौका सा एतस्यावनिभुजांकुलराजधा

नीवंशपरंपरानिव।स्स्थानं। संसारोत्तारणत्वमेवग्राह। याङ्गाशिकाश्राग ताःप्राप्ताःदुरितपूरितमेलसोपि छ्यतिपातकिनोपिजना चिरजन्निरकालस ञ्चितंपापंनिरस्यविरजीभवन्तिविगतरजस्काभवन्तिविगतरजोगुणाःसत्त्व प्रधानाभवन्ति। मोक्षंलभन्तइत्यर्थः। धर्मेतरीत्यनेनसर्वस्याप्यनिवारणंसू चितम्। अविरजसोपिविरजसोभवन्ति। अरुर्मनइतिच्विःसलोपश्च॥११४॥

आलोक्यभाविविधिकर्तृकलोकसृष्टिं कष्टानिरोदि तिपुराकृपयैवरुद्रः॥ नामेच्छयेतिमिषमात्रमधत्तयत्तां संसारतारणतरीमसृजत्पुरीं सः॥ ११५॥

आलोक्येति। रुद्रः भाविनिजनिष्यन्तिविधिकर्तृकायाः लोकसृष्टेःकष्टा निदुःखान्यालोक्यविचार्यकृपयाएवंपुरारोदितिअरोदीत्। ब्रह्मललाटा दुत्पन्नोरुदन्ब्रह्मणाकिमितिरोदिषीतिपृष्टःसन्नामेच्छयारोदिमित्युक्ते नब्रह्मणाकृतनामेच्छयामिषमात्रं अधत्त। वस्तुतस्तुलोकानांदुःखंदृष्ट्वाअरुदत्नतुरुद्रनामेच्छयेत्यर्थः। अतःसरुद्रस्तांपुरींसंसारसागरतरींसं सारसमुद्रतारणनौकामोक्षदायिनीमसृजत्। काशीमागतस्यसंसारदुःखा निपराभवन्तुंनशक्नुवन्तिमोक्षएवभवतीतिभावः। पुरारोदितिपुराखलुड् चास्मेइतिलट्॥ ११५॥

वाराणसीनिविशतेनवसुन्धरायां तत्रस्थितिर्म खभुजांभुवनेनिवासः॥ तत्तीर्थमुक्तवपुषांतत एव मुक्तिः स्वर्गात्परंपदमुदेतुमुदेतुकीदृक्॥ ११६॥

वराणसीति। हेभैमि वाराणसी वसुन्धरायांननिविशतेनविद्यते तत्रम खभुजान्देवानांयास्थितिःसाभुवनेस्वर्गलक्षणेनिवासःतत्रयास्थितिर्लोका नांसादेवानांभुवनेस्वर्गेनिवासइतिवा स्वर्गएवकाशीनतुभूमिरित्यर्थः। अत एवकाश्याःस्वर्गरूपत्वादेवहेतोस्तस्मिन्काशीलक्षणेतीर्थेतत्संबन्धिनिमणि कर्णिकादौतीर्थेमुक्तवपुषान्त्यक्तकलेवराणांमुक्तिर्मोक्षोभवति। यदिका शीतीर्थमात्रमेवस्यात् नस्वर्गस्तर्हितत्रत्यक्तशरीराणांनृणांस्वर्गलक्षणमेव फलंभवेन्नतुमुक्तिःमुक्तिस्तावद्भवतीतिपुराणप्रामाण्यादवमीयते। अन्य थास्वर्गात्परं अधिकंमुदंमुक्तिव्यतिरिक्तहर्षार्थंकीदृक्तुपुनःपदंस्थानंकीदृ

क्वाहेतुरहेतुरुत्पद्यतां अपितुमुक्तिव्यतिरिक्तमन्यन्नास्तीत्यर्थः । भूलोके तीर्थादौमृतानांसुखायस्वर्गप्राप्तिःफलं इयमपिअन्यभूमितीर्थतुल्याचेद् भवेत्तर्हिअत्रापिमृतानांस्वर्गएवनतुमुक्तिः मुक्तिस्तावद्भवतितस्मात्स्वर्ग रूपैवेयंस्वर्गेपित्यक्तदेहानान्तदधिकंमुक्तिलक्षणंफलंयुक्तमितिभावः । एत न्महिमाकाशीखण्डादिपुराणेप्रसिद्धस्ततएवावधार्यः ॥ ११६ ॥

**सायुज्यमृच्छतिभवस्यभवाब्धियाद स्तांपत्पुरेत्य नगरींनगराजपुत्र्याः ॥ भूताभिधानपटुमद्यतनी मवाप्य भीमोद्भवेभवतीभावमिवास्तिधातुः ११७**

सायुज्यमिति । हेभीमोद्भवेजैमि भवाब्धिःसंसारसमुद्रःतस्ययादःजन्तुः नगराजपुत्र्याःपार्वत्याःपत्युर्भवस्यसायुज्यऐक्यंऋच्छतिप्राप्नोति। किङ्कृत्वा तांनगरींएत्यप्राप्य । सहयुनक्तीतिसयुक्तस्यभावःसायुज्यं किंभूतां । भूतस्यसत्यस्यतारकब्रह्मणः अभिधाने उपदेशेसमर्थाम्। कःकमिव । अ स्तिधातुःअसभुवीतिधातुऽर्भूताभिधानपटुमतीतकालार्थाभिधानसमर्थां अद्यतनींलुङ्विभक्तिंप्राप्यभवतिभावमिव । अस्तेर्भूरित्यनुशासनाद्भूधातु त्वंयथाप्राप्नोति । अद्यतनीतिलुङ्विभक्तेःकौमाराणांसञ्ज्ञा । देहान्तेदे वःपरन्तारकंब्रह्मव्यपदिशतीति । भवाब्धियादसश्चभवसायुज्यंयुक्तम्॥११७॥

**निर्विश्यनिर्विरतिकाशिनिवासिभोगा न्निर्माय नर्मजमिथोमिथुनंयथेच्छम् ॥ गौरीगिरीशघटना धिकमेकभावं शर्मोर्मिकञ्चुकितमञ्चतिपञ्चता याम् ॥ ११८ ॥**

निर्विश्येति । काश्यांनिश्चयेनवसतिएवंशीलंकाशीनिवासिमिथुनंस्त्री पुंसयुग्मंकर्तृ मिथ:रहसिपरस्परनिर्विरतिवैराग्यरहितंसानुरागंयथातथा यथेच्छंयावदभिलाषभोगान्स्रक्चन्दनवनितादीन्निर्विश्यअनुभूयतथामि थ. यथेष्टंनर्मवचनंविहारादिक्रीडांचयावज्जीवनिर्मायविधायपञ्चतायां न्देहान्तसमयेऽर्धकायसंयोजनरूपात् गौरीगिरीशयोर्घटनादप्यधिकंशर्मो र्मिकञ्चुकितंसुखपरंपरासंवलितमेकभावन्तादात्म्यसञ्चतिप्राप्नोति । शिव योर्हिसंयोगेशरीरद्वैतस्फुरतिकाशीवासिमिथुनस्यतुशिवतादात्म्यात्तदपि

नास्तीत्याधिक्यम् । स्वर्गादिसुखपरित्यागं ध्यानादियोगं च विनाकाशीवासमात्रेणापरमानन्दरूपं ब्रह्मसायुज्यं भवति । तस्मात्सर्वाभिलाषसिद्ध्यर्थं एनं वृणीष्वेतिभावः ॥ ११८ ॥

न्यग्रोधधासि यदि तन्ममं मौनमस्तु कथ्यो निजामृतमयैव मयानुभूत्या ॥ नस्यात्कनीयसितरा यदि नामकाश्या राजन्वती मुदिरमाडनघन्वनाभूः ॥ ११९

नेति । हे भैमि यदि काश्याः स्वर्गापेक्षया आधिक्यवर्णनेन मद्वचनेन श्रद्धासि न विश्वसिति तर्हि ममं मौनमस्तु । तर्हि तव मौनत्वे काशीमहिमानं कः कथयिष्यतीत्यत आह । मुदिराणां मेघानां मण्डनं धन्वयस्य तेन इन्द्रेण राजन्वती सौराज्यवती भूरमरावती काश्याः सकाशात् यदि नाम चेत् कनीयसितरा अल्पीयसितरा हीनतरा न स्यात् न भवेत् तर्हि तव निजया आत्मीयया आमृतमयाऽतितरां हितया ऽनुभूत्या अनुभावेनैव कथ्या कथनीया । काशीतः स्वर्गभूमिरतिहीनेत्यस्मिन्नर्थे तवानुभवं प्रमाणमित्यर्थः । एतद्वरणेन काशीमनुभूय काश्यमरावत्योर्विशेषं ज्ञास्यसीति । तस्मात् एनं वृणीष्वेतिभावः । अतिशयेनाल्पा कनीयसी इति इयसुनि युवाल्पयोः कनित्यादेशः अतितरां कनीयसी कनीयसितरेति घरूपेत्यादिना ह्रस्वः । काश्या इति पञ्चमी विभक्तौ इति पञ्चमी ॥ ११९ ॥

ज्ञानाधिकासि सुकृतान्यधिकाशि कुर्याः को श्याङ्किमन्यकथनैरपि यत्र मृत्योः ॥ एकं जनाय सततामयदानमन्य द्वन्येत्र हत्यमृतसत्रमवारिताथिः १२०

ज्ञानेति । हे धन्ये त्वं ज्ञानेन अधिका उत्कृष्टाऽसि ईदृशी कापि विदुषी नास्ति तस्मात्त्वमधिकाशि काश्यां सुकृतानि पतिपरिचर्यादिनानाविधानि पुण्यानि कुर्याः । अन्यकथनैरपि एवंविधा काशी प्रत्येकं काशीमाहात्म्यकथनं न किञ्चार्यं किं प्रयोजनम् । काशीमाहात्म्यकथने ऽन्यमाहात्म्यकारणकथनैः किमपि प्रयोजनं नास्तीत्यर्थः । अन्यस्य यस्तु नः कथनैरितिवा । यत्र काश्यां मृत्योः सकाशात् जनाय सततं सर्वदा अभयदानमेकं अमृतसत्रं मोक्षरूपं सत्रं वर्तते वर्तते । न वारिता अर्थिनो जना जलया चकाः यत्र एवंभूतं अन्यत् द्वितीयं अमृतसत्रं उदकसत्रं भागीरथीरूपं वर्तते यत्र स्थित्वा यत्रत्य

कुङ्कोदकम्पीत्वाचमृत्योरपिभयंजनस्यनास्तीति । अन्यत्रमृत्योर्भयंभवति अत्रतुमरणानन्तरंशिवसाम्यप्राप्तिनिश्चयात्कृतकृत्या.प्रतीक्षन्तेमृत्युंप्रियमि वातिथिमिसितिवचनान्मृत्योरपेक्षितत्वाद्भयाभावः । वहतिरत्राकर्मा॥१२०॥

**भूभर्तुरस्यरतिरेधिमृगाक्षिमूर्ता सोयन्तवास्तुकुसुमायुधएवमूर्त्तः ॥ भातञ्चताविवयुवांगिरिशंविराद्धमाराद्भमाशुपुरितत्रकृतावतारौ॥ १२१ ॥**

भूभर्त्तुरिति । हेमृगाक्षि मृगनयनेअस्यभूभर्तुर्मूर्तासाक्षाद्रतिःकामप्रियात्वंएधिभव । सोयन्नृपस्तवमूर्त्तःशरीरधारीकुसुमायुधएवअस्तुभवतु । त्वयिअस्यरतिबुद्धिर्भवतुअस्मिंश्चतवकामबुद्धिर्भवतुइत्यर्थः । अथचशरीरधारिणीप्रीतिरेवभव । अयंतवमनोदयकारित्वान्मूर्त्तःअनुरागएवभवतु । परस्परस्मिन्अतितरांअनुरक्तौभवेतामित्यर्थः । युवान्ताविवरतिकामाविवभाताच्चशोभेतां । किंभूतौयुवां पूर्वंविराद्धंप्रकोपितङ्गिरिशंआशुआराद्धुं तदीयंक्रोधंपरिचर्ययाशीघ्रमपनेतुं तत्रतस्यांपुरिकाश्याङ्कृतावतारौकृतनिवासौ । अतिसुन्दरौयुवांदृष्ट्वाकाशिस्थोलोकएवमेवसंभावयत्वित्यर्थः । अवतीर्यतेअनेनेत्यवतारोदेहःकृतोधृतोदेहोयाभ्यांइतिवा । अवेतृस्त्रोर्घञ्इतिकरणेघञ् एवमन्यत्रापिज्ञेयम् ॥ १२१ ॥

**कामानुशासनमतेसुतरामधीती सोयंरहोनखपदैर्वहतुस्तनौते ॥ रुष्टाद्रिजाचरणकुङ्कुमपङ्करागसङ्कीर्णशङ्करशशाङ्ककलाङ्कारैः ॥ १२२ ॥**

कामेति । हेभैमि कामानुशासनस्यवात्स्यायनादिशास्त्रस्यमतेसुतरां अधीतमध्ययनमस्यास्तीत्यधीतीसः अयंराजा रहः नखपदैःतेस्तनौमहतु पूजयतु । कीदृशैःरुष्टायाःक्रुद्धायाःअद्रिजायाःचरणयोःकुङ्कुमपङ्करागःकुङ्कुमलोहितिमातेनसङ्कीर्णायाःमिश्रितायाः चरणपतितस्यशङ्करस्यचरणाघातवशेनकुङ्कुमसंबन्धाल्लोहितायाः शशाङ्ककलायाःचन्द्रकलायाः अङ्कारैःप्रतिमल्लैः अङ्कन्द्वन्द्वयुद्धङ्कुर्वन्तीत्यङ्कारा: वक्रत्वादारक्तत्वाच्चतत्तुल्यैः ॥ एनंवृणीष्वेतिभावः । कलाङ्कुराभैरितिवापाठः । अधीतमनेनइत्यधीतीइष्टादिभ्यश्चेतिइनि तद्योगेशासनमतेइत्यत्रक्तस्येन्विषयस्यकर्मण्युपसंख्यानमितिकर्मण्यपिसप्तमी ॥ १२२ ॥

पृथ्वीश एष नुदतु त्वदनङ्गताप मालिङ्ग्य कीर्तिच
यचामरचारुचापः ॥ सङ्ग्रामसङ्गतविरोधिशिरो
धिदण्ड खण्डिक्षुरप्रशरसंप्रसरत्प्रतापः ॥ १२३

पृथ्वीशइति । एषपृथ्वीशः त्वामालिङ्ग्यत्वदनङ्गतापन्त्वदीयंमदन
ज्वरन्त्वद्विषयस्त्वीयंवा त्वदितिपृथक्कृत्यत्वद्धेतुकमितिवा नुदतुहरतु । कि
भूतः कीर्तेश्चापसमुत्पन्नत्वात्कीर्तिचयचामरेणकीर्तिसमूहचामरेणचारुचा
पयस्यसः तथासङ्ग्रामेसङ्गताः मिलिताविरोधिनोवैरिणस्तेषांशिरोधिद
ण्डा.तान्खण्डयन्तिएवंशीलाःक्षुरप्रख्याःशरास्तैःतेभ्योवाप्रस्यक्प्रसरन्नु
तितरांविवृद्धःप्रतापोयस्य । चोरानुरागिणोर्ह्रियोषितइतिन्यायात् ।
अतियशस्विनःप्रतापवतश्चअस्यलाभेनतवमदनज्वर.शाम्यत्वित्यर्थः । अ
थचविवृद्धप्रतापालिङ्गनेनतापशान्तिराश्चर्यकारिणी । अतिधनुर्धरस्यचापे
चामरंभवति । शिरोधिःकन्धरेत्यपीत्यमरः ॥ १२३ ॥

वक्षस्त्वदुग्रविरहोदपिनास्यदीर्णं वज्रायतेपतन
कुण्ठितशत्रुशस्त्रम् ॥ तत्कन्दकन्दलतयाभुजयो
र्नतेजो वह्निर्नमत्यरिवधूनयनाम्बुनापि १२४

वक्षइति । तवउग्रोदुःसहोविरहःवियोगानलःतस्मादपिनदीर्णमस्य
वक्षः वज्रवदाचरति । अविदीर्णत्वाद्वज्रवदतिकठिनंभवति । यतःप
तनेनकुण्ठितानिभग्नानिशत्रुशस्त्राणियस्मिन् । कुलिशमपिवन्हिसंबन्धा
द्विदीर्णंनभवति । पतनकुण्ठितशत्रुशस्त्रञ्चभवति तस्मादेतद्वक्षोवज्र
तुल्यम् । अथचहीरकवदाचरति । हीरकोपिवन्हिसंबन्धान्नस्फुटतिइति
प्रसिद्धि.शस्त्राण्यपिचकुण्ठयति । पृथिव्यांयानिरत्नानियेचान्येलोहजात
यः॥तानिवज्रेणलिख्यन्ते वज्रंनान्येनलिख्यतइत्यादिज्ञातव्यम् । सामुद्रि
कलक्षणयुक्तमेतद्वक्षइत्यर्थः । अतएवएतस्यभुजयोस्तद्वक्षोलक्षणोयकन्दो
मूलन्तस्यकन्दलीनवाङ्कुरौतयोर्भावस्तत्तातया तयोर्वज्रीभूतवक्षस्थलमूल
प्रकाण्डतयाहेतुना भुजसमुत्पन्नःतेजोवन्हि.प्रतापरूपोग्निः अरिवधूनां
नयनाम्बु नानेत्रवाष्पेणापिननमतिनशाम्यति । विद्युद्वन्हेरंबुनाशान्त्यभा
वात्कारणगुणानाञ्चकार्येसमवायाद्विद्युद्रूपवक्षस्थललक्षणस्यभुजकारण
स्यगुणः अद्भिःशान्त्यभावलक्षणस्तत्कार्यभूतेप्रतापाग्नावपिवर्त्तते । यतः

सवैरिवनितास्रुणापिनशाम्यतिइतियुक्तंवचसोवज्रत्वं अतिकठिनवचःप्र भववाहुसमुत्पन्नः अत्युद्भटोस्यप्रतापोवैरिणोहन्तापिनशाम्यति। वैरिवि षयेभिःकृपोयमितिभावः । त्वदुग्रविरहविदारिहृदयावस्थमेनमनुगृहाणे तिभावः । कन्दलन्तु कलापेस्यादुपरागेनवाङ्कुरेइतिविश्वः ॥ १२४ ॥

किंनद्रुमाजगतिजाग्रतिलक्षसङ्ख्या स्तुल्योपनी तपिककाकफलोपभोगाः॥ स्तुत्यस्तुकल्पविटपीफ लसम्प्रदानङ् कुर्वन्सएषविबुधानमृतैकवृत्तीन् १२५

किमिति । तुल्य·समानःउपनीतोदत्तःपिकानाङ्कोकिलानाङ्काकानाञ्च फलैःकृत्वांउपभोगोजीवनवृत्तिर्यैःएवंविधाःआम्रादयोलक्षसङ्ख्याकाःद्रु माःजगतिभुवनमध्येकिंनजाग्रतिविद्यन्तेऽपितुविद्यन्तएवपरंवर्णनीयान भवन्तीत्यर्थः । तुपुनः अमृतैकवृत्तीन्सुधैकजीविनोविबुधान्देवान्फलस म्प्रदानंस्वीयफलानान्दानपात्रङ्कुर्वन्सएषःकल्पविटपीस्तुत्यःस्तोतुमर्हः । अतिप्रसिद्धत्वेनकल्पवृक्षःपुरस्थितइवएषइत्यभिनयनिर्दिष्टः । उत्तमजा तीयानामुत्तमफलवृत्तीनांपिकानांहीनजातीयानाङ्कदर्यवृत्तीनाङ्काकाना ञ्चतुल्यदानात्साम्यापादनादतिमूर्खत्वादाम्रादयोनतुस्तुत्याः । कल्पवृक्ष स्तुरसाधिकामृतजीवनेभ्योदेवेभ्यएवस्वफलानिददानोविशेषज्ञत्वात्स्तोतु मर्हइत्यर्थः । अथचपण्डितेषुमूर्खेषुचतुल्यदानात्तारतम्याज्ञानात् अचेतन द्रुमतुल्यावहवोराजानःकतिनसन्तिपरंयाचकवृत्तीनयाचितवृत्तीन्वासोमव र्तीन्मुमुक्षून्वाअवादिदानपात्रङ्कुर्वन् अतिवितरणशीलत्वात्कल्पवृक्षतुल्यः काशीविश्वेश्वरएवविशेषज्ञःस्तोतव्यइतिभङ्ग्याऽभिहितम् । सर्वनृपाधि कःसर्वेभ्योदातापण्डितश्चायन्तस्मादेनंवृणीष्वेतिभावः । द्वयाचितायाचि तयोर्यथासङ्ख्यम्मृतामृतेइत्यमरः । अमृतंयज्ञशेषेस्यात् ॥ १२५ ॥

अस्मैकरंप्रवितरन्तुनृपानकस्मा दस्यैवतत्रयद नूनप्रतिभूःकृपाणः ॥ दैवाद्यदाप्रवितरन्तितनतेत दैवनेदृक्कृपाणिजकृपाणकरग्रहाय ॥ १२६ ॥

अस्माइति ॥ सर्वेनृपाः अस्मैनृपायकरम्बलिङ्कस्मात्कथंनप्रवितरन्तुप्र यच्छन्तु । अथचदासभूतत्वात्स्वामिनेऽस्मैहस्तंकथंनवितरन्तु । दासे नहिस्वामिनेहस्तोदीयते । यद्वयस्मात्तत्रद्विविधेपिकरदानेयःकृपाणःख

ड्गः अस्यैव प्रतिभूरभूत् तेचराजानो दैवाद्विनाशकालेविपरीतदैववशात्यदा नद्विविधमपिकरंप्रवितरन्तिददतितदानिजस्यकृपाणस्यहस्तेनधारणायद्द दकृपाणस्यकृपानैवभवतितदाखड्गः सन्खड्गतोलनेनतान्निहत्यबलात्का रेणगृह्णात्येव तदैवेत्यविलंबनार्थएवकारः । हस्तेनगृहीतखड्गेनेंदृष्ट्वाभी ताः सन्तोबलिष्ठास्तैप्रयच्छन्ति । अथयदासीजूत्वाहस्तदानमपिप्रयच्छ न्ति । उभयविधकरदानेतवखड्गस्यप्रतिभूत्वात्सैवप्रयच्छन्तितर्हिस्त्वत्तएवो भयविधकरङ्गृह्णामीत्युक्त्वाबलात्करङ्गृह्णातीतिभावः । लोकेऽपीयेऽप्रय च्छतितर्हिबलात्कारेणलग्नकएवगृह्यते । अस्यकृपेतिषष्ठीसमासः ॥१२६॥

**एतद्बलैः क्षणिकतामपिभूः खुराग्र स्पर्शायुषांरथर सादसमापयद्भिः ॥ दृश्यैककेवलनभः क्रमणप्रवाहै र्वाहैरलुप्यतसहस्रदृगर्वगर्वः ॥ १२७ ॥**

एतदिति । एतद्बलैरेतस्यसैन्यभूतैर्वाहैरश्वैः सहस्रदृक्इन्द्रः तस्यअर्वा अश्वः उच्चैःश्रवाः तस्यगर्वः खुराग्रैर्भुविनस्पृशामिगगनेचरामिवेगवांश्चमादृ शोन्योनविद्यतेइत्येवंरूपः अलुप्यतलुप्तोविनाशितः । किंभूतैर्वाहैःखु राग्रैः कृत्वाभुवोयःस्पर्शःतद्रूपाणियान्यायूंषिस्थितयःतेषांक्षणिकतामपिक्ष णमात्रंयास्थायितातामपिरयरसाद्वेगाभिनिवेशात् असमापयद्भिः क्षणमा त्रमपिखुराग्रैर्भूमिमस्पृशद्भिरित्यर्थः । तथादृश्यैर्नेत्रैःपेयाःसादरमव लोकनीयाःकेवलंनभःक्रमणप्रवाहाःगगनगमनपरंपराःयेषांवेगवशादलक्ष्य भूगमनैः केवलंनभसिक्रमणंयेषांवायूनांप्रवाहाः सङ्घाःदृश्यैपेयाःदृश्या श्चतेवायुसङ्घाश्चतद्रूपैरितिवा । वायोःसर्वगत्वेप्यचाक्षुषत्वादेतेषान्तु त्यवेगत्वेपिचाक्षुषत्वाच्चाक्षुषवायुरूपैर्वायोरप्यधिकैरेवंविधैर्वा । सहस्रदृ गर्वेतिपाठेसूर्यश्वानामित्यर्थः ॥ १२७ ॥

**तद्वर्णनासमयएवसमेतलोक शोभावलोकनपरां तमसोनिरासे ॥ मानीतयागुणविदायदनादृतो सौ तद्भूतांसदसिदुर्यशसैवमम्लौ ॥ १२८ ॥**

तद्वर्णनेति । तस्यकाशीश्वरस्यवर्णनासमयएवसमेताः समागताःलोकाः नूतनराजलोकाःतेषांशोभाःतस्यावलोकनपरासौभैमी तङ्काशीश्वरंनिरासे निराचकार । अन्यावलोकनेनैवनिराकरणञ्जातमित्यर्थः । तयागुणवि

दाअतिविदुष्याभूत्तांसदसिराजसन्नायांयद्यस्मात्मानीअभिमानीअन्नि मानवान्असौअनादृतःअवज्ञातःतत्तस्माद्दुर्यशसाएवअकीर्त्याएवमन्लौ लज्जावशात्कालिमानंप्राप्तइत्यर्थः । गुणिनाह्विराजसमतकृतावज्ञाऽभि मानिनोदुर्यशसेनवतिनतुमूर्खेणकृता । निरासेउपसर्गादस्यत्यूह्योरिति तङ् । परास्तइतिक्वचित्पाठः ॥ १२८ ॥

सानन्तानाप्यतेजःसखानिखिलमरुत्पार्थिवान्दि
ष्टभाज श्चित्तेनाशाजुषस्तान्सममसमगुणान्मुञ्च
तीगूढभावा ॥ पारेवाग्वर्तिरूपंपुरुषमनुचिदम्भो
धिमेकंशुभाङ्गी निःसीमानन्दमासीदुपनिषदुप
मातत्परीभूयभूयः ॥ १२९ ॥

सेति । साभैमी एवंभूतंनललक्षणंपुरुषंअनुलक्षीकृत्य भूयोतिशयेनबहु अत्यर्थन्तत्परीभूयनलएवतात्पर्यंयस्याः एवंविधाभूत्वा उपनिषदोरहस्यभू तायाःश्रुतेरुपमायस्याःएवंविधोपनिषत्तुल्याआसीत् किंभूतासा । तेजसःस खायःतेजःसखाःतेजस्विनोनिखिलाःसकलाःमरुतोदेवाश्चपार्थिवाश्चराजा नःतानाप्यप्राप्यएतत्समीपङ्गत्वासमंयुगपन्मुञ्चतीत्यजन्तीयतोगूढाशयान लविषयमनुरागङ्गोपायन्ती । किंभूतानेतान्अनन्तान् अनवधीन्गणयितु मशक्यान् । तथादिष्टभाजःस्वयम्बरकालेसमागतान्दैवभाजोबहुसम्पदो वा तथाचित्तेनचेतसाऽऽशाजुषोभैमीप्राप्त्यभिलाषिणःस्वास्मिन्नभिलाषिणः तथाअसमगुणानतुल्यसौन्दर्यादिगुणान्परस्माद्गुणैरधिकान् पुन.किंभूता साशुभाङ्गीसुन्दरी किंभूतंपुरुषंपारेवाग्वर्तिरूपंवाचःपारेपरतीरेवर्तमान शीलंवागगोचरंवर्णयितुंअशक्यं रूपंसौन्दर्यंयस्यअतिसुन्दरं । तथाचिदं भोधिज्ञानसमुद्रंसकलशास्त्रपारगं । तथानिःसीमानन्दं अपरिमितान न्दंसदावरसाहशक्तियुक्तंभैमीप्राप्तिनिश्चयाद्वानिःसीमानन्दं। एकंमुख्यंनिः सीमानन्दंयथातथातत्परीभूयेतिवा । समंप्राप्येतिवा । समभाशाजुषइ तिवा। मयाराज्यलक्ष्म्यासहवर्तमानंमितिपुरुषविशेषणंवा । उपनिषदपि अनन्तेनआकाशेनसहितान् तथादिष्टभाजःकालसहितान् चित्तेनमनसा समंसार्धं आशाजुषोदिग्जाजोदिङ्मनोयुक्तानसमगुणानतुल्यासङ्ख्यरू परसगन्धादिगुणयुक्तान् । तथावैशेषिकादिप्रक्रियाप्रसिद्धान् आप्याःउदक

जन्याः तेजःतैजसाःपदार्थाः आप्यतैजसांसखायः आप्यतेजःसखाः आप्य तैजसपदार्थसहिताःनिखिलाःसकलायेमरुतः वायवःपृथिवीसंबन्धिनःपार्थिवाश्चपदार्थास्तान् । यद्वाऽनन्तान्विनाशरहितान् । आप्यतेजांसिच खेनाकाशेनसहिताश्चतेनिखिलमरुत्पार्थिवाश्चतान् पृथिव्यप्तेजोवाय्वाकाशकालदिङ्मनोलक्षणानष्टौपदार्थान् युगपदद्वैतप्रतिपादनेननिराकुर्वती । अविद्यमानः अन्तःविनाशोयेषान्तेअनन्ताःनित्याःसामान्यविशेषसमवायास्तैःसहितान् । आप्यादीनष्टौपदार्थान् । तथानसमं असमंपञ्चसङ्ख्यायोगित्वात् विषमसङ्ख्यं कर्मचगुणाश्चरूपादयःतांश्चषडपिपदार्थान् हेयत्वेनप्रतिपादयन्तीवा । तथागूढभावा अतिगहनत्वाद्दुर्ज्ञेयाभिप्रायागूढस्तिरस्कृतःभावःसत्तायया । कस्यापि वस्तुनःसत्वं अनङ्गीकुर्वतीतिवा गूढोरक्षितः ब्रह्मणःसत्तालक्षणोभावोय येतिवा । तथाशुभाङ्गीव्याकरणादिषडङ्गयुक्ता । उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गयुक्तावा । यमनियमाद्यङ्गोपेतावा । यतोवाचोनिवर्तन्तेइत्यादिश्रुतिप्रामाण्याद्वागगोचरस्वरूपं । तथाचितोज्ञानस्यसमुद्रं । चिद्घासौअम्भोनिधिश्चेतिवा । निःसीमश्चासावानन्दश्चएवंभूतंपरमानन्दरूपं आत्मलक्षणं नवमद्रव्यपदार्थरूपं । एकमेवाद्वितीयं ब्रह्मेतिश्रुतिप्रामाण्याद्द्वितीयं एकब्रह्मरूपंपरमपुरुषं उद्दिश्यअत्यर्थंतत्रैवपरब्रह्मस्वरूपंपपरमपुरुषेतात्पर्यंयस्याःएवंभूत ाभवति । अनन्तंसुरवर्त्मखमित्यमरः । आपएवआप्यमितिचातुर्वर्ण्यादित्वात्ष्यञ् । शुभाङ्गीतिअङ्गगात्रेतिङीष् । उपनिषत्पक्षेशुभाङ्गीवशुभाङ्गी ॥ १२९ ॥

श्रीहर्षंकविराजराजिमुकुटालङ्कारहीरःसुतं श्रीहीरःसुषुवेजितेन्द्रियचयंमामल्लदेवीचयम् ॥ शृङ्गारामृतशीतगावयमगादेकादशस्तन्महा काव्येचारुणिनैषधीयचरितेसर्गोनिसर्गोज्ज्वलः ॥ १३० ॥

श्रीहर्षमिति । शृङ्गारलक्षणस्यअमृतस्यशीतगौश्चन्द्ररूपे । शीतगौइति भाषितपुंस्कम् ॥ १३० ॥

इतिश्रीहर्षकविविरचितेनैषधमहाकाव्येपूर्वार्द्धसमाप्तम् ॥

इतिश्रीवेदकरोपनामक श्रीमन्नृसिंहपण्डितात्मज श्रीमन्नारायणकृतौ नैषधीयप्रकाशेएकादशःसर्गःसमाप्तः ॥ ॥ ॥ ॥